* ओम् *

# वेदार्षकोषः



ऋषेर्दयानन्दस्य वेदभाष्ये ग्रन्थान्तरेषु चोपलभ्यमान—

## वैदिकशब्दार्थानां संग्रहरूपः

तत्रतत्र निघण्टुनिरुक्तब्राह्मणोपनिषदामर्थोद्धृतिभिश्च संवलितः

चमूपतिपण्डितस्य

निरीक्षणे

संकलितः सम्पादितश्च

तस्यायं

## तृतीयो भागः

श्रीमतीपंचनदप्रान्तीयार्य्यप्रतिनिधिसभान्तर्गत-

श्रीचमूपतिसाहित्यविभागाध्यक्षेण

स्वामिना वेदानन्दतीर्थेन

प्राकाश्यं नीतः

१९९६ तमे वैक्रमाब्दे ११५ तमे दयानन्दाब्दे १९४० तमे स्त्रीष्टाब्दे

* ओम् *

# श्री चमूपति-साहित्य-विभाग
के
# उद्देश्य

(क) वैदिक सिद्धान्तों के सम्बन्ध में अन्वेषण करना और उसके परिणाम को प्रकाशित करना।

(ख) आर्यसमाज के सिद्धान्तों की पुष्टि में ग्रन्थ लिखवाना और प्रकाशित करना।

(ग) आर्यसमाज के मन्तव्यों के विरुद्ध लिखे गए ग्रन्थों के उत्तर लिखवाना और प्रकाशित करना।

(घ) आर्य सामाजिक साहित्य का गवेषणात्मक दृष्टि से विचार करना और उसके परिणाम को प्रकाशित करना।

(ङ) वेदभाष्य की सामग्री संग्रह करना। यथा—

१. भिन्न-भिन्न देवताओं के संबन्ध में विचार करना।
२. वेद के विभिन्न सूक्तों की, विविध भाषाओं में, व्याख्याएँ प्रकाशित करना।
३. वेदों का सुसंगत क्रमबद्ध अनुवाद प्रकाशित करना।
४. वैदिक शब्दों के कोष बनवाना।
५. वैदिक साहित्य के प्रामाणिक संस्करण तय्यार करवाना।
६. आर्ष ग्रन्थों के विविध भाषाओं में प्रामाणिक व्याख्यान लिखवाना तथा प्रकाशित करना।

(च) जन-साधारण में वैदिक धर्म्म-प्रचार के निमित्त विविध भाषाओं में लघु पुस्तिकाएँ (छोटे-छोटे ट्रैक्ट) प्रकाशित करना।

(छ) विभिन्न मतों की संयत और प्रामाणिक आलोचनाएँ प्रकाशित करना।

---

OM

# VEDARSHA KOSHA

OR

## A Dictionary of Vedic Words

CONTAINING

Meanings culled from Rshi Dayananda's Commentary

ON

the Vedas and other writings

WITH

Notes from the Brahmanas, Upanishads, Nighantu and Nirukta

### THIRD VOLUME

*Chief Editor :*

P. CHAMUPATI M. A.

PUBLISHED BY

*Svami Vedananda Tirtha,*

*Superintendant,*

**Śri Chamupati Sahitya Vibhaga,**

**(Arya Pratinidhi Sabha, Punjab)**

*Gurudatta Bhavana, LAHORE.*

1940.

*Publisher :*
**Pt. Bhima Sena Vidyalankara, Secretary, Arya Pratinidhi Sabha, Punjab,**
GURUDATTA BHAVANA, LAHORE.

*Pages 1 to 176 printed by J. S. Pal at the Basant Printing Press, Ganpat Road, and Pages 177 to 228 printed by Pt. Bhim Sen Vidyalankar at the Navayuga Printing Press, Mohan Lal Road, and Pages 229 to 354 printed by Prakash Chnnd at the Arya Press Limited. 17, Mohan Lal Road, Lahore.*

❀ ओम् ❀

# द्वित्राः शब्दाः

अथैष प्रकाश्यते वेदार्षकोषस्य तृतीयो भागो हर्षविषादपरिप्लुतेन मानसेन। नैकान्तरायान्तरितोऽप्येष प्रकाशतामापन्न इति सुमहद्धर्षस्थानम्। विषादकारणं त्विदम्—यदस्य कोषस्य सङ्कलयिता महानुभाव आत्मात्मीयपरिश्रमफलप्रकाशं साकल्येनाननुभूय देवभूयं गतः। देवभूयं गते तस्मिन् महाभागे कोषस्याप्यस्य तादृशी संभावना संभाविता। दिष्ट्या दिवङ्गतस्य कोषसम्पादकस्य चमूपतिपण्डितस्य बहुमानपुरस्सरं संस्मरणीयाभिस्सेवाभिः सुपरितुष्टया सभया तदीयां कीर्त्तिं चिरस्थायिनीं सम्पादयितुमीहमानया **श्रीचमूपतिसाहित्यविभागः** स्थापितः। स्थाने स एव विभागोऽस्य प्रकाशने सभयाऽधिकृतः प्रकाशयेमं कोषमुपहारीकरोति गुणागुणव्यक्तिहेतूनां विपश्चिदपश्चिमानां करकमलेषु।

बहुभिर्नामोल्लेखनिरपेक्षैर्महानुभावैरस्य सम्पादने सङ्कलने च नैकविधमनुकूलप्रतिकूलं साह्यमाचरितं, तेभ्यो महात्मभ्यो नतमौलिरयं प्रकाशकः कामं सुबहून् साधुवादान् समर्पयति—इति॥

**स्वामी वेदानन्दतीर्थः**
श्रीचमूपतिसाहित्यविभागाध्यक्षः

* ओम् *

# A WORD TO THE READER.

After all, this third volume of the Vedarshakosha we are sending out into the limelight of publication with a heart full of joy as well as sorrow, for it is the cause of great joy indeed, that in spite of not a few obstacles in the way, the work has been published, and also of sorrow that the noble soul who had undertaken its compilation, passed into the World of Light without perceiving the full fruit of his labours attaining publication. On the demise of the compiler, the work of arranging the material for printing, would, it was feared, also suffer a similar fate, but fortune, however, smiled on the work, and the Punjab Arya Pratinidhi Sabha, Gurudatta Bhavana Lahore, well pleased with the unforgettable and worthy services rendered to it by the late Pandita Chamupatiji, M. A., founded the 'Śri Chamupati Sahitya Vibhaga' wishing to perpetuate the good name of the deceased. It was but fitting that the Sabha should enjoin this new body to complete the great work undertaken by the deceased, and they (the Śri Chamupati Sahitya Vibhaga) now put this compilation into the hands of those who, they believe, will not be lacking in the virtue of the true scholar—the capacity to reveal the merits and demerits of a literary work.

The undersigned most gratefully and respectfully tenders heartfelt thanks to all and sundry who have rendered in various ways aid, favourable or unfavourable to the compilation of this work, and who do not care to see their name referred to in print.

SVAMI VEDANANDA TIRTHA

*Superintendant,*

**Śri Chamupati Sahitya Vibhaga,**

*(Arya Pratinidhi Sabha, Punjab)*

GURUDATTA BHAVANA, LAHORE.

॥ ओ३म् ॥

# वेदार्षकोषः

## य

यंसत् नियच्छेत् १ । ६६ । ८ । यच्छन्तु प्रददतु ( अत्र वचनव्यत्ययेन बहुवचन स्थाने एकवचनम् ) १ । १०७ । २ । प्रेरयेत् १ । १६० । ३ । प्राप्नुयात् ४ । २५ । ४ । प्रदद्यात् ४ । ५४ । ६ । ददाति ६ । ४६ । ७ ॥

यंसत यच्छन्तु नि० ९. १९ ॥

यंसते यच्छन्ति १ । ८० । ३ । रक्षति १ । १४३ । ७ ॥

यंसन् [ यंसन् ] यच्छन्तु ददतु १ । ९० । ३ । प्रयच्छन्ति ( अत्र वाच्छन्दसीत्युसभावः लुङ्यडभावश्च ) १ । १३६ । ७ ॥

यंसि [ यंसि ] दुष्टाचारान्निहणसि ( अत्र शपो लुक् १ । ६३ । ८ । प्राप्नोषि नियच्छसि वा ५ । ३६ । ४ । यच्छ, दुष्टेभ्यः कर्मभ्य उपरतोऽसि ( अत्र लोडर्थे लट् ) १ । ४२ । ६ ॥

यकः यः २३. २३ ॥

यका या २३. २२ ॥

यकृत् हृदयाद्दक्षिणे स्थितं मांसपिण्डम् १६ । ८५ ॥

यकृत सविता । श० १२. ९. १. १५ ॥

यक्षत् [ यक्षत् ] यजेत् दद्यात् १७ । ६२ । सत्कुर्यात् १६. ६५ । संगच्छेत ७ । १७ । ४ ॥

यक्षतः सङ्गच्छतः २. ३. ७ ॥

यक्षताम् यजतः सङ्गमयतः ( अत्र सिब्बहुलं लेटीति बहुलग्रहणात् लेटि प्रथमपुरुषस्य द्विवचने शपः पूर्वं सिप् ) १ । १३ । ८ । संयच्छेते १ । १४२ । ८ । सङ्गमयताम् १ । १८८ । ७ ॥

यक्षदृशः ये यक्षान् पूजनीयान् पश्यन्ति ते ७ । ५६ । १६ ॥

यक्षन्त रोषत हिंस्त १ । १३२ । ५ ॥

यक्षभृत् यक्षान् पूज्यान् विदुषो बिभर्ति सः १ । १९० । ४ ॥

यक्षम् संगन्तव्यम् ४ । ३ । १३ । दानम् ५ । ७० । ४ । पूजनीयं संगतम्वा ( अत्रौणादिकः सन्प्रत्ययः ) ३४ । २ ॥

यक्षि यजामि ( अत्राडभावो लुङ् आत्मनेपद उत्तमपुरुषस्यैकवचने प्रयोगो लङर्थे लुङ् च ) १ । १३ । १ । यजामि सङ्गमयामि वा १ । १४ । १ । याजय ( अत्र

सामान्यकाले लुङ्ङभावश्च ) १ । ३१ । १७ । यजसि ( अत्र लडर्थे लुङ् ) १ । ७५ । ५ । ददासि २ । ६ । ८ । सत्करोषि सङ्गच्छसे ५ । २६ । १ । यज सुखं सङ्गमय ६ । १६ । ६ । यज सङ्गच्छस्व ७ । १७ । ३ ॥

यक्षि यज नि० ६-१३ ॥

यक्षुः सङ्गन्ता ७ । १८ । ६ ॥

यक्ष्म राजरोगः १२ । ८७ । [यक्ष्मात्] क्षयादिरोगात् १२ । ६८ ॥

यक्ष्यते संगत किया जाता है । २१ । ६१ ॥

यक्ष्यमाणम् यज्ञं करिष्यमाणम् १ । १२५ । ३ ॥

यक्ष्वा [ यक्ष्व ] सङ्गच्छस्व १ । ४५ । १० । संगमय प्राप्नुहि वा ( अत्र द्व्यचः इति दीर्घः ) ५ । ४२ । ११ ॥

यच्छ्‌ा [ यच्छ ] यच्छति फलादिभिर्ददाति (अत्र व्यत्ययो लडर्थे लोट्, द्व्यच इति दीर्घश्च ) १ । २२ । १५ । देहि ४ । १२ । ५ ॥ ५ । २७ । २ । निगृहाण ७ । १६ । ८ । निधेहि ६ । २१ । उपगृहाण ६ । २५ । ददातु ३६ । १३ ॥

यच्छत [ यच्छत ] दत्त १ । ८५ । १२ । गृह्णीत ८ । ५१ । १० । ददत ५ । ४६ । ७ ॥

यच्छतम् विस्तारयतः ( अत्र पुरुषव्यत्ययो लडर्थे लोट् च ) १ । १७ । ८ । दत्तः १ । २१ । ६ । यच्छतो यमनं कुरुतः १ । ६२ । १६ । नितरां दद्यातम् ४ । ४७ । ४ ॥

यच्छतात् देहि १ । ४८ । १५ ॥

यच्छताम संस्थापयतम् २ । ४१ । २० ॥

यच्छताम् नियच्छताम् ॥ नि० ९. ३८ ॥

यच्छति [ यच्छति ] ददाति ५ । ८० । २ ॥

यच्छतु ददातु ३ । १३ । ४ । निगृह्णातु ४ । ३२ । १५ । अनुगृह्णातु ४ । ५७ । ७ । गृह्णातु ६ । २४ ॥

यच्छतु यच्छन्तु नि० १२. ४५ ॥

यच्छध्वम् उद्यमिनः कुरुत ७ । ४३ । २ ॥

यच्छन्ताम् निगृह्णन्तु १ । ९ ॥

यच्छन्ति [ यच्छन्ति ] निगृह्णन्ति ६ । ७५ । ६ । प्रददति ७ । ६० । ८ ॥

यच्छन्तु [ यच्छन्तु ] निगृह्णन्तु १ । १३० । २ । ददतु ३ । ५४ । २० ॥

यच्छमानाः निग्रहीतारः ७ । ५६ । १३ ॥

यच्छसे ददासि १ । ८३ । ६ ॥

यच्छस्व विस्तारय विस्तारयति वा ( अत्र पक्षे लडर्थे लोट् । आङो यम हनः अ० १ । ३ । २८ अनेनात्मनेपदम् । आङ्पूर्वको यमधातुर्विस्तारार्थे ) ३ । ३८ । सर्वतो देहि आयच्छति विस्तारयति वा ( अत्र पक्षे व्यत्ययः सिद्धिश्च पूर्ववत् ) ३ । ३६ ॥

यच्छामि गृह्णामि ३८ । ६ ॥

यज संगमयास्य सिद्धिं सम्पादय १ । १४ । ११ । यजति शिल्पविद्यायां संगमयति ( अत्र लडर्थे लोट् ) १ । १५ । १२ । संगच्छस्व १ । २६ । १ । गमय १ । १८८ । ६ । प्राप्नुहि २८ । ७ [यजा] संगच्छस्व (अत्र द्व्यच इति दीर्घः ) ३ । १७ । ५ । [यजा] सत्कुरु, देहि उपदिश वा ३३ । ३ । [यज] एकीभव ६ । ११ ॥

यजत [ यजत ] पूजयत ४ । १ । १ । संगच्छध्वम् ३८ । ६ ॥

यजतः [ यजतः ] संगच्छेते २० । ४१ । संगन्तुं योग्यः १ । ३५ । ३ । संगतिप्रकाशयोर्दाता १ । ३५ । ४ । संगतः १ । १८१ । ३ । संगन्ता, पूजनीयः ५ । ४१ । ६ । सत्कर्ता ५ । ४४ । १२ ॥ [ यजता ] दातारावध्यापकोपदेशकौ ४ । १५ । ८ ॥ [ यजताः ] ये सर्वा विद्याः संगच्छन्ते ६ । ५० । २ ॥ [ यजतेभिः ] संगतैरश्वादिभिः ( संयुक्तम् ) ५ । १ । ११ ॥ [ यजतेभ्यः ] विद्वत्सेवकेभ्यः २ । ५ । ८ [ यजतस्य ] यजन्ति संगच्छन्ति येन तस्य ५ । ४४ । १० ॥

यजते यज्ञिये नि० ८. ११ ।
यजतस्य यज्ञियस्य नि० ८. ७ ॥

यजताम् संगमयतु ६ । १५ । १३ । गृह्णातु २१ । ४७ ॥

यजति [ यजति ] संगच्छते १ । २६ । ३ । पूजयति १ । १२० । ५ । यजेत् (लोट् प्रयोगोऽयम् ) १ । १३६ । १० ॥

यजतु संगच्छतु २ । ३ । १ ॥

यजते [ यजते ] संगच्छते ५ । ७१ । २ ॥

यजत्रः संगमकर्त्ता १ । १२१ । १ । संगन्ता १ । १७३ । २ । संगन्तव्यो ध्येयः ७ । ५२ । ३ ॥ [यजत्रा ] संगमस्य सत्कर्तव्यौ १ । १०८ । ७ ॥ [यजत्राः] संगमयितुं योग्याः १ । १४ । ८ । पूजका उपदेशकाः संगतिकर्तारो दातारश्च १ । ६५ । १ ॥ विदुषां सत्कर्तारः, संगतिकर्तारो वा ३३ । ५१ । संगंतारः पूजनीया वा ३३ । ५३ ॥ [ यजत्रैः ] यज्ञसाधकैर्विद्वद्भिः ६ । १० ॥ [यजत्र] दातः १ । ७६ । ४ ॥

यजत्रमिति यज्ञियमित्येतत् । श० ६. ६. ३-९॥

यजथाय सत्करणाय २ । २८ । १ । समागमाय ३ । ४१ । यजनाय संगमनाय ३ । ५ । ६ । विद्यासंगमनाय ३ । १६ । ५ ॥

यजध्यै [ यजध्यै ] यष्टुं संगन्तुम् ३ । १ । १ ॥

यजध्यै यजनाय नि० ८. १२ ॥

यजध्वम् संगच्छध्वम् २ । २ । १ । सत्कुरुत ६ । २६ । १ ॥

यजन्ति [ यजन्ति ] पूजयन्ति संगमयन्ति वा ४ । ३७ । संगच्छन्ते १० । ३२ । ददति १६ । ६ ॥

यजन्ते [ यजन्ते ] पूजयन्ति, संगतिं कुर्वते १ । २८ ॥

यजन्तौ सत्कुर्वन्तौ २ । ३ । ७ । [ यजतः ] संगतान् २ । १४ १० । [ यजते ] यो यज्ञं करोति तस्मै १ । ३१ । १५ ॥

यजमानः त्रिविधस्य यज्ञस्यानुष्ठाता १ । २४ ११ । संगन्ता ३ । १ । १५ । विद्वत्सेवासंगतेः कर्ता ३ । ३ । ३ । यज्ञकर्ता ५ । २८ । पुरुषः १५ । ५४ । योगप्रद आचार्यः १७ । ७३ । विद्याप्रदाता यज्ञकर्ता १८ । ६१ ॥ [ यजमानाः ] सर्वेभ्यः सुखदातारः १७ । ६६ । ये यजन्ति ते विद्वांसः १६ । ३२ [ यजमानम् ] यज्ञानुष्ठातारम् ६ । ६ । दातारम् ७ । १३ ॥ सत्यानुष्ठानस्य यज्ञस्य कर्तारम् २० । ७३ अभयस्य दातारम् १ ।

१३० । ८। [यजमानाय] उपदेश्याय पालकाय वा १ । ८३। ३। पुरुषार्थिने १ । ६२। जीवाय १ । ६३ । ७ । संगतिकरणविद्याविदे ६। १५। १६ । परोपकारार्थं यज्ञं कुर्वते ७। १६। ६। यजति विदुषः पूजयति, सद्गुणान् संगच्छते ददाति वा तस्मै ५। १२ । सत्योपदेशकाय, विद्यासंगमयित्र आचार्याय, सांगोपाङ्गवेदाध्यापकाय, क्रियाकौशलसहितानां सर्वेषां विद्यानां प्रवक्त्रे वा ११ । ५८ ॥

[यजमानस्य] यः परमेश्वरं सर्वोपकारं धर्मञ्च यजति तस्य विदुषः १। १ । शिल्पविद्यां चिकीर्षोः, सर्वस्य मित्रस्य वा २। ३। संगमं कर्तुं योग्यस्य पूज्यस्य मनुष्यस्य ४। ३४ ॥

यद्यजते तद्यजमानः। श० ३. २. १. १७ ॥ एष उ एव प्रजापतिर्यो यजते । ऐ० २. १८ ॥ यजमानो ह्येव स्वे यज्ञे प्रजापतिः । श० १. ६. १. २०॥ इन्द्रो वै यजमानः। श० २. १. २. ११ ॥ ४. ५. ४. ८ ॥ ५. १. ३. ४ ॥ यजमानो मेधपतिः । ऐ० २. ६ ॥ यजमानो वै मेधपतिः। कौ० १०. ४ ॥ यजमानो हि यज्ञपतिः श० ४. २. २. १० ॥ यजमानो वै यज्ञपतिः (यजु० १. २)। श० १. १. २. १२ ॥ १. २. २. ८ ॥ १. ७. १. ११ ॥ यजमानो ऽग्निः । श० ६. ३. ३. २१ ॥ ६. ५. १. ८ ॥ ७. ४. १. २१ ॥ ९. २. ३. ३३ ॥ स उऽएव यजमानस्तस्मादाग्नेयो भवति । श० ३, ९. १. ६ ॥ आहवनीयभाग्यजमानः । क० ३. ९ ॥ मनो यजमानस्य (रूपम्) । श० १२. ८. २. ४ ॥ यजमानो वै दाश्वान् (यजु० १२. १०६ ॥ १३. ५२) । श० २. ३. ४. ३८, ४० ॥ ७. ३. १. २९ ॥ ७. ५. २. ३९ ॥ यजमानो वै मामहानः (यजु० १७. ५५) । श० ९. २. ३. ९ ॥ यजमानो वै सुम्नयुः (ऋ० ३. २७. १) श० १. ४. १. २१ ॥ यजमानो वै हव्यदातिः (ऋ० ६. १६. १०)। श० १. ४. १. २४ ॥ यजमानः पशुः। तै० २. १. ५. २ ॥ २. २. ८. २॥ यजमानो वै यूपः। ऐ० २. ३ ॥ श० १३. २. ६.९॥ एष वै यजमानो यद्यूपः। तै० १. ३. ७. ३ ॥ यजमनो वाऽएष निदानेन यद्यूपः । श० ३. ७. १. ११ ॥ यजमानदेवत्यो वै यूपः । तै० ३. ९. ५. २ ॥ यजमानो वै प्रस्तरः। ऐ० २. ३ ॥ श० १. ८. १. ४४ ॥ १. ८. ३. ११, १४, १६ ॥ तै० ३ ३. ६. ७, ८ ॥ तां० ६. ७. १७ ॥ यजमानो: प्रस्तरः तै० ३. ३. ९. २. ३ ॥ यजमानो यज्ञः। श० १३. २. २. १ ॥ यजमानो वै यज्ञः । ऐ० १. २८ ॥ आत्मा वै यज्ञस्य यजमानो ऽङ्गान्यृत्विजः श० ९. ५. २. १६ ॥ संवत्सरो यजमानः । श० ११. २. ७. ३२ ॥ एष वै यजमानो यत्सोमः । तै० १. ३. ३. ५ ॥ यजमानो वाऽअग्निष्ठा । श० ३. ७. १. १६ ॥ यजमानो हि सूक्तम्। ऐ० ६. ९ ॥ यजमानः स्रुचः। तै० ३. ३. । ३ ॥ यजमानदेवत्या वै वपा । तै० ३. ९. १०. १ ॥ यजमानच्छन्दसमेवोष्णिक्। कौ० १७, २ यजमानच्छन्दसं पंक्तिः। कौ० १७. २ ॥ यजमानच्छन्दसं द्विपदा (ऋक्)। कौ० १७. २ ॥ यजमानो वै द्वियजुः (इष्टका) । श० ७. ४. २. १६, २४ ॥ (यजमानः) अहतं वसानो ऽवभृथादुदैति चतुरो मासो न मांसमश्नाति न स्त्रियमुपैति। तां० १७. १३. ६, ११, १४ ॥ यां वै काञ्च यज्ञऽऋत्विजऽआशिष माशासते यजमानस्यैव सा । श० १. ९. १. २१ ॥ त्वङ्मांसꣳस्नाय्वस्थि मज्जा। एतमेव तत्पञ्चधा विहितमात्मानं वरुणपाशान्मुञ्चति (यजमानः) । तै० १. ५. ९. ८ ॥ स ह सर्वतनूरेव यजमानो ऽमुष्मिँल्लोके सम्भवति य एवं विद्वान्निष्क्रीत्या यजते । श० ११. १. ८. ६ ॥

यजसि [यजसि] संगच्छसे २६। २५ ॥

यजस्व [यजस्व] सुखानि देहि १।७।५।

संगच्छस्व २।१६।४। देहि ३।१।२२॥

**यजाति** संगच्छेत १।७७।२। यजेत् ३।४।१०॥

**यजाते** यजेत ३।५३।११॥

**यजातै** यजेत १।८४।१८॥

**यजाम** दद्याम १।२७।१३। प्रेरयेम ५।६०।६॥

**यजामः** पूजयामः ३।३२।७॥

**यजामहे** [ यजामहे ] पूजयामहे १।१५।१०। संगच्छामहे १।२६।६। सत्कुर्महे १।१५३।१। प्राप्नुयाम १।४०।४॥

**यजासि** [ यजासि ] याजयेः ११।३५। यजेः ३।२६।८। यजेत् ६।४।१॥

**यजिष्ठः** अतिशयेन यष्टा संगमिता १।७७।१। पूजितुमर्हः ४।२।१। अतिशयेनात्मशिल्पविद्ययोः संगतिहेतुः ३।१५॥ [ यजिष्ठम् ] सुखानामतिशयितं दातारम् १।४३।५॥

**यजीयान्** अतिशयेन यष्टा संगन्ता ३।१७।५। अतिशयेन यज्ञकर्त्ता ५।१।५॥

यजीयान् यष्टृतरः। नि० ८.८॥

**यजुः** यजति येन स यजुर्वेदः १६।२६॥ [ यजूंषि ] यजुर्मन्त्राः १८।६७॥ [ यजुषा ] यजुर्वेदस्थमन्त्रोक्तैः कर्मभिः ४।१। यजन्ति संगच्छन्ते यैर्यजुर्वेदविद्यावयवैस्तैः २६।२८॥ [ यजुर्भ्यः ] याजकेभ्यो यजुर्वेदविभागेभ्यो वा ३८।१०॥

यजुः यजतेः। नि० ७.१२॥

यजो ह वै नामैतद्यद्यजुरिति। श० ४.६.७.१३॥ एष ( वायुः ) हि यन्नेवेदꣳ सर्वं जनयत्येतं यन्तमिदमनुप्रजायते तस्माद्वायुरेव यजुः॥ अयमेवाकाशो जूः। यदिदमन्तरिक्षमेतꣳ ह्याकाशमनुजवते तदेतद्यजुर्वायुश्चान्तरिक्षं च यच्च जूश्च तस्माद्यजुः। श० १०.३.५.२॥ यजुरित्येष ( पुरुषः ) हीदꣳ सर्वं युनक्ति। श० १०.५.२.२०॥ प्राणो वै यजुः प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते। श० १४.८.१४.२॥ प्राण एव यजुः। श० १०.३.५.४॥ इषे त्वोर्जे त्वा वायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मण इत्येवमादिं कृत्वा यजुर्वेदमधीयते। गो० पू० १।२९॥ अष्टौ ( बृहतीसहस्राणि—८००० × ३६ = २८८००० अक्षराणि) यजुषाम्। श० १०.४.२.२४॥ व्यृद्धमु वाऽ एतद्यज्ञस्य। यदयजुष्केण क्रियते। श० १३.१.२.१॥ ( प्रजापतिः ) यजुर्भ्योऽधिविष्णुम् ( असृजत )। तै० २.३.२.४॥ यजूꣳषि विष्णुः ( स्वभागरूपेणाभजत )। श० ४.६.७.३॥ आज्याहुतयो ह वाऽ एता देवानाम्। यद्यजूꣳषि। श० ११.५.६.५॥ अन्नमेव यजुः। श० १० ३.५.६.॥ ( सूर्य्यः ) यजुर्वेदे तिष्ठति मध्ये अह्नः। तै० ३.१२.९.१॥ ( आदित्यस्थः ) पुरुषो यजूꣳषि। श० १०.५.१.५॥ आदित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते। श० १४.९.४.३३॥ आदित्यानीमानि यजूꣳषीत्याहुः। श० ४.४.५.१९॥ अथ य एष एतस्मिन्मण्डले पुरुषः सोऽग्निस्तानि यजूꣳषि स यजुषां लोकः। श० १०.५.२.१॥ अग्निर्यजुषाम् ( समुद्रः )। श० ९.५.२.१२॥ मनो वाऽध्वर्य्युः (=यजुर्विद्दत्विक्) श० १.५.१.२१॥ अथ यन्मनो यजुष्टत्। जै० उ० १.२५.९॥ मनो यजुर्वेदः। श० १४.४.३.१२॥ मन एव यजूꣳषि। श० ४.६.७.५॥ मनो वै यजुः। श० ७.३.१.४०॥ वागेवऽर्चश्च सामानि च। मन एव यजूꣳषि। श० ४.६.७.५॥ ( प्रजापतिः ) भुव इत्येव यजुर्वेदस्य रसमादत्त। तदिदमन्तरिक्षमभवत्।

तस्य यो रसः प्राणेदत् स वायुरभवद्रसस्य रसः । जै० उ० १. १. ४ ॥ भुवरिति यजुर्भ्योऽक्षरत सोऽन्तरिक्षलोकोऽभवत् । ष० १. ५ ॥ यजुषां वायुर्दैवतं तदेव ज्योतिस्त्रैष्टुभं छन्दोऽन्तरिक्षं स्थानम् । गो० पू० १. २९ ॥ वायोर्यजुर्वेदः ( अजायत ) । श० ११. ५. ८. ३ ॥ अन्तरिक्षं वै यजुषामायतनम् । गो० २ । पू० २४ ॥ अन्तरिक्षलोको यजुर्वेदः । ष० १. ५ ॥ अन्तरिक्षं यजुषा ( जयति )। श० ४. ६. ७. २ ॥ यजुर्वेदं क्षत्रियस्याहुर्योनिम् । तै० ३. १२. ९. २ ॥ दक्षिणाम् ( दिशं ) आहुर्यजुषामपाराम्। तै० ३. १२. ९. १ ॥ सर्वा गतिर्याजुषी हैव शश्वत । तै० ३. १२. ९. १ ॥ यजुर्वेदो महः । श० १२. ३. ४. ९ ॥ यजुर्वेद एव महः। गो० पू० ५. १५ ॥ अद्धा वै तद्यद्यजुः। श० १३. ८. २. ७ ॥ तस्माद्यजूꣳषि निरुक्तानि सन्त्यनिरुक्तानि। श० ४. ६. ७. १७ ॥ मज्जा यजुः। श० ८. १. ४. ५ ॥ (दक्षिणनेत्रस्य) यदेव ताम्रमिव बभ्रुरिव तद्यजुषाम् ( रूपम् ) । जै० उ० ४. २४. १२ ॥ अथ यत्कृष्णं तदपां रूपमन्नस्य मनसो यजुषः । जै० उ० १. २५. ९ ॥ स ( प्रजापतिः ) यजूꣳष्येव हिङ्कारमकरोत् जै० उ० १. १३. ३ ॥ तस्य ( यमस्य ) पितरो विशः ....यजूꣳषि वेदः...... यजुषामनुवाकं व्याचक्षाण इवानुद्रवेत्। श० १३. ४. ३. ६ ॥ बह्वी वै यजुःष्वाशीः। श० १. २. १. ७ ॥ ३. ५. २. ११ ॥ ३. ६. १. १७ ॥

**यजे** संगच्छेय २ । ६ । ३ । संगच्छे १७ । ७५ ॥

**यजेत** संगच्छेत ७ । ६० । ६ ॥

**यज्ञः** इज्यते यस्मिन्त्सः १ । २३ । स्त्रीपुरुषाभ्यां संगमनीयः ८ ।४। सम्पूजनीयः प्रजारक्षणनिमित्तो विद्याप्रचारार्थो गृहाश्रमः ८ । २२ । यज्ञो यजधातोरर्थः ६ । २१ । संगन्ता १७ । ४० । पूजनीयः १७ । ६२। संगन्तव्यो धर्मः १८ । २६ । य इज्यते संगम्यते सः १८ । ४२ । यष्टुमर्हः १८ । ५६ । संगन्तव्यो न्यायः १६ ।४५। व्यापकः परमेश्वरः २२ । ३३ । सर्वैः पूजनीयो जगदीश्वरः २३ । ६२ । संगन्तव्यः संग्रामादिव्यवहारः ३३ । ६८ । अग्निष्टोमादिविज्ञानमयो व्यवहारो वा ३४ । ४ । संगतः संसारः १ । १८ । ७ । संगत्या सिद्धः शिल्पाख्यः १ । १०७ । १ । संगन्तुमर्हो ब्रह्मचर्याख्यः १ । १५६ । १ । यष्टुं संगन्तुमर्हः सूर्यः १ । १६४ । ३५ । राजधर्माख्यः १ । १७३ । ११ । राजधर्मशिल्पकार्यसंगत्युन्नतः १ । १७७ । ४ । अध्यापनोपदेशाख्यः ४ । ३४ । ३ । अनुष्ठातुमर्हो व्यवहारः ४ । ५८ । ६ । सत्संगत्यादिस्वरूपः ६ । ३८ । ४ । सद्विद्याव्यवहारवर्धको व्यवहारः ६ । ४० । ४ । संगमनीयः शिष्यः ६ । ६८ । १ । राजपालनीयो व्यवहारः ७ । ३४ । १७ । विज्ञानमयः संगन्तुमर्हः ७ । ४३ । २॥ अच्छे प्रकार करने योग्य यतिधर्म ॥ ६ । ६ । ११ ( २५६ विधि० ) [ यज्ञम् ] गमनयोग्यं मार्गम् १ । ३४ । ६ । धर्मार्थकाममोक्षव्यवहारम् १ । १६४ । ५० । धनादिसंगमकम् १ । १८८ । ७ । कर्मोपासनाज्ञानाख्यम् २ । ५ । ८ । रागद्वेषरहितं न्यायदयामयम् ३ । १ । २२ । पुरुषार्थसाध्यम् १ । २० । २ । यजति संगच्छति येन तम् १ । १७० । ४ । सत्संगाख्यं व्यवहारम् ३ । १ । २ । सर्वं सद्व्यवहारम् ३ । ८ । ८ । संगतिकरणम् ३ । १७ । २ । अध्ययनाध्यापनादिकम् ४ । ३३ । ३ । विद्यावृद्धिकरं व्यवहारम् ४ । ३४ । ६ ।

अन्नाद्युत्तमपदार्थदानम् ५ । ४ । ५ । विद्याप्रचारादिकम् ५ । ४१ । ७ । पुरुषार्थम् ५ । ५२ । ४ । सुखप्रदम् ६ । १५ । १८ । आहारविहाराख्यम् ६ । ४१ । १ । योगम् ७ । ११ । सौख्यजनकम् ८ । ६१ । सर्वेषां सुखजनकं राजधर्मम् ९ । १ । विद्याधर्मसंगमयितारम् ११ । ८ विद्वत्सत्काराख्यम् २५ । ४६ । प्राप्तव्यमानन्दम् २९ । ८ । मानसं ज्ञानमयम् ३१ । १४ । यात्राख्यं, संग्रामाख्यं, हवनाख्यं वा ३३ । ३३ । गमनाख्यं व्यवहारम् ३३ । ७३ । [यज्ञेन] अग्न्यादिदिव्यपदार्थसमूहेन १ । १६४ । ५० । ब्रह्मचर्याद्याचरणेन, धर्मेणेश्वराज्ञापालनेन, धर्मेण विद्याभ्यासेन, शिष्टाचरितेन प्रत्यक्षविषयेण, शब्दप्रमाणाभ्यासेन वा ९ । २१ । सुनियमानुष्ठानेन १८ । ७ । सर्वपदार्थरसवर्धकेन कर्मणा १८ । ९ । शमदमादियुक्तेन योगाभ्यासेन १८ । ११ । सर्वान्नप्रदेन परमात्मना १८ । १२ । विद्यैश्वर्योन्नतिकरणेन १८ । १६ । वायुविद्याविधानेन १८ । १७ । पृथिवीकालज्ञापकेन १८ । १८ । कालचक्रज्ञानधर्माद्यनुष्ठानेन १८ । २३ । योगेन वियोगेन वा १८ । २५ । पशुपालनविधिना १८ । २६ ॥ [यज्ञेभिः] कर्मोपासनाज्ञाननिष्पादकैः कर्मभिः ( अत्र बहुलं छन्दसीति भिसः ऐस् न ) १ । २४ । १४ [यज्ञे] सम्यक् ज्ञातव्ये ८ । २० । वर्षादिजलव्यवहारे ४ । ५८ । २ ॥ विद्वानों के सत्कार शिल्पविद्या और शुभ गुणों के दान में १२ । ५ । ३ ( १७५ विधि० ) [यज्ञ] इज्यते सर्वैर्जनैः स यज्ञ ईश्वरस्तत्सम्बुद्धौ क्रियासाध्यो वा ( अत्रान्त्ये पक्षे सुपां सुलुगिति सोर्लुक् ) २ । १९ । यो यजति संगच्छते स यज्ञो गृहस्थस्तत्सम्बुद्धौ (अत्रौणादिको नन्प्रत्ययः) ८ । २२ ॥

यज्ञः कस्मात् प्रख्यातं यजतिकर्मेति नैरुक्ताः । याच्ञो भवतीति वा यजुरुन्नो भवतीति वा बहुकृष्णाजिन इत्यौपमन्यवो यजूंष्येनं नयन्तीति वा । नि० ३.१९॥ स ( सोमः ) तायमानो जायते स यन् जायते तस्माद्यञ्जो यञ्जो ह वै नामैतद्यद्यज्ञ इति । श० ३. ९. ४. २३ ॥ प्राणः ( यज्ञस्य ) सोमः । कौ० ९. ६ ॥ अध्वरो वै यज्ञः । श० १. २. ४. ५ ॥ १. ४. १. ३८, ३९ ॥ १. ४. ५. ३ ॥ २. ३. ४. १० ॥ ३. ५. ३. १७ ॥ ३. ९. ३. ११ ॥ यज्ञो वै मखः । श० ६. ५. २. १ ॥ तै० । ३. २.८. ३ ॥ तां० ७. ५. ६. ॥ मख इत्येतद्यज्ञनामधेयम् । गो० उ० २. ५ ॥ यज्ञो वै नमः ( यजु० १३. ८ ॥ ) । श० ७. ४. १. ३० ॥ यज्ञो वै नमः । श० २. ४. २. २४ ॥ २. ६. १. ४२ ॥ ९. १. १. १६ ॥ यज्ञो वै स्वाहाकारः । श० ३. १. ३. २७ ॥ यज्ञो वै भुज्युः ( यजु० १८. ४२ ) यज्ञो हि सर्वाणि भूतानि भुनक्ति । श० ९. ४. १. ११ ॥ यज्ञो भगः ( यजु० ११. ७ ) । श० ६. ३. १. १९॥ गातुं वित्त्वेति यज्ञं वित्त्वेत्येवैतदाह । ( गातुः = यज्ञः ) । श० १. ९. २. २८ ॥ ४. ४. ४. १३ ॥ यज्ञो वाऽ ऋतस्य योनिः ( यजु० ११. ६ ) । श० १. ३. ४. १६ ॥ यज्ञो ह वै मधुसारघम् । श० ३. ४. ३. १३ ॥ यज्ञो वै महिमा ( यजु० ११. ६ ) । श० ६. ३. १. १८ ॥ यज्ञो वै देवानां महः । श० १. ९. १. ११ ॥ एष ह वै महान्देवो यद्यज्ञः । गो० पू० २. १६॥ यज्ञो वै बृहन्विपश्चित् श० ३. ५. ३. १२ ॥ यज्ञो वा अर्यमा । तै० २. ३. ५. ४ ॥ यज्ञो वै तार्प्यम् । तै० १. ३. ७. १ ॥ ३. ९. २०. १ ॥ यज्ञो वै वसुः ( यजु० १. २. ) । श० १. ७. १. ९, १४ ॥ यज्ञो विदद्वसुः । तां० १५. १०. ४॥ यज्ञो वै विदद्वसुः । तां० ११.४. ५ ॥ यज्ञोऽसुरेषु विदद्वसुः । तां० ८. ३. ३ ॥ यत्संयद्वसुः ( यजु० १५. १८ ) इत्याह यज्ञꣳ हि संयन्तीतीदं वस्विति । श० ८. ६. १. १९ ॥ यज्ञो

वै सुतर्मा नौः कृष्णाजिनं वै सुतर्मा नौर्वाग्वै सुतर्मा नौः। ऐ० १. १३ ॥ यज्ञो वै स्वः ( यजु० १. ११ ) अहर्देवाः सूर्यः। श० १. १. २. २१ ॥ यज्ञो वै सुम्नम् ( यजु० १२. ६७, १११) । श० ७. २. २. ४ ॥ ७. ३. १. ३४ ॥ यज्ञो वै श्रेष्ठतमं कर्म ( यजु० १. १. ) । श० १. ७. १. ५ ॥ यज्ञो हि श्रेष्ठतमं कर्म । तै० ३. २. १. ४ ॥ यज्ञो वै विट् ( यजु० ३८. १९. ) । श० १४. ३. १. ९ ॥ यज्ञो वै विशो यज्ञे हि सर्वाणि भूतानि विष्टानि । श० ८. ७. ३. २१ ॥ ब्रह्म यज्ञः। श० ३. १. ४. १५ ॥ ब्रह्म हि यज्ञः। श० ५. ३. २. ४ ॥ ब्रह्म वै यज्ञः । ऐ० ७. २२ ॥ सैषा त्रयी विद्या (=ऋक्सामयजूंषि ) यज्ञः। श० १. १. ४. ३ ॥ एष वै प्रत्यक्षं यज्ञो यत्प्रजापतिः । श० ४. ३. ४. ३ ॥ यज्ञः प्रजापतिः। श० ११ ६. ३. ९. यज्ञ उ वै प्रजापतिः। कौ १०. १ ॥ १३. १ ॥ २५. ११ ॥ २६. ३ ॥ तै० ३ ३. ७. ३ ॥ स वै यज्ञ एव प्रजापतिः। श० १. ७. ४. ४ ॥ प्रजापतिर्यज्ञः ऐ० २. १७ ॥ ४. २६ ॥ श० १. १. १. १३ ॥ १. ५. २. १७ ॥ ३. २. २. ४ ॥ तै० ३. २. ३. १ ॥ गो० उ० ३. ८ ॥ ४. १२ ॥ ६. १ ॥ प्रजापतिर्वै यज्ञः । गो० उ० २. १८ ॥ तै० १. ३. १० ॥ प्राजापत्यो यज्ञः । तै० ३. ७. १. २ ॥ इन्द्रो यज्ञस्यात्मा। श० ९. ५. १. ३३ ॥ इन्द्रो यज्ञस्य देवता। ऐ० ५. ३४॥ ६. ९. ॥ श० २. १. २. ११ ॥ इन्द्रो वै यज्ञस्य देवता। श० १. ४. १. ३३ ॥ १. ४. ५. ४ ॥ २. ३. ४. ३८ ॥ तदाहुः किन्देवत्यो यज्ञ इति, ऐन्द्र इति ब्रूयात्। गो० उ० ३. २३ ॥ एते वै यज्ञस्यान्त्ये तन्वौ यदग्निश्च विष्णुश्च । ऐ० १. १ ॥ विष्णुर्यज्ञः। गो० उ० १. १२ ॥ तै० ३. ३ ७. ६ ॥ यो वै विष्णुः स यज्ञः । श० ५. २. ३. ६ ॥ स यः स विष्णुर्यज्ञः सः, स यः स यज्ञो ऽसौ स आदित्यः । श० १४. १. १. ६ ॥ विष्णुर्वै यज्ञः। ऐ० १. १५॥ यज्ञो विष्णुः। तां० १३. ३. २ ॥ गो० उ० ६. ७ ॥ 'पवित्रे स्थो वैष्णव्यौ' (यजु० १. १२) इति यज्ञो वै विष्णुर्यज्ञिये स्थ इत्येवैतदाह । श० १. १. ३. १ ॥ यज्ञो वै विष्णुः ( यजु० २२. २० ) । श० १३. १. ८. ८ ॥ यज्ञो वै विष्णुः । कौ० ४. २ ॥ १८. ८, १४ ॥ तां० ९. ६. १० ॥ श० १. १. २. १३ ॥ ३. २. १. ३८ ॥ गो० उ०. ४. ६ ॥ तै० १. २. ५. १ ॥ यज्ञो वै विष्णुः शिपिविष्टः । तां० ९. ७ १० ॥ विष्णवे हि गृह्णाति यो यज्ञाय ( हविः ) गृह्णाति । श० ३. ४. १. १४ ॥ अथेमं विष्णुं यज्ञं त्रेधा व्यभजन्त, वसवः प्रातःसवनꣳ रुद्रा माध्यन्दिनꣳ सवनमादित्यास्तृतीयसवनम् । श० १४ १. १. १५ ॥ तद्यदेनेन ( यज्ञेन विष्णुना ) इमाꣳ सर्वांꣳ ( पृथिवीं ) समविन्दन्त तस्माद्वेदिर्नाम । श० १. २. ५. ७ ॥ तं ( यज्ञं ) वेद्यामन्वविन्दन् । ऐ० ३. ९ ॥ यज्ञो वै वैष्णुवारुणः। कौ० १६. ८ ॥ मित्राबृहस्पती वै यज्ञपथः। श० ५. ३. २. ४ ॥ यज्ञो वै देवेभ्यो ऽपाक्रामत्स सुपर्णरूपं कृत्वाचरत् तं देवा एतैः ( सौपर्णैः ) सामभिरारभन्त । तां० १४. ३. १० ॥ वय इव ह वै यज्ञो विधीयते तस्योपांꣳश्वन्तर्यामावेव पक्षावात्मोपांꣳशुसवनः । श० ४. १. २. २५॥ यज्ञमुखं वा ऽ उपांꣳशुः । श० ५. २. ४. १७ ॥ देवा यज्ञियाः । श० १. ५. २. ३ ॥ एतद्वै देवानामपराजितमायतनं यद्यज्ञः तै० ३. ३ ७. ७. ॥ सर्वेषां वा ऽ एष भूतानांꣳ सर्वेषां देवानामात्मा यद्यज्ञः । श० १४. ३. २. १ ॥ यज्ञ उ देवानामात्मा । श० ८. ६. १. १० ॥ यज्ञो वै देवानामात्मा । श० ९. ३. २. ७ ॥ (प्रजापतिर्देवानब्रवीत्-) यज्ञो वो ऽन्नम्। श० २. ४. २. १॥ यज्ञ उ देवानामन्नम् । श० ८. १. २. १० ॥ देवरथो वा एष यद्यज्ञः । ऐ० २. ३७ ॥ कौ० ७. ७ ॥ एते वै यज्ञमवन्ति ये ब्राह्मणाः शुश्रुवांꣳसो ऽनूचाना एते ह्येनं तन्वत ऽ एत ऽ एनं जनयन्ति । श० १. ८. १. २८ ॥ एतैर्ह्यत्र ( यज्ञे ) उभयैरर्थो भवति यद्देवैश्च ब्राह्मणैश्च । श० ३. ३. ४. २० ॥ स हैष यज्ञ उवाच । नग्नताया वै बिभेमीति का ते ऽनग्नतेत्यभित एव मा परिस्तृणीयुरिति तस्मादेतदग्निमभितः परिस्तृणन्ति तृष्णाया वै बिभेमीति

का ते तृप्तिरिति ब्राह्मणस्यैव तृप्तिमनुतृप्येयमिति तस्मात्संस्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रूयाद्यज्ञमेवैतत्तर्पयति । श० १. ७. ३. २८ ॥ यद्वै यज्ञस्य न्यूनं प्रजननमस्य तदथ यदतिरिक्तं पशव्यमस्य तदथ यत्संकसुकं श्रियाऽ अस्य तदथ यत्सम्पन्नं स्वर्ग्यमस्य तत् । श० ११. ४. ४. ८ ॥ त्रिवृद्धियज्ञः । श० १. १. ४, २३ ॥ १. २. ५. १४ ॥ ३. २. १. ३९ ॥ त्रिवृत्प्रायणा हि यज्ञास्त्रिवृदुदयनाः । श० २. ३. ४.१७ ॥ ते वै पञ्चान्यद् भूत्वा पञ्चान्यद् भूत्वा कल्पेतामाहावश्च हिंकारश्च प्रस्तावश्च प्रथमा च ऋगुद्गीथश्च मध्यमा च प्रतिहारश्चोत्तमा च निधनञ्च वषट्कारश्च ते यत्पञ्चान्यद् भूत्वा पञ्चान्यद् भूत्वा कल्पेतां तस्मादाहुः पाङ्क्तो यज्ञः पांङ्क्ताः पशव इति । ऐ० ३. २३. ॥ गो० उ० ३. २० ॥ पाङ्क्तो यज्ञः । श० १. ५- २. १६ ॥ ३. १. ४. २० ॥ गो० पू० ४. २४ ॥ गो० उ० २. ३ ॥ ३. २० ॥ ४. ४, ७ ॥ पाङ्क्तो वै यज्ञः । ऐ०१. ५ ॥ ५. ४. १८, १९ ॥ कौ० १. ३, ४ ॥ २. १ ॥ १३. २ ॥ तै० १. ३. ३. १. ॥ श० १. १. २. १६ ॥ पाङ्क्तो यज्ञः । तां०६.७. १२ ॥ ऐ० ३. २३ ॥ यज्ञो वा आश्रावणम् । श० १. ५. १. १ ॥ १. ८. ३. ९ ॥ एष वै यज्ञो यदग्निः । श० २. १. ४- १९ ॥ अग्निर्यज्ञः । श० ३. २. २. ७ ॥ अग्निरु वै यज्ञः । श० ५ २. ३. ६ ॥ अग्निर्वै यज्ञः । श० ३. ४. ३. १९ ॥ तां० ११. ५. २ ॥ अग्निर्वै योनिर्यज्ञस्य । श० १.५. २. ११, १४ ॥ ३. १. २८. ३. ॥ ११. १. २. २ ॥ शिर एतद्यज्ञस्य यदग्निः । श० ९. २. ३. ३१ ॥ अग्निर्वै यज्ञमुखम् । तै० १. ६. १. ८ ॥ एष हि यज्ञस्य सुक्रतुः ( ऋ० १. १२. १ ) यदग्निः । श० १. ४. १. ३५॥ वाग्घि यज्ञः । श० १. ५. २. ७ ॥ ३. १.४. २ ॥ वाग्वै यज्ञः । ऐ० ५. २४. ॥ श० १. १. २. २ ॥ ३. १. ३. २७ ॥ ३. २. २. ३ ॥ वागु वै यज्ञः श० १. १. ४. ११ ॥ वाग्यज्ञस्य ( रूपम् ) श० १२. ८. २. ४ ॥ अयं वै यज्ञो योऽयं (वायुः) पवते । ऐ० ५. ३३ ॥ श० । १. ९. २. २८ ॥ २. १.४. २१ ॥ ४. ४. ४. १३ ॥ ११. १. २. ३ ॥ अयं वाव यज्ञो यो ऽयं (वायुः) पवते । जै० उ० ३. १६. १ ॥ अयमु वै यः ( वायुः ) पवते स यज्ञः । गो० पू० ३. २. ॥ ४. १ ॥ वातो वै यज्ञः । श० ३. १. ३. २६ ॥ संवत्सरो यज्ञः । श० ११. २. ७. १ ॥ संवत्सरो यज्ञः प्रजापतिः । श० २.२.२. ४ ॥ संवत्सरसंमितो वै यज्ञः पञ्च वाऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च जुहोति । श० ३. १. ४. ५ ॥ यज्ञ एव सविता । गो० पू० १. ३३ ॥ जै० उ० ४. २७. ७. ॥ स यः स यज्ञोऽसौ स आदित्यः । श० १४. १. १. ६ ॥ यज्ञो वै यजमानभागः । ऐ० ७. २६ ॥ यजमानो वै यज्ञः । ऐ० १. २८ ॥ यजमानो यज्ञः । श० १३. २. २. १ ॥ आत्मा वै यज्ञस्य यजमानोंगान्यृत्विजः । श० ९. ५. २. १६ ॥ आत्मा वै यज्ञः । श० ६. २. १. ७ ॥ पुरुषो वै यज्ञस्तस्य शिर एव हविर्धानं मुखमाहवनीय उदरं सदोऽन्नमुक्थानि बाहू मार्जालीयश्चाऽऽग्नीध्रीयश्च या इमा अन्तर्देवतास्ते अन्तः सदसं धिष्ण्या प्रतिष्ठा गार्हपत्यव्रतश्रवणाविति । कौ० १७. ७ ॥ पुरुषो वै यज्ञस्तस्य शिर एव हविर्धानं मुखमाहवनीयः उदरं सदः, अन्तरुक्थानि, बाहू मार्जालीयश्चाग्नीध्रीयश्च, या इमा देवतास्तेऽन्तःसदसं धिष्ण्याः, प्रतिष्ठे गार्हपत्यव्रतश्रपणाविति । गो उ० ५. ४ ॥ पुरुषो वै यज्ञः । कौ० १७. ७ ॥ २५. १२ ॥ २८. ९ ॥ श० १. ३. २. १ ॥ ३. ५. ३. १ ॥ तै० ३. ८. २३. १ ॥ ज० उ० ४. २. १ ॥ गो० पू० ४. २४ ॥ गो० उ० ६. १२ ॥ पुरुषो यज्ञः । श० ३. १. ४. २३ ॥ सः ( पुरुषः ) यज्ञः । गो० पू० १. ३९ ॥ पुरुषो वै यज्ञस्तेनेदं सर्वं मितम् ( तैतीरीयसंहियातायाम् ५. २. ५. १ :– यज्ञेन वै पुरुषः सम्मितः ॥ ) । श० १०. २. १. २ ॥ पुरुषो सम्मितो यज्ञः । श० ३. १. ४. २३ ॥ पशवो यज्ञः । श० ३. २. ३. ११ ॥ पशवो हि यज्ञः । २. ३. १. ४. ९ ॥ कतमो यज्ञ इति

पशव इति । श० ११. ६. ३. ९ ॥ शतोन्मानो वै यज्ञः । श० १२. ७. २. १३ ॥ यज्ञो वै भुवनज्येष्ठः । कौ० २५. ११ ॥ यज्ञो वै भुवनस्य नाभिः । तै० ३. ९. ५. ५ ॥ यज्ञो वै भुवनम् ॥ तै० ३. ३. ७. ५ ॥ यज्ञो वा अनः ॥ श० १. १. २. ७ ॥ ३. ९. ३. ३ ॥ आपो वै यज्ञः । ऐ० २. २० ॥ श० ३. ८. ५. १ ॥ यज्ञो वाऽआपः । कौ० १२. १ ॥ श० १. १. १. १२ ॥ तै० ३. २. ४. १ ॥ अग्निर्यज्ञः प्रणीयमानः प्राङ् तायते । तस्मादाचमनीयं पूर्वमाहारयति । गो० पू० १. ३९ ॥ ऋतेरक्षा वै यज्ञः । ऐ० २. ७ ॥ परोऽक्षं यज्ञः । श० ३. १. ३. २५ ॥ अजातो ह वै तावत्पुरुषो यावन्न यजते स यज्ञेनैव जायते । जै० उ० ३. १४. ८ ॥ तन्न सर्व इवाभिप्रपद्येत ब्राह्मणो वैव राजन्यो वा वैश्यो वा ते हि यज्ञियाः । श० ३. १. १. ९ ॥ अयज्ञो वा एषः योऽपत्नीकः । तै० २. २. २. ६ ॥ पूर्वार्धो वै यज्ञस्याध्वर्युर्जघनार्धः पत्नी । श० १. ९. २. ३ ॥ जघनार्धो वाऽ एष यज्ञस्य यत्पत्नी । श० १. ३. १. १२ ॥ २. ५. २. २९ ॥ ३. ८. २. २ ॥ अथ त्रीणि वै यज्ञस्येन्द्रियाणि । अध्वर्युर्होता ब्रह्मा । तै० १. ८. ६. ६ ॥ मनोर्यज्ञऽ इत्यु वाऽआहुः । श० १. ५. १. ७ ॥ मनुर्ह वाऽ अग्रे यज्ञेनेजे तदनुकृत्येमाः प्रजा यजन्ते । श० १. ५. १. ७ ॥ ज्येष्ठयज्ञो वा एष यद् द्वादशाहः । ऐ० ४. २५ ॥ यज्ञं वाऽ अनु प्रजाः । श० १. ८. ३. २७ ॥ यज्ञाद्धै प्रजाः प्रजायन्ते । श० ४. ४. २. ९ ॥ रेतो वाऽ अत्र यज्ञः । श० ७. ३. २. ९ ॥ ( यज्ञस्य ) प्राणो धूमः । श० ६. ५. ३. ८ ॥ एतच्छिरो यज्ञस्य यद्विष्णुवान् । कौ० २६. १ ॥ शिरो वै यज्ञस्यातिथ्यम् । बाहू प्रायणीयोदयनीयौ । श० ३. २. ३ २० ॥ शिरो वा एतद्यज्ञस्य यदातिथ्यम् । ऐ० १. १७, २५ ॥ कौ० ८. १ ॥ शिरो वै यज्ञस्याहवनीयः पूर्वोऽर्धो वै शिरः पूर्वार्धमेवैतद्यज्ञस्य कल्पयति । श० १. ३. ३. १२ ॥ एतद्वै यज्ञस्य शिरो यन्मन्त्रवान्ब्रह्मौदनः । गो० पू० २. १६ ॥ शिरो वै यज्ञस्योत्तर आघारः । श० १. ४. ५. ५ ॥ ३. ७. ४. ७ ॥ उत्तरत उपचारो हि यज्ञः । श० ८. ६. १. १९ ॥

चक्षुषी वाऽ एते यज्ञस्य यदाज्यभागौ । श० ११. ७. ४. २ ॥ १४. २. २. ५२ ॥ एतद्वै प्रत्यक्षाद्यज्ञरूपं यद् घृतम् । श० १२. ८. २. १५ ॥ मृगधर्मा (=पलायनशीलः) वै यज्ञः । तां० ६. ७. १० ॥ यज्ञो वै मैत्रावरुणः । कौ० १३. २ ॥ मनो ( वै यज्ञस्य ) मैत्रावरुणः । श० १२. ८. २. २३ ॥ मनो वै यज्ञस्य मैत्रावरुणः । ऐ० २. ५. २८ ॥ विराड् वै यज्ञः । श० १. १. १. २२ ॥ २. ३. १. १८ ॥ ४. ४. ५. १९ ॥ वैराजो यज्ञः गो० पू० ४. २४ ॥ गो० उ० ६. १५ ॥ यद्दु ह किं च देवाः कुर्वते स्तोमेनैव तत्कुर्वते यज्ञो वै स्तोमो यज्ञेनैव तत्कुर्वते । श० ८. ४. ३. २ ॥ नासामा यज्ञो अस्ति । श० १. ४. १. १ ॥ एते वै यज्ञा वागन्ता ये यज्ञायज्ञीयान्ताः । तां० ८. ६. १३ ॥ श्रायन्तीयं यज्ञविभ्रष्टाय ब्रह्मसाम कुर्यात् । तां० ८. २. ९ ॥ यज्ञस्य शीर्षच्छिन्नस्य ( रसो व्यक्षरत्स ) पितॄनगच्छत् । श० १४. २. २. द ११ ॥ क्षिणतो वै देवानां यज्ञं रक्षांस्यजिघांसन् । गो०उ० १. १८ ॥ २.१६ ॥ रक्षांऽसि यज्ञं न हिंऽस्युरिति । श० १. ८.१.१६ ॥ देवानां वै यज्ञंऽ रक्षांऽस्यजिघांऽसन् । तां० १४. १२. ७ ॥ ह्वलति वाऽ एष यो यज्ञपथादेत्येति वाऽ एष यज्ञपथाद्यदयज्ञियान्यज्ञेन प्रसजत्ययज्ञियान्वाऽ एतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वत् ॥ श० ५. ३. २. ४ ॥ यद्वै यज्ञस्यान्यूनातिरिक्तं तच्छिवम् । श० ११. २. ३. ९ ॥ यद्वै यज्ञस्यान्यूनातिरिक्तं तत्स्विष्टम् । श० ११. २. ३. ९ ॥ विष्णुर्वै यज्ञस्य दुरिष्टं पाति । ऐ० ३. ३८ ॥ ७. ५ ॥ यद्वै यज्ञस्य दुरिष्टं तद्वरुणो गृह्णाति । तां० १३. २. ४ ॥ १५. १. ३ ॥ वरुणेन ( यज्ञस्य ) दुरिष्टं ( शमयति ) । तै० १. २. ५. ३ ॥ यद्रुद्रस्य ( ईशानस्य ) दुरिष्टं भवति वरुणोऽस्य तद् गृह्णाति । श० ४. ५. १. ६ ॥ वरुणः ( यज्ञस्य ) स्विष्टम् ( पाति ) । ऐ० ३. ३८ ॥ ७. ५ ॥ अक्षरेणैव यज्ञस्य छिद्रमपिदधाति । तां० ८. ६. १३ ॥ यज्ञो यज्ञस्य प्रायश्चित्तिः । ऐ० ७. ४ ॥ यद्यज्ञेऽभिरूपं तत्समृद्धम् । कौ० ९. ६ ॥ गो० उ० ४.

१८ ॥ एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति । ऐ० १. ४, १३, १६ १७ ॥ व्यृद्धमु वाऽ एतद्यज्ञस्य । यदयजुष्केण क्रियते । श० १३. १. २. १ ॥ व्यृद्धं वै तद्यज्ञस्य यन्मानुषम् । श० १. ४. १. ३५ ॥ १. ८. १. २९ ॥ ३. २. २. १५ ॥ ३. ३. ४. ३१ ॥ स एतं त्रिवृतं सप्ततन्तुमेकविंशातिसंस्थं यज्ञमपश्यत् । गो० पू० १. १२ ॥ सप्त सुत्याः सप्त च पाकयज्ञाः हविर्यज्ञाः सप्त तथैकविंशतिः सर्वे ते यज्ञा अंगिरसोऽपियन्ति नूतना यानृषयो सृजन्ति ये च सृष्टाः पुराणैः । गो० पू० ५. २५ ॥ अथातो यज्ञक्रमाः । अग्न्याधेयमग्न्याधेयात्पूर्णाहुतिः पूर्णाहुतेरग्निहोत्रमग्निहोत्राद्दर्शपूर्णमासौ दर्शपूर्णमासाभ्यामाग्रयणमाग्रयणाच्चातुर्मास्यानि चातुर्मास्येभ्यः पशुबन्धः पशुबन्धादग्निष्टोमोऽग्निष्टोमाद्राजसूयो राजसूयाद्वाजपेयो वाजपेयादश्वमेधोऽश्वमेधात्पुरुषमेधः पुरुषमेधात्सर्वमेधः सर्वमेधाद्दक्षिणावन्तो दक्षिणावद्भ्योऽदक्षिणा अदक्षिणाः सहस्रदक्षिणे प्रत्यतिष्ठंस्ते वा एते यज्ञक्रमाः । गो० पू० ५. ७. ॥ अग्निष्टोम उक्थ्योऽग्निर्ऋतुः प्रजापतिः संवत्सर इति । एते ऽनुवाका यज्ञक्रतूनाञ्चर्तूनाञ्च संवत्सरस्य च नामधेयानि । तै० ३. १०. १०. ४ ॥ हवींषि ह वाऽ आत्मा यज्ञस्य । श० १. ६. ३. ३९ ॥ आहुतिर्हि यज्ञः । श० ३. १. ४. १ ॥ वनस्पतयो हि यज्ञिया न हि मनुष्या यजेरन् यद्वनस्पतयो न स्युः । श० ३. २. २. ९ ॥ यदि पालाशान् ( परिधीन् ) न विन्देत् । अथोअपि वैकंकता स्युर्यदि वैकंकतान्न विन्देदथोऽअपि कार्ष्मर्यमयाः स्युर्यदि कार्ष्मर्यमयान्न विन्देदथोऽअपि वैल्वाः स्युरथो खादिरा अथोऽऔदुम्बरा एते हि वृक्षा यज्ञियाः । श० १. ३. ३. २० ॥ तस्मादेष ( विकंकतः ) यज्ञियो यज्ञपात्रीयो वृक्षः । श० २. २. ४. १० ॥ यज्ञो विकंकतः । श० १४. १. २. ५ ॥ कुलायमिव ह्येतद्यज्ञे क्रियते यत्पैतुदारवाः परिधयो गुग्गुलूर्णास्तुकाः सुगंधितेजनानीति । ऐ० १. २८॥ स यः श्रद्दधानो यजते तस्येष्टं न क्षीयते । कौ० ७. ४ ॥ यज्ञो वा अवति । तां ६. ४. ५ ॥ इतः प्रदाना वै वृष्टिरितो ह्यग्निर्वृष्टिं वनुते स ( अग्निः ) एतैः ( घृत- ) स्तोकैरेतान्स्तोकान् वनुते तऽएते स्तोका वर्षन्ति । श० ३. ८. २. २२ ॥ ततोऽसुरा उभयीरोषधीर्याश्च मनुष्या उपजीवन्ति याश्च पशवः कृत्ययेव त्वद्विषेणेव त्वत्प्रलिलिपुरुतैवं चिद्देवानभिभवेमेति ततो न मनुष्या आशुर्न पशव आलिलिशिरे ता हेमाः प्रजा अनाशकेन नोत्पराबभूवुः.........ते ( देवाः ) होचुर्हन्तेदमासामपजिघांसामेति केनेति यज्ञेनैति । श० २. ४. ६. २, ३ ॥ एतेन वै देवाः । ( आग्रयणाख्येन ) यज्ञेनेष्ट्वोभयीनामोषधीनां याश्च मनुष्या उपजीवन्ति याश्च पशवः कृत्यामिव त्वद्विषमिव त्वदपजघ्नुस्तत आश्नन्मनुष्या आलिशन्त पशवः । श० २. ४. ३. ११ ॥ भैषज्ययज्ञा वा एते यच्चातुर्मास्यानि तस्मादृतुसंधिषु प्रयुज्यंते ऋतुसंधिषु वै व्याधिर्जायते । गो० उ० १. १९ ॥ भैषज्ययज्ञा वा एते यच्चातुर्मास्यानि तस्मादृतुसंधिषु प्रयुज्यन्ते ऋतुसंधिषु हि व्याधिर्जायते । कौ० ५. १ ॥ एष ह वै यजमानस्यामुष्मिँल्लोकऽ आत्मा भवति यद्यज्ञः स ह सर्वतनूरेव यजमानो ऽमुष्मिँल्लोके सम्भवति य एवं विद्वान्निष्क्रीत्या यजते । श० ११. १. ८.६ ॥ यज्ञेन वै देवा दिवमुपोदक्रामन् । श० १. ७. ३. १ ॥ स्वर्गो वै लोको यज्ञः । कौ० १४. १ ॥ (यज्ञेन वै देवाः सुवर्गं लोकमायन्–तैत्तिरीयसंहितायाम् ६. ३. ४.७॥ ) यज्ञेन वै तद्देवा यज्ञमयजन्त यदग्निनाऽग्निमयजन्त ते स्वर्गं लोकमायन् । ऐ० १. १६ ॥

**यज्ञक्रतुः** यज्ञस्य प्रापकः ४ । ५१ । ११ ॥

**यज्ञनीः** यज्ञं त्रिविधं नयति प्रापयतीति सः ( सत्सुद्विषद्रुह० इति क्विप् ) १ । १५ । १२ ॥

**यज्ञपतिः** यज्ञस्य स्वामी यज्ञकर्त्ता यजमानः ( धात्वर्थाद् यज्ञार्थस्त्रिधा भवति विद्याज्ञानधर्मानुष्ठानवृद्धानां देवानां विदुषामैहिकपारमार्थिकसुखसम्पादनाय सत्कृ-

रणं सम्यक् पदार्थगुणसम्मेलविरोधज्ञान-संगत्या शिल्पविद्याप्रत्यक्षीकरणं नित्यं विद्वत्समागमानुष्ठानं शुभविद्यासुखधर्मादि-गुणानां नित्यं दानकरणमिति ) १ । २ ॥ [यज्ञपतिम्] यज्ञस्यनुष्ठातारं स्वामिनं, यज्ञस्य कामयितारम्वा १ । १२ । संगतस्य न्यायस्य पालकम् ७ । २० । गृहाश्रमस्य पालकं पुरुषपालिकां स्त्रियं वा ८।७। संगम्यानां गृहाश्रमिणां पालकं राजानम् ८ । २२ । राजधर्मपालकम् ६ । ९ । उपदेशेन धर्मरक्षकम् १२ । ६० । राज्यपालकम् १७ । ५४ ॥

यजमानो हि यज्ञपतिः । श० ४. २. २. १० ॥ ( यजु० १. २ ॥ ) यजमानो वै यज्ञपतिः । श० १. १. २. १२ ॥ १. २. २. ८ ॥ १. ७. १. ११ ॥ वत्सा उ वै यज्ञपतिं वर्धन्ति यस्य ह्येते भूमिष्ठा भवन्ति स हि यज्ञपतिर्वर्धते । श० १. ८. १. २८ ॥

यज्ञप्रीः यो यज्ञं प्राति पूरयति सः २७ । ३१ ॥

यज्ञबन्धुः यज्ञस्य न्यायव्यवहारस्य भ्रातेव वर्तमानः ४ । १ । ६ ॥

यज्ञंयज्ञम् प्रतिव्यवहारम् ३ । ६ । १० ॥

यज्ञवनसम् यज्ञस्य विद्याव्यवहारस्य विभा-जकम्, राज्यव्यवहारस्य वा विभक्तारम् ४ । १ । २ ॥

यज्ञवन्तः प्रशस्ता यज्ञाः प्रयत्ना येषां ते ३ । २७ । ६ ॥

यज्ञवाहसा यज्ञान् द्रव्यान् वहतः प्राप-यतस्तौ १ । १५ । ११ । यज्ञप्रापकौ ४ । ४७ । ४ ॥ [यज्ञवाहसः] यज्ञान् वोढुं शीलं येषां ते १ । ८६ । २ ॥ [यज्ञवाहसम्] यो यज्ञं परमेश्वरोपासनं शिल्पविद्यासिद्धं वा वहति प्रापयति ताम् ४। ११॥ [यज्ञवाहसे] यज्ञस्याध्ययनाध्याप नस्य प्राप्तये ३।८।३॥ [यज्ञवाहसि] यज्ञान् संगतान् राजधर्मादीन् वहन्ति यस्मिन् राज्ये तस्मिन् ६ । ३७ ॥

यज्ञवृद्धम् यज्ञे पूज्यं विद्वांसम् ६ । २१ । २ ॥

यज्ञश्रियम् चक्रवर्तिराज्यादेर्महिम्नः श्रीर्ल-क्ष्मीः शोभा ( राष्ट्रं वाऽश्वमेधः । श० १३ । १ । ६ । ३ अनेन यज्ञशब्दाद्राष्ट्रं गृह्यते ) यज्ञो वै महिमा । श० ६। २। ३ । १८ ) १ । ४ । ७ ॥

यज्ञसाधनः यज्ञस्य विद्वत्सत्कारस्य साध-नानि यस्य १ । १४५ । ३ ॥

यज्ञसाधम् यो यज्ञैर्विज्ञानादिभिर्ज्ञातुं शक्य-स्तम् १ । ९६ । ३ । यो यज्ञं प्रजापालनं साध्नोति तम् १ । ११४ । ४ । यज्ञं साध्नु-वन्तम् १ । १२८ । २ ॥

यज्ञायज्ञा यज्ञे यज्ञे ( अत्र सुपां सुलुगित्या-कारादेशः ) २७ । ४२ ॥

यज्ञायज्ञियम् यज्ञाः संगन्तव्या व्यवहारा अय-ज्ञास्त्यक्तव्याश्च तान् यदर्हति तत् १२ । ४ ॥

चन्द्रमा वै यज्ञायज्ञियं यो हि कश्च यज्ञः संतिष्ठतऽ एतमेव तस्याहुतीनाꣳ रसोऽप्येति तद्यदेतं यज्ञो यज्ञो ऽप्येति तस्माच्चन्द्रमा यज्ञायज्ञियम् । श० ९.१.२. ३९ ॥ स्वर्गो वै लोको यज्ञायज्ञियम् श० । ९.४.४.

१० ॥ ( साम ) योनिर्वै यज्ञायज्ञीयमेतस्माद्धि योनेः प्रजापतिर्यज्ञमसृजत यद्यज्ञं यज्ञमसृजत तस्माद्यज्ञायज्ञीयम् । तां० ८. ६. ३ ॥ देवा वै ब्रह्म व्यभजन्त तस्य यो रसोऽत्यरिच्यत तद्यज्ञायज्ञीयमभवत् । तां० ८. ६. १ ॥ एषा वै प्रत्यक्षमनुष्टुब्यद्यज्ञायज्ञीयम् । तां० १५. ९. १५ ॥ यज्ञायज्ञीयं ह्येव महाव्रतस्य पुच्छम् । तां० ५. १. १८ ॥ यज्ञायज्ञीयं पुच्छम् ( महाव्रतस्य ) । तां० १६. ११.११॥ अतिशयं वै द्विपदां यज्ञायज्ञीयम् । तां० ५. १. १९ ॥ वाचो रसो यज्ञायज्ञीयम् । तां० १८. ५. २१ ॥ १८. ११. २ ॥ वाग्यज्ञायज्ञीयम् । तां० ५. ३. ७ ॥ ११. ५. २८ ॥ एते वै यज्ञा वाग्गन्ता ये यज्ञायज्ञीयान्ताः । तां० ८. ६. १३. एषा वै शिशुमारी यज्ञपथेऽप्यस्ता यज्ञायज्ञीयं यद् गिरा गिरेत्याहात्मानं तदुद्गाता गिरति । तां० ८. ६. ९ ॥ पशवो ऽन्नाद्यं यज्ञायज्ञीयम् । १५. ९. १२ ॥ पन्था वै यज्ञायज्ञीयम् तां० ४. २. २१ ॥ कथमिव यज्ञायज्ञीयङ्गेयमित्याहुर्य्यथा ऽनड्वान् प्रस्तावयमाण इत्थमिव चेत्थमिव चेति । तां० ८. ७. ४ ॥

**यज्ञायते** यज्ञं कामयमानाय ५ । ४१ । १ ॥

**यज्ञियः** यज्ञं कर्तुमर्हः १ । १४२ । ३ । यज्ञेषु कुशलः ३ । ३२ । १२ ॥ [यज्ञियाः] यज्ञसाधनार्हाः १। १४२ । ६ । विद्यावृद्धिमययज्ञप्रचारार्हाः २ । ४१ । २ ॥ ये सत्संगतिं कर्तुमर्हाः ६ । ५२ । १४ ॥ [ यज्ञियासः ] शिल्पाख्यं यज्ञमर्हन्ति ते १ । १४८ । ३ अहिंसायज्ञस्यानुष्ठातारः ३ । ५४ । १८ । ये सत्यप्रियं व्यवहारं कर्तुमर्हन्ति ६।४६।११॥ [ यज्ञियम् ] यज्ञकर्मार्हतीति यज्ञीयो देशस्तम् ( तत्कर्मार्हतीत्युपसंख्यानम् अ० ५ । १ । ७१ इति वार्त्तिकेन यः-प्रत्ययः ) १ । ६ । ४ । यज्ञानिष्पन्नम् १ । २० । ८ यज्ञयोग्यं देशं गन्तुमर्हम् १ । ११६ । १ । राज्यव्यवहारनिष्पादकम् ३ । ६० । ७ ॥ यज्ञाङ्गसमूहनिष्पादकम्, यज्ञसम्बन्धि, शिल्पविद्यायज्ञसम्बन्धि वा ५ । ६ । यज्ञानुष्ठानार्हं स्वरूपम् १२।१। ४॥ [ यज्ञियानि ] कर्मोपासनाज्ञानसम्पादनार्हाणि कर्माणि १ । ७२ । ३ ॥ [यज्ञियाय] यज्ञकर्मार्हतीति यज्ञियो योद्धा तस्मै १ ।१२७।१०॥ [यज्ञियस्य] पूजनार्हस्य ३ । ३२ । ७ ॥ [ यज्ञियानाम् ] सत्संगतिमर्हाणाम् ६।६३।५। यज्ञस्य पतिं विख्यातुमर्हाणाम् ८ । १५ ॥ [ यज्ञियेषु ] राजपालनादिसंगतेषु व्यवहारेषु ७ । ३२ । १३ ॥

यज्ञियाय यजनाय। नि० १०. ८ ॥ यज्ञियानाम् यज्ञसम्पादिनाम् । नि० ७. २७ ॥

**यज्यवः** [ यज्यवः ] संगन्तारः २ । १४ । ८ । सत्कर्तव्याः ३ । १६ । ४ ॥ [ यज्यून् ] सत्यभाषणादियज्ञानुष्ठातॄन् ५ । ३१ । १३ ॥ [ यज्यवे ] होमादिशिल्पविद्यासाधकाय विदुषे ( अत्र यजिमनिशुन्धिदसि० उ० ३ । २० अनेन यजधातोर्युच् प्रत्ययः ) १ । ३१ । १३ ॥ यज्ञानुष्ठानाय १ । ५५ । ६ ॥ यजमानाय ५. ४१. ३ ॥ [ यज्योः ] संगन्तुमर्हस्य सत्यव्यवहारस्य ४ । २३ । २ ॥

**यज्वरी** शिल्पविद्यासम्पादनहेतून् १।३।१ ॥

**यज्वा** संगन्ता ६ । १५ । १४ ॥ [ यज्वने ] यज्ञस्य कर्त्रे ६ । २८ । २ ॥ [ यज्वनः ]

यज्ञानुष्ठातुः (अत्र सुयजोर्ङ्वनिप् अ० ३।२।१०३ अनेन यज धातोर्ङ्वनिप्-प्रत्ययः) १।२३।१२। विदुषां सेवकस्य संगच्छमानस्य ६।२८।४॥

**यत्** यावत् १।२३।११। यथा (सुपां सुलुगिति तृतीयैकवचनस्य लुक्) १।३१।११ यदा १।८०।१४॥ यस्मात् कारणात् १।१६३।१॥ यतः ६।२।३॥ यादृशम् ५।६।यत्र ५।६०।६। यः १।३२।१३। यौ १।११६।५। ये १।७२।३। यम् १।५६।५। यान् १।१३२।५ येन ६।१३।५ यस्मै १।११७।२। यस्मात् २०।८२। यस्य ८।४६। यस्मिन् ६।४६।१३॥ या ६।३।३। याः ४।२२।७। याम् ४।४४।२। यया ७।५७।४॥ यत् ६।६।६। यानि ६।३४।४॥

**यतङ्करः** यः प्रयत्नं करोति ५।३४।४॥

**यतति** यतते (अत्र व्यत्ययेन परस्मैपदम्) ७।३६।२॥

**यतते [यतते]** यत्नं करोति १।१८६।११। साध्नोति ३।१६।४। व्यवहारयति १।६५।७। संयतो भवति १।६८।१॥

यतते गतिकर्मा। निघ० २. १४॥

**यतथः [यतथः]** प्रेरयथः ५।६५।६। यतेथे (अत्र व्यत्ययेन परस्मैपदम्) ५।७४।२॥

**यतध्वम्** यतध्वम् १०।२६॥

**यतन्** यत्नं कुर्वन् ५।४८।५॥

**यतन्ताम्** यतन्ताम् ५।५६।८॥

**यतन्ते [यतन्ते]** यतन्ते २६।२१। यातयन्ति (अत्र अन्तर्भावितरायर्थः) १।१६३।१०॥

**यतमानः** प्रयतमानः ५।४।४॥

**यतमानाः** प्रयत्नं कुर्वत्यः १।१६३।१२॥

**यतये** यतमानाय संन्यासिने ७।१३।१॥

**यतरश्मयः** यता निगृहीता रश्मयः किरणा रज्जवो वा येषान्ते ५।६२।४॥

**यतस्रुक्** उद्यतक्रियासाधनः ४।२।६। यता उद्यताः स्रुचो येन सः ४।१२।१॥
**[यतस्रुचा]** यता नियताः स्रुचः साधनानि याभ्यामुपदेशाभ्यां तौ १।८३।३॥ यता उद्यताः स्रुचः स्रुग्वत्कलादयो ययोस्तौ [अत्र सुपां सुलुगिति द्विवचनस्थान आकारादेशः] १।१०८।४॥
**[यतस्रुचः]** प्राप्तोद्यमाः १।१४२।५। यताः स्रुचो यज्ञपात्राणि यैस्तान् ऋत्विजः २।३४।११। यता गृहीताः स्रुचो यैस्ते ३।२।५। यता स्रुग् यज्ञसाधनं यैस्ते ऋत्विजः ३।८।७॥

यतस्रुचः ऋत्विङ्नाम। निघ० ३. १८॥

**यतस्व [यतस्व]** प्रयत्नं कुरु ७।४५॥

**यता** प्राप्ता ४।६।३॥

**यतानाः** प्रयतमानाः ३।८।६॥

**यति** या संख्या येषान्तान् १६।६७॥

यती यतमाना ५ । ४५ । ७ । गच्छन्ती ५ । ५६ । २ ॥ [ यतीषु ] नियतासु सेनासु ४ । ३८ । ७ ॥

यतीरिव प्रयत्नसाध्या क्रिया इव ५ । ५३ । ५ ॥

यतुनस्य यत्नशीलस्य ५ । ४४ । ८ ॥

यतेम प्रयत्नं कुर्य्याम ६ । १ । १० ॥

यतेमहि यतेमहि ५ । ६६ । ६ ॥

यतोजाः यस्माज्जातः २३ । ५६ ॥

यतोयतः यस्माद्यस्मात् स्थानात् ३६ । २२ ॥

यत्कामः यः कामो यस्य सः ४ । ४ ॥ [ यत्कामाः ] यस्य यस्य कामः कामना येषान्ते १० । २० ॥ यः पदार्थः कामो येषान्ते २३ । ६५ ॥

यत्र यस्मिन् व्यवहारे १ । २८ । २ । यस्मिन् कर्मणि १ । २८ । ३ । यस्मिन् देशे १ । ८३ । ६ । यस्मिन् समये २ । २४ । ८ । यस्मिन् जन्मनि २६ । १५ । यस्मिन् सुखे ३१ । १६ ॥

यथा [ यथा ] येन प्रकारेण १ । २५ । १ ॥ इव । नि० ३. १५.

यथाकृतम् येन प्रकारेणाऽनुष्ठितम् ७ । १८ । १० ॥

यथाभागम् भागमनतिक्रम्य कुर्वन्तीति यथाभागम् २ । ३१ । भागं भागं प्रतीति यथाभागम् ( अत्र वीप्सार्थे प्रतिः ) २ । ३१ ॥

यथायथम् यथार्थम् ५ । ४० । यथायोग्यम् २१ । ५८ ॥

यथावशम् वशमनतिक्रम्य यथा स्यात्तथा २ । २४ । १४ ॥ वशमनतिक्रम्य वर्तते तत् ३ । ४८ । ४ । वशमनतिक्रम्य करोति ५ । ३४ । ६ ॥

यदा यस्मिन् काले १ । ८२ । १ ॥

यदि सामर्थ्यानुकूलविचारे १ । २७ । १३ । चेत् १ । ३० । ८ ॥

यदिव सङ्गतमिव १ । १६४ । ३७ ॥

यदुम् इतरधनाय यततेऽसौ यदुर्मनुष्यस्तम् ( अत्र यती प्रयत्न इत्यास्माद् बाहुलकादौणादिक उः प्रत्ययस्तकारस्य दकारः ) १ । ३६ । १८ । प्रयतमानम् १ । ५४ । ६ ॥

यन् गच्छन् (इण् धातोः शतृप्रत्ययो यणादेशश्च ) १ । १८३ । २ । य एति ६ । ३ । ७ ॥ [ यन्तौ ] गमयन्तौ १ । १३६ । ४ । [ यन्तः ] प्राप्नुवन्तः १ । १४० । १३ ॥ [ यन्तम् ] प्रयत्नं कुर्वन्तम् ५ । ६४ । २ ॥ [ यतः ] प्रापकान् ११ । ३ ॥ यस्मात् ३ । १४ । येन ६ । ४ । हेत्वर्थे १ । २५ । १७ ॥ [यते] प्रयतमानाय १ । ४१ । ४ । गच्छते १ । १८८ । २ । यत्नशीलाय ५ । २७ । ४ ॥

[ यति ] प्रयतन्ते यस्मिन् तस्मिन् ७ । ४३ । ४ ॥

यन् प्राप्नुवन्ति ३ । ४ । ५ । गच्छेयुः ( अत्राऽभावः ) १ । १७३ । ३ ॥

यन्त प्रयच्छत (अत्र यमधातोर्बहुलं छन्दसीति शपो लुक्) १।८५।१२। प्राप्नुवन्ति ५।४६।१२। ददति ६।५१।५॥

यन्तन वियच्छत ५।५५।६॥

यन्तम् गच्छतम् ६।२०। प्राप्नुतम् ४।५५।४॥

यन्ता [यन्ता] शत्रूणां निग्रहीता १।२७।७। नियमकर्त्ता १।१८३।५। निर्वाह करने वाला ६।२६॥ [यन्तारः] निगृहीतेन्द्रियाः ३३।१४। ये यान्ति प्राप्नुवन्ति ते ७।१६।७॥ [यन्तारम्] नियन्तारमुपरतम् ३।३।८॥

यन्ता (ऋ० ३. १३. ३) अपानो वै यंताऽपानेन ह्ययं यतः प्राणो न पराङ् भवति। ऐ० २.४०॥ वायुर्वै यंता वायुना हीदं यतमन्तरिक्षं न समृच्छति। ऐ० २. ४१॥

यन्ति [यन्ति] प्रापयन्ति १।११६।२। प्राप्नुवन्ति ३।१४।६। गच्छन्ति १।६७।५। इच्छन्ति १।१२३।१२। प्राप्नुवन्तु १७।७६॥

यन्ति याच्ञाकर्मा। निघ० ३. १९॥

यन्तु प्राप्नुवन्तु ३।४। गच्छन्तु ३५।१। आगच्छन्तु १९।५८। गमयन्तु ५।६२।४॥

यन्तुरम् यन्तारम् (अत्र यमधातोर्बाहुलकात्तुरः प्रत्ययः) ३।२७।११॥

यन्त्रम् यंत्र्यते, यंत्रयन्ति संकोचयन्ति विलिखन्ति चालयन्ति वा येन तत् १।३४।१। [यन्त्रेण] कलाकौशलतयोत्पादितेन १८।३७॥

यन्त्रिये शिल्पविद्यासिद्धानां यंत्राणामर्हे योग्ये निष्पादने ९।३०॥

यन्त्री [यन्त्री] यन्त्रवत्स्थिता १४।२२। यन्त्रनिमित्ता १४।२२॥

यन्धि यच्छ १।१२१।१४। प्रयच्छ ३।३६।१॥

यन्धि याञ्चाकर्मा। निघ० ३. १९॥

यमः [यमः] नियन्ता, सर्वोपरतः १।६६।४। नियन्ता १।१६३।३। यच्छति सोयं सूर्य्यः ८।४७। उपरतः परीक्षकः १२।४५। न्यायी संयमी सन्तानः १६।५१। नियन्ता न्यायाधीश इव २६।१४॥ [यमा] उपरतौ २।३६।२॥ [यमम्] यच्छति येन तम् १।७३।१०। सुनियमम् ३।२७।३। [यमेन] न्यायाधीशेन १२।६३। नियन्त्रा जगदीश्वरेण ७।३३।९॥ [यमस्य] वायोः १।३५।६। उपरतस्य मृत्योरिव शत्रुसमूहस्य १।११६।२॥

यमो यच्छतीति सतः। नि० १०. १९॥ (यजु० ३७. ११) एष वै यमो य एष (सूर्यः) तपत्येष हीदꣳ सर्वं यमयत्येतेनेदꣳ सर्वं यतम्। श० १४. १. ३. ४॥ अथैष एव गार्हपत्यो यमो राजा। श० २. ३. २. २॥ अग्निर्वाव यमः। गो० उ० ४. ८॥ (यजु० १२. ६३) अग्निर्वै यम इयं (पृथिवी) यस्याभ्याꣳ हीदꣳ सर्वं यतम्। श० ७. २. १. १०॥ यमो ह वाऽ अस्याः (पृथिव्याः) अवसानस्येष्टे। श० ७. १. १. ३॥ (यजु० ३८. ९॥) अयं वै यमो यो ऽयं (वायुः) पवते।

श० १४. २. २. ११ ॥ यमः पन्था। तै० २. ५. ७. ३ ॥ ( यमाय ) दण्डपाणये स्वाहा। ष० ५ ४ ॥ यामं शुक्रं हरितमालभेत। गो० उ० २. १ ॥ क्षत्रं वै यमो विशः पितरः। श० ७. १. १. ४ ॥ यमो वैवस्वतो राजेत्याह तस्य पितरो विशः। श० १३. ४. ३. ६ ॥ पितृलोको यमः। कौ० १६. ८ ॥ किंदेवतोऽस्यां दक्षिणायां दिश्यसीति। यमदेवत इति। श० १४. ६. ९. २२ ॥ अनूराधाः प्रथमं अपभरणीरुत्तमं तानि यमनक्षत्राणि। तै० १. ५. २. ७ ॥

यमत् [ यमत् ] नियच्छेत् ५। ३४। २। उपरमेत १२। ११५। यच्छति ५। ४६। ७ ॥

यमति [ यमति ] यच्छेत् ( अत्र लेटि बहुलं छन्दसीति शब्भावः ) १। १४१। ११। नियमयति ( अत्र छन्दस्युभयथेति शप आर्धधातुकत्वाणिलोपः ) १। १००। १६ ॥

यमतुः संयच्छतः ६। ६७। १ ॥

यमते यच्छति ( अत्र वाच्छन्दसीति छादेशो न ) १। १२७। ३ ॥

यमन् [ यमन् ] यच्छन्तु ३। ४५। १। निग्रहं कुर्वन्तु ५। ४३। ५ ॥

यमनः उपयन्ता १। २२ यः सद्गुणान् यच्छति सः १८। २८ ॥

यमनी आकर्षणेन नियन्तुं शीला आकाशवद् दृढा १४। २२ ॥

यमनेत्राः यमेष्वहिंसादिषु योगाङ्गेषु नीतिषु वा नेत्रं प्रापणं येषान्ते ९। ३६ ॥ [ यमनेत्रेभ्यः ] यमस्य वायोर्नेत्रं नयनमिव नीतिर्येषां तेभ्यः ९। ३५ ॥

यमराज्यम् यमस्य न्यायाधीशस्य स्थानम् ३५। १९ ॥ [ यमराज्ये ] यमस्य सभाधीशस्य राष्ट्रे १९। ४५ ॥

यमसानः नियन्ता सन् ६। ३। ४ ॥

यमसूः या यमं सूर्यं सूते सा विद्युत् ३। ३९। ३। [ यमसूम् ] या यमान् नियन्तॄन् सूते ताम् ३०। १५ ॥

यमसे नियच्छसि १०। २२। निगृह्णासि ५। ३३। ३ ॥

यमितवा इव निग्रहीतुमर्ह इव ( अत्र यमधातोस्तवैप्रत्ययः। वाच्छन्दसि सर्वे विधयो भवन्तीतीडागमः ) १। २८। ७ ॥

यमिष्ट नियच्छेत् ५। ३२। ७ ॥

यमिष्ठा अतिशयेन यन्तारौ ६। ६७। १ ॥

यमुः नियच्छेयुः ५। ६१। ३ ॥

यमुना नियन्तारः ७। १८। १९ ॥ [यमुनायाम्] यमनियमान्वितायां क्रियायाम् ५। ५२। १७ ॥

यम्यः यमाय न्याय्यकारिणे हितः ५। ४३। ४ ॥

यम्या या सर्वान् प्राणिनो निद्रया नियच्छति सा रात्रिः (यम्येति रात्रिनाम निघ० १। ७।) ३। ५५। ११। रात्रिदिने ५। ४७। ५ ॥

यम्या रात्रिनाम। निघ० १. ७ ॥

यम्या न्यायकर्त्री १२। ६३। [ यम्यै ] यमस्य न्यायकर्तुः स्त्रियै २५। ५ ॥

यम्याः विस्तारिये ६। २३। ८ ॥

**यंयमीति** पुनः पुनरतिशयेन नियमं करोति १। ६५। ७॥

**यय** गच्छत ५। ६१। २॥

**ययथुः** यातम् १। ११७। १६॥

**ययन्थ** यच्छति १। ५९। १॥

**ययातिवत्** यथा प्रयतनवन्तः पुरुषाः कर्माणि प्राप्नुवन्ति प्रापयन्ति च तद्वत् [ अत्र यती प्रयत्न इत्यस्मादौणादिक इनप्रत्ययः। स च बाहुलकाणित् सनवच्च। इदं सायणाचार्येण भूतपूर्वस्य कस्यचिद् ययातेराज्ञः कथासम्बन्धे व्याख्यातं तदयुक्तम् ) १। ३१। १७॥

**ययार्थ [ ययाथ ]** प्राप्नुयाः ३। ३३। १०। प्राप्नुत ५। २६। ६। गच्छ ६। ७०। ४॥

**ययाम** प्राप्नुयाम ७। ३८। १॥

**ययिः** यो याति सः ५। ७३। ७॥ [ययिष्व] याति सोऽयं ययिर्मेघस्तम् १। ५१। ११। प्राप्तव्यं विजयम् १। ८७। २॥

**ययुः** प्राप्नुयुः २। ५। ५। गच्छन्ति ५। ८१। ३॥ प्राप्नुवन्ति ५। ५३। १२॥

**ययुः** यो याति सः २२। १६॥

ययुः ययुर्नामासीत्याह। एतद्वा अश्वस्य प्रियं नामधेयम्। तै० ३. ८. ९. २॥

**ययौ** प्राप्नोति ३। ३३। ६। याति गच्छति ४। २६। ५॥

**यय्यम्** ययिं यातारम् ( आदृगमहनेति किः-प्रत्ययः। अमिपूर्व इत्यत्र वाछन्दसीत्यनुवर्तनात् पूर्वसवर्णाभाव पक्षे यणादेशः ) २। ३७। ५॥

**यवः** सुखकारी धान्यविशेषः १। ६६। २। मिश्रामिश्रव्यवहारः १। १३५। ८॥ संयोगविभागकर्त्ता ६। १॥ [ यवाः ] मिश्रिताः १४। ३१॥

ततो देवेभ्यः सर्वा एवौषधय ईयुर्यवा हैवैभ्यो नेयुः तद्वै देवा अस्पृण्वत। त एतैः सर्वाः सपत्नानामोषधीर्युवत। यदयुवत तस्माद्यवा नाम। श० ३. ६. १. ८, ९॥ निर्वरुणत्वाय ( = "वरुणकृतबाधपरिहाराय" इति सायणः ) एव यवाः। तां० १८. ९. १७॥ वरुण्यो यवः। श० ४. २. १. ११॥ वरुण्यो ह वाऽअग्रे यवः। श० २. ५. २. १॥ वारुणं यवमयं चरुं निर्वपति। तै० १. ७. २. ६॥ वारुणो यवमयश्चरुः। श० ५. २. ४. ११॥ तस्य ( सोमस्य ) अश्रु प्रास्कन्दत्ततो यवः समभवत्। श० ४. २. १. ११॥ स यः सर्वासामोषधीनाꣳ रसऽआसीत्तं यवेष्वदधुस्तस्माद्यत्रान्याऽओषधयो म्लायन्ति तदेते मोदमाना वर्द्धन्ते। श० ३. ६. १. १०॥ सैनान्य वा एतदोषधीनां यद्यवाः। ऐ० ८. १६॥ देवाः तं ( मेधम् ) खनन्त इवान्वीषुस्तमन्वविन्दंस्ताविमौ व्रीहियवौ। श० १. २. ३. ७॥ सर्वेषां वा एष पशूनां मेधो यद् व्रीहियवौ ( श० ३. ८. ३. १॥ (यजु० २३. ३० ) विड् वै यवः। श० १३. २. ९. ८॥ राष्ट्रं यवः। तै० ३. ९. ७. २॥ अथ ये फेनास्ते यवाः। श० १२. ७. १. ४॥ ( यजु० १४. २६ ) ते ( पूर्वपक्षाः ) हीदꣳ सर्वं युवते। श० ८. ४. २. ११॥ स यो देवानाम् ( अर्धमासः=शुक्लपक्षः ) आसीत्। स यवायुवत ( = "समसृज्यन्त इति" सायणः ) हि तेन देवाः। श० १. ७. २. २५॥ ( अथोऽ इतरथाहुः ) यो ऽसुराणाम् ( अर्धमासः =कृष्णपक्षः ) स यवायुवत हि तं देवाः। श० १. ७. २. २६॥ पूर्वपक्षा वै यवाः। श० ८. ४. २. ११॥

**यवन्त** वियोज्येयुः ५ । २ । ५ ॥

**यवमन्तः** बहवो यवा विद्यन्ते येषां ते कृषीवलाः १० । ३२ । बहुयवादिधान्ययुक्ताः २३ । ३८ ॥

**यवसप्रथमानाम्** यवसो यवान्नं प्रथमं येषां तेषाम् २१ । ४३ । मिश्रितामिश्रितायानाम् २१ । ४४ । यवसस्य विस्तारकाणाम् २१ । ४५ ॥

**यवसम्** धान्यपशादिकम् ३ । ४५ । ३ सोमलताम् ५ । ७८ । २ ॥ [यवसेन] अभीष्टेन तृणबुसादिना ७ । १० ॥ [यवसात्] भक्षणीयात् घासाद्यात् ७ । १८ । १० ॥

**यवसादः** ये यवसमन्नादिकमदन्ति ते १ । ६४ । ११ ॥

**यवाशिरः** यवाद्योषधिसंयोगेन संस्कृतस्य १ । १८७।६ ॥ [यवाशिरम्] यो यवानश्नाति तम् २ । २२ । १ । यवा अश्यन्ते यस्मिँस्तम् ३ । ४२ । ७ ॥

**यविष्ठः** अतिशयेन युवा शरीरात्मबलयुक्तः ४ । १२ । ३ ॥ [यविष्ठम्] अतिशयेन विभाजकम् ७ । १२ । १ ॥ [यविष्ठ] यौति मिश्रयति विविनक्ति वा सोऽतिशयितस्तत्सम्बुद्धौ १ । २२ । १० ॥

( यजु० १३. ५२ ) एतद्धास्य ( अग्नेः ) प्रियं धाम यद्यविष्ठ इति यद्वै ज्ञात इदँ सर्वमयुवत तस्माद्यविष्टः । श० ७. ५. २. ३८ ॥

**यविष्ठ्यम्** अतिशयितेषु युवसु भवम् ५ । २६ । ७ ॥ [यविष्ठ्य] ये ऽतिशयेन युवानस्तेषु साधो ७ । १६ । १० । यो वेगेन पदार्थान् यौति संयुनक्ति संहतान् भिनत्ति वा स युवातिशयेन युवा यविष्ठो यविष्ठ एव यविष्ठ्यस्तत्सम्बुद्धौ १ । ३६ । ६ । योऽतिशयेन युवा पदार्थानाममिश्रीकरणे बलवान्सः । यविष्ठ एव यविष्ठ्यः ( अत्र युवन्शब्दादिष्ठन्प्रत्ययस्ततो नवसूरमर्तयविष्ठेभ्यो यत् अ० ५ ।४। ३६ इति वार्त्तिकेन स्वार्थे यत्प्रत्ययः ) ३ । ३ । अतिशयेन युवा यविष्ठः स एव तत्सम्बुद्धौ ११ । ७३ ॥

यविष्ठो ह्यग्निः । श० १. ४. १. २६ ॥

**यव्यम्** यवानां भवनं क्षेत्रम् १ । १४० । १३ ॥ [यव्या] यवेषु साधूनि हवींषि यव्यानि ( अत्र शेश्छन्दसीति शेर्लोपः ) ३ । ४६ ॥

**यव्या** नदीव १ । १७३ । १२ । मिश्रितामिश्रितगत्या १ । १६७ । ४ ।

यव्या नदीनाम । निघ० १. १३ ॥

यव्या मासाः । श० १. ७. २. २६ ॥

**यव्यावत्याम्** यवे भवा यव्याः पाका विद्यन्ते यस्यां सेनायाम् ६ । २७ । ६ ॥

**यशः** कीर्तिः १८ । ८ । आरोग्यप्रदमुदकमन्नं धनं वा ३ । ४० । ६ । कीर्तिकरं धर्म्यकर्मचरणम् ३२ । ३ । कीर्तियुक्त १२ । ५ । ८ । ( १७६ विधि० ) [यशसः] यशस्विनः ४ । ५१ । ११ ॥

यशः उदकनाम । निघ० १. १२ ॥ अन्ननाम । निघ० २. ७ ॥ धननाम । निघ० २. १० ॥ सामवेद एव यशः । गो० पू० ५. १५ ॥ सामवेदो यशः । श० १२. ३. ४. ९ ॥ उद्गातैव यशः । गो० पू० ५. १५ ॥ आदित्यो यशः । श० १२. ३. ४. ८ ॥ आदित्य एव यशः । गो० पू० ५. १५ ॥ चक्षुर्यशः । श० १२. ३. ४. १० ॥ चक्षुरेव

यशः । गो० पू० ५. १५ ॥ प्राणा वै यशः । श० १४. ५. २. ५ ॥ द्यौर्यशः । श० १२. ३. ४. ७ ॥ द्यौरेव यशः । गो० पू० ५. १५ ॥ वर्षा एव यशः । गो० पू० ५. १५ ॥ जगत्येव यशः । गो० पू० ५. १५ ॥ सप्तदशः ( स्तोमः ) एव यशः । गो० पू० ५. १५ ॥ उदीच्येव यशः । गो० पू० ५. १५ ॥ पशवो यशः । श० १२.८. ३. १ ॥ ( ऋ० १०. ७२. १० ॥ ) यशो वै सोमो राजा । ऐ० १. १३ ॥ यशो वै सोमः । श० ४. २. ४.९ ॥ सोमो वै यशः । तै० २. २. ८. ८ ॥ यश उ वै सोमो राजान्नाद्यम् । कौ० ९. ६ ॥ यशो हि सुरा । श० १२. ७. ३. १४ ॥ यशो वै हिरण्यम् । ऐ० ७. १८ ॥ यशो देवाः । श० २. १. ४. ९ ॥ तस्माद् ( देवाः ) यशः । श० ३. ४. २. ८ ॥

**यशस्तमम्** अतिशयेन कीर्तिकारकम् ७ । १६ । ४ ॥ [ यशस्तमस्य ] अतिशयेन यशस्विनो बहुजलयुक्तस्य वा २ । ८ । १ ॥

**यशस्वतः** यशो विद्याधर्मसर्वोपकाराख्या प्रशंसा विद्यते येषां तान् ( अत्र प्रशंसार्थे मतुप् ) १ । ६ । ६ ॥ [ यशस्वता ] बहु यशो विद्यते यस्मिँस्तेन ३ । १६ । ६ ॥

**यशस्वतीः** पुण्यकीर्तिमत्यः १ । ७६ । १ ॥

**यशोभगिन्यै** यशांसि सत्यवचनादीनि कर्माणि भजितुं शीलं यस्यास्तस्यै २ । २० ॥

**यष्टवे** यष्टुम् ( अत्र यजधातोस्तवेन्प्रत्ययः ) १ । १३ । ६ । संगन्तुम् ४ । ३७ । ७ ॥

**यष्टा** [ यष्टा ] संगन्ता, सुष्ठु विज्ञाता दाता वा २ । ६ । ६ ॥

**यह्वो** सुसन्तान १५ । ३५ । क्रियाकौशलयुक्तस्यापत्यं तत्सम्बुद्धौ ) यहुरित्यपत्यनामसु पठितम् । निघ० २ । २) १। २६। ८० ॥

**यह्वः** महान् ३ । १ । १२ । [ यह्वा इव ] महान्तो धार्मिका जना इव १५ । २४ । महान्तो वृक्षा इव ५ । १ । १ ॥ [ यह्वम् ] गुणैर्महान्तम् १ । ३६ । १ ॥

यह्वः महन्नाम । निघ० ३. ३ ॥

**यह्वतीः** यह्वान् महत इव आचरन्तीः ( यह्व इति महन्नाम निघ० ३ । ३ । यह्व शब्दादाचारे क्विप् ) १ । १०५ । ११ ॥

**यह्वाः** महत्यः ४ । ५८ । ७ ॥

**यह्वी** महती महत्यौ २१ । १७ । [ यह्वीः ] महत्यो रुधिरविद्युदादिगतयः १ । ७१ । ७ । महत्यः स्त्रियः ३ । १ । ४ । महाविद्यागुणस्वभावयुक्ताः ३ । १ । ६ । महतीर्नदीः ५ । २९ । २ ॥

**या** या वक्ष्यमाणा ५ । ६ । यौ ( अत्र सुपां सुलुगित्याकारादेशः ) १ । २२ । २ । यानि ( अत्र शेश्छन्दसीति शेर्लोपः ) ४ । ३७ ॥

**याच्छ्रेष्ठाभिः** शत्रुवधकर्मण्युत्तमाभिः ३ । ५३ । २१ ॥

**याज्याः** यज्ञक्रिया २० । १२ ॥ [ याज्याभिः ] याभिः क्रियाभिरिज्यन्ते ताभिः १६ । २० ॥

**यात्** यायात ( लेट्प्रयोगः ) १ । ८० । १५ । यावन्ति ( अत्र छान्दसो वर्णलोपो वेति वलोपः, शेश्छन्दसि बहुलमितिशेर्लोपः ) ६ । २१ । ६ ॥

**यात** [ यात ] अभीष्टं स्थानं प्राप्नुत १ । ३७ । १४ । गमयत १ । ८६ । १० । गच्छत १ । ८८ । १ । समन्तात् प्राप्नुत १ । १७१ । २ ॥

**यातः** गमनादिव्यवहारप्रापकः १ । ३२ । १५ । प्राप्तः १ । १४१ । ८ ॥

यातन [यातन] प्राप्नुवन्तु १।१६५।१३। प्राप्नुत ४।३४।६॥

यातम [यातम] गच्छतः (अत्रापि व्यत्ययः) १।२।५। प्राप्नुतः (अत्र व्यत्ययः) १।२।६। गच्छतो गमयतः (अत्र व्यत्ययः) १।३।३। प्रापयतम् १।३०।१७। प्राप्नुतम् १।३४।११। गच्छतम् १।४७।२। प्राप्नुयातम् ७।५३।२। आगच्छतम् ६।६७।३॥

यातयज्जनः यातयन्तः प्रयत्नकारयितारो जना यस्य सः १।१३६।३। पुरुषार्थवत्पुरुषः १।१३६।३। [यातयज्जना] यातयन्तो जना ययोस्तौ ५।७२।२॥

यातयति पुरुषार्थयति ३।५६।१॥

यातयति वधकर्मा। निघ० २.१९॥

यातयन्तम् सन्तानाय प्रयतमानम् ५।३३।१२॥

यातयमानः दण्डं प्रयच्छन् ६।६।४॥

यातयासे प्रेरयेः ५।३।६॥

यातवः संग्रामं ये यान्ति ते ७।२१।५॥

यातवे यातुं प्राप्तुम् (अत्र तुमर्थे से० इति तवेन्प्रत्ययः १।४४।४। यातुं गन्तुम् १।१५७।१॥

याताः ये प्राप्तास्ते ५।३३।५॥

याताम् गच्छताम् ४।२८।३॥

यातारम् देशान्तरे प्रापयितारम् १।३२।१४॥

याति [याति] प्राप्नोति प्रापयति वा (अत्र पक्षेऽन्तर्गतो ण्यर्थः) १।३५।२।

याति गतिकर्मा। निघ० २.१४॥

यातु प्राप्नोति, प्राप्नोतु वा १।३५।१०। गच्छतु १।११८।१। आगच्छतु ४।१६।१॥

यातुजूनाम् ये यान्ति ये च जवन्ते तेषाम् १३।१३। प्राप्तवेगानाम् ४।४।५॥

यातुधानाः प्रजापीडकाः १५।१६॥ [यातुधानान्] यातवो यातनाः पीडा धीयन्ते येषु तान् दस्यून् १।३५।१०। अन्यायेन परपदार्थधारकान् ३४।२६॥ [यातुधानेभ्यः] यान्ति येषु ते यातवो मार्गास्तेभ्यो धनं येषान्तेभ्यः (प्रवृत्तम्) ३०।८॥

यातुधान्यः रोगकारिण्यो व्यभिचारिण्यश्च स्त्रियः १६।५। यातूनि दुराचरणशीलानि दधति ताः १।१९१।८॥

यातुमन्तम् ५।१२।२॥

यातुमतीनाम् बहवो यातवो हिंसका विद्यन्ते यासु सेनासु तासाम् १।१३३।२॥

यातुमावान् गच्छन्मत्सदृशः।७।१।५। [यातुमावतः] यान्ति प्राप्नुवन्ति ये यातवः, मत्सदृशा इति मावन्तः। यातवः श्च ते मावन्तश्च तान् (अत्र सायणाचार्येण यातु रिति पूर्वपदं मावानित्युत्तरपदं चाविदित्वा यातुमावत्पदान्मतुप् कृतस्तदिदं पदपाठाद्विरुद्धत्वादशुद्धम्) १।३६।२०॥

यातेव यथा दण्डप्रापकः १।७०।६। गच्छन्निव ७।३४।५॥

याथ [ याथ ] गच्छत ६ । ५० । ५ । प्राप्नुत १ । ३६ । १ । प्राप्नुथ २ । ३४। ३। गच्छथ ३ । ६०। ४ ॥

याथः [ याथः ] प्राप्नुतम् १ । ३४ । २ । गच्छथः १ । १८३ । ३ । प्राप्नुथः १ । १३५ । ७ ॥

याथन [ याथना ] प्राप्नुथ ( अत्र तप्तनप्तन० इति थस्य स्थाने थनादेशः ) १ । ३६ । ३ । प्राप्नुत ( अत्र तकारस्य स्थाने थनादेशोऽन्येषामपि दृश्यत इति दीर्घश्च ) १ । २३ । ११ । गच्छथ ( अत्र संहितायामिति दीर्घः ) ५ । ५७ । २ ॥

याथातथ्यतः यथार्थतया ४० । ८ ॥

यादमानः याचमानः ( अत्र वर्णव्यत्ययेन चस्य दः ) ३ । ३६ । १ ॥

यादमानाः अभिगच्छन्त्यः ६ । १६ । ५ ॥

यादसे जलजन्तवे ( प्रवृत्ताम् ) ३० । २० ॥

यादुरी प्रयत्नशीला ( अत्र यातधातोर्बाहुलकादौणादिक उरीप्रत्ययः तस्य दः ) १ । १२६ । ६ ॥

यादृक् यादृक् ५ । ४३ । ६ ॥

यादृश्मिन् यादृशे व्यवहारे ५ । ४४ । ८॥

याद्राध्यम् ये यान्ति ते यातस्तैराध्यं याद्राध्यं संसाधनीयम् २ । ३८ । ८ ॥

याद्वम् ये यान्ति तान् यो याति तम् ७ । १६। ८ ॥

यानम् यानम् ४ ।४३। ६ ॥ [ यानान् ] यान्ति येषु तान् २६ । २६ ॥

यान्ता गच्छन्तौ १ । ११७ । १२ ॥ [ यान्तः ] प्राप्नुवन्तः ४ । २५ । ८ ॥

यान्ति [ यान्ति ] गच्छन्ति १ । ८८ । २ ॥

यान्तु प्राप्नुवन्तु १ । १६७ । २ ॥

याम प्राप्तव्यं कर्म २ । ३४ । १० । [ यामभिः ] यान्त्यायान्ति यैस्तैः स्वकीयैः गमनागमनैः १ । ३७ । ११। प्रहरैः यमोद्भवैः कर्मभिर्वा ५ । ६६ । ५ । [ यामने ] सुखप्राप्तये १ । ११६ । १३ । [ यामन् ] याति गच्छति प्राप्नोति स यामा तस्मिन्नस्मिन् संसारे ( अत्र सुपां सुलुगिति विभक्तेर्लुक् ) १ । ३३ । २ । यान्ति यस्मिन् मार्गे तस्मिन् ( अत्र सुपां सुलुगिति ङेर्लुक् । सार्वधातुभ्यो मनिन् इत्यौणादिको मनिन्प्रत्ययः ) १ । ८५ । १ ॥

यामः प्राप्नुयामः ३ । ३३ । ६ ॥

यामः याति गच्छति येन स यामो रथः १ । ३४ । १ । मर्यादा १ । १०० । २ । प्रापणम् १ । १६६ । ४ । गमनम् १ । १७२ । १ । यो याति सः ४ । ५१ । ४ । यान्ति यस्मिन् स यामः ६ । ६६ ७। [ यामासः ] यमनियमान्विताः ५ । ३ । १२ । [ यामम् ] प्रहरं प्राप्तव्यं वा ७ । ५६ । ६ । [ यामेन ] उपरतेन ५ । ५३ । १२ । [ यामाय ] यथार्थव्यवहारप्रापणाय ( अर्त्तिस्तुसु० उ० १ । १३९ । इति याधातोर्मप्रत्ययः ) १ । ३७ । ७। [ यामेषु ] स्वस्वगमनरूपमार्गेषु १ । ३७ । ८॥

यामकोशाः यान्ति येषु ते यामा मार्गास्तेषां कोशाः ३। ३०। १५॥

यामयन्ति नियमयन्ति २५। ३६॥

यामश्रुतेभिः यामाः श्रुता यैस्तैः ५। ५२। १५॥

यामहूतमा यौ यामानाह्वयतस्तावतिशयितौ ५। ७३। ६॥

यामहूतिषु उपरमाऽऽह्वानरूपकर्मसु ५। ६१। १५॥

यामि [यामि] प्राप्नोमि १। २४। ११। गच्छामि २। १६। ७॥
यामि याञ्चाकर्म। निघ० ३. १९॥

याम्याय यो यमेषु न्यायकारिषु साधुस्तस्मै (अत्राऽन्येषामपीति दीर्घः) १६। ३३॥

यायाम् जाऊं ५। ६४। ३॥

यावत् यावत्परिमाणाः ३८। २६॥ [यावती] यावत्परिमाणे ३८। २६॥

यावय [यावया] संयोजय (अत्र संहितायामिति दीर्घः) ६। ४६। ६। वियोजय (अत्र तुजादीनामित्यभ्यासदैर्घ्यम्) ६। ४६। १२॥

यावयद्द्वेषाः यवयन्ति दूरीकृतानि द्वेषांस्यप्रियकर्माणि यया सा १। ११३। १२॥ [यावयद्द्वेषसम्] यावयन्तं द्वेष्टारं द्वेषसं द्वेष्टारं पृथक्कारयन्तीम् ४। ५२। ४॥

यावयन्तु दूरीकुर्वन्तु (अत्र संहितायामित्यान्यचो दीर्घत्वम्) ७। ४४। ३॥

यावयस्व अमिश्रितान् कुरु ५। ४२। ६॥

यात्रा यो याति ७। १। ५॥

यावीः अयावीः पृथक्करोषि १। १२६। ३॥

याशूनाम् प्रयतमानानाम् (अत्र यसु प्रयत्ने धातोर्बाहुलकादुणप्रत्ययः सस्य शश्च) १। १२६। ६॥

यासत् [यासत्] प्राप्नुयात् ४। २०। १। उपागच्छेत् ५। ४०। ४। प्रापयेत् ६। ६६। ५। प्राप्नोति १७। १६। यायात् २०। ४८। प्रापयति १। ७१। ६। प्रयतेत ६। १६। २८॥

यासि [यासि] याति (अत्र पुरुषव्यत्ययः) १। १२। ४। गच्छसि ४। १६। ११। प्राप्नोषि प्रापयति वा (अत्र पक्षे व्यत्ययः) ३। ५२॥

यासिषत् यातुमिच्छतु १। १७४। ५॥

यासिष्टम् यातम् १। ११६। ४। प्राप्नुतः ७। ४०। ५॥

यासिसीष्ठाः यायाः, प्राप्नुयाः २१। ३॥ प्रेरयेथाः (अत्र वाच्छन्दसीति मूर्धन्यादेशाभावः) ४। १। ४॥

यासीष्ट प्राप्नुयात् (अत्र व्यत्ययेनात्मनेपदम्) १। १६५। १५॥

याहि [याहि] गच्छ गच्छति वा (अत्र पक्षे व्यत्ययः) १। २। १। प्राप्तो भव भवति वा १। ३। ४। याति समन्तात्प्रापयति १। ३। ६॥

युक्तः सहितः १। ६६। ४। कृतयोजनः १। ८२। ५। [युक्ता] सम्यक् सम्बद्धौ १। ८४।

३। कृतयोगाभ्यासौ १ । ११६ । १८ ।
[युक्ताः] एकीभूताः ३४ । १९ ॥

युक्तग्रावा युक्तो ग्रावा मेघो यस्मिन्तसः ३ । ४ । ६ । युक्तो ग्रावा मेघो येन ५ । ३७ । २ । [ युक्तग्राव्णः ] युक्ता ग्रावाणो मेघाः पाषाणा वा यस्मिँस्तस्य २ । १२ । ६ ॥

युक्ताश्वम् युक्ता अश्वा येन तत ५ । ४१ । ५ ॥

युक्त्वा संयोज्य १ । १७७ । १ ॥

युक्त्वाय युक्तं कृत्वा ११ । ३ ॥

युक्ष्वा युङ्क्ष्व योजय ( छान्दसो वर्णलोपो वेति नलोपः । द्व्यचो० इति दीर्घश्च १ । १० । ३ । युनक्ति ( अत्र बहुलं छन्दसीति विकरणस्य लुक् ) १ । ६२ । १५ । संयोजय ६ । १६ । ४३ ॥

युगम् वर्षम् ३ । ५३ । १७ । [ युगानि ] कृतत्रेताद्वापरकलिसंज्ञानि १ । ११५ । २ । [ युगे ] अपरजन्मनि १ । १६६ । १३ ॥

युगेव अश्वादिवत् संयोजितौ ॥ २ । ३९ । ४ ॥

युङ् समाधाता १० । २५ ॥

युङ्क्ते युक्तो भवति १ । ८४ । १६ । कलाकौशलेन प्रेरितः सम्पर्चयति १ । १३४ । ३ ॥

युङ्क्ष्वा युक्तो भव ७ । ४२ । २ ॥

युङ्ग्ध्वम् संयोजयत ५ । ५६ । ६ ॥

युच्छतः हर्षं कुरुतः १ । २५ । ६ ॥

युच्छति प्रमाद्यति ५ । ५४ । १३ ॥

युच्छसि अत्यन्तं प्रमाद्यसि ८ । ३ ॥

युजत युजत ५ । ५२ । ८ ॥

युजन्त युञ्जते ६ । ६६ । ६ ॥

युजा समाहितौ २१ । १८ । [ युजम् ] यो युज्यते तम् ( अत्र क्विप् ) १ । ३३ । १० । योगयुक्तम् १ । १२९ । ४ । समाधातुमर्हम् ४ । ३७ । ५ । योक्तुमर्हम् १९ । ६४ ॥
[ युजः ] ये युञ्जते तान् ४ । ३२ । ६ ॥
[ युजा ] कृपया धार्मिकेषु स्वसामर्थ्यसंयोजकेन १ । ८ । ४ । यो युनक्ति मुहूर्तादिकालावयवपदार्थैः सह तेन १ । २३ । ९ । युनक्ति यया तया ( अत्र कृतो बहुलमिति करणे क्विप् ) १ । ३६ । ४ । यो न्यायेन युनक्ति तेन ७ । ३१ । ६ । योगयुक्तया ७ । ३२ । २० । युक्तेन ७ । ४८ । २ ॥

युजानः युक्तः सन् २ । १८ । ५ । धारयन् ६ । ३९ । २ । [ युजानम् ] समादधानम् ( अत्र बाहुलकादौणादिक आनच्प्रत्ययः किच्च ) १ । ६५ । १ ॥

युजाना युक्ता ५ । ८० । ३ ॥

युजे आत्मनि समादधे ११ । ५ । युनज्मि ७ । २३ । ३ ॥

युजेव [ युजाऽइव ] यथा संयुक्तौ २ । २४ । १२ ॥

युज्महे समादधीमहि ( अत्र बहुलं छन्दसीति श्यनो लुक् ) १ । १६५ । ५ ॥

युज्यः युञ्जन्ति व्याप्त्या सर्वान् पदार्थान् ते युजो दिक्कालाकाशादयस्तत्र भवः १ ।

२२। १९। योक्तुमर्हः २। २८। १०। युनक्ति सदाचारेणेति युज्यः (अत्रौणादिकः कप्) ६। ४। उपयुक्तानन्दप्रदः १३। ३३। युक्तः समाधातुमर्हो वा १६।३॥

युज्यते [युज्यते] युज्यते ५। १। ३॥

युज्यन्ताम् युज्यन्ताम् ३५। २॥

युज्यन्ते युज्यन्ते २३। ३७॥

युज्यमानः समाहितः सन् ६। ८। [युज्यमाना] संयुक्तौ ३। ३५। १॥

युज्यसे समादधासि १। २८। ५॥

युज्याताम् युक्तौ भवतः ७। ४२। १॥

युज्याभिः योजनीयाभिः ७। ३७। ५॥

युज्येथाम् युज्यते युक्तौ कुरुतः ४। ३३॥

युञ्जते [युञ्जते] अभ्यस्यन्ति १। ४८। ४। समादधति ५। ८१। १॥

युञ्जन्ति [युञ्जन्ति] योजयन्ति १। ६। १। युञ्जन्तु (अत्र लोडर्थे लट्) १। ६। २। युक्तं कुर्वन्ति २३। ५॥

युञ्जन्तु प्रेरताम् ६। ८॥

युञ्जा युञ्जानौ १। १६२ २१। योजकौ २७। ४३॥

युञ्जाथे नियुक्तौ भवतः १। १५१। ४। युञ्जाथे ५। ७४। ३॥

युञ्जानः योगाभ्यासं भूगर्भविद्याञ्च कुर्वाणः ११। १॥

युञ्जे युञ्जे ३। १। १॥

युतद्वेषसः युता अमिश्रिताः पृथग्भूता द्वेषा येभ्यस्ते १। ५३। ४॥

युत्कारेण यो व्यूहैर्युतो मिश्रितानमिश्रितान् भृत्यान् करोति तेन १७। ३४॥

युधः यो युध्यते सः १७। ३५। [युधा] यो योधयति तेन १। ५३। ७। युध्यमानेन सैन्येन ५। २५। ६। सम्प्रहारेण २। २२। २। संग्रामेण ३। ३४। ७॥

युधये युद्धाय ५। ३०। ४॥

युध्मः यो युध्यते सः १। ५५। २। अविद्याकुटुम्बस्य प्रहर्त्ता १। ५५। ५। योद्धा २। २१। ३॥

युध्य युध्यस्व (अत्र व्यत्ययेन परस्मैपदम्) १। ६१। २३। योधय गमय (अत्रान्तर्भावितण्यर्थः युध्यतिर्गतिकर्मा। निघ० २। १४) ३४। २३॥

युध्यतः प्रहरतः (अत्र व्यत्ययेन परस्मैपदम्) ३। ५५। ८॥

युध्यन् युद्धं कुर्वन्ति (अत्र व्यत्ययेन परस्मैपदमडभावश्च) १। ६३। ७॥ [युध्यन्तम्] युद्धे प्रवर्त्तमानम् १। ३३। १४॥

युध्यमानाः युद्धं कुर्वन्तः ४। २५। ८॥

युध्यामधिम् यो युधि संग्राम आमं रोगं दधाति तं शत्रुम् ७। १८। २४॥

युध्यै युद्धं कुर्याम ४। १८। २॥

युनक्त युङ्ध्वम् १२। ६८॥

युनक्ति नियुक्तं करोति, योजयति वा (अत्र सर्वत्रान्तर्गतो णयर्थः प्रयोजनाय) १।६॥

युनजत् युनक्ति ७।३६।४॥

युनजते युञ्जते (अत्र बहुलं छन्दसीत्यलोपो न)७।२७।१॥

युनजन् युञ्जन् ६।६७।११॥

युनज्मि [युनज्मि] समादधे १०।२१। सुगन्धैर्द्रव्यैर्युक्तं करोमि १८।५१। संयोजयामि ७।१६।६॥

युयवत् वियोजयति ६।४४।१६॥

युयवन् वियुज्यन्ताम् ७।३८।७। युवन्तु पृथक्कुर्वन्तु (अत्र लेटि शपः श्लुः) ६। १६॥

युयवन् यावयन्तु। नि० १२. ४४॥

युयुजानः समादधन् ४।२।२। युक्तान् कुर्वन् ४।४५।६॥

युयुजानसप्ती युयुजानौ सप्ती वेगाकर्षणौ ययोस्तौ ६।६२।४॥

युयुजे युञ्जीत १।१६१।६॥

युयुज्रे [युयुज्रे] युञ्जते ५।५३।१। युञ्जन्ति ६।२५।३। योज्यन्ताम् (अत्र लोडर्थे लिट्। इरयो रे अ०।६।४। ७६। इति रे आदेशः)१।४६।८॥

युयुतम् विभाजयतम् ६।५६।८॥

युयुत्सन्तम् योद्धुमिच्छन्तम् ५।३२।५॥

युयुधयः साधुयुद्धकारिणः (उत्सर्गश्छन्दसि सदादिभ्यो दर्शनात् अ० ३।२। अनेन वार्त्तिकेनात्र युधधातोः किन्प्रत्ययः) १।८५।८॥

युयुधाते युध्येते १।३२।१३॥

युयुधुः युध्यन्ते ४।३०।३। संग्रामं कुर्युः ५। ५६।५॥

युयूषन् मिश्रयितुमिच्छन् ४।१६।११। [युयूषतः] संविभाजयतः ६।६२।१॥

युयोत [युयोत] प्रापयत त्याजयत ३।५४। १८। पृथक्कुरुत (अत्र बहुलं छन्दसीति शपः श्लुः तप्तनप्तन० इति तनबादेशः) १। ३६।८। गृह्णीत वा पृथक्कुरुत २। २६।२॥

युयोतन संयोजयत ५।८७।८॥

युयोति मिश्रयति १।६२।११॥

युयोतु वियोजयतु ५।५०।३। पृथक्करोतु ६।४७।१३॥

युयोथाः पृथक्कुर्याः २।३३।१॥

युयोध युध्येत ६।२५।५॥

युयोधि दूरीकुरु (अत्र बहुलं छन्दसीति शपः श्लु) ५।३६। पृथक् करोषि २। ३३।३॥

युयोप युप्यति विमोहं करोति १।१०४।४॥

युवत् [युवत्] मिश्रणामिश्रणयुक्तम् (अत्र युधातोरौणादिको बाहुलकात् कतिन्प्रत्ययः)

१ । १११ । १ । मिश्रयित्रमिश्रकौ वा १ । १०६ । १ ॥

युवतिः प्राप्तयौवनावस्था १ । ११३ । ७। चतुर्विंशतिवार्षिकी १ । १२३ । १० । पूर्णावस्था सती कृतविवाहा ५ । २ । १ । [ युवतयः ] मिश्रामिश्रत्वकर्मणा सदाऽजराः १ । ६५ । २ । प्राप्तयौवनावस्था ब्रह्मचारिण्यः ३ । ५५ । १६ । [युवत्योः] युवावस्थां प्राप्तयोः स्त्रीपुरुषयोः ६ । ४९ । २ ॥

युवते युनक्ति ७ । ४ । २ ॥

युवद्रिक् युवां प्राप्नुवन् ४ । ४३ । ७ ॥

युवधिता युवयोर्हितानि ६ । ६७ । ६ ॥

युवन् यौवनं प्राप्नुवन् १ । १४१ । १० ॥

युवन्यून् आत्मनो मिश्रितानमिश्रितान् पदार्थानिच्छन् ५ । ४२ । १५ ॥

युवमानः संयोजको भेदकश्च ( अत्र वर्णव्यत्ययेन श आत्मनेपदश्च ) १ । ५८ । २ ॥

युवयुः युवां कामयमानः ६। ६३। ३। [युवयूः] युवां कामयमानाः ४ । ४१ । ८ ॥

युवशा युवैर्मिश्रितामिश्रितैस्तद्वत्कृतानि विस्तृतानि १ । १६१ । ३ । युवानो विद्यन्ते ययोस्तौ ( अत्र लोमादिपामादिना मत्वर्थीयः शः ) १ । १६१ । ७ ॥

युवसे संयोजयसि ६ । ४७ । १४ । मिश्रय ( अत्र विकरणात्मनेपदव्यत्ययः ) १५ । ३० ॥

युवस्व [ युवस्व ] कर्मसु प्रेरयस्व ४ । ४८ । ५ । मिश्रयस्व २७ । २७ । संयोजय ६ । ६ । ७ ॥

युवा मिश्रणामिश्रणकर्त्ता १ । ११ । ४ । यौति मिश्रयति पदार्थैः सह पदार्थान् वियोजयति वा १ । १२ । ६ । प्राप्तयुवावस्थः १।८७।४। सुखैः संयोजको दुखैर्वियोजकश्च २ । २० । ३ । विभाजकः ३ । २३ । १ । बलिष्ठः ५ । १ । ६ ॥

युवा प्रयौति कर्माणि । नि० ४. १९ ॥

युवाकु मिश्रीभावं पृथग्भावं वा (अत्र बाहुलकादौणादिकः काकुःप्रत्ययः सुपां सुलुगिति विभक्तेर्लुक् च ) १ । १७ । ४ । सुखेन मिश्रिताय दुःखैः पृथग्भूताय वा १ । १२० । ६ ॥

युवाकुः यो यावयति मिश्रयति संयोजयति सर्वाभिर्विद्याभिः सह जनान् सः १।१२० । ३ । मिश्रितामिश्रितः ३ । ५८ । ६ । सुसंयोजकः ७ । ६० । ३ ॥ [ युवाकवः ] सम्पादितमिश्रितामिश्रितक्रियाः (यु मिश्रणामिश्रणे च इत्यस्माद्धातोरौणादिक आकुःप्रत्ययः ) १ । ३ । ३ । ये युवां कामयन्ते ते ३३ । ५८ ॥

युवामहे विभजामहे ६ । ५७ । ६ ॥

युवायवः युवामिच्छवः १ । १३५ । ६ ॥

युवायुजम् युवाभ्यां युज्यते तम् (वाच्छन्दसि सर्वे विधयो भवन्तीत्यप्राप्तोऽपि युवादेशः ) १ । ११९ ५ ॥

युवावते त्वां रक्षते ३ । ६२ । १ ॥

युवासे मिश्रय ६ । ३५ । ३ ॥

युवेथे सङ्गमयथः १ । १८० । ६ ॥

युष्मयन्तीः या युष्मानाचक्षते ताः २ । ३६ । ७ ॥

युष्माकाभिः युष्माभिरनुकम्पिताभिः सेनाभिः १ । ३६ । ८ ॥

युष्माकेन युष्माकं सम्बन्धेन ( अत्र वा छन्दसीत्यनणयपि युष्माकादेशः ) १ । १६६ । १४ ॥

युष्मादत्तस्य युष्माभिर्दत्तस्य ५ । ५४ । १३ ॥

युष्मानीतः युष्माभिरानीतः २ । २७ । ११

युष्मावत्सु युष्मत्सदृशेषु २ । २६ । ४ ॥

युष्मे युष्मान् ४ । १० । ८ । युष्माकम् ६ । १८ । ५ ॥

युष्मेषितः [ युष्माऽइषितः ] यो युष्माभिर्जेतुमिषितः सः (अत्र छान्दसो वर्णलोपो वेति दकारलोपः इमं सुगमपक्षं विहाय सायणाचार्येण प्रत्ययलक्षणादिकोलाहलः कृतः ) १ । ३६ । ८ ॥

युष्मोतः [ युष्माऽऊतः ] युष्माभीरक्षितः, युष्माभिः पालितः, युष्माभिः संरक्षितो वा ७ । ५८ । ४ ॥

यूथम् समूहम् ४ । ३८ । ५ । सेनासमूहम् ५ । २ । ४ । [ यूथेव] गोसमूहान् वृषभ इव १ । ७ । ८ । सैन्यानीव ४ । २ । १८ । समूहानिव ५ । ३१ । १ ॥ [ यूथेन ] सुखप्रापकपदार्थसमूहेनाथवा वायुगणेन सह ( तिथपृष्ठगूथयूथप्रोथाः उ० २ । ११ । अनेन यूथशब्दो निपातितः) १ । १० । २ ॥

यूपः स्तम्भः १ । ५१ । १४ । मिश्रितो व्यवहारयत्नोदयः १६ । १७ । [ यूपेव ] स्तम्भ इव दृढौ ४ । ३३ । ३ ॥ [ यूपेन ] मिश्रितामिश्रितेन व्यवहारेण १६ । १७ । [ यूपात् ] मिश्रितामिश्रिताद् बन्धनात् ५ । २ । ७ ॥

( देवाः ) तं वै ( यज्ञं ) यूपेनैवायोपयंस्तद्यूपस्य यूपत्वम् । ऐ० २. १ ॥ ( देवाः ) यदेनेन ( यूपेन यज्ञं ) अयोपयंस्तस्माद्यूपो नाम । श० १.६.२.१॥ ३.१.४.३ ॥ ३.२.२.२. ॥ तस्माद्यूपऽएव पशुमालभन्ते नऽर्ते यूपात्कदाचन । श० ३. ७. ३. २ ॥ पशवे वै यूपमुच्छ्रयन्ति । श० ३.७.२.४॥ गर्तन्वान्यूपोऽतीक्ष्णाग्रो भवति । श० ५.२.१.७ ॥ अष्टाश्रिर्यूपो भवति । श० ५. २. १. ५ ॥ सप्तदशारत्निर्यूपो भवति । तै० १. ३. ७. २ ॥ खादिरो यूपो भवति । श० ३. ६. २. १२ ॥ स्तुप एवास्य ( यज्ञस्य ) यूपः । श० ३. ५. ३. ४ ॥ यूप स्थाणुः । श० ३. ६. २. ५ ॥ खलेवाली यूपो भवत्येतया हि तँ रसमुत्कृषन्ति । तां० १६. १३. ८ ॥ वैष्णवो हि यूपः । श० ३. ६. ४. १ ॥ असौ वा अस्य ( अग्निहोत्रस्य कर्त्तुः ) आदित्यो यूपः । ऐ० ५. २८ ॥ आदित्यो यूपः । तै० २. १. ५. २ ॥ वज्रो यूपः । श० ३. ६. ४. १९ ॥ वज्रो वा एष यद्यूपः । कौ० १०.१॥ ऐ०२. १॥ वज्रो वै यूपः । ष० ४. ४ ॥ वज्रो वै यूपशकलः । श० ३. ८. १. ५ ॥ ( चतुर्द्धा विभक्तस्य वज्रस्य ) यूपस्तृतीयं (=तृतीयोंऽशः ) वा यावद्वा । श० १. २. ४. १ ॥ एष वै यजमानो यद्यूपः । तै० १. ३. ७. ३ ॥ यजमानो

वै यूपः । ऐ० २. ३ ॥ श० १३. २. ६ ९ ॥ यजमानदेवत्यो वै यूपः । तै० ३. ९. ५. २ ॥ यजमानो वाऽएष निदानेन यद्यूपः । श० ३. ७. १. ११ ॥

यूपवाहाः ये यूपं वहन्ति प्रापयन्ति १ । १६२ । ६ ॥

यूपव्रस्काः यूपाय स्तम्भाय ये वृश्चन्ति ते १। १६२ । ६ । यूपस्य स्तम्भस्य छेदकाः २५ । २६ ॥

यूयुविः विभागकर्त्ता ५ । ५०। ३॥

यूष्णा कथितेन रसेन २५ । ६ । [यूष्णः] वर्धकस्य २५ । ३६ ॥

येजे यजति ६ । ३६ । २ ॥

येतिरे प्रयतन्ते १ । ६४ । ४ ॥

येमतुः नियच्छतः १ । ११६ । ५ ॥

येमथुः देशान्तरे यच्छथः ( अत्र लडर्थे लिट् ) १ । ३० । १६ । गमयतम् ५ । ७३ । ३ ॥

येमाते नियमेन गच्छतः ४ । ४८ । ३ ॥

येमानः नियमयन्तः ४। २३। १० । नियच्छन्तः ४ । ४४ । ३ ॥

येमिरे [ येमिरे ] उद्युञ्जन्ति १ । १० । १ । यच्छन्ति ३ । ५६ । ८ । यच्छन्तु ३ । ६० । ६ । यच्छेयुः १ । १३५ । १ । प्राप्नुवन्तु १२ । ११६ । संयमं कुर्वन्ति ३३ । ६५ ॥

येमुः [ येमुः ] यच्छेयुः ४ । ६ । १४ । नियच्छन्ति ६ । २१ । ६ ॥

येमे यच्छति ५ । ३२ । १० ॥

येयजामहाः ये भृशं यजन्ति ते १६ । २४ ॥

येवन्ती स्रवन्ती ३ । ५३ । २२ ॥

येषम् प्रयतेयम् २ । २७ । १६ ॥

येष्ठः अतिशयेन याता ५ । ७४ । ८ ॥ [ येष्ठा ] अतिशयेन नियन्तारौ ५ । ४१ । ३ ॥

यो या ( अत्र महीधरेण या इत्यशुद्धं व्याख्यातम् ) ५ । ६ ॥

योः प्रापयति ६ । ५० । ७ ॥

योः दूरीकरणे १६ । ५५ । गच्छतो गमयितुः ( अत्र या प्रापणे इत्यस्माद्धातोर्बाहुलकादौणादिकः कुःप्रत्ययः ) १ । ७४ । ७ । पदार्थानां पृथक्करणम् (अत्र युधातोर्डोसिः-प्रत्ययोऽव्ययत्वञ्च ) १ । ९३ । ७। धर्मार्थमोक्षप्रापणम् १ । १०६ । ५ । दुःखवियोजनम् १ । ११४ । २ । प्रापकः १ । १८६ । २ । त्यक्तव्यस्य २ । ३३ । १३ । मिश्रयिता भेदको वा ३ । १७ । ३ । दुःखवियोजकः सुखसंयोजकः ३ । १८ । ४ । सुकृताज्जनितम् ४ । १२ । ५। दुःखात् पृथग्भूतम् ५ । ४७ । ७ । मिश्रितम् ५ । ५३ । १४ । सुखनिमित्तौ ७ । ३५ । १ ॥

योक्तारम् योजकम् ३० । १४ ॥

योक्त्रम् योजनम् ५ । ३३ । २ । [ योक्त्रे ] अश्वादि यान के जोटे ३ । ३० । ६ । ( १.७४ विधि० ) ॥

योक्त्राणि अंगुलिनाम । निघ० २. ५ ॥

योगः युज्यते यस्मिँस्तः १ । ३४ । ६ । [ योगम् ] संयोजनम् १। १८।७। [ योगे ] सर्वसुखसाधनप्राप्तिसाधके १ । ५ । ३ । समागमे यमाद्यानुष्ठाने वा ४ । २४ । ४ ।

अप्राप्तस्य प्राप्तिलक्षणे ५ । ३७ । ५ । अनुपात्तस्योपात्तलक्षणे ७ । ५४ । ३ ॥
योगः यद्योक्त्रम् । स योगः । तै० ३. ३. ३. ३ ॥

**योगक्षेमः** अप्राप्तस्य प्राप्तिलक्षणो योगः तस्य रक्षणं क्षेमः २२ । २२ ॥
योगक्षेमः यद्योक्त्रं स योगः । यदास्ते स क्षेमः । योगक्षेमस्य क्लृप्त्यै । तै० ३. ३. ३. ३ ॥

**योगेयोगे** अनुपात्तस्योपात्तलक्षणे योगः तस्मिन्प्रतियोगे १ । ३० । ७ । युञ्जते यस्मिन् यस्मिन् ११ । १४ ॥

**योजते** युनक्ति ( अत्र व्यत्ययेन शप् ) १५ । ३३ ॥

**योजनम्** योक्तुमर्हं विमानादियानम् १ । ८८ । ५ । युञ्जन्ति येन तदाकर्षणाख्यम् ५ । ५४ । ५ । [ योजना ] युज्यन्ते सर्वाणि वस्तूनि येषु भुवनेषु तानि योजनानि ( अत्र शेश्छन्दसीति शेर्लोपः ) १ । ३५ । ८ । योजनानि बहून्क्रोशान् ६ । १३ । [ योजनेन ] योगेन १ । ६२ । ३ । [ योजनेषु ] बन्धनेषु १ । १६४ । ६ ॥
योजनानि अंगुलिनाम । निघ० २. ५ ॥

**योजम** युनज्मि २ । १८ । ३ ॥

**योजा** योजय १ । ८२ । २ । अश्वैर्युक्तं कुरु १ । ८२ । ४ । योजयति ( अत्र विकरणव्यत्ययेन शप् लडर्थे लोडन्तर्गतो णयर्थो द्व्यचो० इति दीर्घश्च ) ३ । ५१ । योजय युङ्क्ते वा ३ । ५२ ॥

**योजि** अयोजि २ । १८ । १ ॥

**योतोः** मिश्रितामिश्रितकर्त्तुः ६ । १८ । ११ ॥

**योत्सि** युध्यसे ( अत्र बहुलं छन्दसीति श्यनभावः ) १ । १३२ । ४ ॥

**योधः** प्रहर्त्ता १ । १४३ । ५ । युद्धकर्ता ६ । २५ । ५ ॥

**योधत्** युध्यते ६ । ३६ । २ ॥

**योधया** योधय ( अत्र संहितायामिति दीर्घः ) ३ । ४६ । २ ॥

**योधानः** योद्धुं शीलाः ( अत्रौणादिको णिः प्रत्ययः ) १ । १२१ । ८ ॥

**योधि** वियोजय ५ । ३ । ६ ॥

**योधिष्टम्** युध्येयाताम् ६ । ६० । २ ॥

**योधीयान्** अतिशयेन योद्धा १ । १७३ । ५ ॥

**योनिः** गृहम् १ । १६४ । ३३ । कारणम् २ । ३ । ११ । न्यायासनम् १ । १०४ । १ । निमित्तकारणम् ३ । १४ । सुखहेतुः ७ । १२ । प्रयोजनम् ११ । १२ । जन्मस्थानम् ८ । २९ । राज्यभूमिर्निवसतिः ८ । ३८ । ऐश्वर्यकारणम् ८ । ३६ । ध्रुवमं प्रमाणम् ८ । ४१ । संयोगवियोगवित् ११ । २९ । दुःखवियोजकः सुखसंयोजको व्यवहारः १२ । ५२ । संयोजको वियोजको गुणः १४ । २३ । विद्यासम्बन्धः २० । ३३ । जगत्कारणं प्रकृतिः २३ । २ । जलम् २३ । ४ । [ योनीः ] चितीः १७ । ७६ । [ योनिम् ] राजधर्मासनम् १२ । १७ । स्थानमाकाशम् १३ । ३ । परमात्माख्यं गृहम् १७ । ७३ [ योनौ ] यज्ञे ( यज्ञो वा ऋतस्य योनिः श० १ । ३ । १ । १६ । ) २ । ६ । युवन्ति यस्यां सा योनिर्गृहं जन्मान्तरं वा तस्याम् २ । २० ।

जन्मनि स्थले वा ३। २१। बन्धच्छेदके मोक्षप्रापके १२। ५४। समुद्रे १३। ५३। गृहाश्रमे १५। ५६। कालाख्ये कारणे २६। ३१। [ योना ] गर्भाशये १। १६४। ३२। [ योनिषु ] युवन्ति मिश्रीभवन्ति येषु कार्येषु कारणेषु वा तेषु ( अत्र वहिश्रि-श्रुयु० उ० ४। ५३। अनेन युधातोर्नि-प्रत्ययो निच्च ) १। १५। ४॥

योनिः उदकनाम। निघ० १. १२॥ गृहनाम। निघ०। ३. ४॥ अन्तरिक्षम्। नि० २. ८॥ योनिरुलूखलम्............शिश्नं मुसलम्। श० ७. ५. १. ३८॥ योनिर्वाऽउखा। श० ७. ५. २. २॥ योनिर्वाऽउत्तरवेदिः। श० ७. ३. १. २८॥ योनिर्वै गार्हपत्या चितिः। श० ७. १. १. ८॥ ८. ६. ३. ८॥ योनिरेव वरुणः। श० १२. ९. १. १७॥ योनिर्वै पुष्करपर्णम्। श० ६. ४. १. ७॥ योनि-र्मुञ्जाः। श० ६.६ २. १५॥ परिमण्डला हि योनिः। श० ७. १. १. ३७॥ अन्धमिव वै तमो योनिः। जै० उ० ३. ९. २॥ मा॑सेन वाऽउदरं च योनिश्च स॑हिते। श० ८. ६. २. १४॥

**योषणा** स्त्री ५। ५२। १४॥ [ योषणः ] मिश्रणशीला युवतयः १। १४१। २॥

**योपत्** विनश्येत् २। १८। ८। वियोजयेः २। ३३। ६। युज्येत ४। २। ६॥

**योषा** कामिनी स्त्रीव १। ९२। ११। विद्या-भिर्मिश्रिताया अविद्याभिः पृथग्भूतायाः स्त्रियाः ( अत्र युधातोर्बाहुलकात् कर्मणि सःप्रत्ययः) १।१०१।७ प्रौढा ब्रह्मचारिणी युवतिः १।११६।५। भार्या १। १२३। ६॥ [योषे] कृतपूर्वापरविवाहे परस्परं विरुद्धे स्त्रियाविव १।१०४।३॥[ योषाम् ] अपनी स्त्री को १४। २। ३७ ( १७० विधि० )॥

योषा यौतेः। नि० ३. १५॥ योषा वाऽइयं वागदेनं न युवता। श० ३. २. १. २२॥ योषा हि वाक्। श० १. ४. ४. ४॥ वागिति स्त्री ( =योषा )। जै० उ० ४. २२. ११॥ योषा वै वेदिः। श० १. ३. ३. ८॥ योषा वै वेदिर्वृषाग्निः। श० १. २. ५. १५॥ योषा वाऽ-अग्निः। श० १४. ९. १. १६॥ योषा हि स्रुक्। श० १. ४. ४. ४॥ योषा वै स्रुग्वृषा स्रुवः। श० १. ३. १. ९॥ योषा वै पत्नी। श० १. ३. १. १८॥ न वै योषा कंचन हिनस्ति। श० ६. ३. १. ३९॥ तस्मात्पुमान्दक्षिणतो योषामुपशेते। जै० उ० १. ५३. ३॥ दक्षिणतो वै वृषा योषामुपशेते। श० ६. ३. १. ३०॥ ७ ५. १. ६॥ अरत्निमात्राद्धि वृषा योषामुपशेते। श० ६. ३. १. ३०॥ ७. ५. १. ६॥ पश्चाद्वै परीत्य वृषा योषामधिद्रवति तस्या॑रेतः सिञ्चति। श० २. ४. ४. २३॥ रक्षा॑सि योषितमनुसचन्ते तदुत रक्षा॑स्येव रेत आद-धति। श० ३. २. १. ४०॥ तस्माद्यदा योषा रेतो धत्तेऽथ पयो धत्ते। श० ७. १. १. ४४॥ पुर-न्धिर्योषा ( यजु० २२. २२ ) इति। योषित्येव रूपं दधाति तस्माद्रूपिणी युवतिः प्रिया भावुका। श० १३. १. ९. ६॥ पुरन्धिर्योषेत्याह। योषित्येव रूपं दधाति। तस्मात्स्त्री युवतिः प्रिया भावुका। तै० ३. ८. १३. २॥ एवमिव हि योषां प्रश॑सन्ति पृथुश्रोणिर्विमृष्टान्तरा॑सा मध्ये संग्राह्येति। श० १. २. ५. १६॥ पश्चाद्वरीयसी पृथुश्रोणिरिति वै योषां प्रश॑सन्ति। श० ३. ५. १. ११॥ योषा वै सिनीवाली ( यजु० ११. ५६. ) एतदु वै योषायै समृद्ध॑रूपं यत् सुकपर्दा सुकुरीरा स्वौपशा। श० ६ ५. १. १०॥

**यौः** पृथक्कुर्याः २। ३२। २॥

**यौमि** मिश्रयाम्यग्नौ प्रक्षिप्य वियोजयामि वा १। २२॥

**यौष्म** युक्ता भवेम ४। २२॥

**र॑ह॑माणः** गच्छन् २२ । १८ ॥

**रं॑हयन्तः** गमयन्तः १ । ८५ । ५ ॥

**रं॑ह्यः** गमयितुं योग्यः २ । १८ । १ ॥

**र॑ह्यै** गत्यै ६ । १८ ॥

**रक्ष [ रक्षा ]** पालय ( अत्र द्व्यचो० इति दीर्घः ) ३० । ३० । रक्षति ४ । १४ ॥

**रक्षः** रक्षःस्वभावो दुष्टो मनुष्यः; स्वार्थी मनुष्यः १ । ७ । दुर्गन्धादिदुःखजालम् १ । ६ । दुष्टस्वभावो जन्तुः १ । १४ । दस्युःस्वभावः १ । १६ । दुःखं निवारणीयम् १ । १६ । विघ्नकारी प्राणी; बन्धनेन रक्षयितव्यम्; परसुखासहो मनुष्यः १ । २९ । सर्वतः स्वार्थरक्षकः परार्थहन्ता; रक्षति सर्वतः स्वार्थनिमित्तीभूतं कर्म ६ । १६ । दुष्टाचारम्; राक्षसम् ६ । ३८ । दुष्टव्यवहारान् ( अत्र व्यत्ययेनैकवचनम् ) १ । २१ । ५ ॥ **[रक्षांसि]** रक्षयितव्यानि ७ । १५ । १० । दुष्टान्प्राणिनः ७ । ३८ । ७ ॥

रक्षः रक्षितव्यमस्माद् । रहसि क्षिणोतीति वा रात्रौ नक्षत इति वा । नि० ४.१८॥

अग्निर्हि रक्षसामपहन्ता । श० १. २. १. ६, ९ ॥ १. २. २. १३ ॥ अग्निर्वै रक्षसामपहन्ता । कौ० ८. ४ ॥ १०. ३ ॥ अग्निर्वै ज्योतीरक्षोहा । श० ७. ४. १. ३४ ॥ ते ( देवाः ) ऽविदुः । अयं ( अग्निः ) वै नो विरक्षस्तमः । श० ३. ४. ३. ८ ॥ अग्नेर्वाऽएतद्रेतो यद्धिरण्यं नाष्ट्राणांरक्षसामपहत्या । श० १४. १. ३. २९ ॥ सूर्यो हिं नाष्ट्राणांरक्षसामपहन्ता । श० १. ३. ४. ८ ॥ ( इन्द्रः ) तत ( रक्षः ) सीसेनापजघान । तस्मात्सीसं मृदु सतजवं हि । श० ५. ४. १. १० ॥ ते ( देवाः ) एतंरक्षोहणं वनस्पतिमपश्यन्कार्ष्मर्यम् । श० ७. ४. १. ३७ ॥ देवा ह वाऽएतं वनस्पतिषु राक्षोघ्नं ददृशुर्यत्कार्ष्मर्यम् ( =भद्रपर्णीति सायणः ) । श० ३. ४. १. १६ ॥ यदपामार्गहोमो भवति रक्षसामपहत्यै । तै० १. ७. १. ८ ॥ अपामार्गैर्वै देवा दिक्षु नाष्ट्रा रक्षांस्यपामृजत । श० ५. २. ४. १४ ॥ ब्राह्मणो हि रक्षसामपहन्ता । श० १.१.४. ६ ॥ साम हि नाष्ट्राणां रक्षसामपहन्ता । श० ४. ४. ५. ६ ॥ १४. ३. १. १० ॥ अंगिरसः स्वर्गं लोकं यतो रक्षांस्यन्वसचन्त तान्येतेन हरिवर्णोऽपहन्त यदेतत्साम भवति रक्षसामपहत्यै । तां० ८. ९. ५ ॥ स यां वै दृप्तो वदति यामुन्मत्तः सा वै राक्षसी वाक् । ऐ० २. ७ ॥ आपो वै रक्षोघ्नीः । तै० ३. २. ३. १२ ॥ ३. २. ४. २ ॥ ३ २. ९. १४ ॥ अथोदकवतोत्तानेन पात्रेण ( पात्रस्थं दधिमिश्रितं क्षीरम् ) अपिदधाति । नेदेनदुपरिष्टान्नाष्ट्रा रक्षांस्यवमृशानिति वज्रो वाऽआपस्तद्वज्रेणैवैतन्नाष्ट्रा रक्षांस्यतोऽपहन्ति । ( रक्षांसि = Germs in the air ? ) श० १. ७. १. २ ॥ कुबेरो वैश्रवणो राजेत्याह तस्य रक्षांसि विशस्तानीमान्यासतऽइति सेलगाः पापकृत उपसमेता भवन्ति तानुपदिशति देवजनविद्या-वेदः सोऽयमिति देवजनविद्याया एकं पर्व व्याचक्षाण इवानुद्रवेत् ( एवं—शांखायनश्रौतसूत्रे १६. २. १६—१८ ॥ आश्व० श्रौ० सू० १०. ७. ६ ॥ ) । श० १३. ४ ३. १० ॥

**रक्षणेभिः** अनेकविधैरुपायैः ४ । ३ । १४ ॥

**रक्षतः** रक्षतः १ । १६० । २ ॥

**रक्षतम् [ रक्षतम् ]** रक्षतः १ । १३ । ८ ॥

**रक्षता [ रक्षता ]** रक्षत ( अन्येषामपीति दीर्घः ) १ । १६६ । ८ ॥

**रक्षतात् [ रक्षतात् ]** रक्ष ३५ । १७ ॥

रक्षताम् रक्षताम् १ । १८५ १० ॥

रक्षति [ रक्षती ] रक्षति ( अत्र संहितायामिति दीर्घः ) २ । २६ । ४ ॥

रक्षतु रक्षतु ६ । ५४ । ५ ॥

रक्षते रक्षते ४ । ५३ । ४ ॥

रक्षध्वम् सततं पालयत ( अत्र व्यत्ययेनात्मनेपदम् ) ४ २७ ॥

रक्षन्तम् रक्षन्तम् ५ । ४३ । ७ ॥

रक्षन्ति [ रक्षन्ति ] पालयन्ति १ । ४१ । १॥

रक्षन्तु रक्षन्तु २६ । १४ ॥

रक्षन्ते पालयन्ति ( अत्र व्यत्ययेनात्मनेपदम् ) १ । ६२ । १० ॥

रक्षमाणः रक्षन् सन् ( अत्र व्यत्ययेन शानच् ) १ । ३१ । १२ ॥

रक्षसि पालयसि ३ । ३६ ॥

रक्षस्व रक्षस्व ( अत्र व्यत्ययेनात्मनेपदम् ) ५ । ३६ ॥

रक्षस्विनः रक्षांसि दुष्टस्वभावा निन्दिता मनुष्या विद्यन्ते येषु संघातेषु तान् १ । १२ । ५ । रक्षांसि निन्दिताः पुरुषाः सन्ति येषु व्यवहारेषु ते (अत्र निन्दितार्थे विनिः) १ । ३६ । २० ॥

रक्षिता रक्षणकर्त्ता २५ । १८ ॥

रक्षिषत् रक्षेत ७ । १२ । २ ॥

रक्षथे रक्षतम् ( अत्र लोडर्थे लट् व्यत्ययेनात्मनेपदञ्च ) १ । ३४ । ८ । रक्षेथे ३ । ५४ । १६ ॥

रक्षोयुजे यो रक्षांसि दुष्टान् मनुष्यान् युनक्ति तस्मै ६ । ६२ । ८ ॥

रक्षोहत्याय दुष्टानां हननाय ६ । ४५ । १८ ॥

रक्षोहा यो रक्षांसि दुष्टान्हन्ति सः ५ । २४ । यो दुष्टानां रोगाणां हन्ता १२ । ८० ॥ दुष्टगुणकर्मस्वभावहन्ता १ । १२६ । ६ । [रक्षोहणौ] रक्षसां हन्तारौ प्रजासभाध्यक्षौ ५ । २५ ॥ [रक्षोहणम्] यथा येन धार्मिकेण पुरुषेण रक्षांसि हन्यन्ते तथा ५ । २३ ॥

रघुः लघुः ५ । ३० । १४ । [ रघवः ] सद्यःकारिणः ४ । ५ । १३ ॥

रघुद्रुवः ये रघून्यास्वादनीयान्यन्नानि द्रवन्ति १ । १४० । ४ । ये रघु लघु द्रवन्ति गच्छन्ति ते ( अत्र कपिलकादित्वाल्लत्वम् ) १५ । ४२ ॥

रघुपत्मजहा यो लघुपतनं जहाति सः ६ । ३ । ५ ॥

रघुपत्वानः ये रघून् पथः पतन्ति ते ( अत्राऽन्येभ्योपि दृश्यन्त इति वनिप्प्रत्ययः ) १ । ८५ । ६ ॥

रघुमन्यवः लघुक्रोधाः ( अत्र वर्णव्यत्ययेन लस्य रः ) १ । १२२ । १ ॥

रघुयत् सद्योगन्त्री ४ । ५ । ६ ॥

रघुया रघवः क्षिप्रं गन्तारः ( अत्र सुपां सुलुगिति जसः स्थाने याजादेशः ) २ । २८ । ४ ॥

**रघुष्यत्** सद्यः स्यन्दमानम् ४ । ५ । ६ ॥

[रघुष्यदः] ये मार्गान् स्यन्दन्ते ते (गत्यर्थाद्रघिधातोर्बाहुलकादौणादिक उःप्रत्ययो नकारलोपश्च ) १ । ८५ । ६ । ये रघुषु स्यन्दन्ते १ । १४० । ४ ॥ [रघुष्यदम्] यो रघु लघु स्यन्दति तम् ३ । २६ । २ । लघुगमनम् ५ । २५ । ६ ॥

**रघुस्यदः** रघव आस्वादाः स्यदश्च प्रस्रवणानि प्रकृष्टगमनानि येषां ते । १ । ६४ । ७ ॥

**रघ्वी** लघ्वी ६ । ६३ । ६ ॥ [रघ्वीरिव] यथा गमनशीला नद्यः १ । ५२ । ५ । लघ्व्यो ब्रह्मचारिण्य इव ४ । ४१ । ६ ॥

**रजः** पृथिव्यादिलोकजातम् १ । ५६ । ५ । सकारणं लोकसमूहम् १ । ८५ । ५ । लोकम् १ । ६२ । ५ । सूक्ष्मं सर्वलोककारणं परमाण्वादिकम् १ । ८३ । २ । अणुत्रसरेण्वादि १ । ९० । ७ । ऐश्वर्यम् १ । १३६ । ४ । कणः १ । १४१ । ७ ॥ [रजसी] द्यावापृथिव्यौ ४ । ४२ । ३ । रजोभिर्निर्मिते ४ । ५६ । ३ । रात्र्यहनी ६ । ६ । १ ॥ [रजांसि] स्थानानि ३४ । १६ ॥ [रजसा] अन्धकारलक्षणेन ३४ । २५ ॥ [रजोभिः] ऐश्वर्यप्रदैर्मार्गैः ६ । ६२ । ६ ॥ [रजसः] पृथिवीलोकस्य १ । ३३ । ७ । अन्तरिक्षस्य १ । ५२ । ६ । रागविषयस्य १ । ५२ । १४ ॥ उस घर का १४ । ३ । १५ ( २०३ विधि० )

रजः रात्रिनाम । निघ० १. ७॥ द्यावापृथिव्योर्नाम । निघ० ३. ३० ॥ रजतेर्ज्योती रज उच्यते, उदकं रज उच्यते, लोका रजांस्युच्यन्ते, असृगहनी रजसी उच्येते । नि० ४. १९ ॥ रजसः अन्तरिक्षलोकस्य । नि० १२. ७ ॥ रजस्सु उदकेषु । नि० १०. ४४ ॥

**रजतनाभी** रजतवर्णनाभियुक्तौ २६ । ५६ ॥

**रजताः** अनुरक्ताः २३ । ३७ ॥

**रजयित्रीम्** विविधरागकारिणीम् ३० । १२ ॥

**रजःशया** या रजःसु सूर्यादिलोकेषु शेते सा ५ । ८ ॥

**रजस्तूः** यो रजांसि लोकान् वर्धयति ६ । २ । २ । यो रज उदकं तौति वर्धयति सः ६ । ६६ । ७ ॥ [रजस्तुरम्] यो रजांसि लोकान् तुरति तं तूर्णगमनागमनहेतुम् १ । ६४ । १२ ॥

**रजस्याय** रजःसु लोकेषु परमाणुषु वा भवाय १६ । ४५ ॥

**रजिम्** पंक्ति ६ । २६ । ६ ॥

**रजिष्ठाः** अतिशयेन रञ्जितारः ७ । ५१ । २ ॥

[रजिष्ठम्] अतिशयेन ऋजुः कोमलम् (अत्र ऋजुशब्दादिष्ठनि विभाषर्जोश्छन्दसि अ० ६ । ४ । १६२ इति ऋकारस्य रेफादेशः ) १ । ९१ । १ ॥ [रजिष्ठैः] अतिशयेन रजस्वलैः १ । ७९ । ३ ॥

रजिष्ठैः ऋजुतमैः रजस्वलतमैः । नि० ८. १९ ॥

**रज्जुः** रज्जुः १ । १६२ । ८ ॥

अन्तविपर्ययो भवति । नि० २. २ ॥
वरुण्या वै यज्ञे रज्जुः । श० ६. ४. ३. ८ ॥
वरुण्या ( ='वरुणपाशात्मिका' इति सायणः )
रज्जुः । श० १. ३. १. १४ ॥ वरुण्या वाऽएषा
यद्रज्जुः । श० ३. २. ४. १८ ॥ ३. ७. ४. १ ॥

रज्जुसर्जम् यो रज्जुं सृजति तम् ३० । ७ ॥

रण उपदिश ५ । ५१ । ८ ॥

रणन् उपदिशन्तु ४ । ३३ । ७ । उपदिशन् ५ । ५३ । १६ ॥

रणन्त रमध्वम् ७ । ५७ । ५ ॥

रणन्ति शब्दायन्ते ३ । ७ । ५ ॥

रणयन् शब्दयन्तु स्तुवन्तु ( अत्र लङ्ग्यड-भावः ) १ । १०० । ७ ॥

रणयन्त [ रणयन्त ] शब्दयेयुः ( अत्राड-भावः ) १ । १४७ । १ । रणः संग्राम इव आचरन्ति ३ । ५७ । २ । शब्दयन्ति ४ । ७ । ७ । रमेरन् रमयेयुर्वा ६ । १ । ४ ॥

रणयन्तु शब्दयन्तु ६ । २८ । १ ॥

रणाः रममाणाः ६ । २७ । १ । [रणाय] संग्रामाय १ । ६१ । ६ ॥

रणः संग्रामनाम । निघ० २. १७ ॥ रणाय रमणीयाय संग्रामाय । नि० ४. ८ ॥ रणाय रमणीयाय । नि० ९. २७ ॥

रणिष्टन् वदत २६ । २४ ॥

रण्यति [ रण्यति ] उपदिशति ( अत्र विकरणव्यत्ययः ) १ । ८३ । ६ । रमते ५ । १८ । १ ॥

रण्यथः रमयथः ५ । ७३ । ३ ॥

रण्यन्ति रणन्ति शब्दयन्ति ( अत्र व्यत्ययेन शपः स्थाने श्यन् ) १ । ३८ । २ ॥

रण्यवाचः रमणीयभाषाः ३ । ५५ । ७ ॥

रण्यानि रणेषु साधूनि कर्माणि १ । ८५ । १० । रमणीयानि लोकजातानि ३ । ५५ । ७ ॥

रण्वः रमयिता १ । ६६ । २ । रमणीयः (अत्र रमधातोर्बाहुलकादौणादिको वःप्रत्ययः) १ । ६६ । ३ । शब्दविद्यावित् १ । १४४ । ७ । [ रण्वाः ] रममाणाः ५ । ७ । २ ॥ [ रण्वम् ] सत्यवादिनम्; सत्योपदेशकम् १ । १२८ । ८ । शब्दायमानम् ३ । २६ । १ ॥

रण्वसंदृक् या रणवान् रमणीयान् पदार्थान् सन्दर्शयति सा ३ । ६१ । ५ । रमणीयं यः सम्यक् पश्यति सः ७ । १ । २१ । [ रण्वसंदृशम् ] रमणीयसदृशम् ६ । १६ । ३७ ॥

रण्वा या रणवति सुखं प्रापयति सा १ । ६५ । ३ । प्रशंसनीया २ । ४ । ४ । रमणीया ४ । १६ । १५ ।

रण्विते शब्दायमाने २ । ३ । ६ ॥

रताः ये रमन्ते ते ४० । ६ । रममाणाः ४० । १२ ॥

रतिः रमणम् ८ । ५१ ॥

रत्नधाः रत्नानि रमणार्थानि पृथिव्यादीनि वस्तूनि दधातीति सः १ । १५ । ३ । रत्नानि रमणीयानि वस्तूनि दधाति १ । १६४ । ४९ ॥ [ रत्नधाम् ] यो रत्नानि रमणीयानि विज्ञानानि, हीरकादीनि, भुवनानि वा दधातीति तम् ४ । २५ ॥

रत्नधातमः रत्नानि रमणीयानि सुखानि

दधाति येन सोऽतिशयितः १ । २० । १ ॥ [रत्नधातमम्] रमणीयानि पृथिव्यादीनि सुवर्णादीनि च रत्नानि दधाति धापयतीति रत्नधा अतिशयेन रत्नधा इति रत्नधातमस्तम् १ । १ । १ ॥

रत्नधातमम् रमणीयानां धनानां दातृतमम् । नि० ७. १५ ॥

**रत्नधाभिः** या रत्नानि द्रव्याणि दधति ताभिः ४ । ३४ । ७ ॥

**रत्नधेयम्** रत्नानि धेयानि यस्मिँस्तत् ४ । १३ । १ । रत्नानि धीयन्ते यस्मिँस्तत् ४ । ३४ । ४ । रत्नानि धेयानि येन तम् ५ । ४२ । ७ ॥ [रत्नधेयाय] रत्नानि धीयन्ते यस्मिन् कोशे तस्मै ४ । ३४ । ११ ॥

**रत्नधेया** रत्नानि धनानि धीयन्ते यया तस्यै ४ । ३४ । १ ॥

**रत्नम्** रमन्ते जनानां मनांसि यस्मिँस्तत् १ । ४१ । ६ । रमणीयं सुवर्णादिकम् १ । ५३ । १ । रमणीयस्वरूपम् १ । ५८ । ७ । रमणीयं ज्ञानं साधनम्वा १ । १४१ । १० । रमणीयं जगत् २ । ३८ । १ ॥

**रत्नवन्तम्** बहूनि रत्नानि विद्यन्ते यस्मिँस्तम् ३ । २८ । ५ ॥

**रत्निनः** बहूनि रत्नानि धनानि विद्यन्ते येषु तान् ७ । ४० । १ ॥

**रत्निनीम्** रमणीयाम् १ । १८२ । ४ ॥

**रत्सि** रमसे ५ । १० । १ ॥

**रथः** रयते जानाति येन स रथः ३ । ३६ । यानम् २१ । ५५ । रमणसाधनः २३ । १४ । नौकादियानम् १ । ३० । १८ । विमानादियानसमूहः १ । ४६ । ३ । रमणीयः १ । ५४ । ३ । रमणीयस्वरूपः १ । ५८ । ३ । [रथ इव] रमणीयाकाश इव ६ । ६१ । १३ ॥ [रथम्] रमणीयस्वरूपं संसारम् १ । ७० । ४ । ज्ञानम् १ । ८२ ४ । रमणीयं यतिम् १ । ११७ । १३ । रमणीयं किरणम् ६ । ६३ । ५ । रमणीयं विद्याप्रकाशम् ८ । ३३ । [रथे] रमणीययान इव शरीरे ६ । ४७ । १६ ॥

रथः रंहतेर्गतिकर्मणः । स्थिरतेर्वा स्याद्विपरीतस्य । रममाणोऽस्मिंस्तिष्ठतीति वा, रपतेर्वा रसतेर्वा । नि० ९. ११ ॥

**रथकारम्** विमानादिरचकं शिल्पिनम् ३० । ६ ॥

**रथक्षयाणि** रथस्य निवासरूपाणि गृहाणि ६ । ३५ । १ ॥

**रथगृत्सः** रथस्य प्रवेता गृत्सो मेधावीव वर्तमानः ( गृत्स इति मेधाविनाम । निघ० ३।१५। गृत्सो मेधावी गृणातेः स्तुतिकर्मणः नि० ९ । ५ । ) १५ । १५ ॥

**रथतुरम्** यो रथेन सद्यो गच्छति तम् ४ । ३८ । ३ ॥ [रथतूर्भिः] ये रथान् विमानादियानानि तूर्वन्ति शीघ्रं गमयन्ति तैः १ । ८८ । २ ॥

**रथनाभाविव** यथा रथस्य रथचक्रस्य मध्यमे काष्ठे सर्वेऽवयवा लग्ना भवन्ति तथा ३४ । ५ ॥

**रथन्तरम्** रथैः रमणीयैर्यानैस्तरन्ति येन तत् ११ । ८ । यद्रथैः रमणीयैस्तारयति तत्

१३। ५४। यद्स्मिन् लोके तार्कं वस्त्वस्ति तत् १५।५। सामस्तोत्रविशेषः १८।२६। [रथन्तरे] अन्तरिक्षे १। १६४।२५॥

इयं (पृथिवी) वै रथन्तरम्। कौ० ३.५॥ ष० २. २॥ तां० ६.८.१८॥ १५.१०. १५॥ श० ५.५.३.५॥ ९.१.२.३६॥ अयं वै (पृथिवी) लोको रथन्तरम्। ऐ० ८.२॥ रथन्तरो वा अयं (भू-) लोकः। तै० १.१.८.१॥ रथन्तरꣳ हीयम् (पृथिवी)। श० १.७.२.१७॥ उपहूतꣳ रथन्तरꣳसह पृथिव्या। तै० ३.५.८.१॥ श० १.८.१. १९॥ वाग्वै रथन्तरम्। ऐ० ४.२८॥ वाग्रथन्तरम्। तां० ७.६.१७॥ ब्रह्मवर्चसं वै रथन्तरम्। तै० २.७.१.१॥ ब्रह्म वै रथन्तरम्। ऐ० ८.१, २॥ तां० ११.४.६॥ ऋग्रथन्तरम्। तां० ७.६. १७॥ अपानो रथन्तरम्। तां० ७.६.१४.१७॥ यद्ध्रस्वं तद्रथन्तरं यद्दीर्घं तद् बृहत्। कौ० ३.५॥ देवरथो वै रथन्तरम्। तां० ७.७.१३॥ अन्नं वै रथन्तरम्। ऐ० ८.१॥ राथन्तरी वै रात्री। ऐ० ५.३०॥ गायत्री वै रथन्तरस्य योनिः। तां० १५. १०.५॥ गायत्रं वै रथन्तरम्। तां० ५.१.१५॥ गायत्रं वै रथन्तरं गायत्रछन्दः। तां० १५.१०. ९॥ एतद्वै रथन्तरस्य स्वमायतनं यद् बृहती। तां ४.४.१०॥ अग्निर्वै रथन्तरम्। ऐ० ५.३०॥ उप वै रथन्तरम् ("उपशब्दसम्बद्धं हि रथन्तरपृष्ठं ज्योतिष्टोमे" इति सायणः)। तां० १६.५. १४॥ ऐड- रथन्तरम्। तां० ७.६.१७॥ त्रिवृच्च त्रिणवश्च राथन्तरौ तावजश्चाश्वश्चान्वसृज्येतां तस्मात्तौ राथन्तरं प्राचीनं प्रधूनुतः। तां० १०.२.५॥ चतुरक्षरꣳ रथन्तरम् तै० २.१.५.७॥ प्रजननं वै रथन्तरम्। तां० ७.७.१६॥ यद्रथन्तरं तच्छाकरम्। ऐ० ४.१३॥ रथन्तरमेतत्परोक्षं यच्छकर्य्यः। तां० १३.२.८॥ यद्वै रथन्तरं तद्वैरूपम् (साम)। ऐ० ४.१३॥ रथन्तरमेतत्परोक्षं यद्वैरूपम् (साम) तां० १२.२.५, ९॥ रथन्तरꣳ ह्येतत्परोक्षं यच्छ्यैतम् (यच्छ्यैतं साम)। तां० ७.१०.८॥ (सामवेद उवाच) रथंतरं नाम मे सामाघोरञ्चाक्रूरञ्च। गो० पू० २.१८॥ वसन्तेनर्त्तुना देवा वसवस्त्रिवृतास्तुतम्। रथन्तरेण तेजसा। हविरिन्द्रे वयो दधुः। तै० २.६.१९. १॥ तेजो रथन्तरꣳ साम्नाम्। तां० १५.१०. ६॥ रथन्तरꣳ साम्नाम् (प्रतिष्ठा)। तां० ९. ३.४॥ रथन्तरं वै सम्राट्। तै० १.४.४.९॥

**रथप्राम्** यो रथान् यानानि प्रतिव्याप्नोति तम् ३३।५५। यो रथानि यानानि पूर्यते तम् ६।४६।४॥

**रथप्रोतः** रथो रमणीयस्तेजःसमूहः प्रोतो व्यापितो येन सः १५।१७॥

(यजु० १५.१७) तस्य (आदित्यस्य) रथप्रोतश्चासमरथश्च सेनानीग्रामण्याविति वार्षिकौ तावृतू। श० ८.६.१.१८॥

**रथयुः** रथं कामयमानः ७।२।५॥

**रथयुजः** ये रथं युञ्जते ते १।१३६।४।

[रथयुजम्] रथेन युक्तम् ५।४१।६॥

**रथवत्** प्रशंसितरथसहितम् ५।५७।७।

[रथवते] बहवो रथा विद्यन्ते यस्य तस्मै १।१२२।११॥

**रथवाहनम्** रथं वहति येन तत् ६।७५।८॥

**रथवीतिः** यो रथेन व्याप्नोति मार्गम् ५।६१। १९। [रथवीतौ] रथानां गतौ ५।६१। १८॥

**रथस्पतिः** रथस्य स्वामी ५।५०।५॥

**रथस्वनः** रथस्य स्वनः शब्द इव शब्दो यस्य सः १५।१६॥

( यजु० १५. १५ ) तस्य ( वायोः ) रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्याविति ग्रैष्मौ तावृतू । श० ८. ६. १. १७ ॥

**रथिनीः** बहवो रमणसाधका रथा विद्यन्ते यासु ताः (अत्र भूम्न्यर्थ इनिः सुपां सुलुगिति पूर्वसवर्णादेशश्च ) १ । ६ । ८ ॥

**रथिभ्यः** प्रशस्ता रथा विद्यन्ते येषां तेभ्यः १६ । २६ ॥

**रथिरः** प्रशस्ता रथा विद्यन्ते यस्य सः ३ । १ । १७ ॥ [ रथिरम् ] रथा रमणीयानि यानानि भवन्ति यस्मिँस्तम् ३ । २६ । १ । यो रथिषु रमते तम् ७ । ७ । ४ ॥

**रथीः** रथस्वामी ( अत्र वाच्छन्दसि सर्वे विधयो भवन्तीति सोर्लोपो न ) १ । २५ । ३ । प्रशस्ता रथा यस्य सन्ति सः ( अत्र छन्दसि वनिपौ च वक्तव्यौ अ० ५ । २ । १०६ । अनेन रथशब्दान्मत्वर्थ ई प्रत्ययः ) १ । ४३ । २ । बहवो रथा विद्यन्ते यस्य सः ३ । ३ । ६ । [ रथीरिव ] प्रशस्तरथादियुक्तः सेनेश इव ४ । १५ । २ । प्रशंसितो रथवान् यथा ५ । ६१ । १७ ॥

**रथीतमः** बहवो रथा विद्यन्ते यस्य सोऽतिशयितः ६ । ४५ । १५ ॥ [ रथीतमम् ] बहवो रथा रमणाधिकरणा पृथिवीसूर्यादयो लोकाः विद्यन्ते यस्मिन्स रथीश्वरः सोतिशयितस्तम् । रथाः प्रशस्ता रमणविजयहेतवो विमानादयो विद्यन्ते यस्य सोऽतिशयितः शूरस्तम् ( रथिन् ईद्वक्तव्य अ० ८ । २ । १७ । इति वार्त्तिकेनेकारादेशः ) १ । ११ । २ ॥ प्रशस्ता रथा सुखहेतवः पदार्था विद्यन्ते यस्मिँस्सोऽतिशयितस्तम् १७ । १६ ॥

**रथीतरः** अतिशयेन रथयुक्तो योद्धा १ । ८४ । ६ ॥

**रथीयन्तीव** आत्मनो रथिन इच्छन्तीव सेना १ । १६६ । ५ ॥

**रथेचित्रः** रथे रमणीये चित्राणि आश्चर्यरूपाणि चित्राणि यस्य सः १५ । १६ ॥

**रथेशुभम्** रमते गच्छति येन तस्मिन् विमानादियाने शोभनम् १ । ३७ । १ । यो रथे शुम्भते तम् ५ । ५६ । ६ ॥

**रथेष्ठाः** यो रथे तिष्ठति सः २२ । २२ । ये रथे तिष्ठन्ति ते ६ । २९ । २ ॥

**रथौजाः** रथेनौजो बलं यस्य १५ । १५ ॥

( यजु० १५. १५ ) तस्य ( अग्नेः ) रथगृत्सश्च सेनानीग्रामण्याविति वासन्तिकौ तावृतू श० ८. ६.

**रथ्यः** [ रथ्यः रथ्यः ] रथेषु साधुः २ । ४ । ४ । यो रथं वहति सः २ । ३१ । ७ । बहुरथादि युक्तः ५ । ५४ । १३ । रथाय हितोऽश्वः ७ । २१ । ३ । रथे साधु रथ्यः सारथिः ३४ । ४६ [ । [ रथ्येव ] यथा रथान हितानि २ । ३९ । ३ । रथेषु साध्वी गतिरिव ३ । ३६ । ६ । [ रथ्यम् ] रथेभ्यो हितमश्वमिव प्रापकम् ७ । ५ । ५ ॥

रथेयोगाय रथ्या नि० १०. ३ ॥

**रदति** विलिखति १ । १६६ । ६ ॥

**रदन्ता** सुष्ठु लिखन्तौ १ । ११७ । ११ ॥

**रदन्ती** लिखन्ती ५ । ८ । ३ ॥ [ रदन्तीः ] भूमिं विलिखन्त्यः २ । ३० । २ ।

रद्वसो यो रदेषु विलेखनेषु वसति तत्सम्बुद्धौ ७ । ३२ । १८ ॥

रदा [रदा] विलिख ( अत्र द्व्यचोतस्तिङ इति दीर्घः ) १ । १६९ । ८ । संलेख १ । ६१ । १२ ॥

रधम् हिंसेयम् १ । ५० । १३ ॥

रध्य संराध्नुहि १० । २८ । ॥

रध्रचोदः यो रध्रान् संरोधकान् चुदति प्रेरयति सः २ । २१ । ४ ॥ [रध्रचोदनम्] धनस्य प्राप्तये प्रेरकम् ६ । ४४ । १० ॥

रध्रतुरः हिंसकहिंसकः ६ । १८ । ४ ॥

रध्रम् संराधनम् २ । ३४ । १५ । समृद्धिमन्तम् ७ । ५६ । २० ॥ [रध्रस्य] हिंसकस्य २ । १२ । ६ ॥

रन् ददमानौ (दन्वदस्य सिद्धिः) १ । १२० । ७ ॥

रन्त रमन्ते (अत्र लङि बहुलं छन्दसीति शपो लुक्) १ । ६१ । ११ । रमन्ताम् ७ । ३९ । ३ ॥

रन्तिः रमणम् २२ । १९ । [रन्तयः] येषु रमन्ते ते ७ । १८ । १० ॥

रन्ते रमणीये ८ । ४३ ॥

रन्ते रमते ७ । ३६ । ३ ॥

रन्धयः हिंसय ६ । ४३ । १ ॥

रन्धया ( अत्राऽन्येषामपि० इति दीर्घः ) १ । १३२ । ४ । निवारय ३ । ५३ । १४ ॥
रन्धय रध्यति । नि० ६ . ३२ ॥

रन्धयत् संराध्नोति २ । १९ । ६ ॥

रन्धयन् हिंसन् १ । ५० । १३ ॥

रन्धयस्व ताडयस्व ३ । ३० । १६ ॥

रन्धि नाशय ४ । २२ । ९ ॥

रन्धिषम् वशीकरम् ७ । १८ । १८ ॥

रन्धीः संराध्नुहि ( अत्राडभावः ) १ । १७४ । २ । हिंस्याः ४ । १६ । १३ ॥

रपः पापफलमिव रोगाख्यं दुःखम् १२ । ८४ । बाह्येन्द्रियचाञ्चल्यजन्यमपराधम् ३५ । ११ ॥ [रपांसि] पापानि दुःखप्रदानि ( रपोरिप्रमिति पापनाम्नी भवतः नि० ४ । २१ ) १ । ३४ । ११ । व्यक्तोपदेशप्रकाशकानि शोभनानि वचनानि १ । ६९ । ४ । हिंसनानि ६ । ३१ । ३ ॥
रपः रपोरिप्रमिति पापनामनी भवतः । नि० ४. २१ ॥

रपत् व्यक्तं वदेत् १ । १७४ । ७ ॥

रप्शते विशेषेण राजते ४ । ४५ । १ ॥

रप्शदूधाभिः व्यक्तशब्दघ्नैः २ । ३४ । ५ ॥

रप्शुदा ये रप्शुं रूपं दत्तस्ते ३३ । १९ ॥

रभः महान् १ । १४५ ३ । [रभसम्] वेगवन्तम् २ । १० । ४ । वेगम् ३ । ३१ । १२ ॥

रभसः महन्नाम । निघ० ३. ३ ॥
(यजु० ११. २३) अर्चिष्मत्तं रभसं दृशानमित्यवकाशवन्तमत्रैरत्नादं दीप्यमानमित्येतत् । श० ६. ३. ३. १९ ॥

रभध्वम् युद्धारम्भं कुरुत १७ । ३८ । प्रारम्भं कुरुत ३५ । १० ॥

रभन्ते प्रवर्तयन्ति ३ । २६ । १३ ॥

रभसा रोगरहितानि ३ । १ । ८ ॥

रभसाः वेगयुक्ताः १ । ८२ । ६ ॥

रभसानः वेगवान् ६ । ३ । ८ ॥

रभस्व आरम्भं कुरु २७ । ५ ॥

रभस्वतः कार्यारम्भं कुर्वत आलस्यरहितान् पुरुषार्थिनः १ । ६ । ६ ॥

रभामहे आरम्भं कुर्याम ६ । ५७ । ५ ॥

रभिष्ठया अत्यन्त शीघ्रता से बढ़ने वाली वा जिस का बहुत प्रकार से प्रारम्भ होता है वह वस्तु । २१ । ४६ ॥

रभिष्ठाः अतिशयेनारब्धारः ५ । ५८ । ५ ॥

रभीयस इव अतिशयेनारब्धस्येव २१ । ४६ ॥

रभे कुर्वे ४ । ६ । आरम्भं कुर्वे ४।६ ॥

रभेमहि आरम्भं कुर्वीमहि १ । ५३ । ४ । शत्रुभिः सह युध्येमहि; आरम्भं कुर्याम १ । ५३ । ५ ॥

रभोदाम् रभसो वेगयुक्तबलस्य दातारम् ६ । २२ । ५ ॥

रभ्यसः अतिशयेन रभस्विनः सततं प्रौढ-पुरुषार्थान् ( अत्र रभधातोरसुन्प्रत्ययः ततो मतुप् तत ईयसुनि विन्मतोरिति मतुब्लोपः टेरिति टिलोपः । छान्दसो वर्णलोपो वेतीकारलोपः ) १ । १२० । ४॥

रम रमस्व (अत्रात्मनेपदे व्यत्ययेन परस्मैपदम्) ६ । ७ ॥

रमताम् क्रीडतु २२ । १९ ॥

रमते क्रीडते २ । ३८ । २ ॥

रमध्वम् रमणं कुर्वन्तु ( अत्र व्यत्ययः ) ३ । २१ । क्रीडध्वम् ६ । ८ ॥

रमन्ते रमन्ते २ । ३० । १ ॥

रमया क्रीडयानन्दय ( अत्रापि संहितायामिति दीर्घः ) ५ । ५२ । १३ ॥

रमस्व रमताम् रमयतु वा ४ ।२२ । क्रीडस्व १३ ।३५ ॥

रमेथाम् रमेथाम् ५ । १७ ॥

रम्णातु रमयतु (अत्रान्तर्गतो ण्यर्थो विकरण-व्यत्ययश्च ) ४ । २१ ॥

रम्भिणीव यथाऽऽरम्भिका गृहकार्येषु चतुरा स्त्री १ । १६८ । ३ ॥

रम्भी आरम्भी २ । १५ । ६ ॥

रंसु रमणीयम् २ । ४ । ५ ॥

रंसुजिह्वः रमणीयवाक् ४ । १ । ८ ॥

रयिः द्रव्यसमूहः १ । ६६ । १ । निधिसमूहः १ । ७३ । १ ॥ [ रयिम् ] विद्यासुवर्णा-द्युत्तमं धनम् १ । १ । ३ । चक्रवर्तिराज्य-सिद्धं धनम् १ । ३४ । १२ । ऐश्वर्यम् १६ । ६४ ॥

रयिः उदकनाम । निघ० १.१२॥ धननाम । निघ० २. १० ॥ रातेर्दानकर्मणः नि७ ४. १७ ॥ रयिरिति मनुष्याः (उपासते) । श० १०.५.२. २०॥ वीर्यं वै रयिः । श० १३. ४. २. १३ ॥ पुष्टं वै रयिः । श० २. ३. ४. १३ ॥ पशवो वै रयिः । तै० १. ४. ४. ९ ॥ एष वै रयिर्वैश्वानरः( =आपः )

श० १०. ६. १. ५ ॥ रयिं सोमो रयिपतिर्दधातु। तै० २. ८ १. ६ ॥

रयिदौ श्रीप्रदौ ३। ५४। १६ ॥

रयिन्तमः अतिशयेन धनाढ्यः ६। ४४। १ ॥

रयिपति: धनानां पालयिता १। ६०। ४ ॥

रयिमान् प्रशस्ता रययो धनानि विद्यन्ते यस्मिंन्त्सः ( अत्र प्रशंसार्थे मतुप्। रयिरिति धननामसु०। निघ० २। १० ) ३। ४०। विद्याविज्ञानधनयुक्तः १२। ५६ ॥

रयिवतः बहुधनवतः ६। ६८। ५। [रयिवः] प्रशस्ता रययो विद्यन्ते यस्य तत्सम्बुद्धौ ( अत्र छन्दसीर इति मस्य वः ) १८। ७४ ॥

रयिवित् पदार्थविद्यायुक्तः २। १। ३। द्रव्यवेत्ता ३। ७। ३ ॥

रयिवृधः ये रयिं वर्धयन्ति ते २७। २३ ॥

रयिषाट् यो रयिं द्रव्यं सहते १। ५८। ३ ॥ [रयिषाचः] ये रयिणा सह समवयन्ति ते १। १८०। ६ ॥

रयिस्थानः रायस्तिष्ठन्ति यस्मिंन्त्सः ६। ४७। ६ ॥

ररक्ष रक्षेत् १। १४७। ३ ॥

ररते राति ददाति ५। ७७। ४ ॥

ररप्शे [ररप्शे] स्तूयते (अत्र रपधातोर्लिटि सस्य शः ) ४। २०। ५ ॥ अतिरिणक्ति ६। १८। १२ ॥

रराटम् परिभाषितं जगत् ५। २१। [रराटे] ललाटे २४। १ ॥

रराणः [ रराणः ] रममाणः ३। ४। ६। भूरिं दाता ४।२।१०। ददन् ४।१। ५ ॥

रराणः रातिरभ्यस्तः। नि० २. १२ ॥

रराणता रममाणेन मनसा १। १७१। १ ॥

रराणा सुष्ठुदात्री २। ३२। ५ ॥

रराथाम् दद्यातम् ( अत्र राधातोर्लोटि बहुलं छन्दसीति शपः श्लुः। व्यत्ययेनात्मनेपदञ्च ) १। ११७। २३ ॥

रराथे रातम् ६। ७२। ५ ॥

ररादे विलिखति वर्षयति ७। ४६। १ ॥

ररिमा रमेमहि ( अत्राऽन्येषामपीति दीर्घः ) २। ५। ७। दद्याम ३। १४। ५। ददुमः ( रा दाने लिट् )। १८। ७५ ॥

ररिवान् दाता १। १३८। ४ ॥

ररिवान्। नि० २. १२ ॥

ररिषे प्रयच्छसि २। १। ५ ॥

ररीथाः दद्याः ६। ४४। ११ ॥

ररीध्वम् दत्त ५। ८३। ६ ॥

ररे दद्याम् ७। ३९। ६। ददामि ७। ५६। ५ ॥

रवः ध्वनिः १। ६४। १०। [ रवेण ] स्तुतिसमूहेन १। ७१। २ ॥

रवथः महाशब्दकारी १। १००। १३ ॥

रशना व्यापिका १। १६२। ८ ॥ [ रशनाः ]

आस्वादनीयाः १ । १६३ । ५ । [रशनाम्] व्यापिकां रज्जुमिव २२ । २ । अंगुलिम् ( रशनेत्यंगुलिनाम । निघ० ३ । ५ ) २८ । ३३ । रशनावत् किरणगतिम् २६ । १३ । स्नेहिकां क्रियाम् १ । १६३ । २ । [रशनया] रश्मिना २१ । ४६ ॥

रशना अंगुलिनाम । निघ० २. ५ ॥

**रश्मिः** ज्योतिः १ । ३५ । ७ । प्रकाशकः प्रकाशमयो वा २ । २६ । येनाश्नाति सः (अत्राश भोजने धातोर्बाहुलकान्मिःप्रत्ययो रशादेशश्च उ० ४ । ४६ ) १८ । १६ । किरणो दीप्तिः ३३ । ७४ । [रश्मीन्] विद्याविज्ञानतेजांसि १ । १०६ । ३ । अश्वनियमनार्था रज्जूः १० । २२ । [रश्मये] शोधनाय ३८ । ६ ॥

रश्मिः यमनात् । नि० २. १५ ॥

अथ यः कपाले रसो लिप्त आसीत्ते रश्मयोऽभवन् । श० ६. १. २. ३ ॥ युक्ता ह्यस्य ( इन्द्रस्य ) हरयः शता दशेति ( ऋ० ६. ४७. १८ ) । सहस्रं हैत आदित्यस्य रश्मयः (हरयः = रश्मयः । जै० उ० १. ४४. ५ ॥ अभीशवो वै रश्मयः । श० ५.४.३. १४ ॥ रश्मयो ह्यस्य ( सूर्यस्य ) विश्वे देवाः । श० ३. ९. २. ६, १२ ॥ तस्य ( सूर्यस्य ) ये रश्मयस्ते विश्वे देवाः । श० ४. ३. १. २६ ॥ एते वै विश्वे देवा रश्मयः । श० २. ३. १. ७ ॥ एते वै रश्मयो विश्वे देवाः । १२. ४. ४. ६ ॥ तस्य ( सूर्यस्य ) ये रश्मयस्ते सुकृतः । श० १. ९. ३. १० ॥ रश्मय एव हिंकारः । जै० उ० १. ३३. ९ ॥ रश्मयो वाव होत्राः । गो० उ० ६. ६ ॥ रश्मयो वै दिवाकीर्त्यानि ( सामानि ) तै० १. २. ४. २ ॥ रश्मयो वा एत आदित्यस्य यद्दिवाकीर्त्यानि । तां० ४. ६. १३ ॥ तस्य ( सूर्यस्य ) ये रश्मयस्ते देवा मरीचिपाः । श० ४. १. १. १५ ॥ मासा वै रश्मयो मरुतो रश्मयः । तां० १४. १२. ९ ॥ ये ते मारुताः ( पुरोडाशाः ) रश्मयस्ते । श० ९. ३. १. २५ ॥ ( यजु० १५. ६ ) अन्नं रश्मिः । श० ८. ५. ३. ३ ॥ प्राणा रश्मयः । तै० ३. २. ५. २ ॥ ( यजु० १. १२ ) एते वाऽउत्पवितारो यत्सूर्यस्य रश्मयः । श० १. १. ३. ६ ॥ एते वै पवितारो यत्सूर्यस्य रश्मयः । श० ३. १. ३. २२ ॥ तद्यदेकैकस्य रश्मेर्द्वौ द्वौ वर्णौ भवतः । गो० उ० ६. ६ ॥ ( सविता ) रश्मिभिर्वर्षं ( समदधात् ) । गो० पू० १. ३६ ॥

**रश्मीवतीम्** प्रशस्तविद्याप्रकाशयुक्ताम् ( अत्राऽन्येषामपीति दीर्घः ) १५ । ६३ ॥

**रश्मेव** किरणवद्रज्जुवद्वा ६ । ६७ । १ ॥

**रसः** वीर्यं धातुः ६ । ३ । आनन्दः ११ । ५१ । सर्वद्रव्यसारः १८।९। आनन्दवर्धकः स्नेहरूपः ३६ । १५ । घृत दूध मधु आदि और उसका युक्ति से आहार विहार १२।५। १० । (१७६ विधि०) [रसाः] स्वाद्वन्नादिषड्विधाः १ । १८७ । ४ । [रसा] रसानन्दप्रदा जनाः ( अत्र सुपामिति डादेशः ) ३३ । २१ । [रसम्] विद्यानन्दम् १९ । ७६ । विद्यौषधिफलम् १ । ७१ । ५ ॥ [रसाय] रसभूताय विज्ञानानन्दप्रापणाय २ । ३२ । [रसात्] जिह्वाविषयात ३१ । १७ । [रसस्य] भुक्तान्नत उत्पन्नस्य शरीरवर्धकस्य १ । ३७ । ५ ॥

रसः उदकनाम । निघ० १. १२ ॥ अन्ननाम । निघ० २. ७ ॥

रसो वै मधु । श० ६. ४. ३. २ ॥ ७. ५. १. ४ ॥ अपो देवा मधुमतीरगृभ्णन्नित्यपो देवा रसवतीरगृह्णन्नित्येवैतदाह ( मधु=रसः ) श० ५. ३. ४. ३ ॥ स्वधायै त्वेति रसाय त्वेत्येवैतदाह ( स्वधा = रसः ) । श० ५. ४. ३. ७ ॥ रसो वाऽ

आप: । श० ३. ३. ३. १८ ॥ ३. ९. ४. ७ ॥

रसवत् बहुरसयुक्तम् ५ । ४४ । १३ ॥

रसवान् महौषधिप्रशस्तरसप्रचुरः ६ । ४७ । १ ॥

रसा रसादिगुणयुक्ता ५ । ४१ । १५ । पृथिवी ५ । ५३ । ९ । [ रसाम् ] प्रशस्तं रसं जलं विद्यते यस्यां ताम् (रस इत्युदकनाम १ । १२ अत्रार्ष आदित्वान्मत्वर्थीयोऽच् प्रत्ययः ) १ । ११२ । १२ ॥ [रसया] रसादिना ४ । ४३ । ६ ॥

रसा नदी रसतेः शब्दकर्मणः । नि० ११.२५ ॥

रसाशिरः यो रसानश्नाति सः ३ । ४८ । १ ।

रसिनः प्रशस्तो रसो विद्यते यस्मिँस्तस्य १९ । ३५ ॥

रहसूरिव या रह एकान्ते सूते सा २। २९।१ ॥

रहूगणाः रहवो अधर्मत्यागिनो गणाः सेविता येस्ते १ । ७८ । ५ ॥

राका पौर्णमासीवद्वर्तमाना २ । ३२ । ८ । राति ददाति सुखं या सा (राकेति पदनाम निघ० ५ । ५ ) ५ । ४२ । १२ ॥

राका देवपत्नी इति नैरुक्ताः, योत्तरा पौर्णमासी सा राकेति याज्ञिकाः । नि० ११.२९॥ रातेर्दानकर्मणः । नि० ११. ३० ॥

योत्तरा ( पौर्णमासी ) सा राका । ऐ० ७. ११ ॥ ष० ४. ६ ॥ गो० उ० १. १० ॥ योषाः सा राका । ऐ० ३. ४८ ॥ या राका सा त्रिष्टुप् । ऐ० ३. ४७, ४८ ॥

राजति [ राजति ] प्रकाशयति (अत्रान्तर्भावितो णयर्थः ) १। ३ । १२ । प्रकाशते ५ । २५ । ४ ॥

राजति ऐश्वर्यकर्मा । निघ० २. २१ ॥

राजथ राजथ ५ । ५५ । २ ॥

राजथः [ राजथः ] प्रकाशेते ५ । ३८ । ३ । प्रकाशेथे ५ । ६३ । २ ॥

राजन्तम् प्रकाशमानम् ३ । २३ ॥

राजन्ति राजन्ति ३ । ५६ । ८ ॥

राजन्ती प्रकाशमाने ६ । ७० । २ ॥

राजन्यः राजपुत्रः २२ । २२ ॥

राजन्यः एष वै प्रजापतेः प्रत्यक्षतमां यद्राजन्यस्तस्मादेकः सन्बहूनामीष्टे यद्वेव चतुरक्षरः प्रजापतिश्चतुरक्षरो राजन्यः । श० ५. १. ५. १४ ॥ तस्माद् बाहुवीर्यो ( राजन्यः ) बाहुभ्यां हि सृष्टः । तां० ६. १. ८ ॥ क्षत्रं राजन्यः । ऐ० ८. ६ ॥ श० १३. १. ५. ३ ॥ क्षत्रस्य वाऽएतद्रूपं यद्राजन्यः । श० १३. १. ५. ३ ॥ ओजः क्षत्रं वीर्यं राजन्यः । ऐ० ८. २, ३, ४ ॥ वृषा वै राजन्यः । तां० ६. १०. ९ ॥ युद्धं वै राजन्यस्य वीर्यम् । श० १३. १. ५. ६ ॥ युद्धं वै राजन्यस्य । तै० ३. ९. १४. ४ ॥ तस्माद्राजन्यस्य पञ्चदश स्तोमस्त्रिष्टुप् छन्द इन्द्रो देवता ग्रीष्म ऋतुः । तां० ६. १. ८ ॥ त्रिष्टुप्छन्दा वै राजन्यः । तै० १. १. ९. ६ ॥ आनुष्टुभो राजन्यः । तै० १. ८. ८. २ ॥ तां० १८. ८. १४ ॥ ऐन्द्रो वै राजन्यः । तै० ३. ८. २३. २ ॥ ऐन्द्रो राजन्यः । तां० १५ ४. ८ ॥ औदुम्बरेण राजन्यः अभिषिञ्चति । तै० १. ७. ८. ७ ॥ पार्थुरश्म राजन्याय ब्रह्मसाम कुर्वीत । तां० १३. ४. १८ ॥ तस्मादपि ( दीक्षितं ) राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयात् ब्रह्मणो हि जायते यो यज्ञाज्जायते । श० ३. २. १. ४० ॥

राजपुत्रा राजा पुत्रो यस्याः सा २ । २७। ७॥

राजसि [ राजसि ] प्रकाशयसि १ । १४४ । ६ । प्रकाशसे १ । २५। २० ॥

राजा [ राजा ] यो राजते प्रकाशते (अत्र कनिन्युवृषितक्षि० उ० १ । १५६ अनेन कनिन्प्रत्ययः) १ । २४ । ७ । प्रकाशमानः परमेश्वरः प्रकाशहेतुर्वा १ । २४ । ८ । न्यायविज्ञानादिभिः प्रकाशमानः १ । ५४ । ७ । नृपः १ । ६५ । ४ । सभाद्यध्यक्षः १ । ७३ । ३ । सर्वाध्यक्षो विद्याध्यक्षो रोगनाशकगुणप्रकाशको वा १ । ६१ । ५ । न्यायाधीशः सर्वाधिपतिरीश्वरः प्रकाशमानो विद्युदग्निर्वा १ । ६८ । १ । न्यायविनयाभ्यां राजमानः १ । १७४ । १ । शरीरात्ममनोभिस्तेजस्वी २ । १ । ४ । शुभगुणैः प्रकाशमानः ४ । १७ । ५ ॥ [ राजाना ] प्रकाशमानौ सभाविद्याध्यक्षौ १ । ७१ । ६ । देदीप्यमानावध्यापकोपदेशकौ २ । ३६ । ६ । प्रकाशमानौ सभासेनेशौ १ । १३६ । ४ । सूर्यविद्युताविव प्रकाशमानौ राजन्यायेशौ ३ । ३८ । ५ । विद्यादिशुभगुणैः प्रकाशमानौ राजप्रजाजनौ ३ । ३८ । ६ ॥ [ राजानः ] क्षात्रधर्मयुक्ता वीराः १२ । ८० । [ राजानम् ] प्राणं जीवं वा १ । २३ । १४ । राजानमिव सूर्यम् ६ । ८ । ४ । [ राजनि ] राजसभायाम् १ । १०८ । ७ ॥

राजा राजतेः । नि० २. ३ ॥

स राजसूयेनेष्ट्वा राजेति नामाधत्त । गो० पू० ५. ८ ॥ राजा वै राजसूयेनेष्ट्वा भवति । श० ५.१. १. १२ ॥ ९. ३. ४, ८ ॥ राज्ञ एव राजसूयम् । श० ५. १. १. १२ ॥ यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान् भवति । श० ५. ४. ४. १५ ॥ तस्माद्राजा बाहुबली भावुकः । श० १३. २. २. ५ ॥ तस्माद्राजोरुबली भावुकः । श० १३. २. २. ८ ॥ राजानो वै राष्ट्रभृतस्ते हि राष्ट्राणि बिभ्रति । श०९.४.१.१ ॥ नाऽराजकस्य युद्धमस्ति । तै० १. ५. ९. १ ॥ तद्यथा महाराजः पुरस्तात्सेनानीकानि प्रत्युह्याभयं पन्थानमन्वियात् । कौ० ५. ५ ॥ यथा राज्ञऽआगतायोदकमाहरेत् । श० ३. ३. ४. ३१ ॥ तस्माद्राजा दण्ड्यः ('तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा' इति मनु० ८. ३३६ ॥) । श० ५. ४. ४. ७ ॥ राजा महिमा । तै० ३ ९. १०. १ ॥ श० १३. २. ११. २ ॥

राजामि राजामि ४ । ४२ । १ ॥

राजासन्धे राजानः सीदन्ति यस्यां तस्यै १६ । १६ ॥

राज्ञी राजमाना १४ । १३ । राजमाना प्रधाना १५ । १० ॥

राज्यम् राज्यम् ७ । ६ । २ ॥

राज्यम् अथैनं ( इन्द्रं ) अस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि साध्याश्चाऽऽप्त्याश्च देवाः... अभ्यषिञ्चन्......राज्याय । ऐ० ८. १४ ॥ अवरं᳚हि राज्यं परं᳚ साम्राज्यम् । श० ५. १. १. १३ ॥

रा यो राजते ६ । १२ । १ । राजमाना ६ । २२ । प्रकाशमाना १४ । २२ ॥

राततमा अतिशयेन दातव्यानि १ । ६१ । १ ॥

रातम् दत्तम् १ । १६२ । ११ ॥

रातहविषे दत्तहव्याय २ ३४ । ८ ॥

रातहव्यः रातानि दत्तानि हव्यानि येन सः १ । ३१ । १३ । रातुं ग्रहीतुं योग्यं हव्यं दत्तं येन सः ४ । ७ । ७ । दत्तदातव्यः ४ । ४४ । ३ । [ रातहव्या ] रातं दत्तं हव्यमादातव्यं सुखं याभ्यां ते ३६ । ११ ॥

रातहव्याम् रातानि हव्यानि दातव्यानि दानानि यया ताम् ५ । ४३ । ६ ॥

**राता॑नि** दत्तानि १ । १३१ । १ ॥ [राता] दत्तानि ३ । ३५ । ७ ॥

**रा॒तिः** वेगादीनां दानम् १ । ३४ । १ । विद्यादानम् (अत्र मन्त्रे वृषेष्यवनविदभूवीरा उदात्तः अ० ३ । ३ । ९६ अनेन भावे क्तिन् स चान्तोदात्तः) १ । ८६ । २ । या रातिं ददाति सा १ । १२६ । ७ । दानम् १ । १३६ । ५ । सर्वेभ्यो सुखदायकः ८ । १७ ॥

रातिः दत्तिः । नि० १२. १७ ॥
( यजु० ३८. १३ ) इहैव रातयः सन्त्वितीहैव नो धनानि सन्त्वित्येवैतदाह (रातयः = धनानि)। श० १४. २. २. २६ ॥

**रा॒तिनी॑** बहवो राता दातारो विद्यन्ते यस्या सा ४।६।३॥ [रातिनीम्] रातानि दत्तानि विद्यन्ते यस्यां ताम् ३ । १६ । २ ॥

**रा॒तिषाचः** दानं सेवमानाः २ । १ । १३। दानकर्त्तारः ६। ४६। १४। या रातिं दानं सचन्ते ताः ७ । ३४ । २३ ये रातिं विद्यादिदानं सचन्ते ते ७ । ३९ । ११ ॥ [रातिषाचम्] दानसम्बन्धिनम् ७ । ३६ । ८ ॥

**रा॒त्रि॒** रात्रिः (अत्र लिङ्गव्यत्ययः) ३४ । ३२ ॥

**रात्रि॑ः** रात्रिः २३ । १२ । ( रात्रिवद्वर्तमानः प्रलयः २३। ५४ ॥ [रात्र्या] तमोरूपया ३। १० । रात्रिविधया १५ । ६ ॥

रात्रिः प्ररमयति भूतानि नक्तञ्चारीण्युपरमयतीतराणि ध्रुवीकरोति । रातेर्वा स्याद्दानकर्मणः प्रदीयन्तेऽस्यामवश्यायाः । नि० २. १८ ॥

अन्धो रात्रिः (अन्धः-ऋ० ८. ९२. १)। तां० ९. १. ७ ॥ तमः पाप्मा रात्रिः । कौ० १७. ६, ९ ॥ गो० उ० ५. ३ ॥ तम इव हि रात्रिर्मृत्युरिव । ऐ० ४. ५ ॥ मृत्योस्तम इव हि रात्रिः । गो० उ० ५. १ ॥ रात्रिर्वरुणः । ऐ० ४. १० ॥ तां० २५. १०. १० ॥ वारुणी रात्रिः । तै० १. ७. १०. १ ॥ सगरा रात्रिः ( सगरः = ऋतुविशेषः-तैत्तिरीयसंहितायाम् ४. ४. ७. २ ॥ ५. ३. ११. ३॥ सायणभाष्येऽपि ) । श० १. ७. २. २६ ॥ अहर्वै शबलो रात्रिः श्यामः । कौ० २. ९॥ रात्रिरेव श्रीः श्रियाऽहैतद्रात्र्याऽ सर्वाणि भूतानि संवसन्ति । श० १०. २. ६. १६ ॥ रात्रिर्वै व्युष्टिः । श० १३. २. १. ६ ॥ रात्रिः सावित्री । गो० पू० १. ३३ ॥ रात्रिर्वै कृष्णा शुक्लवत्सा तस्या असावादित्यो वत्सः । श० ९. २. ३. ३० ॥ रात्रिर्वात्सप्रम् ( सूक्तम् ) । श० ६. ७. ४. १२ ॥ अहोरात्रे वात्सप्रम् ( सूक्तम् ) । श० ६. ७. ४. १० ॥ रात्रिर्वै पिशङ्गिला । तै० ३. ९. ५. ३ ॥ रात्रयः क्षपाः । ऐ० १. १३ ॥ रात्रिर्वै संयच्छन्दः ( यजु० १५. ५ ) । श० ८. ५. २. ५ ॥ रजता (कुशी) रात्रिः ( अभवत् ) । तै० १. ५. १०. ७ ॥ अथ यदस्तमेति ( आदित्यः ) । एता= मेव तद्रजतां कुशीमनुसंविशति ( रजता कुशी—रात्रिः ) । तै० १. ५. १०. ७ ॥ एतत् ( रजतं ) रात्रिरूपम् । ऐ० ७. १२ ॥ सोमो रात्रिः । श० ३. ४. ४. १५ ॥ क्षेमो रात्रिः । श० १३. १. ४. ३ ॥ ब्रह्मणो वै रूपमहः क्षत्रस्य रात्रिः । तै० ३. ९. १४. ३ ॥ यजमानदेवत्यं वा अहः । भ्रातृव्यदेवत्या रात्रिः । तै०२.२.६.४ ॥ आग्नेयी वै रात्रिः । तै० १. १.४.२॥ २. १.२. ७ ॥ आग्नेयी रात्रिः । तै० १.५. ३.४॥ राथन्तरी वै रात्री । ऐ०५.३०॥पञ्चच्छन्दांसि रात्रौ शंसत्यनुष्टुभं गायत्रीमुष्णिहं त्रिष्टुभं जगतीमित्येतानि वै रात्रिच्छन्दांसि । कौ० ३०. ११ ॥ (—रात्रिपर्यायः ) एषा वा अग्निष्टोमस्य सम्मा यद्रात्रिः । द्वादशस्तोत्राण्यग्निष्टोमो द्वादशस्तोत्राणि रात्रिः । तां० ९. १. २३—२४ ॥ एषा वा उक्थस्य सम्मा यद्रात्रिः ( -सन्धिस्तोत्राणि ) । त्रीण्युक्थानि, ( अग्निरुषा अश्विनाविति ) त्रिदेवत्यः सन्धिः । तां० ९. १. २५-२६ ॥

राथ्यः रथेषु हिता रथ्या तासु कुशलः २३। १३॥

राधः सुखसाधनं धनम् १५। ३४। धनम् २७।२७॥ राध्नुवन्ति सुखानि येन तद्धनम् (राध इति धननामसु० निघ० २।१०) १। ६। ५। राध्नुवन्ति सुखानि येन तद्विद्यासुवर्णादिधनम् १। १०। ७। [राधसः] पृथिव्यादिधनात् (अत्र सर्वधातुभ्योऽसुन् प्रत्ययः) १। १५। ५। विद्यासुवर्णचक्रवर्तिराज्यादिधनस्य १। २२। ७। वृद्धिकारकस्य कार्यरूपस्य धनस्य (शेषत्वात्कर्मणि षष्ठी) १। ८१। ६। धनाद्यस्य ४। २०। ७॥ समृद्धस्य ७। २८। ५॥

राधः धननाम। निघ० २. १०॥ राधसा धनेन। नि० ११. २४॥

राधत् राध्नुयात् १। १२०। १॥

राधसि संसाध्नोसि ४। ३२। २१॥

राधसोराधसः धनस्य धनस्य ६। २७। ३॥

राधाम साध्नुयाम (अत्र विकरणव्यत्ययः) १। ४१। ७॥

राधोगूर्ताः धनवर्धिन्य एव ६। ३४॥

राधोदेयाय धनं दातुं योग्याय व्यवहाराय ४। ५१। ३॥

राध्नुहि सम्यक् सिद्धो भव २२। ४॥

राध्यः संशोधितुं योग्यः १। १५। ६। १॥

राध्यम् राद्धुं संसाद्धुं योग्यम् १। ११६। १॥

[राध्या] सुखानि साधयितुमर्हाणि २। २४। १०॥

राध्यताम् संसेध्यताम् १। ५॥

राध्यासम् सम्यक् सिद्धो भवेयम् २२। ४। संसाधयेयम् ३७। ३॥

रान्द्र्या रान्द्र्याणि रन्तुं योग्यानि ६। २३। ६॥

रामयः आनन्देन क्रीडय (अत्रान्येषामपीति दीर्घः) १। १२१। १३॥

रामयत् रापं रमणं कारयितृ १। १५६। ३॥

रामयन्ति रमयन्ति ७। ५६। १६॥

रामीः आरामप्रदा रात्रीः २। ३४। १२॥

राम्या रात्रीः २। २। ८॥ [राम्याणाम्] रमणीयानाम् ३। ३४। ३॥ रमयन्त्यानन्दयन्ति तेषाम् ३३। २६॥

राम्या रात्रिनाम। निघ० १.७॥

रायः ऋद्धिसिद्धिधनानि ७। ४। सर्वविद्याजनितस्य बोधधनस्य ७। १४। [राय] रासु धनेषु साधो ७। ५५। ३॥

रायः पशवो वै रायः। श० ३. ३. १. ८॥ ४. १. २. १५॥

रायतः शब्दयतः १। १८२। ४॥

रायसि शब्दयसि ७। ५५। ३॥

रायस्कामः धनमीप्सुः १। ७८। २॥

रायस्पोषदे यो रायो विद्याधनसमूहस्य पोषं पुष्टिं ददाति तस्मै ५। १ धनस्य पुष्टिप्रदाय (सुपां सुलुगिति ङेः स्थाने शे इत्यादेशः) ६। ३२॥

रायस्पोषवनि यथा रायो धनसमूहस्य पोषं पुष्टिं वनन्ति सेवन्ते यस्मात् तथा ५। २७।

रायो धनस्य पोषस्य दृढतायाः संविभाजिनम् ६ । ३ ॥

रायस्पोषवनिः यथा रायो विद्याधनसमूहस्य पोषं पुष्टिं वनति सम्भजति सा ५ । १२।

रारक्षाणः भृशं रक्षन् सन् ४ । ३ । १४॥

रारणत् अतिशयेनोपदिशति ( यङ्लुङन्तस्य रणधातोर्लेट्प्रयोगः ) १ । १० । ५ । उपसंवदते ( अत्र रणधातोर्बहुलं छन्दसीति शपः स्थाने श्लुः । लडर्थे लेट् च तुजादित्वाद्दीर्घः ) १ । ६१ । १४ ॥

रारधुः हिंसन्ति ७ । १८ । १८॥

रारन् दद्युः १ । १२२ । १२ ॥

रारन्त रमन्ते ५ । ५४ । १३ ॥

रारन्तु भृशं रमताम् ३ । ४२ । ८॥

रारन्धि रमस्व रमेत वा (अत्र रमधातोर्लोटि मध्यमैकवचने बहुलं छन्दसीति शपः स्थाने श्लुः । व्यत्ययेन परस्मैपदम् । वाच्छन्दसीति हेः पित्वादङित्वश्चेति धिः) १। ६१। १३ । रमस्व रमय वा ३ । ४१ । ४। रन्धय हिन्धि ( अत्र तुजादीनामित्यभ्यासदैर्घ्यम् ) ६ । २५ । ६ ॥

रारपीति भृशं शब्दयति ६ । ३ । ६ ॥

रारभे रेभे १ । १६८ । ३ ॥

रारहाणाः त्यकारः ( अत्र तुजादीनामित्यभ्यासदीर्घः ) १ । १३४ । १ । गच्छन्तः १ । १४८ । ३ ॥

रावा दाता ६ । ३० ॥

राशिः समूहः ६ । ५५ । ३ ॥

राष्टि राजते ( अत्र विकरणस्य लुक् ) १ । १०४ । ४ ॥

राष्ट्रदाः राज्ञां कर्मप्रदाः राज्यप्रदाः १०।२ ॥

राष्ट्रम् राज्यम्; न्यायप्रकाशितम् १० । २ ॥

राज्य और उसका न्याय से पालन १२ । ५ । ८। ( १७६ विधिः ) राज्य की इच्छा और रक्षा करते हैं ११ । ५ । १७ ( २३० विधिः ) ॥

राष्ट्रम् श्रीर्वै राष्ट्रस्य मध्यम् । तै० ३. ९. ७. १ ॥ श० १३. २. ९. ४ ॥ श्रीर्वै राष्ट्रमश्वमेधः । श० १३. २. ९. २ ॥ तै० ३. ९. ७. १ ॥ राष्ट्रं वाऽअश्वमेधः । श० १३. १. ६. ३ ॥ तै० ३. ८. ९. ४ ॥ राष्ट्रꣳसान्नाय्यम् ( हविः ) । श० ११.२. ७. १७ ॥ अष्टौ वै वीरा राष्ट्रꣳ समुद्यच्छन्ति राजभ्राता च राजपुत्रश्च पुरोहितश्च महिषी च सूतश्च ग्रामणी च क्षत्ता च संग्रहीता चैते वै वीरा राष्ट्रꣳ समुद्यच्छन्त्येतेष्वेवाध्यभिषिच्यते । तां० १९.१. ४ ॥ क्षत्रं हि राष्ट्रम् । ऐ० ७. २२ ॥ राष्ट्रं पसः ( यजु० २३. २२ ) । तै० ३. ९. ७. ४ ॥ श० १३. २. ९. ६ ॥ राष्ट्रं मुष्टिः ( यजु० २३. २४. ) । श० १३. २. ९. ७ ॥ तै० ३. ९. ७. ५ ॥ राष्ट्रꣳ हरिणः (यजु० २३. ३० ) । श० १३. २. ९. ८ ॥ राष्ट्राणि वै विशः ऐ० ८. २६ ॥ राष्ट्रꣳ सप्तदशः ( स्तोमः ) तै० १. ८. ८. ५ ॥ सविता राष्ट्रꣳ राष्ट्रपतिः । श० ११. ४.३. १४ ॥ तै० २.५. ७. ४ ॥ ( यजु० १२. ११) श्रीर्वै राष्ट्रम् । श० ६. ७. ३. ७ ॥

राष्ट्री ईश्वरः ( राष्ट्रीति ईश्वरनाम् । निघ० २ । २२ ) ६ । ४ । ५ ॥

राष्ट्री ईश्वरनाम । निघ० २. २२ ॥
वाग्वै राष्ट्री । ऐ० १. ९ ॥

रासत् [ रासत् ] दद्यात् ६ । ४९ । ८। ददाति ५ । २५ । १ । ददातु ३४ । ४२ ॥

रासत ददातु । नि० १२.१८ ॥

रासते रातु ददातु (लेट्प्रयोगो व्यत्ययेनात्मनेपदम् ) १ । ६६ । ८ । ददाति ४ । ५५ । ८ ॥

रासन् [ रासन् ] प्रयच्छन्ति ७ । ४० । ६ ॥ प्रदद्युः ७ । ३४ । २२ ॥

रासन्ताम् ददतु ७ । ३५ । १५ ॥

रासभः आदिष्टोपयोजनपृथिव्यादिगुणसमूहवत्पुरुषः १ । ११६ । २ । दातुं योग्यः ११ । ४६ । [ रासभम् ] जलाग्न्योर्वेगगुणाख्यमश्वम् ११ । १३ । [ रासभस्य ] अश्वसम्बन्धस्य २५ । ४४ । रासयन्ति शब्दयन्ति येन वेगेन तस्य ( रासभावश्विनोरित्यादिष्टोपयोजननामसु० । निघ० १ । १५ ) १ । ३४ । ६ । शब्दायमानस्य १ । १६२ । २१ । विद्युदादिसम्बन्धिन इव ३ । ५३ । ५ ॥

रासभः यदरसदिव स रासभोऽभवत् । श० ६. १. १. ११ ॥ यत्तदरसदिवैष रासभः । श० ६. ३. १. २८ ॥ वैश्यं च शूद्रं चानु रासभः । श० ६. ४. ४. १२ ॥

रासि [ रासि ] ददासि १ । १४० । १२ ॥

रासीय दद्याम् ७ । ३२ । १८ ॥

रास्ना रसहेतुभूता क्रिया ( रास्ना सास्ना स्थूणा वीणाः उ० ३ । १५ । इति रसधातोर्निपातनान्नःप्रत्ययः ) १ । ३० । दात्री ११ । ५९ ॥

रास्ना हिरो ( हिरः – "मेखला" इति सायणः ) वै रास्ना ( — "रशना" इति सायणः ) । श० १. ३. १. १५ ॥

रास्पिनस्य आदातुमर्हस्य १ । १२२ । ४ ॥

रास्पिन् रास्पी रपतेर्वा रसतेर्वा । नि० ६.२१॥

रास्पिरासः ये रा दानानि स्पृणन्ति ते ५ । ४३ । १४ ॥

रास्व [ रास्व ] राहि देहि ( अत्र व्यत्ययेनात्मनेपदम् ) २ ।२७.१०। ददाति ४। १६ ॥

रिक्थम् धनम् ३ । ३१ । २ ॥

रिक्थाः अतिरिणक्ति ( अत्र वाच्छन्दसीति विकरणाभावः ) ३ । ६ । २ ॥

रिख लिख ६ । ५३ । ७ ॥

रिच्यते अधिको भवति ७ । ३२ । १२ ॥ पृथग्भवसि २ । १ । १५ ॥

रिणक् [ रिणक् ] हिनस्ति २ । १५ । ८ ॥

रिणते गच्छन्ति ५ । ५८ । ६ ॥

रिणन् प्राप्नुवन् २ । २२ । ४ ॥

रिणाः हिंस्याः ४ । ११ । ३ ॥

रिणाति [ रिणाति ] हिनस्ति ३३ । ८० । गच्छति १ । १६६ । ६ । प्राप्नोति १ । १८७ । ४ ॥

रिणाति गतिकर्मा । निघ० २. १४ ॥

रिणीते प्राप्नोति १ । १२४ । ७ । गच्छति ५ । ८० । ६ ॥

रिणीथः हिंस्तम् १ । ११७ । १६ ॥

रितः गन्त्रीः ६ । ५७ । ४ ॥

रिपः पृथिव्याः ( रिप इति पृथ्वीनाम । निघ०

१ । १ ) २ । ३२ । २ । शत्रवः ७ । ३२ । १२ । पापात्मिकाः क्रियाः ७ । ६० । ६ ॥

रिपः पृथिवीनाम । निघ० १. १ ॥

**रिपुः** शत्रुः १ । ३६ । १६ । स्तेनः २ । ३४ । ६ । [रिपुम्] विद्याशत्रुम् ६ । ५१ । १३ ॥

रिपुः स्तेननाम । निघ० ३. २४ ॥

**रिप्रम्** लिप्तं प्राप्तम् (अत्र लकारस्य रेफादेशः) १६ । ३५ ॥

**रिप्रम्** व्यक्तवाणीप्राप्तव्यं वेदितव्यम् ( अत्र लीरीङोः ह्रस्वः उ० ५ । ५५ । अनेनायं सिद्धः ) ४ । २ ॥

रिप्रम् पापनाम । नि० ४. २१ ॥
तद्यदमेध्य ं रिप्रं तत् । श० ३. १. २. ११ ॥

**रिप्रवाहः** ये रिप्रं पापं वहन्ति तान् ३५ । १६ ॥

**रिरिक्वांसः** अधर्मादिनिर्गताः ( अत्र न्यङ्क्वादित्वात्कुत्वम् ) १ । ७२ । ५ । रेचनं कारयन्तः ५ । २४ । ३ ॥

**रिरिक्षन्तम्** रेष्टुं हिंसितुमिच्छन्तम् १ । १२९ । १० ॥

**रिरिक्षोः** हिंसितुमिच्छोः १ । १८९ । ६ ॥

**रिरिचथुः** रेचताम ४ । २८ । ५ ॥

**रिरिचाथे** अतिरिक्तौ भवतः १ । १०९ । ६ ॥

**रिरिचे** [ रिरिचे ] रिणक्त्यधिकं वर्तते १ । ६१ । ९ । अतिरिच्यते १ । १०२ । ७ । अन्यायात्पृथग्भव ७ । ४२ । ३ ॥

**रिरिच्यात्** अतिरिच्यात् ४ । २४ । ५ ॥

**रिरिपुः** आरोपयन्ति ५ । ८५ । ८ ॥

**रिरिषेः** हिन्धि ( अत्र बहुलं छन्दसीति शस्य श्लुः ) १ । १२९ । १० ॥

**रिरीहि** याचस्व ६ । ३६ । ५ । प्रापय ६ । ४६ । ८ ॥

रिरीहि याच्ञाकर्मा । निघ० ३. १९ ॥

**रिरेच** रिणक्ति ४ । १६ । ६ ॥

**रिरेभ** रेभा उपदिशानि (व्यत्ययेन परस्मैपदम्) १ । १२० । ६ ॥

**रिशन्तीः** भक्षयन्तीः ६ । २८ । ७ ॥

**रिशादाः** यो रिषान् हिंसकान् शत्रून् अत्ति नाशयति सः ( अत्रादधातोरसुन् ) १ । ७७ । ४ ॥ [ रिशादसा ] अविद्यादिदोषनाशकावध्यापकोपदेशकौ ३३ । ७२ ॥ [ रिशादसः ] रिशानां हिंसकानां रोगाणामत्ता दस उपक्षयितारः १ । २६ । ४ । ये रिशान् शत्रून् दसन्ति नाशयन्ति ते १ । १८६ । ८ । ये रिशान् दोषान् शत्रूंश्चादन्ति हिंसन्ति तान् ३ । ४४ ॥

रिशादसः रेशयदारिणः । नि० ६. १४ ॥

**रिषः** हिंस्याः ११ । ६८ ॥

**रिषः** हिंसकाः ६ । ६३ । २ ॥ [ रिषे ] अन्याय ५ । ४१ । १६ ॥ [ रिषः ] हिंसकाच्छत्रोः पापाच्च ३ । ४८ । धर्मस्य हिंसनात् ८ । २७ । हिंसकात् १८ । ७३ । हिंसनात् २० । १८ । दुष्टाचारात् ६ । २४ । १० ॥

रिषे रेषणाय नि० । १०. ४५ ॥

**रिषण्यः** हिंस्याः २ । ११ । १ ॥

रिषण्यति आत्मना हिंसितुमिच्छति २। २३। १२॥

रिषण्यवः आत्मनो रेषणामिच्छवः १। १४८। ५॥

रिषत् हिंस्यात् ६। ५४। ७॥

रिषयध्यै रिषयितुम् १। १२९। ८॥

रिषाथ हिंसथ ७। ३३। ४॥

रिषाम [ रिषामा ] हिंसिता भवेम ( अत्रान्येषामपीति दीर्घः ) १। ६४। १। हिंस्याम ४। १२। ५। रुष्टा भवेम ६। ४४। ११।

रिष्टम् हिंसितम् १। १२१। ७॥

रिष्यति नश्यति १। १८। ४। हिनस्ति ५। ४४। ६॥

रिष्यथ हिंस्यथ ५। ५४। ४॥

रिष्यसि हिन्धि २३। १६। हंसि २५। ४४॥

रिष्याति रोगैर्हिंसितो भवेत् १२। ६१॥

रिष्येत् हिंसितो भवेत् १। ६१। ८॥

रिष्येम हिंस्याम ६। ५४। ६॥

रिहती घ्नन्ती ३। ५५। १३॥

रिहन् परित्यजन् १। १४०। ६॥

रिहन्ति [ रिहन्ति ] सत्कुर्वन्ति ७। १६। आददते श्लाघन्ते वा १। २२। १४। प्राप्नुवन्ति १। १८६। ७। लिहन्ति आस्वादन्ते ( अत्र व्यत्ययेन रस्य लः ) २। ३५। १३॥

रिहाणाः अर्चकाः २। १६॥

रिहाणे आस्वदित्र्यौ ( अत्र वर्णव्यत्ययेन लस्य स्थाने रः ) ३। ३३। १॥

रीतिः श्रेष्ठा नीतिः २। २४। १४। श्लेषणम् २। ३६। ५। श्लिष्टो गन्ता गमयिता वा ६। १३। १॥

रीत्यापा रीतिश्चापश्च ययोस्तौ ५। ६८। ५॥

रीयते [ रीयते ] श्लिष्यते सम्बध्यते १। १३५। ७। श्लिष्यति ५। ७। ८। विजानाति १। ३०। २। गच्छति १। ८५। ३॥

रीयते गतिकर्मा। निघ० २. १४॥

रीयमाणाः चालनेन गच्छन्त्यः १०। १६॥

रीरधः संराधय ( अत्र रध हिंसासंराध्योरस्माण्णिजन्ताल्लोडर्थे लुङ् ) १। २५। २। हिंस्यात् २। ३२। २। रध्याः हिंस्याः ३। १६। ५॥

रीरधत् हिंस्यात् २। ३३। ५॥

रीरधता भृशं हिंसत ( अत्र संहितायामिति दीर्घः ) ६। ५१। ६॥

रीरमत् रमयति ४। १७। १४। रमयेत् ५। ५३। ६॥

रीरमन् रमयन्ति २। १८। ३। रमन्ताम् ७। ३२। १॥

रीरमाम सर्वान् रमयेम १। १६५। २॥

रीरिषः हिंस्याः (अत्र लिङर्थे लुङडभावश्च) १६ । १५ । हिंसको भवेः १६ । १६ । जहि (अत्र तुजादित्वाद्दीर्घः) १ । ११४ । ७ ॥

रीरिषत् हिंस्यात् ३ । ५३ । २० ॥

रीरिषत हनत २५ । २२ । हिंस्त १ । ८६ । ६ ॥

रीरिषीष्ट भृशं हिंस्यात् ६ । ५१ । ७ ॥

रीषन्ते हिनस्ति ५ । ३ । १२ ॥

रीषन्तम् हिंसन्तम् (अत्रान्येषामपीति दीर्घः) २ । ३० । ६ ॥ [रीषतः; रिषतः] हिंसा-हेतुदोषान् १ । १२ । ५ । हिंसकात् व्याघ्रादेः प्राणिनः १ । ३६ । १५ । हिंसकात् ७ । १५ । १३ ॥

रुक्मः देदीप्यमानोऽग्निः १७ । ७० । देदीप्यमानः १ । ८८ । २ । स्वप्रकाशस्वरूपः १ । ६६ । ५ । रोचमानः सूर्यः ४ । १० । ५ । [रुक्मम्] सुवर्णम् १ । ११७ । ५ । रुचिकरं भास्वरम् ५ । १ । १२ ॥ [रुक्माः] सुवर्णालङ्काराः ५ । ५४ । ११ । [रुक्मान्] विद्युज्जाठराग्निप्रकाशान् १ । ६४ । ४ । [रुक्मेषु] सुवर्णादिषु ५ । ५३ । ४ ॥

रुक्मः असौ वाऽआदित्य एष रुक्म एष हीमाः सर्वाः प्रजा अतिरोचते रोचो ह वै तᳪ रुक्म इत्याचक्षते परोऽक्षम् । श० ७. ४. १. १० ॥ आदित्यस्य (रूपं) रुक्मः । तै० ३. ९. २०. २ ॥ असौ वाऽआदित्य एष रुक्मः । श० ६. ७. १. २ ॥ तस्य (अश्वस्य श्वेतस्य) रुक्मः पुरस्ताद्भवति । तदेतस्य रूपं क्रियते य एष (आदित्यः) तपति । श० ३. ५. १. २० ॥ सत्यᳪ हैतद्यद्रुक्मः । ...... तद्यत्तत्सत्यम् । असौ स आदित्यः । श० ६. ७. १. १–२ ॥ प्रजापतिस्तेजो वीर्यᳪ रुक्मः । श० ६. ७. १. ९ ॥ रुक्मो वै समुद्रः (यजु० १३. १६) । श० ७. ४. २. ५ ॥

रुक्मवक्षसः [रुक्मवक्षसः] रुक्ममिव वक्षो येषां ते २ । ३४ । ८ । रुक्माणि सुवर्णादियुक्तान्याभूषणानि येषां ते ५ । ५५ । १ । रुक्मानि जटितान्याभूषणानि वक्षःसु येषां ते ५ । ५७ । ५ । रुक्मं रोचकं वक्षो हृदयं येषां ते २ । ३४ । २ ॥

रुक्मा प्रशस्तानि रुक्माणि रोचकानि कर्माणि गुणा वा सन्ति यस्य सः १ । ६६ । ३ ॥

रुक्षः तेजस्वी ६ । ३ । ७ ॥

रुग्णम् रोगाविष्टम् ३ । ३१ । ६ ॥

रुचः दीप्तयः १३ । २२ । रुचयः प्रीतयो वा १३ । २३ । [रुचा] रुचिकर्यौ ४ । ५६ । १ ॥ [रुचम्] कामनाम् १३ । २३ । रुचिकरम् ३१ । २१ ॥

रुचयन्त रुचिमाचक्षते ३ । ६ । ७ ॥

रुचानः रोचकः १२ । १ । प्रदीपकः १२ । २५ । प्रीतिमान् ३ । १५ । ६ । प्रकाशयन् ६ । ३९ । ४ ॥

रुचानाः रुचिकर्य्यः ४ । ५१ । ९ । रोचमानाः ७ । ५६ । १३ ॥

रुचे रुचिकारकाय १३ । २२ । प्रीतये १३ । ३९ । प्रीतिकराय १८ । ४६ ॥

रुज रुग्णान् कुरु ( अत्र द्व्यचो० इति दीर्घः ) ३ । ३० । १६ । प्रभग्नं कुरु ४ । ३ । १४ ॥

रुजत् रुजति ६ । ३२ । २ । भनक्ति ६ । ३९ । २ ॥

रुजन् [रुजन्] भग्नानि कुर्वन् ४ । १६ । ८ ॥ भञ्जति १ । ७१ । २ ॥

रुजन्ति भञ्जन्ति ४ । १८ । ६ ॥

रुजा शत्रूणां रोगकारकः ( अत्रौणादिकः कनिन् ) १० । ८ ॥ [रुजः] रोगान् ६ । २२ । ६ ॥

रुजा ( इषुः ) अथ यया विद्धः शयित्वा जीवति वा म्रियते वा सा द्वितीया तदिदमन्तरिक्षं सैषा रुजानाम । श० ५. ३. ५. २९ ॥

रुजानाः नद्यः १ । ३२ । ६ ॥

रुजामि प्रभग्नान् करोमि ४ । ४ । ११ ॥

रुजेम प्रभग्नान् कुर्याम ४ । २ । १५ ॥

रुणधामहै निरुन्ध्याम १ । ८ । २ ॥

रुतस्य रुग्णस्य (अत्र पृषोदरादित्वाज्जलोपः) १६ । ४६ ॥

रुदतः रोदनं कुर्वतः १ । ३३ । ७ ॥

रुद्रः परमेश्वरः १ । १४३ । ३ । अधीतविद्यः १ । ११४ । ११ । दुष्टानां रोदयिता २ । १ । ६ । जीवः २ । ३८ । ९ । दुष्टानां भयंकरः ५ । ४६ । २ । दुष्टदण्डकः ५ । ५१ । १३ । चतुश्चत्वारिंशद्वर्षकृतब्रह्मचर्यो विद्वान् ४ । २० ॥ [रुद्राः] प्राणाः ३ । ८ । ८ । प्राणापानव्यानोदानसमाननागकूर्मकृकलधनञ्जयाख्या दश प्राणा एकादशो जीवश्चेत्येकादश रुद्राः २ । ५ । रुद्रसंज्ञका विद्वांसः ११ । ५८ । [रुद्रम्] यो रुत् रोगं द्रावयति तम् ६ । ४९ । १० । पापफलदानेन पापिनां रोदयितारं, पापफलभोगेन रोदकं जीवं वा ७ । ४१ । १ । [रुद्रस्य] शत्रुरोदकस्य स्वसेनापतेः ११ । १५ । सभेशस्य १६ । ५० । समष्टिप्राणस्य १ । ६४ । २ । रोदयितृ रोगस्य २ । ३३ । १३ । अन्यायकारिणो रोदयितुः ५ । ५९ । ८ । रौद्रकर्मकर्तुः ६ । २८ । ७ । वायुवद्बलिष्ठस्य ६ । ६६ । ३ । रोगाणां द्रावकस्य निःसारकस्य ७ । ५६ । १ ॥ [रुद्र] रुतः सत्योपदेशान् राति ददाति तत्सम्बुद्धौ १ । ११४ । ३ ॥

रुद्रः स्तोतृनाम । निघ० ३. १६ ॥ रौतीति सतः, रोरूयमाणो द्रवतीति वा, रोदयतेर्वा । नि० १०. ५ ॥

यदरोदीत्तस्माद्रुद्रः । श० ६. १. ३. १० ॥ अग्निर्वै रुद्रः । श० ५. ३. १. १० ॥ ६. १. ३. १० ॥ ( त्वमग्ने रुद्रः...ऋ० २. १. ६ ) रुद्रोऽग्निः । तां० १२. ४. २४ ॥ यो वै रुद्रः सोऽग्निः । श० ५. २. ४. १३ ॥ एष रुद्रः यदग्निः । तै० १. १.५. ८–९ ॥ १. १. ६. ६ ॥ १. १. ८. ४ ॥ १. ४. ३. ६ ॥ तान्येतान्यष्टौ ( रुद्रः, सर्वः = शर्वः पशुपतिः, उग्रः, अशनिः, भवः, महादेवः, ईशानः ) अग्निरूपाणि कुमारो नवमः ( रुद्रः = शिवः = अष्टमूर्त्तिः – अमरकोषे १. १. ३६ ॥ कुमारः = स्कन्दः = रुद्रपुत्रोऽग्निपुत्रश्च— अमरकोषे १. १. ४२–४३ ॥ महाभारते, वनपर्वणि २२५. १५—१९ ) । श० ६. १. ३. १८ ॥ अग्निर्वै स देवस्तस्यैतानि नामानि, शर्व इति यथा प्राच्या आचक्षते भव इति यथा वाहीकाः पशूनां पती

रुद्रोऽग्निरिति । श० १. ७.३. ८॥ अथोऽआरण्येष्वेव पशुषु रुद्रस्य हेतिं दधाति ( हेतिः = रुद्रस्य आयुधम् ॥ रुद्रः = अग्निः ॥ अमरकोषे १. १. ६० — हेतिः = अग्नेरर्चिः ॥ Monier-William's Sanscrit-English Dictionary — हेतिः = agni's weapon, flame etc., etc. ) । श० १२. ७. ३. २० ॥ अथ यत्रैतत्प्रथमꣳ समिद्धो भवति । धूप्यतऽइव तर्हि हैष ( अग्निः ) भवति रुद्रः । श० २. ३. २. ९ ॥ रुद्र पशूनां पते । तै० ३. ११. ४. २ ॥ रुद्रः ( एवैनं राजानं ) पशूनां ( सुवते ) । तै० १. ७. ४. १ ॥ रुद्रꣳ हि नाति पशवः । श० ३. २. ४. २० ॥ रौद्रा वै पशवः । श० ६. ३. २. ७ ॥ रौद्री वै गौः । तै० २. २. ५. २ ॥ यद् गौस्तेन रौद्री । श० ५. २. ४.१३ ॥ यद्रुद्रश्चन्द्रमास्तेन । कौ० ६. ७ ॥ यज्ञेन वै देवाः दिवमुपोदक्रामन्नथ योऽयं देवः ( रुद्रः ) पशूनामीष्टे स इहाहीयत तस्माद्वास्तव्य इत्याहुर्वास्तौ हि तदहीयत । श० १. ७. ३. १ ॥ वास्तव्यो वाऽएष देवः ( रुद्रः ) । श० ५. २. ४. १३ ॥ ५. ३. ३. ७ ॥ य उ एव मृगव्याधः ( = Dog-star ) स ( रुद्रः ) उ एव स ( मृगव्याध एकादशरुद्रेष्वन्यतमः — नीलकण्ठीयटीकायुते महाभारते, आदिपर्वणि, अध्याये ६६, श्लो० २ — ३ ) । ऐ० ३. ३३ ॥ रुद्रो वै स्विष्टकृत् । कौ० ३. ६ ॥ रुद्रः स्विष्टकृत् । श० १३. ३. ४.३॥ कौ० ३.४॥ रुद्रियः ( = रुद्रदेवत्यः ) स्विष्टकृत् ( यागः ) । श० १. ७. ३. २१ ॥ रुद्रो वै ज्येष्ठश्च श्रेष्ठश्च देवानाम् । कौ० २५. १३ ॥ घोरो वै रुद्रः । कौ० १६. ७ ॥ रुद्रो ह वा एष देवानामशान्तः सञ्चितो भवति तमेवैतच्छमयति । कौ० १९. ४ ॥ ( रुद्रस्य ) यो एत्रेषुस्त्रिकाण्डा सो एत्रेषुस्त्रिकाण्डा ( त्रिशूली = शिवः = रुद्रः — इति वाचस्पत्यकोषे ) । ऐ० ३. ३३ ॥ शूलपाणये ( रुद्राय ) स्वाहा । ष० ५. ११ ॥ अम्बिका ह वै नामास्य ( रुद्रस्य ) स्वसा । श० २. ६. २. ९ ॥ शरद्वा अस्य ( रुद्रस्य ) अम्बिका स्वसा । तै० १. ६. १०. ४ ॥ आखुस्ते ( रुद्रस्य ) पशुः ( आखुयानः = गणेशः = रुद्रपुत्रः वैजयन्तीकोषे, स्वर्गकाण्डे आदिदेवाध्याये, श्लो० ५४ ॥ ) । श० २. ६. २. १० ॥ तै० १. ६. १०. २॥ ( शतरुद्रियहोमे ) अर्कपत्रेण जुहोति । श० ९. १. १. ४, ९ ॥ एतस्य वै देवस्य ( रुद्रस्य ) आशायादर्कः समभवत्स्वेनैवैनम् ( रुद्रम् ) एतद्भागेन स्वेन रसेन प्रीणाति ( यजमानः ) । श० ९. १. १. ९ ॥ ( शतरुद्रियहोमे ) गवेधुकासक्तुभिर्जुहोति । यत्र वै सा देवता ( = रुद्रः ) विस्रस्ताशयत्ततो गवेधुकाः समभवन्स्वेनैवैनम् ( रुद्रम् ) एतद्भागेन स्वेन रसेन प्रीणाति ( यजमानः ) । श० ९. १. १. ८ ॥ रौद्रो गावेधुकश्चरुः । श० ५. २.४.११,१३॥ स ( रुद्रः ) एतꣳ रुद्रायऽऽर्द्रायै प्रैयङ्गवं चरुं पयसि निरवपत् । ततो वै स पशुमानभवत् । तै० ३. १. ४. ४ ॥ प्रजापतिर्वै रुद्रं यज्ञान्निरभजत [ देवा वै यज्ञाद्रुद्रमन्तरायन् — इति तैत्तिरीयसंहितायाम् २. ६. ८. ३ ॥ "दक्षः ( प्रजापतिः ) उवाच — सर्व्वेष्वेव हि यज्ञेषु न भागः परिकल्पितः । न मन्त्रा भार्यया सार्द्धं शंकरस्येति नेज्यते" इति कूर्मपुराणे पूर्वभागे, अध्याये १५, श्लो० ८ ॥ ] । गो० उ० १. २ ॥ उच्छेषणभागो वै रुद्रः । तै० १. ७. ८. ५ ॥ (रुद्रः) तं ( प्रजापतिम् ) अभ्यायत्याविध्यत । ऐ० ३. ३३ ॥ तꣳ ( प्रजापतिम् ) रुद्रोऽभ्यायत्य विव्याध । श० १. ७. ४. ३ ॥ स ( रुद्रः ) यज्ञमभ्यायत्याविध्यत् । ( स यज्ञमविध्यत = इति तैत्तिरीयसंहितायाम् २. ६. ८. ३ ॥ ) गो० उ० १. २ ॥ तद्यद्रुदितात्समभवंस्तस्माद्रुद्राः सो ऽयꣳशतशीर्षा रुद्रः सहस्राक्षः शतेषुधिरधिज्यधन्वा प्रतिहितायी भीषयमाणोऽतिष्ठदन्नमिच्छमानस्तस्माद्देवा अबिभयुः । श० ९ १.१. ६ ॥ एषा (उदीची) वै रुद्रस्य दिक् । तै० १. ७. ८. ६ ॥ एषा (उदीची) ह्येतस्य देवस्य ( रुद्रस्य ) दिक् । श० २. ६. २. ७ ॥ उत्तरार्धे जुहोत्येषा ह्येतस्य देवस्य ( रुद्रस्य ) दिक् । श० १. ७. ३. २० ॥ यदुदञ्चः प्रेत्य त्र्यम्बकैश्चरन्ति रुद्रमेव तत्स्वायां दिशि प्रीणन्ति । कौ० ५. ७ ॥ रुद्रस्य बाहू (= आर्द्रानक्षत्रम् इति सायणः ) । तै० १. ५. १. १॥ रौद्रो वै प्रतिहर्त्ता । गो० उ० ३. १९ ॥ एतद्ध वाऽअस्य ( रुद्रस्य )

जान्धितं प्रज्ञातमवसानं यच्चतुष्पथम् । श० २. ६. २.७॥ प्राणा वै रुद्राः । प्राणा हीदं सर्वं रोदयन्ति । जै०उ०४.२.६॥ कतमे रुद्रा इति । दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदस्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति । श०११. ६. ३. ७ ॥ ( मृगव्याधश्च सर्पश्च निर्ऋतिश्च महायशाः अजैकपादहिर्बुध्न्यः पिनाकी च परंतपः ॥ दहनोऽथेश्वरश्चैव कपाली च महाद्युतिः । स्थाणुर्भगश्च भगवान् रुद्रा एकादश स्मृताः-इति नीलकण्ठीयटीकायुते महाभारत आदिपर्वणि, ६६. २-३ ॥ ) रुद्रा एकादशकपालेन माध्यन्दिने सवने ( अभिषज्यन् ) । तै० १. ५. ११. ३ ॥ रुद्राणां माध्यन्दिनं सवनम् । कौ० १६. १ ॥ श० ४. ३. ५. १ ॥ अथेमं विष्णुं यज्ञं त्रेधा व्यभजन्त । वसवः प्रातःसवनꣳरुद्रा माध्यन्दिनꣳ सवनमादित्यास्तृतीयसवनम् । श० १४. १. १. १५॥ त्रिष्टुब्रुद्राणां पत्नी । गो० उ० २. ९ ॥ रुद्रास्त्रिष्टुभं समभरन् । जै० उ० १. १८. ५ ॥ रुद्रास्त्वा त्रैष्टुभेन छन्दसा संमृजन्तु । तां० १. २.७ ॥ रुद्रास्त्वा दक्षिणतोऽभिषिञ्चन्तु त्रैष्टुभेन छन्दसा । तै० २. ७. १५. ५ ॥ अथैनं ( इन्द्रं ) दक्षिणस्यां दिशि रुद्रा देवाः........अभ्यषिञ्चन्...भौज्याय । ऐ० ८. १४ ॥ ग्रीष्मेण देवा ऋतुना रुद्राः पञ्चदशे स्तुतम् । बृहता यशसा बलम् । हविरिन्द्रे वयो दधुः । तै० २. ६. १९. १ ॥ रुद्रा एव महः । गो० पू० ५. १५ । वसवो वै रुद्रा आदित्याः सꣳस्रावभागाः । तै० ३.३.९. ७ ॥ सोमो रुद्रैः (व्यद्रवत्) । श० ३. ४. २. १ ॥ रुद्राणां वा, एतद्रूपम् । यत्पृथुकाः । तै० ३. ८. १४. ३ ॥

**रुद्रवते** प्रशस्ताः कृतचतुश्चत्वारिंशद्वर्षब्रह्मचर्या विद्वांसो वीराः शत्रुरोदयितारो रुद्रा भवन्ति यत्र तस्मै ६ । ३२ । बहवो रुद्राः प्राणा विद्यन्ते यस्मिँस्तस्मै ३८ । ८ ॥

**रुद्रवर्तनी** [रुद्रवर्तनी] रुद्रस्य प्राणस्य वर्तनिरिव वर्तनिर्मार्गो ययोस्तौ १६ । ८२ ॥

**रुद्रहूतये** रुद्राः प्राणा जीवा वा हूयन्ते स्तूयन्ते येन तस्मै ३८ । १६ ॥

**रुद्रियाः** [ रुद्रियाः ] शत्रून् दुष्टान् रोदयतां सम्बन्धिनो रुद्राः १ । ७२ । ४ । रुद्रेऽग्नौ भवाः ३ । २६। ५ ॥ रुद्रस्य मध्यमस्य विदुषः सम्बन्धिनः २ । ३४ । १० ॥ [रुद्रियासः] रुद्राणां जीवानामिमे जीवननिमित्ता रुद्रिया वायवः तस्येदमिति शैषिको घः, आज्जसेरसुगित्यसुगागमः १ । ३८। ७। रुद्रेषु दुष्टरोदयितृषु कुशलाः ५ । ५८ । ७ । रुद्रेषु साधनकर्तृषु भवाः ५ । ५७ । ७ । प्राणा जीवाश्च ६ । ६२ । ८ । रुद्र इवाचरन्तः ७ । ५६ । २२ ॥ [रुद्रियम्] रुद्रस्येदं कर्म्म ( अत्र पृषोदराद्याकृतिगणान्तर्गतत्वादिदमर्थे घः ) १ । ४३ । २ । प्राणसम्बन्धि ७ । ४० । ५ ॥ [ रुद्रियाय ] रुद्रैर्लब्धाय २ । ३४ । १० ॥ [ रुद्रियेषु ] रुद्राणां प्राणानां प्रतिपादकेषु २ । ११ । ३ ॥

**रुधतः** रेतो निरोद्धुः १ । १७९ । ४ ॥

रुधतः संरुद्धप्रजनस्य । नि० ५. २ ॥

**रुधिक्राम्** यो रुधीनावरकान् क्रामति तम् २ । १४ । ५ ॥

**रुपः** आरोपणकर्त्तुः ( अत्र कर्तरि क्विप् ) ४ । ५ । ७ । पृथिव्याः ४ । ५ । ८ ॥

**रुरुः** मृगविशेषः २४ । ३९ ॥

**रुरुक्कान्** रुचिमान् १ । १४९ ।३ ॥

**रुरुचन्त** सुशोभन्ते ४ । ५५ । २ ॥

रुरुचानम् शुम्भमानम् ३ । २ । ३ ॥

रुरुचुः रोचन्ते ४ । १६ । ४ ॥

रुरुचे [ रुरुचे ] प्रदीप्यते ६ । १५ । ५ । रोचते १७ । १० ॥

रुरुच्याः रुचितान् कुर्याः ६ । ३५ । ४ ॥

रुरुशीर्ष्णी रुरोः शिर इव शिरो यस्याः सा ६ । ७५ । १५ ॥

रुरुहुः वर्धन्ते ५ । ७ । ५ । प्रादुर्भवन्ति ६ । ७ । ६ । प्रादुर्भवेयुः ६ । २४ । ३ ॥

रुरोच रोचते ४ । ५ । १५ ॥

रुरोज [ रुरोज ] रुजेत् ४ । ५० । ५ । रुजति भनक्ति ६ । ३२ । ३ ॥

रुरोजिथ भनक्ति ६ । १६ । ३९ ॥

रुरोधिथ रुद्धवानसि १ । १०२ । १० ।

रुव शब्दविद्यां प्रकाशय १ । १० । ४ ॥

रुवण्युम् सुशब्दायमानम् १ । १२२ । ५ ॥

रुवत् शब्दायते १ । १७३ । ३ ॥

रुवत् प्रशस्तशब्दवत् ४ । ५६ । १ । [रुवन्तम्] शब्दयन्तम् ५ । ४२ । १४ ॥

रुशत् सुन्दरं रूपं धरन् १ । ६२ । ६ । ज्वलितवर्णम १ । ११५ । ५ । हिंसन् ३ । २६ । ३ । शुक्लं शुद्धस्वरूपम् ३३ । ३८ । [ रुशन्तः ] चोरदस्यवन्धकारादीन् हिंसन्तः १ । ४८ । १३ । हिंसन्तः ६ । ६४ । १ । [ रुशद्भिः ] हिंसकैर्गुणैः ४ । ५१ । ६ । [ रुशतः ] प्रकाशितस्य १ । १८१ । ८ । सुरूपस्य रुचिकरस्य ४ । ७ । ६ ॥

रुशत् वर्णनाम रोचतेर्ज्वलतिकर्मणः । नि० २. २० । ६. १३ ॥

रुशती रक्तवर्णयुक्ता १ । ११३ । २ । [ रुशतीम् ] प्रकाशिकां विद्याम् १ । ११७ । ८ ॥

रुशत्पशुः पालितः पशुर्येन सः ( रुशदिति वर्णनाम । नि० ६ । १३ ) । ५ । ७५ । ६ ॥

रुशदूर्मे रुशन्त्य ऊर्मयो ज्वाला यस्य तत्सम्बुद्धौ १ । ५८ । ४ ॥

रुशद्गवि प्रकाशमानरश्मियुक्ते ५ । ६४ । ७ ॥

रुशद्वत्सा रुशज्ज्वलितः सूर्यो वत्सो यस्याः सा १ । ११३ । २ ॥

रुशमाः ये रुशान् हिंसकान् मिन्वन्ति ५ । ३० । १२ । [ रुशमासः ] हिंसकहिंसकाः ५ । ३० । १३ । [ रुशमानाम् ] हिंसकमन्त्रीणाम् ५ । ३० । १४ । [ रुशमे ] हिंसके ३३ । ८२ ॥

रुहः नाड्यङ्कुराः १२ । ७६ ॥

रुहत् [ रुहत् ] रोहति ५ । ३६ । २ । रोहेत् ( अत्र कृमृदृरुहिभ्यश्छन्दसि इति च्लेरङ्, बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावो जडर्थे लुङ् च ) १ । ३४ । ५ ॥

रुहाणाः प्रादुर्भवन्तः ११ । २२ रोहतः १८ । ५१ ॥

रुहाणाः प्रादुर्भवन्त्यश्चलन्त्यो नद्यः १ । ३२ । ८ ॥

रुहेम वर्धेमहि ५ । ४३ । अधितिष्ठेम २१ । ६ ॥

रुहेयम् आरूढ़ होऊं ६ । १० ॥

रूपम् आकृतिम् २१ । ५५ । रूपवद्वस्तु १ । ७१ । १० । चक्षुर्ग्राह्यं गुणम् १ । ११५ । ५ । उत्तमस्वरूपम् १६ । १५ । सच्चिदानन्दरूपम् १८ । ६० । सुक्रिया रूपं वा १६ । १६ । [ रूपम् ] विषयासक्ति कुपथ्य रोग और अधर्माचरणको छोड़ कर अपने स्वरूप को अच्छा रखो और वस्त्राभूषण भी धारण किया करो । अथर्व० १२। ५।६। (१७६ विधिः) [रूपाणि] शिल्पसिद्धानि चित्ररूपाणि यानादीनि वस्तूनि १ । १०८ । ५ । सर्वाणि विविधस्वरूपाणि स्थूलानि वस्तूनि १ । १८८ । ६ । सूर्यादीनि ५।८१ । २ । अन्तस्थानि ज्ञानमध्ये यादृशानि ज्ञानानि सन्ति तानि २ । ३० । इच्छारूपाणि गुणविशिष्टानि १० । २० । [ रूपैः ] शुक्लादिभिः १ । १६० । २। विचित्राभिराहुतिभिः २६ । ३४ । [ रूपाय ] सुरूपनिर्मापकाय ३० । ७ । [ रूपे ] निरूपिते १६ । ७७ ॥

रूपम् रोचतेः । नि० २. ३।३. १३ प्रज्ञानानि । नि० १०. १३ ॥
अन्नं वै रूपम् । श० ९. २. १. १२ ॥ कुमारीं रूपं ( गच्छति ) । गो० पू० २. २ ॥ योषित्येव रूपं दधाति । श० १३. १. ९. ६ ॥ तै०३. ८. १३. २ ॥

रूपंरूपम् प्रतिरूपम् ३ । ५३ । ८ ॥

रूपशः रूपैः सह १ । १६४ । १५ ॥

रेकु शङ्कितम् ४ । ५ । १२ ॥

रेक्णः धनम् (रिचेर्धनेघिच्च उ० ४ । १९६ । अनेन रिच् धातोर्धनेर्थेऽसुन्प्रत्ययः स च घिन्नुडागमश्च ) १ । ३१ । १४ ॥

रेक्णः धननाम । निघ० २. १० ॥ रिच्यते प्रयतः । नि० ३. २ ॥

रेचि विरिच्यते ४ । १६ । ५ ॥

रेजत् रेजते कम्पते ४ । १७ । २ ॥

रेजत रेजते ४ । १७ । २ । कम्पयति ४ । २२ । ४ । कम्पते ५ । ६० । ३ ॥

रेजति गतिकर्मा । निघ० २. १४ ॥

रेजति [ रेजति ] उपार्जति १ । १२९ । ६ । कम्पते १ । १६८ । ५ ॥

रेजते कम्पते चलति १ । ३७ । ८ ॥

रेजते द्विश उत्तरनाम । निघ० ३. २९ ॥ भ्यसते रेजत इति भयवेपनयोः । नि० ३.२१ ॥

रेजथ कम्पध्वम् ५ । ५६ । ४ ॥

रेजन्ते [ रेजन्ते ] कम्पन्ते गच्छन्ति वा ६ । ५० । ५ ॥

रेजमानः कम्पमानः १ । १७१ । ४ । [ रेजमानाः ] गच्छन्तः ७ । ६० । १० ॥

रेजमाने चलन्त्यौ, भ्रमन्त्यौ ३२ । ७ ॥

रेजयत् कम्पयते ४ । २२ । ३ ॥

रेजयन्ति कम्पयन्ति ७ । ५७ । १ ॥

रेट् शत्रुहिंसकः (अत्र रिषतेर्हिंसार्थात् कर्त्तरि विच् ) ६ । १८ ॥

रेणुः धूलिः १ । ३३ । १४। [ रेणुम् ] विद्यादिशुभप्राप्तम् १ । ५६ । ४ । अपराधम् ४ । १७ । १३ ॥

रेणुककाटः रेणुकाकूप इवान्धकारहृदयः

६ । २८ । ४ । [ रेणुककाटम् ] रेणुकैर्युक्तं कूपम् २८ । १३ ॥

**रेतः** विद्याशिक्षाजं शरीरात्मवीर्यम् १ । ६८। ४ । वीर्यमुदकं वा ( रेत इत्युदकनाम निघ० १ । १२ ) १ । ७१ । ८ । उदकमिव विज्ञानम् ७ । ३३ । १३ । पराक्रमम् २३ । २० ॥

रतः उदकनाम । निघ० १. १२ ॥

रेतः पुरुषस्य प्रथमं सम्भवतः सम्भवति । ऐ० ३. २ ॥ रेतो हृदये ( श्रितम् ) । ३.१०.८.७ ॥ अर्वाग्वै नाभे रेतः । श० ६.७.१.९ ॥ नाभिदघ्ना ( आसन्दी ) भवति । अत्र ( नाभिप्रदेशे ) वाऽ अन्नं प्रतितिष्ठति......अत्रोऽएव रेतस आशयः । श० ३. ३. ४. २८ ॥ रेतो वै नाभानेदिष्ठः । ऐ० ६. २७ ॥ गो० उ० ६. ८ ॥ रेतो वै वृष्ण्यम् ( यजु० १२. ११२ ) । श० ७. ३. १. ४६ ॥ सोमो वै वृष्णो अश्वस्य रेतः । तै० ३. ९. ५. ५ ॥ रेतः सोमः । श० ३. ३. २. १ ॥ ३. ३. ४. २८ ॥ ३. ४. ३. ११ ॥ तै० २. ७. ४. १ ॥ कौ० १३. ७ ॥ रेतो वै सोमः । श० १. ९. २. ९ ॥ २. ५. १. ९ ॥ ३. ८. ५. २ ॥ सोमो रेतोऽदधात् । तै० १. ६. २. २ ॥ १. ७. २. ३, ४ ॥ १. ८. १. २ ॥ आपो रेतः प्रजननम् । तै० ३. ३. १०. ३ ॥ आपो मे रेतसि श्रिताः । तै० ३. १०. ८. ६ ॥ आपो हि रेतः । तां० ८ ७. ९ ॥ रेतो वा आपः । ऐ० १. ३ ॥ यत्पयस्तद्रेतः । गो० उ० २. ६ ॥ पयो हि रेतः । श० ९. ५.१.५६॥ रेतः पयः । १२.४.१.७ ॥ रेतो वै घृतम् ( यजु० १७. ७९ ) । श० ९. २. ३. ४४ ॥ रेत आज्यम् । श० १. ३. १. १८ ॥ एतद्रेतः । यदाज्यम् तै० १. १. ९. ४ ॥ रेतो वाऽओदनः । श० १३. १. १. ४ ॥ तै० ३. ८. २. ४ ॥ रेतो वा अन्नम् । गो० पू० ३. २३ ॥ प्राणो रेतः । ऐ० २. ३८ ॥ रेतो वै तनूनपात् । श० १. ५. ४. २ ॥ रेतो हिरण्यम् । तै० ३. ८. २. ४ ॥ वागु हि रेतः । श० १. ५. २. ७ ॥ वाग्रेतः । श० १. ७. २. २१ ॥ शुक्रं वै रेतः । ऐ० २. १४ ॥ योषा पयस्या रेतो वाजिनम् । श० २. ४. ४. २१ ॥ २. ५. १. १६ ॥ रेतो वाजिनम् । तै० १. ६. ३. १० ॥ रेतःसिक्तिर्वै पात्नीवतग्रहः । कौ० १६. ६ ॥ रेतो वै पात्नीवतः ( ग्रहः ) । ऐ० ६. ३ ॥ गो० उ० ४. ५ ॥ रेतो वा अच्छिद्रम् । ऐ० २. ३८ ॥ सौर्य्यं रेतः । तै० ३. ९. १७. ५ ॥ द्रप्सीव हि रेतः । श० ११. ४. १. १५ ॥ त्रिवृद्धि रेतः । तां० ८. ७. १४ ॥ पञ्चविꣳशꣳ हि रेतः । श० ७. ३. १. ४३ ॥ रेतो वाऽअत्र यज्ञः । श० ७. ३. २. ९ ॥ संवत्सरे संवत्सरे वै रेतःसिक्तिर्जायते । कौ० १९. ९ ॥ यस्मात्कुमारस्य रेतः सिक्तं न सम्भवति यस्मादस्य मध्यमे वयसि सम्भवति यस्मादस्य पुनरुत्तमे वयसि न सम्भवति । श० ११.४.१.७॥ कामार्तो वै रेतः सिञ्चति । गो० उ० ६. २५ ॥ आण्डौ वै रेतःसिचौ, यस्य ह्याण्डौ भवतः स एव रेतः सिञ्चति । श० ७. ४. २. २४ ॥ पृष्ट्यो वै रेतःसिचौ । श० ७. ५. १. १३ ॥ ८. ६. २. ७ ॥ दक्षिणतो हि रेतः सिच्यते । तां० ८. ७. १० ॥ १२. १०. १२ ॥ दक्षिणतो वाऽ उदग्योनौ रेतः सिच्यते । श० ६. ४. २. १० ॥ आनुष्टुभाद्धि रेतो धीयते । तां० १२. १०. ११ ॥ हिंकृताद्धि रेतो धीयते । तां० ८. ७. १३ ॥ उपांꣳशु वै रेतः सिच्यते । श० ९. ३. १. २ ॥ उपांश्विव वै रेतसः सिक्तिः । ऐ० २. ३८ ॥ यदा वै स्त्रियै च पुꣳसश्च संतप्यतेऽथ रेतः सिच्यते । श० ३. ५. ३. १६ ॥ अन्ततो हि रेतो धीयते । श० ९. ५. १. ५६ ॥ यद्वै रेतसो योनिमतिरिच्यतेऽमुया तन्नवत्यथ यन्न्यूनं न्यूद्धं तदेतद्वै रेतसः समृद्धं यत्समं बिलम् । श० ६. ३. ३. २६ ॥ वायुर्वै रेतसां विकर्ता । श० १३. ३. ८. १ ॥ प्राणो हि रेतसां विकर्ता । श० १३. ३. ८. १ ॥ प्राणोदानाऽउ वै रेतः सिक्तं विकुरुतः । श० ९. ५. १. ५६ ॥ रेतो वै प्रजातिः । श० १४.९.२.६ ॥ उभयतः परिगृहीतं वै रेतः प्रजायते । श० २. ३. १. ३२ ॥

**रेतोधाः** यो रेत उदकमिव वीर्यं दधाति सः ३ । ५६ । ३ । यो रेतः श्लेषमालिङ्गनं

दधाति सः २३ । २० । [रेतोधाम्] वीर्यधारकमिति पराक्रमवन्तं पुत्रम् ८।१०॥

रेपः अपराधम् ४। ६। ६॥

रेभः बहुश्रुतः ( अत्र रीङ्धातोरौणादिको भः-प्रत्ययः ) १। ११३। १७। उपदेशः १। १२७। १०। पूजनीयो विद्वान् विदुषां सत्कर्त्ता वा ६। ३। ६। स्तोता ६। ११। ३॥

रेभः स्तोतृनाम। निघ० ३. १६॥

रेभति अर्चति १। १०५। ६॥

रेभति अर्चतिकर्मा। नि० ३. १४॥

रेभन् स्तुवन्ति ७। १८। २२॥

रेभिरे कहती हैं १। १४०। ८॥

रेरिहत् अतिशयेन त्यजेत् १। १४०। ६। निरन्तर उड़ाता है ४। ३८। ६। भृशं फलानि ददाति १२। ६। ताडयति १२। २१। भृशं युध्यस्व १२। ३३॥

रेरिहाणा भृशं लिहन्ती ३। ५५। १४। आस्वादयन्त्यौ ६। २७। ७॥

रेवत् प्रशस्तधनयुक्तम् १। ७६। ५। प्रशस्तानि रायो धनानि विद्यन्ते यस्मिन्सुखे तत् १। ६२। १४। परमोत्तमधनवते ( अत्र सुपां सुलुगिति चतुर्थ्या एकवचनस्य लुक् ) १। ६५। ११। राज्यादिप्रशस्ताय श्रीमते १। ६६। ६। बहुधनयुक्तम् १। ११६। १८। प्रशस्तपदार्थयुक्तं द्रव्यम् १। १२४। ६। नित्यं सम्बद्धं धनम्; प्रशस्तधनवत् १। १२४। १०। [रेवतः] पदार्थप्राप्तिमतो जीवस्य ( छन्दसीर इति वत्वम् ) १। ४१२॥

रेवती प्रशस्तधनकारिणी ३। ६१। ६॥

[रेवतीः] रयिश्शोभा धनं प्रशस्तं विद्यते यासु ताः प्रजाः ( अत्र प्रशंसार्थे मतुप्। रयेर्मतौ बहुलम् अ० ६। १। ३७। अनेन सम्प्रसारणं छन्दसीर इति मस्य वत्वं सुपां सुलुगिति पूर्वसवर्णादेशश्च ) १। ३०। १३। प्रशस्तश्रीयुक्ताः १। १५८। २। विद्याधनसहिताः प्रशस्ता नीतयो गाव इन्द्रियाणि पशवः पृथिवीराज्यादियुक्ता यासु ताः ३। २१। रेवत्य आपः। १। २१। धनवतीः शत्रुसेनोल्लंघिकाः प्रजाः २१। २८॥

रेवती ( नक्षत्रम् ) रेवत्यामरवन्त। तै० १. ५. २. ९॥ पूष्णो रेवती। गावः परस्ताद्वत्सा अवस्तात्। तै० १. ५. १. ५॥ पूषा रेवत्यन्वेति पन्थाम्। तै० ३. १. २. ९॥ ( रैवतं साम ) स ( प्रजापतिः ) रेवतीरसृजत तद्गवां घोषोऽन्वसृज्यत [ रेवतीर्नः सधमादे ( ऋ० १. ३०. १३ ) इत्यस्यां गीयमानं रैवतं साम—इति ऐ० ४. १३. भाष्ये सायणः ]। तां० ७. ८. १३॥ ज्योती रेवती साम्नाम्। तां० १३. ७. २॥ यद् बृहत्तद्रैवतम्। ऐ० ४. १३॥ गायत्री वै रेवती। तां० १६. ५. १९॥ या हि का च गायत्री सा रेवती। तां० १६. ५. २७॥ रेवत्यो मातरः। तां० १३. ९. १७॥ रेवतीनाꣳरसो यद्वारवन्तीयम्। तां० १३. १०. ५॥ ( यजु० १. २१ ) रेवत्य आपः। श० १. २. २. २॥ आपो वै रेवतीः। तै० ३.२ ८.२॥ आपो वै रेवत्यः। तां० ७. ९. २०॥ १३. ९. १६॥ अपां वा एष रसो यद्रैवत्यः। तां० १३. १०. ५॥ ( यजु० ६. ८ ) रेवन्तो हि पशवस्तस्मादाह रेवती रमध्वमिति। श० ३. ७. ३. १३॥ पशवो वै रेवत्यः। तां० १३. ७. ३॥ १३. ९. २५॥ पशवो वै रेवत्यः। तां० १३. १०. ११॥ वाग्वै रेवती। श० ३. ८. १. १२॥ रेवत्यः सर्वा देवताः। ऐ० २. १६॥

रेवान् विद्याधनन्तधनवान् ( अत्र भूम्न्यर्थे मतुप्। रयेर्मतौ बहुलं सम्प्रसारणम्। अ० ६। १। ३७। इति वार्त्तिकेन सम्प्रसारणम्। छन्दसीरः अ० ८। २। १५। इति

मकारस्य वकारः ) १ । १८ । २ । प्रशस्ता रायो विद्यन्ते यस्य सः २ । २७ । १२ । बहुधनवान् ७ । १ । २३ ॥

रेषणाः हिंसकाः १ । १४८ । ५ ॥

रेषत् हिनस्ति ७ । २० । ६ ॥

रेषयन्ति हिंसयन्ति १ । १४८ । ५ ॥

रेष्मार्णम् हिंसकम् २५ । २ ॥

रेष्म्याय रेष्मेषु हिंसकेषु भवाय १६ । ३६ ॥

रैवतासः रेवतीषु पशुषु भवाः ५ । ६० । ४ ।

[ रैवताय ] धनसम्बन्धिने २६ । ६० ॥

रैवतः मेघनाम । निघ० १. १० ॥

रोक् रोगं कुर्याः १६ । ४७ ॥

रोकः शब्दायमानः ६ । ६६ । ६ । [ रोकाः ] रुचिकराः प्रकाशाः ३ । ६ । ७ ॥

रोचत [ रोचत ] प्रकाशते ४ । १ । १७ । रोचन्ते ४ । १० । ६ ॥

रोचते [ रोचते ] रुचिकारी वर्तते १ । ४३ । ५ । प्रकाशते १ । १४० । ११ । दीप्यते १ । १८८ । ११ ॥

रोचते ज्वलतिकर्मणः । नि० २. २० ॥

रोचनम् देदीप्यमानं, रुचिकरम् १ । ४६ । ४ । अभिप्रीतं रुचिकरम् १ । ५० । ४ । रोचन्ते यस्मिँस्तत् ३ ।४४ ।४। [राचना] आनन्दे प्रकाशिता रुचिमया भूत्वा ( १६६ भूमि० ) । सूर्यादिदीप्तिः १ । ८१ । ५ । रोचनानि विद्याशब्दसूर्यादीनि न्यायबल-राज्यपालनादीनि च १ । १०२ । ८ । प्रकाशनानि १ । १४६ । १ । प्रदीपकानि ज्ञानानि २ । २७ । ६ । रोचनानि रुचि-कराणि कर्माणि ३ । १२ । ६ । विद्युद्भौ-तिकसूर्यरूपाणि ज्योतींषि ४ । ५३ । ५ । [ रोचनात् ] सूर्यप्रकाशाद्रुचिकरा-न्मेघमण्डलाद्वा १ । ६ । ६ ॥

रोचनः ( यजु० १२. ४९ ) रोचनो ह नामैष लोको यत्रैष ( सूर्यः ) एतत्तपति । श० ७. १. १. २४ ॥ ( यजु० २३. ५ ) नक्षत्राणि वै रोचना दिवि । तै० ३. ९. ४. २ ॥

रोचनस्थाः रोचने दीपने तिष्ठतीति ६६।२॥

रोचना दीप्तिः ३७ । सूर्यदीप्तिः १ । ८१ । ५ । रुचिकरी ३ । ६१ । ५ । प्रकाशिताः प्रकाशिकाश्च १ । ६ । १ ॥

रोचन्ते प्रकाशन्ते रुचिहेतवश्च भवन्ति १ । ६ । १ । परमानन्दयोगेन प्रकाशन्ते (१६६ भूमि० ) ॥

रोचमानः रुचिं कुर्वन् ३ । ४६ । ३ । प्रका-शमानः ७ । ३ । ९ ॥

रोचमाना विद्याविनयाभ्यां प्रकाशमाना ६ । ६४ । २ । [ रोचमानाम् ] रुचिकारिकाम् १ । ११५ । २ ॥

रोचयत् रोचयेत् ( अत्राडभावः ) ३ । २ । २ । प्रकाशयति ६ । ३६ । ४ ॥

रोचसे [ रोचसे ] प्रकाशसे २ । ७ । ४ ॥

रोचसे सन्दृश्यस इति । नि० ३. ११ ॥

रोचस्व प्राप्तो भव ३८ । १७ ॥

रोचि प्रकाश्येत १ । १२१ । ६ ॥

रोचिषा प्रकाशेन १७ । ८ । अतिरुचियुक्तया ५ । २६ । १ ॥

रोचिष्णू विषयासक्तिविरहत्वेन देदीप्यमानौ १२ । २७ ॥

रोदसी [ रोदसी, रोदसी ] द्यावापृथिव्यौ १ । १६७ । ५ । भूमिसूर्यौ ५ । ५६ । ८ । अग्निभूमी १२ । ३३ । भूमिराज्यं विद्याप्रकाशम्वा १ । ७२ । ४ । रोदननिमित्ते २ । १ । १५ । द्यावापृथिव्याविव विद्याविनयौ ३ । ३४ । १ । द्यावापृथिव्याविव राजप्रजाव्यवहारौ ३ । ३८ । ८ । न्यायभूमिराज्ये ३ । ५४ । १५ । प्रकाशाप्रकाशे जगती ३ । ५७ । ४ । अहोरात्राविव १ । १८५ । ३ । विद्युद्भूमी ६ । ५० । ३ ॥

रोदसी द्यावापृथिव्योर्नाम । निघ० ३. ३० ॥ रोदसी रुद्रस्य पत्नी । नि० ११. ४९ ॥ यदरोदीत ( प्रजापतिः ) तदनयोः ( द्यावापृथिव्योः ) रोदस्त्वम् । तै० २. २. ९. ४ ॥ ( यजु० ११. ४३ । १२. १०७ ) इमे वै द्यावापृथिवी रोदसी । श० ६. ४. ४. २ ॥ ६. ७. ३. २ ॥ ७. ३. १. ३० ॥ इमे ( द्यावापृथिव्यौ ) ह वाव रोदसी । जै० उ० १. ३२. ४ ॥ द्यावापृथिवी वै रोदसी ऐ० २. ४१ ॥

रोधः रोधनम् ४ । ५ । १ । [ रोधांसि ] आवरणानि २ । १५ । ८ ॥

रोधचक्राः रोधाश्चक्राणि च यासु ता नद्यः १ । १६० । ७ ॥

रोधचक्राः नदीनाम । निघ० १. १३ ॥

रोधत् निरुणद्धि स्वीकरोति १ । ६७ । ५ ॥

रोधना रक्षणार्थानि १ । १२१ । ७ ॥

रोधनाः रोधनानि २ । १३ । १० ॥

रोधस्वतीः रोधो बहुविधमावरणं विद्यते यासां नदीनां नाडीनाम्वा ता रोधस्वत्यः १ । ३८ । ११ ॥

रोपणाकासु रोपणं समन्तात्कामयन्ति तासु क्रियासु, लिप्तास्वोषधीषु १ । ५० । १२ ॥

रोपुषीणाम् विमोहयन्तीनाम् १ । १९१ । १३ ॥

रोम रोमाण्योषध्यादीनि १ । ६५ । ४ ॥

[ रोमाणि ] लोमानि १ । १३५ । ६ ॥

रोमशा प्रशस्तलोमा १ । १२६ । ७ ॥

रोरवीति [ रोरवीति ] भृशमुपदिशति ४ । ५८ । ३ । विद्युदादिना भृशं शब्दं करोति ६ । ७३ । १ । ऋग्वेदादिना सवनक्रमेण वा शब्दायते १७ । ९१ । भृशं शब्दायते ३ । ५५ । १७ ॥

रोराभ्याम् कथनश्रवणाभ्याम् २५ । ३ ॥

रोरुचानः भृशं देदीप्यमानः ४ । १ । ७ ॥

रोरुवत् पुनः पुनरारोह १ । ५४ । १ । पुनः पुना रोदनं कारयन्सन् १ । ५४ । ५। अतिशयेन शब्दयन् १ । १४० । ६ । भृशं रौति शब्दं करोति ६ । ६१ । ८ ॥

रोरुवत् रोरूयमाणः । नि० ५. १६ ॥

रोह वर्धयस्व ३ । ८ । ११ । उन्नतिं गमय गमयति वा ३ । १४ दर्शयसि दर्शयति वा ४ । ३२ । प्रादुर्भव ५ । ४३ । प्रसिद्धो भव १० । १० आरूढो भव १२ । ५ ॥

रोहांसि आरोहणानि ६ । ७१ । ५ ॥

रोहतः आरूढ होते हैं २३ । २८ ॥

रोहतम् रोहतम् १० । १६ ॥

रोहतात् प्रसिद्ध हो १२ । १०० ॥

रोहति वर्धते १ । १४१ । ४ ॥

**रोहते** वर्धते २ । ५ । ४ ॥

**रोहथः** रोहथः ५ । ६२ । ८ ॥

**रोहनम्** आरोहन्ति येन तत् १ । ५२ । ६ ॥

**रोहन्ति** [ रोहन्ति ] रोहन्ति ६ । ४४ । ६ ॥

**रोहम्** प्रादुर्भावम् १३ । ५१ ॥

रोहः ( यजु० १३. ५१ ) स्वर्गो वै लोको रोहः । श० ७. ५. २. ३६ ॥

**रोहय** रोहय १२ । ६३ ॥ सन्तानों से बढ़ा अथर्व० १४ । २ । ३७ । ( १७० विधिः )

**रोहयत्** उपरि स्थापितवान् १ । ७ । ३ ॥

**रोहसे** रोहसे १ । ५१ । १२ ॥

**रोहिण्यः** आरोढुमर्हाः २४ । ५ । [रोहिणीषु] रोहणशीलासु १ । ६२ । ६ ॥

रोहणी ( नक्षत्रम् ) सा ( विराट् ) तत ऊर्ध्वारोहत् । सा रोहिण्यभवत् । तद्रोहिण्यै रोहिणीत्वम् । तै० १. १. १०. ६ ॥ विराट् सृष्टा प्रजापतेः । ऊर्ध्वारोहद्रोहिणी । योनिरग्नेः प्रतिष्ठितिः । तै० १. २. १. २७ ॥ यमु हैव तत्पशवो मनुष्येषु काममरोहँस्तमु हैव पशुषु कामꣳ रोहति य एवं विद्वान्रोहिण्याम् ( अग्नी ) आधत्ते । श० २. १. २. ७ ॥ प्रजापती रोहिण्यामग्निमसृजत तं देवा रोहिण्यामादधत ततो वै ते सर्वान्रोहानरोहन् तद्रोहिण्यै रोहिणीत्वम् । तै० १. १. २. २ ॥ ता अस्य (प्रजापतेः ) प्रजाः सृष्टा एकरूपा उपस्तब्धास्तस्थू रोहिण्य इवैव तद्वै रोहिण्यै रोहिणीत्वम् । श० २. १. २. ६ ॥ या ( प्रजापतेर्दुहिता ) रोहित् (= रक्तवर्णा मृगी ) सा रोहिणी ( अभूत् ) । ऐ० ३. ३३ ॥ प्रजापते रोहिणी । तै० १. ५. १. १ ॥ रोहिणी देव्युदगात् पुरस्तात्...प्रजापतिꣳ हविषा वर्द्धयन्ती । तै० ३. १. १. २ ॥ इन्द्रस्य रोहिणी ( =ज्येष्ठानक्षत्रमिति सायणः ) । तै० १. ५. १. ४ ॥ आत्मा वै प्रजा पशवो रोहिणी । श० ११. १. १. ७ ॥ यद् ब्राह्मणः (=ब्राह्मणनक्षत्रम् ) एव रोहिणी । तस्मादेव । तै० २. ७. ९. ४ ॥

**रोहित्** अधस्ताद्रक्तवर्णा १ । १०० । १६ । रक्तगुणविशिष्टो मृगः २४ । ३० ॥ [ रोहितः ] नद्यः ७ । ४२ । २ । रोहयन्त्यारोहयन्ति यानानि यास्ताः ( अत्र हृसृरुहिपुषिभ्य इति उ० । १ । ६७ । अनेन रुहधातोरितिःप्रत्ययः ) १ । १४ । १२ ।

रोहितः नदीनाम निघ० १. १३ ॥

**रोहितः** रक्तगुणविशिष्टस्याग्नेर्वेगादिगुणसमूहः (रोहितोऽग्नेरित्यादिष्टोपयोजननामसु पठितम् । निघ० १ । १५ । ) १ । ३६ । ६ । रक्तवर्णः २४ । २ । [ रोहितौ ] विद्युत्प्रसिद्धवह्नी ५।३६।६। [ रोहिता ] दृढबलादिगुणोपेतौ ( अत्रोभयत्र द्विवचनस्याकारादेशः ) १ । १४ । १० । रक्तगुणविशिष्टावश्वौ ३ । ६ । ६ । रोहितेन वह्निगुणेन सहितौ ४ । २ । ३ । रक्तगुणविशिष्टान्यग्न्यादीनि द्रव्याणि १ । १३४ । ३ । [ रोहितम् ] प्रादुर्भूतम् १६ । ८३ ॥ [ रोहिताय ] वृद्धिकराय १६ । १६ ॥

रोहितम् ( छन्दः ) रोहितं वै नामैतच्छन्दो यत्पारुच्छेपमेतेन वा इन्द्रः सप्त स्वर्गांल्लोकानरोहत् । ऐ० ५. १० ॥

**रोहिता** रोहणकर्त्री ५ । ६१ । ९ । [रोहिताः] रक्तवर्णाः २४ । ६ ॥

**रोहिताञ्जिः** रोहिताः रक्ता अञ्जयो लक्षणानि यस्य सः २६ । ५६ ॥

**रोहिदश्वः** रोहिता रक्तादिगुणविशिष्टा अग्न्यादयोऽश्वा आशुगामिनो यस्य सः ४।१।८। [ रोहिदश्व ] रोहितोऽश्वा वेगादयो गुणा यस्य तत्सम्बुद्धौ १।४५।२॥

**रौद्रः** रुद्रदेवताकः २४। ३६। [ रौद्राः ] प्राणादिदेवताकाः २४।३। [ रौद्रेण ] शत्रुरोदयित्रीणामिदं तेन ५।३४॥

**रौहिणम्** रोहिण्यां प्रादुर्भूतम् १।१०३।२। रोहणशीलं मेघम् २।१२।१२॥

रौहिणः मेघनाम। निघ० १. १०॥

( पुरोडाशौ ) अग्निश्च ह वा आदित्यश्च रौहिणावेताभ्याꣳ हि देवताभ्यां यजमानाः स्वर्गं लोकꣳ रोहन्ति। श० १४. २. १. २॥ अहोरात्रे वै रौहिणौ। श० १४. २. १. ३॥ इमौ वै लोकौ ( द्यावापृथिव्यौ ) रौहिणौ। श० १४. २. १. ४॥ चक्षुषी वै रौहिणौ। श० १४. २. १. १५॥

**लक्षम्** लक्षितुं योग्यम् २।१२।४॥

**लक्ष्मण्यस्य** सुलक्षणेषु भवस्य ५।३३।१०॥

**लक्ष्मीः** सर्वमैश्वर्यम् ३१।२२। शुभलक्षणवती धनादिश्च ( १३६ भूमि० )॥

लक्ष्मीः लाभाद्वा लक्षणाद्वा ( लप्स्यनाद्वा) लाञ्छनाद्वा लषतेर्वा स्यात् प्रेप्साकर्मणो लग्यतेर्वा स्यादाश्लेषकर्मणो लज्जतेर्वा स्यादश्लाघाकर्मणः। नि० ४. १०॥

तस्माद्यस्य मुखे लक्ष्म भवति तं पुण्यलक्ष्मीक इत्याचक्षते। श० ८. ४. ४. ११॥ तस्माद्यस्य दक्षिणतो लक्ष्म भवति तं पुण्यलक्ष्मीक इत्याचक्षते। ८. ४. ४. ११॥ तस्माद्यस्य सर्वतो लक्ष्म भवति तं पुण्यलक्ष्मीक इत्याचक्षते। श० ८. ५. ४. ३॥

**लवान्** बटेर इति भाषायाम् २४।२४॥

**लभते** प्राप्नोति २४।११॥

**ललामगुम्** येन न्यायेनेप्सां गच्छन्ति प्राप्नुवन्ति तम् २३।२९॥

**ललामीः** शिरोवदुपरिभागः प्रशस्तो यस्याः सा १।१००।१६॥

**लाङ्गलम्** हलावयवः ४।५७।४। सीरा पश्चाद्भागे दार्ढ्याय संयोज्यं काष्ठम् १२।७१॥

लांगलम् लंगतेर्लाङ्गूलवद्वा। नि० ६. २६॥

**लाजाः** प्रफुल्लिता व्रीहयः १९।१३॥

लाजाः आदित्यानां वा एतद्रूपम्। यल्लाजाः। तै० ३. ८. १४. ४॥ नक्षत्राणां वाऽएतद्रूपं यल्लाजाः। श० १३. २. १. ५॥

**लाजीन्** स्वस्वकक्षायां चलितान् २३।८॥

**लिप्यते** लिप्यते ४०।२॥

**लेखीः** लिखेः ५। ४३॥

**लोकः** राष्ट्रं राज्यस्थानम् ६। ६। लोकनीयः पुत्रापत्यादिसम्बन्धसुखकरो गृहाश्रमः ८। २६। सभा दर्शनं वा १६। ४५। दर्शनीयः ३५। १। निवासस्थानम् ३। ३७। ११। मनुष्यलोक १२। ५। ३। (१७५ विधिः) [लोकाः] न्यायदृष्ट्या समीक्षणीयाः ६। १। संघाताः २०। ३२। लोकन्ति पश्यन्ति ते जनाः ४०। ३॥ [लोकम्] दृश्यमानं भुवनसमूहम् १। ६३। ६। दर्शनमभ्युदयं वा ६। ४७। ८। द्रष्टव्यसुखं स्थानं वा ६। ७३। २। दर्शनं द्रष्टव्यं जन्मान्तरे लोकान्तरे वा ७। २०। २। सर्वस्य द्रष्टारम् २०। २६। जीवात्मानम् ३४। ५५। कर्मानुकूलं सुखदुःखप्रापकम् ३५। २। देखने योग्य वानप्रस्थाश्रम को। अथर्व० ६।५।१। (२३० विधिः) [लोके] विज्ञातव्ये १५। ११॥

**लोधम्** लोब्धारम् (अत्र वर्णव्यत्ययेन भस्य धः) ३। ५३। २३॥

लोधम् लुब्धमृषिम्। निं० ४. १४॥

**लोपामुद्रा** लोप एव आमुद्रा समन्तात्प्रत्ययकारिणी यस्याः सा १। १७६। ४॥

**लोपाशः** वनचरपशुविशेषः २४। ३६॥

**लोप्याय** लोपेषु छेदनेषु साधवे १६। ४५॥

**लोम** अनुकूलं वचनम् २३। ३६॥ [लोमानि] लोम के समान। अथर्व० ६। ६। २ (२५४ विधिः) [लोमभ्यः] त्वगुपरिस्थेभ्यो बालेभ्यः; नखादिभ्यः ३६।१०॥

लोम लुनातेर्वा लीयतेर्वा। नि० ३. ५॥
लोमानि हृदये (श्रितानि)। तै० ३. १०. ८. ८॥
छन्दांसि वै लोमानि। श० ६. ४. १. ६॥ ६. ७. १. ६॥ ९. ३. ४. १०॥ ओषधिवनस्पतयो मे लोमसु श्रिताः। तै० ३. १०. ८. ७॥ लोमैव हिंकारः। जै० उ० १. ३६. ६॥। भरद्वाजस्य लोम (साम) भवति। तां० १३. ११. ११॥ तदु (लोमसाम) दीर्घमित्याहुः। तां १३. ११. १२॥ पशवो वै लोम (साम)। तां० १३. ११. ११॥

**लोमशसक्थौ** लोमानि विद्यन्ते यस्य तल्लोमशं सक्थि ययोस्तौ २४। १॥

**लोहम्** सुवर्णम् १८। १३॥

लोहम् हिरण्यनाम। निघ० १. २॥
रजतेन लोहम् (सन्दध्यात्)। गो० पू० १. १४॥
लोहेन सीसम् (सन्दध्यात्)। गो० पू० १. १४॥
दिशो वै लोहमय्यः (सूच्यः)। श० १३. २. १०. ३॥

**लोहिताय** हृदयस्थाय लोहितपिण्डाय, रक्ताय ३६। १०॥

**लोहिताहिः** लोहितश्चासावहिश्च २४। ३१॥

**लोहितोर्णी** लोहिता ऊर्णा यस्याः सा २४। ४॥

व

वंशनर्तिनम् वंशे नर्तितुं शीलं यस्य तम् ३० । २१ ॥

वंशमिव यथोत्कृष्टैर्गुणैः शिक्षणैश्च स्वकीयं वंशमुद्यमवन्तं कुर्वन्ति तथा १ । १० । १ ॥

वंसगः वंसं धर्मसेविनं, संविभक्तपदार्थान् गच्छतीति १।७।८। यो वंसं सम्भजनीयं गच्छति गमयति वा स वृषभः १। ५५ । १ । संभक्ता; वृषभः १ । १३० । २२ । यो वंसान् सत्यासत्यविभाजकान् गच्छति ५ । ३६ । १ । यो वंसं संभजनीयं व्यवहारं गच्छति सः ६ । १६ । ३९ ॥

वंसत् विभजेत् ६ । ६८ । ५ ॥

वंसाम विभजेम ६ । १६ । ८ ॥

वंसि सम्भजसि ५ । ७० । १ ॥

वंसीमहि विभजेम ६ । १६ । १० ॥

वंस्व [ वंस्व ] संभज १ । ४८ । ११ ॥

वक्तवे वक्तव्याय ७ । ३१ । ५ ॥

वक्ता वैद्यकशास्त्राध्यापकः १६ । ५ ॥

वक्त्वानि वक्तुं योग्यानि ६।६।२। [ वक्त्वानाम् ] वक्तुं समुचितानां वाक्यानाम् ३ । २६ । ६ ॥

वक्मनि उपदेशे १ । १३२ । २ ॥

वक्मराजसत्याः वक्मेषु वक्तृषु राजसु सत्यप्रतिपादकाः ६ । ५१ । १० ॥

वक्म्यः वक्तुं योग्यः १ । १६७ । ७ ॥

वक्वरी प्रशंसिते १ । १४४ । ६ । वचनशक्तिमती ६ । २२ । ५ ।

वक्वा वक्ता १ । १४१ । ७ ॥

वक्वाः वक्ताः ४ । १६ । ७ ॥

वक्षः प्राप्नुहि ५ । ३३ । २ ।

वक्षः वक्षस्थलम् १ । ६२ । ४ । प्राप्तुं वस्तु १ । १२४ । ४ ॥

वक्षः भासोऽध्यूढम् । नि० ४. १६ ॥

वक्षणाः वहन्ति जलानि यास्ता नद्यः १ । ३२ । १॥

वक्षणा नदीनाम । निघ० १. १३ ॥

वक्षणानि प्रापकाणि ६ ।२३। ६ । [ वक्षणा ] वहनेन ५ । ५२ । १५ ॥

वक्षणेस्थाः या वाहने तिष्ठन्ति ताः ५ । १६ । ५ ॥

वक्षत् वहेत् प्रापयेत् ६ । २२ । ७ । प्रापयति २८ । १६ ।

वक्षतः वहतः ( अत्र लिडर्थे लेट् ) १ । १६ । २ ॥

वक्षति वहतु प्रापयतु ( प्राप्नोति प्रापयति वा अत्र लडर्थे लेट् ) १।१४ । ६। प्राप्ता भवतु १ । १२१ । ८ ॥

वक्षथः रोषः ७ । ३३ । ८ ॥

वक्षन् वहन्तु प्रापयन्तु १ । १०४ । २ ॥

वक्षि [ वक्षि ] वहसि प्रापयसि १ । १८८ । ३ । वदसि २ । ३६ । ४ । प्रापय ३ । ७ । ६ । प्राप्नोसि प्रापयसि ५ । २६ । १ । आवह ५ । ४३ । १० । उपदिशति १७ । ८ । कामयसे प्राप्नोषि वा १७ । ८८ ॥
वक्षि वह । नि० ८. १९ ॥

वक्ष्यः वोढ्यः ५ । १६ । ५ ॥

वक्ष्यन्तीव यथा कथयिष्यन्ती विदुषी स्त्री ६ । ७५ । ३ ॥

वक्ष्यामि कहूंगा ६ । ९ । ६ ॥

वक्ष्व [ वक्ष्व ] प्रापय, वह ८ । २६ ॥

वग्नुना वाणया ८ । ३३ ॥

वङ्कुः धनेच्छुः ५ । ४५ । ६ । [ वङ्कू ] कुटिलगती शत्रूदासीनौ १ । ५१ । ११ । [ वङ्कुम् ] दुष्टशत्रून् प्रति कुटिलम् १ । ११४ । ४ ॥

वङ्कुतरा अतिशयेन कुटिलौ १ । ५१ । ११ ॥

वङ्क्रीः कुटिला गतीः १ । १६२ । १८ ॥

वङ्कृदस्य यो वंगून् वक्रान् विषादीन् पदार्थान् व्यवहारान्ददाति उपदिशति वा तस्य दुष्टस्य १ । ५३ । ८ ॥

वचः विद्यायुक्तं स्तुतिसम्पादकं वचनम् १ । २६ । १० । वचनम् १ । ३० । ४ । विद्याशिक्षासत्यप्रापकं वचनम् १ । ५४ । ३ । उपदेशकारकं वेदवचनम् १ । ५७ । ४ वचसा (अत्र सुपां सुलुगिति टालोपः) २ । ३१ । ५ ॥ [ वचसा ] परिभाषणीयौ ६ । ६२ । ५ । [ वचसम् ] सर्वैः स्तुत्या परिभाषितं मनुष्यम् १ । ११ । २ ॥ [ वचसे ] गृहस्थाश्रमवाग्व्यवहाराय ८ । ५ ॥
वचः वचनानि । नि० २. २७ ॥

वचनस्य वचनस्य ६ । ३९ । १ ॥

वचस्यते परिभाष्यते सर्वतः स्तूयते १ । ५९ । ४ ॥

वचस्या वचनैः सुसाध्या २ । १० । ६ । वचसि भवा ६ । २१ । १ । वचसि साधूनि ६ । ४६ । ८ । वचसा वचनेन ( अत्र सुपां सुलुगिति सूत्रेण विभक्तेर्यादेशः ) ३४ । ४२ । [ वचस्याम् ] वचसि उदके भवाम् २ । ३५ । १ ॥ [ वचस्यया ] अतिशयितया प्रशंसया ४ । ३६ । ६ ॥
वचस्या वचनेन । नि० १२. १८ ॥

वचस्युवम् आत्मनो वच इच्छन्तम् २ । १६ । ७ ॥

वचोयुजा वाणीर्योजयितोः । ( अत्र सुपां सुलुगिति षष्ठीद्विवचनस्याकारादेशः ) १ । ७ । २ । वचोभिर्युक्तः १ । २० । २ । यौ वचसा युङ्क्तस्तौ ६ । २० । ९ ॥

वचोविदः विदितवेदितव्याः १ । ९१ । ११ ॥

वच्यते उच्यते १ । १४२ । ४ ॥

वच्यन्ताम् उच्यन्ताम् ३ । ६ । २ ॥

वच्यन्ते उच्येरन् ( सम्प्रसारणाच्चेत्यत्र वाच्छन्दसीत्यनुवृत्तेः पूर्वरूपाभावाद्यणादेशः ) १ । ४६ । ३ । स्तुवन्ति ( व्यत्ययेन

शपश्च ) १ । १८४ । ३ ॥

**वक्ष्यमाना** उह्यमाना ( अत्र वा छन्दसीति सम्प्रसारणाभावः ) ३ । ३६ । १ ॥

**वज्रः** शस्त्रास्त्रसमूहः १ । ५२ । ८० । ऊष्मसमूहः १ । ५७ । २ । किरणसमूहः १ । ८० । ३ । वेगः २ । १६ । ६ । किरणनिपातः २ । ११ । १० । प्रहारः शब्दो वा ६ । ४७ । २८ । वज्र इव शत्रुच्छेदकः ६ । ५ । विज्ञापकः १० । २१ । प्रापकः १० । २८ । निपातः २६। ५४ ॥ [ वज्रम् ] विद्युद्रूपम् ४ । २० । ६ । दुष्टानां वज्रमिव दण्डप्रदम् १ । १३१ । ३ । शस्त्रमिवाज्ञानच्छेदकमुपदेशम् १। ५५। ५ ॥ [ वज्रेण ] गतिमता तेजसा १ । ३३ । १३ । प्रापणेन १ । ८० । १३ ॥

वज्रः वर्जयतीति सतः । नि० ३. ११ ॥

वज्रो वाऽअग्निः । श० ३. ५. ४. २ ॥ ६. ३. १. ३९ ॥ वज्रो वै परशुः श० । ३. ६. ४. १० ॥ वज्रः शासः । श० ३. ८. १. ५ ॥ त्रिवृद्वै वज्रः । कौ० ३. २ ॥ ( देवाः ) एतं त्रिः समृद्धं वज्रमपश्यन्नाप इति तत्प्रथमं वज्ररूपं सरस्वतीति तद् द्वितीयं वज्ररूपं पञ्चदशश्चं भवति तत्तृतीयं वज्ररूपमेतेन वै देवास्त्रिः समृद्धेन वज्रेणैभ्यो लोकेभ्योऽसुराननुदन्त । कौ० १२. २ ॥ वज्रो वाऽआपः । श० १. १. १. १७ ॥ १. ७. १. २० ॥ ३. १. २. ६ ॥ ७. ५. २. ४१ ॥ तै० ३. २. ४. २ ॥ पञ्चदशः ( स्तोमः ) वै वज्रः । श० १. ३. ५. ७ ॥ ३. ६. ४. २५ ॥ कौ० ७. २ ॥ १५. ४ ॥ ष० ३. ४ ॥ तै० २. २. ७. २ ॥ तां० २. ४. २ ॥ वज्रो वै भान्तः ( यजु० १४. २३ ) वज्रः पञ्चदशः ( यजु० १४. २३ ) श० ८. ४. १. १० ॥ इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । स प्रहृतश्चतुर्धाऽभवत्तस्य स्फ्यस्तृतीयं वा यावद्वा यूपस्तृतीयं वा यावद्वा रथस्तृतीयं वा यावद्वाथ यत्र प्राहरत्तच्छकलोऽशीर्यत स पतित्वा शरोऽभवत्तस्माच्छरो नाम यदशीर्यतैवमु स चतुर्धा वज्रोऽभवत् । श० १. २. ४. १ ॥ वज्रो व स्फ्यः । त० १. ७. १०. ५ ॥ ३. २. ९. १० ॥ ३. २. १०. १ ॥ श० १. २. ५. २० ॥ ३. ३. १. ५ ॥ ५. ४. ४. १५ ॥ वज्रो वै शरः । श० ३. १. ३. १३ ॥ ३. २. १. १३ ॥ वज्रो यूपः । श० ३. ६. ४. १९ ॥ वज्रो वा एष यद्यूपः । कौ० १०. १ ॥ ऐ० २. १, ३ ॥ ष० ४. ४ ॥ वज्रो वै यूपशकलः । श० ३. ८. १. ५ ॥ वज्रो वै रथः । तै० १. ३. ६. १ ॥ श० ५. १. ४. ३ ॥ वज्रो वै विकंकतः । श० ५. २. ४. १८ ॥ वज्रो वै पशवः । श० ६. ४. ४. ६ ॥ ८. २. ३. १४ ॥ वज्रो वाऽअश्वः । श० ४. ३. ४. २७ ॥ ६. ३. ३. १२ ॥ वज्रो वै चक्रम् । तै० १. ४. ४. १० ॥ वज्रो वै ग्रावा । श० ११. ५. ९. ७ ॥ वज्रो वाऽआज्यम् । श० १. ४.४.४ ॥ वज्रस्तेन यदपोनप्त्रीया वज्रस्तेन यत्त्रिष्टुब्वज्रस्तेन यद्वाक् । ऐ० २.१६॥ वज्रो वै त्रिष्टुप् । श० अ० ७.४.२.२४॥वज्र एव वाक् । ऐ० २. २१ ॥ वाग्घि वज्रः । ऐ० ४.१॥ वज्रो वै वषट्कारः । ए० ३ ८ ॥ कौ० ३.५॥ श० १. ३. ३. १४ ॥ गो० उ० ३. १, ५ ॥ वज्रो वा एष यद्वषट्कारः । ऐ० ३. ६ ॥ वज्रो वै हिंकारः कौ० ३. २ ॥ ११. १ ॥ हिंकारेण वज्रेणाऽस्माल्लोकादसुराननुदत । जै० उ० २. ८. ३ ॥ वज्रो वै महानाम्न्यः ( ऋचः ) । ष० ३. ११ ॥ वज्रो वै सामिधेन्यः । कौ० ३. २. ३ ॥ ७. २ ॥ वज्रो वै वैश्वानरीयम् ( सूक्तम् ) । ऐ० ३. १४ ॥ वज्रो वै यौधाजयम् ( साम ) । तां० ७. ५. १२ ॥ शाक्करो वज्रः । तै० २. १. ५. ११ ॥ वज्रा वाऽउपसदः । श० १०. २. ५. २ ॥ वज्रो वै त्रिणवः ( स्तोमः ) । तां० ३. १. २ ॥ आनुष्टुभो वा एष वज्रो यत्षोडशी ( शस्त्रम् ) । कौ० १७. १ ॥ वज्रो वा एष यत्षोडशी । ऐ० ४. १ ॥ वज्रः षोडशी । ष० ३. ११ ॥ वज्रो वै षोडशी । गो० उ० २. १३ ॥ तां० १२. १३. १४ ॥ १९. ६. ३ ॥ संवत्सरो वज्रः । श० ३. ६. ४. १९ ॥ संवत्सरो हि वज्रः । श० ३. ४. ४. १५ ॥ वीर्य्यं वज्रः । श० १. ३. ५. ७ ॥ वीर्य्यं वै वज्रः । श० ७. ३. १. १९ ॥ वज्रो वाऽ

ओजः । श० ८. ४. १. २० ॥ अष्टाश्रिर्वै वज्रः । ऐ० २. १ ॥ पुरो गुरुरिव हि वज्रः । तां० ८. ५. २ ॥ एवमेव वै वज्रः साधुर्यदारम्भणतोऽणीयान् प्रहरणतः स्थवीयान् । ष० ३. ४ ॥ दक्षिणत उद्यामो हि वज्रः । श० ८ ५ १. १३ ॥ वज्रेणैवैतद्रक्षांऽसि नाष्ट्रा अपहन्ति । श० ७. ४. १. ३४ ॥

**वज्रदक्षिणाम्** वज्रा अविद्याच्छेदका दक्षिणा यस्मात्तम् १ । १०१ । १ ॥

**वज्रबाहुः** वज्रः शस्त्रसमूहो बाहौ यस्य सः १। ३२ । १५ । वज्रो बाहुः यस्य सः १। १६५। ८। वज्रः शस्त्रास्त्रं बाह्वोर्यस्य १ । १७४। ५। बाहुरिव वज्रः किरणसमूहो यस्य २ । १२ । १२ । बाहुवत्किरणबलः २। १२। १३ । वज्रः शस्त्रविशेषो बाहौ यस्य सः ४। २० । १ ॥ [वज्रबाहू] वज्रौ बलवीर्ये बाहू ययोस्तौ १ । १०६। ७ ॥ [वज्रबाहो] वज्रवदोषधं बाहौ यस्य तत्सम्बुद्धौ २। ३३। ३ ॥

**वज्रभृत्** यो वज्रं शस्त्रास्त्रसमूहं बिभर्ति सः १ । १०० । १२ ॥

**वज्रवाहः** शस्त्रास्त्रविद्यावोढारः ६ । ४३। १६ ॥

**वज्रहस्तः** शस्त्रास्त्रशासनपाणिः १। १७३। १० । वज्राः किरणा हस्ता यस्य सः २ । १२ । १३ । शस्त्रास्त्रपाणिः ६। २६ । १। [वज्रहस्ता] वज्रहस्तौ वज्रं विद्यारूपं वीर्य्यं हस्त इव ययोस्तौ । ( वज्रो वै वीर्यम्। श०७ । ४ । २ । २४ । अत्र सुपां सुलुगित्याकारादेशः ) १ । १०६ । ८ ॥

**वज्रिवः** प्रशस्ता वज्रयो विज्ञानयुक्ता नीतयो विद्यन्तेऽस्य तत्सम्बुद्धौ (वजधातोरौणादिक इःप्रत्ययो रुडागमश्च ततो मतुप् च ) १ १२१ । १४ । प्रशस्तशस्त्रास्त्रयुक्त ६ । ३७। ४ । प्रशस्तशस्त्रास्त्रप्रयोगकुशल ६ । ४, । १८ ॥

**वज्री** प्रशस्तशस्त्रविद्याशिक्षकः २० । ४१ ॥ वज्रः संवत्सरस्तापो वास्यास्तीति सः । ( संवत्सरो हि वज्रः । श० ३ । ३ । ५ । १५ ) १. ७। २। वज्राः प्राप्तिच्छेदनहेतवो बहवः शस्त्रसमूहाः किरणा वा विद्यन्ते यस्य सः ( अत्र भूम्न्यर्थे इनिः ) १ । ११ । ४ । सर्वपदार्थविच्छेदकः किरणवानिव शत्रुच्छेदी १ । ३२ । १ । प्रशस्तशस्त्रसमूहयुक्तः सेनाधिपतिः १ । १०३। ४ । वज्रो दण्डः शासनार्थो यस्य सः १ । १३० । ३ ॥ [वज्रिणम्] किरणवन्तं जलवन्तं वा ( वज्रो वा भान्तः श० ८ । २ । ४ । १० अनेन प्रकाशरूपाः किरणाः गृह्यन्ते । वज्रो वा आपः । श० ७ । ४ । २ । ४१ ) १ । ७ । ५ ॥ [वज्रिणे] वज्रो न्यायाख्यो दण्डोऽस्यास्तीति तस्मै ( वज्रो वै दण्डः । श० ३ । १। ५ । ३२ ) १ । ८ । ५ । धनुर्वेदविदे ३ । ५३ । १३। [वज्रिणः] वज्रोऽनन्तं प्रशस्तं वीर्यमस्यास्तीति तस्य (अत्र भूमार्थे प्रशंसार्थे च मतुप् । वीर्य्यं वै वज्रः । श० ७।४।२।२४ ) १ । ७ । ७ । बलिनः १ । ४० । ८। वज्रं बहुविधं शस्त्रं विद्यते यस्य तस्य ३। ४६।१। [वज्रिन्] वज्रोऽविद्यानिवारकः प्रशस्तो बोधो विद्यते यस्य तत्सम्बुद्धौ (अत्र व्रजेर्गत्यर्थात ज्ञानार्थे औणादिको रन्

ततः प्रशंसायां मतुबर्थे इनिः) १। ३०। ११। वज्रः सर्वदुःखनाशनो बहुविधो दृढो बोधो यस्यास्तीति तत्सम्बुद्धौ १। ३०। १२॥

**वञ्चति** प्रलम्भते २३। २२ वञ्चितो भवति २३। २३॥

वञ्चति गतिकर्मा। निघ० २. १४॥

**वञ्चते** कापट्येन वर्त्तमानाय १६। २१॥

**वटूरिणा** वेष्टितेन (अत्र वट वेष्टन इति धातोर्बाहुलकादौणादिक ऊरिःप्रत्ययः) १। १३३। २॥

**वणिक्** व्यापारी वैश्यः ५।४५। ६। [ वणिजे ] व्यवहर्तुं शीलाय १। ११२। ११॥

वणिक् पण्यं नेनेक्ति। नि० २. १७॥

**वतन्तः** वनन्तः सम्भजन्तः। (अत्र वर्णव्यत्ययेन नस्य तः) ७। ६०। ६॥

**वतेम** सम्भजेम ७। ३। १०॥

**वत्सः** स्वव्याप्त्या सर्वाच्छादकः १। ६५। ४। [ वत्सम् ] वसन्ति भूतानि यस्मिँस्तं संसारम्, वदति सततमिति वत्सो बालस्तं वा ३३। ५। स्वापत्यम् १। ३८। ८। सुखेषु निवासयन्तं व्यक्तवाचं प्रसिद्धं वेदचतुष्टयम् (अत्र वृतृ० उ० ३। ६१ इति सूत्रेणास्य सिद्धिः) १। ७२। २। वत्सवद्वर्तमानोऽहोरात्रः १। १४६। ३। प्रसूतं मनुष्यादिकं संसारम् १। १६४। १७। महत्तत्वादिकम् ३। ५५। ४॥ वत्सवत्पालनीयम् ३। ५५। १३॥ [ वत्समिव ] यथा गौर्वत्सम् ३। ३३। ३॥

वत्सा वै दैव्या अध्वर्य्यवः। श० १. ८. १. २७॥ मन एव वत्सः। श० ११. ३. १. १॥ अयमेव वत्सो योऽयं (वायुः) पवते। श० १२. ४. १. ११॥ अग्निर्हि वै ब्रह्मणो वत्सः। जै० उ० २. १३. १॥ वत्सा उ वै यज्ञपतिं वर्धन्ति यस्य ह्येते भूयिष्ठा भवन्ति स हि यज्ञपतिर्वर्धते। श० १. ८. १. २८॥

**वत्सतर्य्यः** अतिशयेन वत्सः अल्पवयसः २४। ५। अतिशयेन वत्साः २४। ६। ह्रस्वा वत्सा यासां ताः २४। १४॥

**वत्सरः** वर्षः २७। ४५॥

**वद** [वदा] वद वादय वा (अत्र पक्षेऽन्तर्गतो णयर्थः) १।२८।५। उपदिश (अत्र द्व्यचो० इति दीर्घः) १। ३८। १३॥

**वदः** वदेः २३। २५॥

**वदत्** वदेत १। ११६। ६। बोला करो ३। ३०। २ (१७३ विधिः)

**वदत** अध्यापयत; उपदिशत ६। ११॥

**वदतः** वदतः ६। ५६। ४॥

**वदतम्** उपदिशतः ५। ६७॥

**वदाति** [ वदाति ] उपदिशति १। ४०। ५॥

वदति गतिकर्मा। निघ० २. १४॥

यद्धै वदति शंसतीति वै तदाहुः। श० १. ८. २. १२॥

**वदन्** उपदिशन् ५। ३१। १२। [ वदन्तः ] उच्चरन्तः १। १६१। ६॥

**वदन्ति** [ वदन्ति ] उच्चारयन्ति १। १६४। ४५॥

**वदसि** वदसि २। ४३। ३॥

**वदस्व** वदस्व १। १७०। ५।

वदाति वदेत् ६ । ९ । २ ॥

वदान् वदेयुः १ । ३७ । ३ ॥

वदामसि वदामः १ । ८७ । ५ । वदेम १६ । ४ ॥

वदामि उपदिशामि १ । १०५। ७ ॥

वदेम उपदिशेम ३४ । ५८ । अध्यापयेम २ । ३६ । ८ ॥

वद्मा यो वदति ६ । ४ । ४ । सत्यहितोपदेष्टा ६ । १३ । ६ ॥

वधः [ वधः ] वधम् ( अत्र हन्तेर्बाहुलकादौणादिकेऽसुनि वधादेशः ) १ । ३२ । ६ । नाशः १ । १७४ । ८ । वध्यन्ते शत्रवो यस्मात्तच्छस्त्रम् २ । १६ । ७ । घ्नन्ति यस्मिँस्तः ५ । ३२ । ३ । ताडनम् ७ । २५ । ३ ॥

वधः बलनाम । निघ० २. ९ ॥

वधत्रैः वधैः ४ । २८ । ४ ॥

वधर्यन्तीम् भूमिम् १ । १६१ । ६ ॥

वधस्नैः यानि वधेन स्नापयन्ति शस्त्राणि तैः १ । १६५ । ६ । ये वधेन स्नान्ति पवित्रा भवन्ति ते ५ । ४१ । १३ वधेन शोधकैर्भृत्यैर्न्यायाधीशैः ७ । ६ । ५ ॥

वधिषः हन्याः ६ १७ । १ ॥

वधिष्टम् हन्यातम् ४ । ४ ॥

वधिष्टन नष्ट रिये ५ । ५५ । ६ ॥

वधीः [ वधीः ] हिन्धि ( अत्र लोडर्थे लुङ्डभावश्च ) १ । ३३ । ४ । हंसि ४ । ३० । ८ । हन्याः ६ । ३३ । ३ ॥

वधीत् [ वधीत् ] नाशयतु ( अत्र लोडर्थे लुङन्तर्गतो ण्यर्थश्च ) १ । ३८ । ६ । हन्यात् २ । ४२ । २ । हन्ति ५ । ४४ । १२ ॥

वधीम् हन्मि १ । १६५ । ८ ॥

वधूः भार्य्या ५ । ३७ । ३ ॥

वध्वः नदीनाम । निघ० १. १३ ॥

वधूमन्तः प्रशस्ता वध्वः स्त्रियो विद्यन्ते येषु ते १।१२६।३। प्रशस्ता वध्वो विद्यन्ते येषां ते ६ । २७ । ८ ॥

वधूयुरिव यथाऽऽत्मनो वधूमिच्छुः ३ । ५२ । ३ ॥

वध्यासम् हन्याम् १ । २६ ॥

वध्रिः बध्यते स वध्रिः । निर्वीर्यो नपुंसक इव ( अत्र बन्धधातोर्बाहुलकादौणादिकः क्रिन्प्रत्ययः) १ । ३२ । ७। [वध्रीन्] वृषभान् २ । २५ । ३ ॥

वध्रिमत्याः वध्रयः प्रशस्ता वृद्धयो विद्यन्ते यस्यास्तस्याः सत्स्त्रियः ( अत्र वृधुधातोरौणादिको रिक्प्रत्ययो बाहुलकाद् रेफलोपः ) १ । ११६ । १३ । वर्धिकाया विद्यायाः १ । ११७ । २४ । बहवो वध्रयो वर्धनानि विद्यन्ते यस्यां तस्या भूमेरन्तरिक्षस्य वा ६ । ६२ । ७ ॥

वध्रिवाचः वध्रयो वर्धिका वाचो येषां ते ७ । १८ । ६ ॥

वध्र्यश्वाय वध्रयो वर्धका अश्वा यस्य तस्मै

६ । ६१ । १ ॥

वनतम् [ वनतम् ] यौ सम्यक् वाणीसेविनौ स्तः । ( अत्र व्यत्ययः ) १ । ३ । २ ॥ सम्भजतः १ । ६३ । ६ ॥ [ वनते ] सम्भजमानाय ३ । १६ । १ ॥ [वनताम् ] सेवताम् १ । १६२ । २२ ॥

वनते [ वनते ] सम्भजसि ५ । ४१ । १७ । सम्भजति ५ । ६५ । १ ॥

वनथः सम्भजेथाम् १ । ४६ । १४ । संसेवेथाम् ४ । ४४ । २ । संविभजथः ७ । २ । ७ ॥

वनदः प्रशंसितारः २ । ४ । ५ ॥

वनधितिः वनानां धृतिः १ । १२१ । ७ ॥

वनन्ति संसेवन्ते ६ । ६ । ३ ॥

वनपम् जङ्गलरक्षकम् ३० । १६ ॥

वनम् सम्भजनीयं कारणवनम् १७ । २० । जङ्गलम् ५ । ७८ । ८ ॥ [ वनानि ] वनन्ति सम्भजन्ति सुखानि यैस्तानि ३ । ५१ । ५ । किरणान् ५ । ५८ । ६ । सूर्यकिरणानिव धनानि ७ । ७ । २ । [ वना ] वनानि याचनीयानि ३ । ६ । २ । जलानि १ । ६४ । ७ । [वनेव] यथा वनानि तथा १ । १२७ ३ । अग्निर्वनानीव ६ । ३३ । ३ ॥ [ वनस्य ] वननीयस्य संसारस्य १ । २४ । ७ । [ वने ] एकान्ते १ । ५५ । ४ ॥

वनर्गुः वनगामी । (अत्र वनोपपदादृजुधातोरौणादिक उप्रत्ययो बाहुलकात् कुत्वश्च ) १ । १४५ । ५ ॥

वनर्गुः स्तेननाम । निघ० ३. २४ ॥

वनर्षदः ये वने सीदन्ति ते २ । ३१ । १ ॥ ये वनेषु रश्मिषु सीदन्ति ते ( अत्र वाच्छन्दसीति रुडागमः ) ३३ । १ ॥

वनवत् [ वनवत् ] याचते ६ । ३३ । १ । सेवयसि ५ । ३ । ५ । सम्भजसे ५ । ३७ । २ । संविभाजयेत् ५ । ४४ । ७ ॥ वनेन जङ्गलेन तुल्यम् २ । २५ । १ । किरणवत् २ । २६ । १ ॥

वनवसे सम्भज ६ । १६ । १८ ॥

वनसे सम्भजसि १ । १४० । ११ ॥

वनस्पतिः वनानां पालयिताग्निसंज्ञकः ४ । ११ । अश्वत्थादिः १३ । २६ । वनस्य वृक्षसमूहस्य पतिः पालकः २० । ४५ । वटादिः २० । ६५ । ओषधिराजो वृक्षाणां पालकश्च २१ । २१ । रश्मिपालकोऽग्निः २१ । ४६ । वनस्य किरणसमूहस्य पालकः सूर्यः २८ । २३ । वनानां मध्ये रक्षणीयो वटादिः वृक्षसमूहो मेघो वा १ । ९० । ८ । संभक्तस्य पदार्थसमूहस्य जंगलस्य वा पालकः श्रेष्ठतमो वा १ । ६१ । ६ ॥ [ वनस्पती ] काष्ठमयौ १ । २८ । ८ ॥ [ वनस्पतयः ] वनस्य किरणसमूहस्येव न्यायस्य पालकः ( वनमिति रश्मिनाम । निघ० १ । ५ । ) ६ । १२ ॥ [ वनस्पते ] वनस्य सम्भजनीयस्य शास्त्रस्य पालक २७ । २१ । किरणानां रक्षकः सूर्य इव वनादीनां पालक विद्वन् राजन् २६ । ५२ ।

यो वनानां वृक्षौषध्यादिसमूहानामधिकवृष्टिहेतुत्वेन पालयिताऽस्ति सोऽपुष्पफलवान् ( अपुष्पफलवन्तो ये ते वनस्पतयः स्मृताः । मनु० १ । ४७ ) १ । १३ । ११ । वननीयस्य धनस्य रक्षक ३ । ८ । ३ । वनानां विद्याप्रकाशानां पतिः पालयिता तत्सम्बुद्धौ ४ । १० ॥

वनस्पतिः वनानां पाता वा पालयिता वा । नि० ८. ३ ॥

अग्निर्वै वनस्पतिः । कौ० १०. ६ ॥ प्राणो वनस्पतिः । कौ० १२. ७ ॥ प्राणो वै वनस्पतिः । ऐ० २. ४, १० ॥ स ( वनस्पतिः ) उ वै पयोभाजनः । कौ० १०. ६ ॥ वनस्पतयो वै द्रु । तै० १. ३. ९. १ ॥ यदुग्रो देव ओषधयो वनस्पतयस्तेन । कौ० ६. ५ ॥ मौर्ज्यं वा एतद्वनस्पतीनां ( यदुदुम्बरः ) । ऐ० ७. ३२ ॥ ८. १६ ॥ अथो सर्वऽएते वनस्पतयो यदुदुम्बरः । श० ७. ५. १. १५ ॥ तेजो ह वाऽएतद्वनस्पतीनां यद्बाह्याशकलस्तस्माद्यदा बाह्याशकलमपतक्ष्णुवन्त्यथ शुष्यन्ति । श० ३. ७. १. ८ ॥ वनस्पतयो हि यज्ञिया न हि मनुष्या यजेरन यद्वनस्पतयो न स्युः । श० ३. २. २. ९ ॥

वनाति सम्भजेत् ७ । १५ । ४ ॥

वनामहे [ वनामहे ] सम्भजामहे ( अत्र व्यत्ययेनात्मनेपदम् ) १ । १५ । ८ । याचामहे २६ । १८ ॥

वनिता याचकः ३ । १३ । ३ ॥

वनिनः वनं रश्मिसम्बन्धो विद्यते येषां ते वायवः । ( अत्र सम्बन्धार्थ इनिः ) १ । ३६ । ३ । प्रशस्ता रश्मयो वनानि वा येषां तेषु वा तान् १ । ५८ । ४ । वनस्य संविभागस्य रश्मीनां वा प्रशस्तः सम्बन्धो विद्यते यस्य तस्य १ । ६४ । १० । वनानि प्रशस्तविद्यारश्मयो विद्यन्ते येषां ते १ । १३६ १० । वनानि जलानि (वनमित्युदकनाम । निघ० १ । १२ ) १ । १४० । २ । रश्मिवतः १ । १८० । ३ । याच्ञावन्तः ३ । ४० । ७ । वनसम्बन्धिनः ६ । १३ । १ । वनानि बहवो किरणा विद्यन्ते येषु तान् ७ । ४ । ५ । वनानि सन्ति येषु ते वृक्षाः ७ । ३५ । ५ । [ वनिनम् ] संभक्तारम् १ । ६४ । १२। वनं बहूदकं विद्यते यस्मिँस्तम् १ । ११६ । १ ॥

वनिषीष्ठ याचेत १ । १२७ । ७ ॥

वनिष्ठः अतिशयेन वनिता संविभाजकः ७ । १८ । १ ॥

वनिष्ठुः सम्भाजी ( अत्र वन संभक्तावित्यस्मादौणादिक इष्टुप्प्रत्ययः ) ११ । ८७ । आन्त्रविशेषः ( अत्र सुपां सुलुगित्यमः स्थाने सुरादेशः ) ३६ । ६ । [वनिष्ठुना] याचनेन २५ । ७ ॥

वनीयान् अतिशयेन विभाजकः ५ । ७७ । २॥

वनुथः याचेथाम् २ । ३० । ६ । कामयेथे ७। १७ ॥

वनुयाम [ वनुयामा ] इच्छेम याचेम १ । ७३ । ६ । याचेमहि ५ । ३ । ६। सम्भजेम १ । १३२ । १ ॥

वनुषः याचकाः ३ । २७ । ११ । सेवनीयाम् ६ । ६ । ६ । संविभाजकान् ६ । २५ । ३ । सेवमानस्य ४ । २२ । ६ ॥ [ वनुषाम् ] राज्यस्य याचकानां शत्रूणाम्

६ । ६८ । ६ ॥

वनुषे याचसे ४ । ४४ । ३ ॥

वनुष्यन् सेवयन् ६ । ६ । ६ । [ वनुष्यतः ] संभक्तान् १ । १३२ । १ । हिंसन्तम् ( अत्र विभक्तिव्यत्ययः ) २ । २५ । १ । याचमानस्य २ । २५ । २ । हिंसतः २ । २६ । १ । याचमानान् ६ । १५ । १२ । [ वनुष्यताम् ] क्रुध्यतां बाधमानानाम्वा ६ । ६२ । १० ॥

वनुष्यात् याचेत ६ । ५ । ४ ॥

वनुष्व प्रयच्छ १ । १६६ । १ ॥

वनून् अधर्मसेविनः ४ । ३० । ५ ॥

वनेः सेवन करने वाले विद्यार्थी की २ । ६ । १ ॥

वनेजाः किरणसमुदाये जायते सः ६ । ३ । ३ ॥

वनेम [ वनेम ] संविभागेनानुतिष्ठेम १ । ७० । १ । विभज्य दद्याम; सम्भजेम १ । १२६ । ७ ॥

वनेराट् या वने सेवनीये किरणे वा राजते ६ । १२ । ३ ॥

वनेवने जङ्गले जङ्गले, अग्नाविव जीवे जीवे ५ । ११ । ६ । रश्मौ रश्मौ, पदार्थे पदार्थे वा १५ । २८ ॥

वनोति [ वनोति ] याचते ( अत्र व्यत्ययेन परस्मैपदम् ) १ । १३३ । ७ ॥

वनोति कान्तिकर्मा । निघ० २. ६ ॥

वनोषि याचसे सम्भजसि वा १ । ३१ । १३ ॥

वन्त सम्भजत ( अत्र बहुलं छन्दसीति शपो लुक् ) १ । १३६ । १० ॥

वन्तारः विभाजकाः ३ । ३० । १८ ॥

वन्दते कामयते ४ । ५० । ७ । स्तौति तद्गुणान् प्रकाशयति ३ । ४६ ॥

वन्दध्यै वन्दितुम् (अत्र तुमर्थे सेसेनसे० इति कध्यैप्रत्ययः ) १ । २७ । १ । अभिवन्दितुं स्तोतुम् १ । ६१ । ५ ॥

वन्दनः स्तोतुमर्हः १ । ११६ । ६ । [ वन्दनानि ] अभिवादनानि स्तवनानि वा ३ । ४३ । ४ । [ वन्दना ] वन्दनानि स्तुत्यानि कर्माणि ७ । २१ । ५ । [ वन्दनम् ] गुणकीर्तनम् १ । ११२ । ५ । स्तुत्यं यानम् १ । ११८ । ६ । वन्दनीयम् १ । ११६ । ७ । [ वन्दनाय ] अभितः सत्काराहीयापत्याय प्रशंसायै च १ । ११६ । ११ । स्तवनाय १ । ११७ । ५ ॥

वन्दनश्रुत् येन वायुना वन्दनं स्तवनं भाषणं शृणोति श्रावयति वा तत्सम्बुद्धौ १ । ५५ । ७ ॥

वन्दनेस्थाः स्तवने तिष्ठति यः १ । १७३ । ६ ॥

वन्दमानः स्तुवन्नभिगायन् १ । २४ । ११ । [ वन्दमानम् ] स्तूयमानम् ( अत्र कर्मणि शानच् ) २ । ३३ । १२ ॥

वन्दस्व कामय १ । ३८ । १५ ।

वन्दामहे कामयामहे ४ । ५७ । ६ ॥

वन्दारु वन्दनशीलम् ४ । ४३ । १ । प्रशंस-

नीय धर्म्यम् ५ । १ । १२ । प्रशंसनीय यज्ञ १५ । २५ ॥

वन्दारु ( यजु० १२. ४२ ) वन्दारुष्टे तन्वं वन्देऽग्नऽइति वन्दिता तेऽहं तन्वं वन्देऽग्नऽइत्येतत् । श० ६. ८. २. ९ ॥

वन्दारुः अभिवादनशीलः १२ । ४२ ॥

वन्दितारम् स्तावकम् २ । ३४ । १५ ॥

वन्दिषीमहि नमेम स्तुवीमहि ३ । ५२ ॥

वन्दे [ वन्दे ] प्रशंसामि सत्करोमि वा ५ । २८ । ४ नमस्करोमि ७ । ६ । १ । स्तौमि २ । ३५ । १२ ॥

वन्द्यः स्तोतुमर्हः २ । ७ । ४ । प्रशंसनीयः ४। ५४ । १ । वन्दितुं नमस्कर्तुं योग्यः २६ । ३ । सत्करणीय ६ ।६८।१ ( १४५ सत्य० ) [ वन्द्यासः ] स्तोतव्याः सत्कर्तव्याश्च १। ६० । ४ । वन्दितुं कामयितुमर्हाः १। १६८ २ ॥

वन्द्यः वन्दितव्यः । नि० ८. ८ ॥

वन्धुरः बन्धनविशेषाः ( सुपां सुलुगिति जसः स्थाने सुः ) १ । ३४। ९॥ [वन्धुरे] दृढबन्धनयुक्ते १ । १३९ । ४ । प्रेमबन्धने ६ । ४७ । ९ ॥ [ वन्धुरेषु ] यन्त्राणां बन्धनेषु १ । ६४ । ९ ॥

वन्धुरयुः वन्धुरमायुर्यस्य सः ४ । ४४ । १ ॥

वन्धुरेस्थाः यो वन्धुरे बन्धने तिष्ठति सः ३ । ४३ । १ ॥

वन्याय वने जङ्गले भवाय १६ । ३४ ॥

वन्वन् याचन्ते ७ । ४८ । ३ ॥

वन्वन् संभजन् ६ । १२ । ४ । धर्मं सेवमानः १९ । ५३। [ वन्वते ] सत्यासत्ययोर्विभाजकाय २ । २१ । २ ॥

वन्वन्तु याचन्ताम् ७ । २१ । ६ ॥

वन्वानः सम्भजमानः ३ । ८ । २ । याचमानः ५ । २९ । ६ ॥

वप निक्षिप १६ । ९ ॥

वपः सन्तनुहि ४ । १६ । १३ ॥

वपत वपत १२ । ६८ ( १६३ भूमि० ) ॥

वपति वपति १२ । ७१ ॥

वपतु स्थापयतु ३५ । ५ ॥

वपते बीजानि सन्तनुते १ । १६४ । ४४ ॥

वपन्त वपन्ति ७ । ५६ । ३ ॥

वपन्ता वपन्तौ १ । ११७ । २१ ॥

वपन्ता निवपन्तौ । नि० ६. २६ ॥

वपन्ति बोते हैं १४ । २ । ३८ ( १७० विधिः )

वपन्तु विस्तारयन्तु २ । ३३ । ११ ॥ छिन्दन्तु १६ । ५२ ॥

वपम् यो वपति क्षेत्राणि कृषीवल इव विद्यादिशुभान् गुणांस्तम् ३० । ७ ॥

वपाः वपन्ति याभिः क्रियाभिस्ताः २१ ।३१। [ वपाम् ] वपनम् १२। १०३ । वपन्ति यस्यां भूमौ ताम् ३५ । २० ॥ [वपायाः] बीजतन्तुसन्तानिकायाः क्रियायाः, बीज-

वर्धिकायाः क्रियाया वा २१ । ४१ ॥

शुक्ला वपा । ऐ० २. १४ ॥ आत्मा वपा । कौ० १०. ५ ॥ यजमानदेवत्या वै वपा । तै० ३. ९. १०. १ ॥ हुत्वा वपामेवाग्रेऽभिघारयति । श० ३. ८. २. २४ ॥ प्रातः पशुमालभन्ते तस्य वपया प्रचरन्ति । तां० ५. १०. ९ ॥

वपामि विस्तारयामि १ । २१ ॥

वपावान् वपन्ति यया क्रियया सा वपा सा प्रशस्ता विद्यते यस्य सः २० । ३७ ॥ [ वपावन्तम् ] विद्याबीजं विस्तारयन्तम् ५ । ८३ । ७ । बहूनि वपनाधिकरणानि विद्यन्ते यस्मिंस्तम् ६ । १ । ३ ॥

वपुः शरीरमुदकं वा । ( वपुरिति उदकनाम । निघ० १ । १२ ) १६ । ८३ ॥ [ वपूंषि ] रूपाणि ४ । २३ । ६ ॥ [ वपुषे ] शरीरधारणपोषणाग्निरूपप्रकाशाय १ । ६४ । ४ ॥

वपुः उदकनाम । निघ० १. १२ ॥ रूपनाम । ३. ७ ॥

वपुर्हि पशवः । ऐ० ५. ६ ॥

वपुषाय वपूंषि रूपाणि विद्यन्ते यस्मिँस्तस्मै व्यवहाराय ( अत्र अर्श आदिभ्योऽजिति वेद्यम् ) ३ । २ । १५ ॥

वपुष्टरा अतिशयेन रूपलावण्ययुक्तौ २ । ३ । ७ ॥

वपुष्यः वपुष्षु रूपेषु भवः ४ । १ । ८ । वपुष्षु साधुः ४ । १ । १२ । वपुषि सुन्दरे रूपे भवः ५ । १ । ९ ॥

वपुष्यन् आत्मनो वपू रूपमिच्छन् ३ ।१ । ४॥

वप्संसः सुरूपस्य १ । १८१ । ८ ॥

वभ्रः उद्गलितोदानः ११ । ७४ ॥

वम्रः उद्गिरकस्त्यक्तः १ । ५१ । ६ ॥ [वम्रम्] रोगनिवृत्तये वमनकर्त्तारम् १ । ११२ । १५ ॥

वम्र्यः अल्पवयस्यः ३७ । ४ । [ वम्रीभिः ] उद्गीर्णाभिः ४ । १६ । ६ ॥

वयः पक्षी १ । ८५ । ७ । जीवनम् १ । ६६ । २ । विज्ञानम् १ । ७१ । ७ । आयुः १ । १११ । २ । कमनीयम् १ । १५१ । ६ । कामम् २ । ४ । ६ । कमनीयं धनम् ४ । १७ । १८ । प्रदीपकं तेजः ५ । १६ । १ । अवस्थात्रये सुखभोगं जीवनं, चिरजीवनसुखं वा ७ । ४७ । कमनीयं न्यायविनयपराक्रमव्याप्तं, प्रजनकः, कमिता, विविधव्यवहारव्यापी, सुखप्रापकं, कमनीयं कर्म, कमनीयं, पराक्रमं, बलवान् वा १४ । ६ । प्रजननं, प्रापणं वा १४ । १० । तृप्तिम् २१ । १४ । येन व्येति व्याप्नोति तत् २१ । १५ । कमनीयं निजव्यवहारम् २१ । २२ । गमनम् २८ । २८ । कमनीयं प्रियम् २८ । ३६ । कमनीयं वस्तु २८ । ३३ । विद्याः कामयमानाः, प्राप्तविद्या वा १ । १२७ । ८ । व्यापिनः ४ । ४३ । ६ । पक्षिण इव गायत्र्यादीनि छन्दांसि २ । १६ । [वयांसि] कमनीयान्यन्नानि ३ । ३ । ७ । [ वयसा ] व्याप्त्या १८ । ५१ । [ वयोभिः ] यावज्जीवनैः १२ । १ व्यापकैर्गुणैः १२ । २५॥

वयः अन्ननाम । निघ० २. ७ ॥

एतद्वै वयसामोजिष्ठं बलिष्ठं यच्छ्येनः । श० ३. ३. ४. १५ ॥ स ( श्येनः ) हि वयसामाशिष्ठः । तां० १३. १०. १४ ॥ श्येनो वै वयसां

क्षेपिष्ठः। ष० ३. ८॥ पशवो वै वयांसि। श० ९. ३. ३. ७॥ निर्ऋतेर्वा एतन्मुखं यद्वयांसि यच्छकुनयः। ऐ० २. १५॥ निर्णामौ हि वयसः पक्षयोर्भवतो वितृतीये वितृतीये हि वयसः पक्षयोर्निर्णामौ भवतोऽन्तरे वितृतीयेऽन्तरे हि वितृतीये वयसः पक्षयोर्निर्णामौ भवतः। श० १०. २. १. ५॥ देवाननु वयांस्योषधयो वनस्पतयः। श० १. ५. २. ४॥ (ऋ० ३. ३. २९. ८) प्राणो वै वयः। ऐ० १. २८॥ पृथुं तिरश्चा वयसा बृहन्तम्" (यजु० ११. २३) इति पृथुर्वाऽएष (अग्निः) तिर्यङ् वयसो बृहन्धूमेन (वयः=धूमः)। श० ६. ३. ३. १९॥ (यजु० १२. १०६) धूमो वाऽअस्य (अग्नेः) श्रवो वयः स ह्येनममुष्मिँल्लोके स्रावयति। श० ७. ३. १. २९॥ "दिव्यं सुपर्णं वयसा बृहन्तम्" (यजु० १८. ५१) इति दिव्यो वाऽएष (अग्निः) सुपर्णो वयसो बृहन्धूमेन (वयः= धूमः)। श० ९.४.४.३॥ अथ यदश्रु संक्षरितमासीत्तानि वयांस्यभवन्। श० ६.१.२.२॥ तार्क्ष्यो वैपश्यतः राजेत्याह तस्य वयांसि विशः...... पुराणं वेदः। श० १३. ४. ३. १३॥ उरस एवास्य (इन्द्रस्य) हृदयात्त्विषिरस्रवत्स श्येनोऽपाष्टिहाभवद्वयसां राजा। श० १२. ७. १. ६॥

**वयति** सन्तनोति १९। ८२। विस्तृणाति १६। ८३॥

**वयन्तः** व्याप्नुवन्तः ७। ३३। ६॥ [वयतः] प्राप्नुवतः २। २८। ५॥

**वयन्ति** [वयन्ति] व्याप्नुवन्ति ६। ६। २। निर्मिमते ५। ४७। ६॥

**वयन्ती** गच्छन्ती २। ३८। ४॥

**वयस्कृत्** यद्वयस्करोति तज्जीवनसाधनम् १५। ५। यो वयो वृद्धावस्थापर्यन्तं विद्यासुखयुक्तमायुः करोति सः १। ३१। १०॥

**वयस्वन्तः** प्रशस्तं पूर्णमायुर्विद्यते येषां ते (अत्र प्रशंसार्थे मतुप्) ३। १८॥

**वयाः** शाखाः २। ३५। ८। पक्षिणः ६। १३। १। प्रापकः ७। ४०। ५। [वयाम्] व्यापिकां सुखनीतिम् १५। २४। वयसामवस्थावतां प्राणिनाम् (अत्रामि टिलोपश्छान्दसः) ३४। ४८॥

वयाः शाखा वेतेर्वातायना भवन्ति। नि० १. ४॥

**वयाकिनम्** व्यापिनम् ५। ४४। ५॥

**वयाम्** वयम् (अत्राऽन्येषामपीति दीर्घः) १। १६५। १५॥

**वयावन्तम्** बहुपदार्थयुक्तम् ६। २। ५॥

**वयिष्यन्** व्ययं करिष्यन् ७। ३३। १२॥

**वयुनम्** कर्म प्रज्ञानम्वा ५। ४८। २॥ [वयुनेषु] प्रज्ञापनेषु २। ३४। ४॥

वयुनम् प्रज्ञानाम। निघ० ३. ९॥ वयुनम् वेतेः। कान्तिर्वा प्रज्ञा वा। नि० ५. १५॥ वयुनानि प्रज्ञानानि। ८. २०॥

**वयुनशः** प्रज्ञानेन ६। ५२। १२॥

**वयुनावत्** प्रज्ञानवत् ४। ५१। १॥

वयुनावत् प्रज्ञानवत्। नि० ५. १५॥

**वयुनावित्** यो वयुनानि प्रज्ञानानि वेत्ति ५। ८१। १। सर्वेषां जीवानां शुभाशुभानि यानि प्रज्ञानानि प्रजाश्च तानि यो वेद सः (१६१ भूमि०)॥

(यजु० ११. ४) वयुनाविदित्येष (प्रजापतिः) हीदं वयुनमविन्दत्। श० ६. ३. १. १६॥

**वयोधाः** यो वयो जीवनं दधातीति १। ७३। १। यो वयः प्रजननं दधाति २। ३। ६।

यः कमनीयानि वयांसि जीवनधनादीनि दधाति सः ४ । ३ । १० यो वयो जीवनं कमनीयं वस्तु दधाति सः ४। १७ । १७ ॥ [वयोधसम्] वयोवर्धकम् २८।२ ५। चिरजीविनम् २८।४२। त्रयः कर्मोपासनाज्ञानानि वत्सा इव यस्य तम् २८। २७। कमनीयानां विद्याबोधादीनां धातारम् २८ । २८। कामनाधारकम् २८ । २६। कमनीयसुखधारकम् २८ । ३० ॥

**वयोनाधैः** वयांसि जीवनादीनि गायत्र्यादिछन्दांसि वा नह्यन्ति यैः प्राणैस्तैः, वयांसि विज्ञानानि नह्यन्ति यैर्विद्वद्भिः, वेदादिशास्त्रप्रज्ञापनप्रबन्धकैः, पूर्णविद्याविज्ञानप्रचारप्रबन्धकैः, ये वयः कामयमानं जीवनं नह्यन्ति तैः १४ । ७ ॥

**वयोवयः** कमनीयं जीवनं जीवनम् ५ । १५ । ४ ॥

**वयोवृधः** ये वयसा वर्धन्ते वयो वर्धयन्ति वा ५ । ५४ । २ ॥ [वयोवृधा] ये वयः कमनीयं जीवनं वर्धयतः ५ । ५ । ६ ॥

**वय्यम्** यो वयते जानाति तम् । ( अत्र वयधातोर्बाहुलकादौणादिको यत्प्रत्ययः ) १ । ५४ । ६॥ [वय्याय] प्राप्तव्याय सुखाय ४ । १६ । ६ ॥

**वय्येव** [वय्याऽइव] पदसाधिका नलिकेव २।३। ६ ।

**वरत्** वृणुयात् ४ । २ । ६ ॥

**वरते** [वरते] स्वीकरोति ४ । ४२ । ६ ॥

**वरत्राः** रश्मयः ४ । ५७ । ४ ॥

**वरथः** स्वीकुरुथः ५ । ३१ । ६ ॥

**वरन्त** [वरन्त] कुर्वन्तु (विकरणव्यत्ययेन शप्) १ । १२१ । १५ । स्वीकुर्य्युः १ । १४० । १३ । वरयन्ति २ । २४ । ५ । निवारयन्ति ४ । ६ । ६ ॥

**वरन्ते** [वरन्ते] स्वीकुर्वन्ति ४ । ३२ । ८ ॥

वरन्ते वारयन्ती । नि० १०. २९ ॥

**वरम्** परमोत्तम विज्ञानधनम् १ । ४ । ४। श्रेष्ठम् १ । ८८ । २ । रत्नादिकम् १ । १४० । १३ । वरणीयं बन्धुसमुदायम् २ । ५ । ५ । श्रेष्ठं कर्म २ । १७ । ६ । श्रेष्ठं पतिम् ६ । ६४ । ५ । उत्तमं व्यवहारम् ७। १ । ४ । उत्तमं जनम् ७ । ६।६ । [वराय] श्रेष्ठ्याय १ । ७६ । १ । स्वीकरणाय १ । १४३ । ५ ॥

**वरशिखस्य** वरा श्रेष्ठा शिखा यस्य तस्य ६ । २७ । ४ । वरा शिखा यस्य तद्वत् मेघस्य ६ । २७ । ५ ॥

**वरसत्** यो वरेषु श्रेष्ठेषु सीदति ४ । ४० । ५ ॥ यः उत्तमेषु विद्वत्सु सीदति १२ । १४ ॥

एष ( सूर्य्यः ) वै वरसद् वरं वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपति । रो० ४. २० ॥

**वरस्या** अतिशयेन वरौ ५ । ७३ । २॥ [वरस्याम्] स्वीकर्तव्यां प्रशंसाम् ६।४६।११ ॥

**वरा इव** यथा प्रशस्तविद्याधर्मकर्मस्वभावाः १ । ८३ । २ । वरैस्तुल्याः ५ । ६० । ४ ॥

**वराते** वृणुते १ । ६५ । ३ । वृणुयाताम् ५ । ३२ । ६ ॥

**वरांसि** वराणि १ । १६० । २ । वरणीयानि धर्म्याणि कर्माणि ४ । २१ । ८ । उत्तमानि वस्तूनि ६ । ६२ । १ ॥

**वराहम्** मेघम् १ । ६१ । ७ ॥

वराहः मेघनाम । निघ० १. १० ॥ वराहारः । नि० ५. ४ ॥

**वराहुम** वराणां धर्म्याणां व्यवहाराणां धार्मिकाणां जनानां च हन्तारं दस्युं शत्रुम् १ । १२१ । ११ ॥ [ वराहून् ] वरमाह्वयतः शब्दायमानान् १ । ८८ । ५ ॥

**वरिमता** बहुस्थूलत्वेन सह १ । १०८ । २ ॥

**वरिमा** वरस्य श्रेष्ठस्य भावः १८ । ८ । [ वरिम्णा ] श्रेष्ठगुणसमूहेन ३ । ५ । उरोर्बहोर्भावेन ११ । २६ । अतिशयेनोरुर्बहुस्तेन व्यापकत्वेन १३ । २ । महापुरुषार्थेन १५ । १० । [ वरिमन् ] अतिशयेन श्रेष्ठे ६ । ६३ । ११ । बहुगुणयुक्त ४ । ५४। ४ ॥

**वरिवः** भृश रक्षणम् ५ । ३७ । सुखकारकं सेवनम् ७ । ४४ । सत्यसेवनम् १५ । ४ । विद्वत्परिचरणम् १५ । ५ ।

वरिवः धननाम । निघ० २. १० ॥

**वरिवस्यन्** सेवमानः ६ । २० । ११ ॥

**वरिवस्यन्तु** परिचरन्तु १ । १२२ । ३ ॥

**वरिवस्या** वरिवसि परिचर्यायां भवानि सेवनकर्माणि १ । १८१ । ६ ॥

**वरिवोदाः** सत्यधर्मविद्वत्सेवाप्रापिकाः १७ । १५ ॥

**वरिवोधाम्** वरिवः परिचरणं सुखसेवनं दधाति येन तम् १ । ११६ । १ ॥

**वरिवोवित्** परिचरणवेत्ता २६ । १७ । [ वरिवोविदः ] ये वरिवः परिचरणं विदन्ति जानन्ति यद्वा वरिवो धनं वेदयन्ति प्रापयन्ति ते ३३ । ६४ । [ वरिवोविदा ] परिचरणं विन्दति प्राप्नोति येन तेन पराक्रमेण १ । १७५ । ५ ॥

**वरिवोवित्तरा** वरिवः सेवनं विद्वद्वन्दनं वा यया सुमत्या सातिशयिता १ । १०७ । १ । वरिवः सत्यं व्यवहारस्येत्यनया साऽतिशयिता ८ । ४ । यातिशयेन परिचरणलब्ध्री ३३ । ६८ ॥

**वरिष्ठः** अतिशयेन वरिता ६ । ३७ । ४ । [ वरिष्ठम् ] अतिश्रेष्ठम् ५ । ४८ । ३ ॥

वरिष्ठम् वर्षिष्ठम् । नि० ५. १ ॥

**वरिष्ठा** अतिशयेनोत्तमा ६ । ४१ । २ । [ वरिष्ठाम् ] अतिशयेन वरां गतिम् ११ । १२ । [ वरिष्ठया ] अतिशयेन स्वीकर्त्तव्यया ५ । २५ । ३ ॥

संवत् ( यजु० ११. १२ ) इयं ( पृथिवी ) वै वरिष्ठा संवत् । श० ६. ३. २. २ ॥

**वरीमभिः** वृणवन्ति ये तैः शिल्पिभिः १ । ५५ । २ । वर्तुं स्वीकर्तुमर्हैः १ । १३१ । १ । [ वरीमन् ] अतिशयेन वरे ६ । ६३ । ३ ॥

**वरीयः** अतिशयेन वरम् १ । १२४ । ५ । अतिशयेन बहु २ । १२ । २ । अत्युत्तमं धनादिकम् ५ । ४६ । ५ । अतिशयेन वर-

मन्नादिकम् ६ । ७५ । १८ । अतिशयितं बह्वैश्वर्यम् १७ । ४९ ॥

वरीयः वरतरमुरुतरं वा । नि० ८. ९ ॥

**वरीयसी** अतिशयेन वरा १ । १३६ । २ ॥

**वरीयान्** वरीयान् ३ । ३६ । ६ ॥

**वरीवर्ति** समन्ताद् भृशमावृणोति समन्ताद् वर्तते वा ३७ । १७ ॥

**वरीवृजत्** भृशं वर्जय ७ । २४ । ४ ॥

**वरुणः** जलं वायुश्चन्द्रो वा १ । १७ । ५ । बाह्याभ्यन्तरस्थो वायुः १ । २३ । ६ । श्रेष्ठः १ । २४ । ७ । श्रेष्ठतम उत्तमव्यवहारहेतुर्वा १ । २४ । १३ । उत्तमो विद्वान् १ । २५ । १० । विविधपाशैः शत्रूणां बन्धकः १ । २५ । १३ । सकलविद्यासु वरः १ । २६ । ४ । चन्द्रसमुद्रतारकादिसमूहः १ । ४० । ५ । उत्तमगुणयोगेन श्रेष्ठत्वात् सर्वाध्यक्षत्वार्हः १ । ४१ । १ । उत्तमोपदेष्टोदानो वा १ । ४३ । ३ । वरो जीवः २ । ३८ । ८ । आपः २ । ३८ । ६ । सर्वोत्तमप्रबन्धकर्त्ता ४ । ४२। २। सेनेशः ५ । ४० । ७ । वायुरिव राजा ५ । ८५ । ४ । शमादिगुणान्वितः ६ । ६२ । ६ । जलाधिपतिः ७।५६ ।२५। परमेश्वरः सूर्यो वायुर्वा ४।३१। वरगुणप्रदः, वरः सर्वोत्तमः प्रशस्तविद्योऽनूचानो विद्वानध्यापकः, सत्योपदेष्टाप्ता ७ । ४७ । वरो न्यायाधीशः ११ । ६० । जलं यस्यावयवः सः २६ । १ । जलमिव शान्तिप्रदः ३६ । ६ । सब से उत्तम सब का राजा सर्वोत्तम अधिपति ३ । २७ । ३ । ( १६ पञ्च० ) [वरुणम्] अपानम् १।२।७। [वरुणमिव] पाशैर्बन्धकं व्याधमिव ६।४८।१४॥ [वरुणेन] वरेण पुरुषार्थेन ४ । ३४ । ७ । [वरुणाय] समुद्रादिषु गमनाय ३६।२ [ वरुणस्य ] मेघस्य ( वरुण इति पदनाम । निघ० ५ । ६ ) २।२८।४। उदानस्येव बलवतो रोगस्य ६।७४।३। वरीतुं प्राप्तुं योग्यस्य श्रेष्ठस्य जगतः, वरपदार्थसमूहस्य, उत्कृष्टगुणसमूहस्य वा ४।३६। दुःखेनाच्छादकस्य तिरस्कर्त्तुः ५।३६। अग्नेः, विद्युतो वा ७ ४२। वीरगुणोपेतस्य ८ । २३ । वरस्य प्राप्तव्यस्य सुखस्य १३ । ५० । उत्कृष्ट व्यवहार में विघ्न रूप दुर्व्यसनी पुरुष के १४ । १। ५७ ( १४६ विधिः ) [ वरुणयोः ] उदान इव वर्त्तमानयोः ६ । ५१ । १ । [ वरुणा ] श्रेष्ठ सचिव ४ । ४१ । ६ ॥

वरुणः वृणोतीति सतः । नि० १०. ३ ॥

( आपः ) यच्च वृत्वाऽतिष्ठंस्तद्वरणोऽभवत्तं वा एतं वरणं सन्तं वरुण इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः । गो० पू० १. ७ ॥ वरुणो वै जुम्बकः ( यजु० २५. ९ ) श० १३. ३. ६. ५ ॥ तै० ३. ९. १५. ३ ॥ रात्रिर्वरुणः । ऐ० ४. १० ॥ तां० २५. १०. १० ॥ वारुणी रात्रिः । तै० १. ७. १०. १ ॥ यः प्राणः स वरुणः । गो० उ० ४. ११ ॥ यो वै वरुणः सोऽग्निः । श० ५. २. ४. १३ ॥ यो वा अग्निः स वरुणस्तदप्येतदृषिणोक्तं त्वमग्ने वरुणो जायसे यदिति । ऐ० ६. २६ ॥ अथ यत्रैतत्प्रदीप्ततरो भवति । तर्हि ह्येष ( अग्निः ) भवति वरुणः । श० २. ३. २. १०॥ स यदग्निर्घोरसंस्पर्शस्तदस्य वारुण रूपम् । ऐ० ३. ४ ॥ वरुण्यो वाऽएष योऽग्निना शृतोऽथैष मन्त्रो य ऊष्मणा शृतः । श० ५. ३. २. ८ ॥ यः ( अर्द्धमासः ) अपक्षीयते स वरुणः । तां० २५. १०. १० ॥ यः ( अर्धमासः ) एवापूर्यते

स वरुणः। श० २. ४. ४. १८ ॥ क्लोमा वरुणः। श० १२. ९. १. १५ ॥ श्रीर्वै वरुणः। कौ० १८. ९ ॥ वरुणः (श्रियः) साम्राज्यम् (आदत्त)। श० ११. ४. ३. ३ ॥ द्यावापृथिवी वै मित्रावरुणयोः प्रियं धाम। तां० १४. २. ४ ॥ अयं वै (पृथिवी-) लोको मित्रोऽसौ (द्युलोकः) वरुणः। श० १२. ९. २. १२ ॥ व्यानो वरुणः। श० १२. ९. १. १६ ॥ (यजु० १४. २४) अपानो वरुणः। श० ८. ४. २. ६ ॥ १२. ९. २. १२ ॥ योनिरेव वरुणः। श० १२. ९. १. १७ ॥ वरुणो दक्षः। श० ४. १. ४. १ ॥ वरुण एव सविता। जै० उ० ४. २७. ३ ॥ स वा एषो (सूर्यः) ऽपः प्रविश्य वरुणो भवति। कौ० १८. ९ ॥ वरुण आदित्यैः (उदक्रामत्)। ऐ० १. २४ ॥ वरुण आदित्यैः (व्यद्रवत्)। श० ३.४. २.१ ॥ संवत्सरो वरुणः। श० ४. ४. ५. १८ ॥ संवत्सरो हि वरुणः। श० ४. १. ४. १० ॥ क्षत्रं वरुणः। श० ४. १. ४. १ ॥ गो० उ० ६. ७ ॥ क्षत्रं वै वरुणः। श० २. ५. २. ६, ३४ ॥ कौ० ७. १० ॥ १२. ८ ॥ क्षत्रस्य राजा वरुणोऽधिराजः। नक्षत्राणां शतभिषग्वसिष्ठः। तै० ३. १. २. ७॥ इन्द्रस्य (="वरुणस्य" इति सायणः) शतभिषक् (नक्षत्रम्)। तै० १ ५. १. ५ ॥ इन्द्र उ वै वरुणः स उ वै पयोभाजनः। कौ० ५. ४ ॥ इन्द्रो वै वरुणः स उ वै पयोभाजनः। गो० उ० १. २२ ॥ तद्यदेवात्र पयस्तन्मित्रस्य सोम एव वरुणस्य। श० ४. १. ४. ९ ॥ वारुण यवमयं चरुं निर्वपति। तै० १. ७. २. ६ ॥ वारुणो यवमयश्चरुः। श० ५. २.४. ११ ॥ वरुण्यो ह वाऽअग्रे यवः। श० २. ५. २. १ ॥ वरुण्यो यवः। श० ४. २. १. ११ ॥ निर्व्वरुणत्वाय (="वरुणकृतबाधपरिहाराय" इति सायणः) एव यवाः तां० १८. ९. १७॥ (उपसद्देवतारूपाया इषोः) वरुणः पर्णानि। ऐ० १. २५ ॥ यत्पश्चाद्वासि वरुणो राजा भूतो वासि (प्रतीची दिग् वरुणोऽधिपतिः-अथर्ववेदे ३. २७. ३)। जै० उ० ३. २१. २ ॥ एषा (उत्तरा) वै वरुणस्य दिक्। तै० ३. ८. २०. ४ ॥ यद्वै यज्ञस्य दुरिष्टं तद्वरुणो गृह्णाति। तां० १३. २. ४. ॥ १५. १. ३ ॥ यद्वस्य (इंजानस्य) दुरिष्टं भवति वरुणोऽस्य तद् गृह्णाति। श० ४. ५. १. ६ ॥ वरुणेन (यज्ञस्य) दुरिष्टं (शमयति)। तै० १. २. ५. ३ ॥ वरुणः (यज्ञस्य) स्विष्टम् (पाति)। ऐ० ३. ३८ ॥ ७. ५ ॥ सत्यानृते वरुणः। तै० १. ७. १०. ४॥ अनृते खलु वै क्रियमाणे वरुणो गृह्णाति। तै० १. ७. २. ६ ॥ वरुणो वा एतं गृह्णाति यः पाप्मना गृहीतो भवति। श० १२. ७. २. १७ ॥ वरुण्यं वाऽएतत्स्त्री करोति यदन्यस्य सत्यन्येन चरति। श० २. ५. २. २० ॥ (अनडुही वहला) यत्स्त्री सती वहत्यधर्मेण तदस्यै वारुणꣳ रूपम्। श० ५. २. ४. १३ ॥ वरुण! धर्म्मणां पते। तै० ३. ११. ४. १ ॥ वरुणः (एवैनं) धर्म्मपतीनां (सुवते)। तै० १. ७. ४. २ ॥ वरुणो वाऽआर्पयिता। श० ५. ५. ४. ३१ ॥ सवो वै देवानां वरुणः। श० ५. ३. १. ५ ॥ वरुणोऽन्नपतिः। श० १२. ७. २. २० ॥ वरुणः सम्राट् सम्राट्पतिः। तै० २. ५. ७ ३ ॥ श० ११. ४. ३. १० ॥ वरुणो वै देवानांꣳ राजा। श० १२. ८. ३. १० ॥ विराड् वरुणस्य पत्नी। गो० उ० २. ९ ॥ अथ यदप्सु वरुणं यजति स्व एवैनं तदायतने प्रीणाति। कौ० ५. ४ ॥ अप्सु वै वरुणः। तै० १. ६. ५. ६ ॥ तस्य (प्रजापतेः) यद् रेतसः प्रथममुददीप्यत तदसावादित्योऽभवद्यद् द्वितीयमासीत्तद् भृगुरभवत्तं वरुणो न्यगृह्णीत तस्मात्स भृगुर्वारुणिः। ऐ० ३. ३४ ॥ वरुणस्य वै सुषुवाणस्य भर्गोऽपाक्रामत्स त्रेधापतद् भृगुस्तृतीयमभवच्छ्रायन्तीयं तृतीयमपस्तृतीयं प्राविशत्। तां० १८. ९. १ ॥ यो ह वाऽअयमपामावर्त्तः स हावभृथः स हैष वरुणस्य पुत्रो वाऽभ्राता वा। श० १२.९.२.४ ॥ वरुण्यो वा अवभृथः। श० ४. ४. ५. १० ॥ एता वाऽअपां वरुणगृहीता याः स्यन्दमानानां न स्यन्दन्ते। श० ४. ४. ५. १० ॥ वरुण्या वाऽएता आपो भवन्ति याः स्यन्दमानानां न स्यन्दन्ते। श० ५. ३. ४. १२ ॥ वरुणस्य वा अभिषिच्यमानस्याप इन्द्रियं वीर्यं निरघ्नन्। तत्सुवर्णꣳ हिरण्यमभवत्।

ष० १. ८. ९. १ ॥ वरुण्यो वै ग्रन्थिः । श० १. ३. १. १६ ॥ वरुण्यो हि ग्रन्थिः । श० ५. २.२. १७ ॥ वरुण्या वाऽएषा यद्रज्जुः । श० ३. २. ४. १८ ॥ वरुण्या वै यज्ञे रज्जुः । श० ६. ४. ३. ७. ४. १ ॥ वरुण्या वै यज्ञे रज्जुः । श० ६. ४. ३. ८ ॥ वरुण्या (='वरुणपाशात्मिका' इति सायणः) रज्जुः । श० १. ३. १. १४ ॥ वारुणो वै पाशः । तै० ३. ३. १०. १ ॥ श० ६. ७. ३. ८॥ अथैयमेव वारुण्यागाऽगीता । जै० उ० १. ५२. ९ ॥ वारुणं एककपालः पुरोडाशो भवति । श० ४. ४. ५. १५ ॥ (श्रीः) वारुणं दशकपालं पुरोडाशम् (अपश्यत्) । श० ११.४. ३.५ ॥ वारुणो दशकपालः (पुरोडाशः) । तां० २१. १०. २३ ॥ स (इन्द्रः) एतं वरुणाय शतभिषजे भेषजेभ्यः पुरोडाशं दशकपालं निरवपत् कृष्णानां व्रीहीणाम् । तै० ३. १.५ ९ ॥ तद्धि वारुणं यत्कृष्णं (वासः) । श० ५. २. ५. १७ ॥ वरुणस्य सायम् (कालः) आसवोऽपानः । तै० १. ५. ३. १ ॥ खलतेर्विक्लिधस्य शुक्लस्य पिङ्गाक्षस्य मूर्द्धन् जुहोति । एतद्वै वरुणस्य रूपम् । तै० ३. ९. १५. ३ ॥ शुक्लस्य खलतेर्विक्लिधस्य पिंगाक्षस्य मूर्धनि जुहोत्येतद्वै वरुणस्य रूपम् । श० १३. ३. ६. ५ ॥ वारुणो वा अश्वः । तै० २. २. ५. ३ ॥ ३. ८. २०. ३ ॥ ३. ९. १६. १ ॥ वरुणो ह वै सोमस्य राज्ञोऽभीवाक्षि प्रतिपिपेष तदश्वयत्ततोऽश्वः समभवत् । श० ४. २. १. ११ ॥ (प्रजापतिः) वारुणमश्वम् (आलिप्सत) । श० ६. २. १. ५ ॥ स हि वारुणो यदश्वः । श० ५. ३. १. ५ ॥ एष वै प्रत्यक्षं वरुणस्य पशुर्यन्मेषः । श० २. ५. २. १६ ॥ वारुणी च हि त्वाष्ट्री चाविः । श० ७. ५. २. २० ॥ यज्ञो वै वैष्णुवारुणः । कौ० १६. ८ ॥ वरुणसवो वाऽएष यद्राजसूयम् । श० ५. ३. ४. १२ ॥ यो राजसूयः स वरुणसवः । तै० २. ७.६.१ ॥ मैत्रो वै दक्षिणः । वारुणः सव्यः । तै० १.७.१०. ॥ वरुण्या वाऽएता ओषधयो याः कृष्टे जायन्तेऽथैते मैत्रायन्नाम्वाः । श० ५. ३. ३. ८ ॥ वरुण्या वाऽएषा (शाखा) या परशुवृक्णाथैषा मैत्री (शाखा) या स्वयम्प्रशीर्णा । श० ५. ३. २. ५ ॥ वरुण्यं वाऽएतद्यन्मथितम् (आज्यं) अथैतन्मैत्रं यत्स्वयमुदितम् । श० ५. ३. २. ६ ॥ एतद्वाऽअवरुण्यं यन्मैत्रम् । श० ३. २. ४. १८ ॥ स (वरुणः) अब्रवीद्यद्वो न कश्चनाऽवृत तदहम्परिहरिष्य इति । किमिति अपध्वान्तं साम्नो वृणेऽपशव्यमिति । जै० उ० १. ५२. ८ ॥

**वरुणध्रुतः** वरुणेन ध्रुतः स्थिरीकृतः ७ । ६० । ६ ॥

**वरुणशेषसः** वरुण उत्तमो जनः शेषो येषां ते ५ । ६५ । ५ ॥

**वरुणानी** वरस्य भार्य्या ५ । ४६ । ८ ॥

[वरुणानीम्] यथा वरुणस्य जलस्येयं शान्तिमाधुर्यादिगुणयुक्ता शक्तिस्तथाभूतम् १ । २२ । १२ । श्रेष्ठस्य स्त्रियम् २ । ३२ । ८ ॥

वरुणानी वरुणस्य पत्नी । नि० १२. ४६ ॥

**वरुण्यात्** वरुणेषु वरेषु भवादपराधात् १२ । ६० ॥

**वरुता** वरिता स्वीकर्त्ता (प्रसित० इत्यादिषु निपातः) १ । १६६ । १ । वारयिता २ । २० । २ । श्रेष्ठः ६ । २५ । ७ ॥

**वरुत्री** वरसुखप्रदा ५ । ४१ । १५ । वरणीया नीतियुक्ता माता ७ । ३८ । ५ । वर्तुमर्हा ७ । ४० । ६ । [वरुत्रीः, वरूत्रीः] अत्यन्तं वराः ३ । ६२ । ३ ॥ वराः ११ । ६१ । [वरूत्रीम्] वरितुं स्वीकर्त्तुमर्हाम् । (अहोरात्राणि वै वरुत्रयः शत० ६ । ४ । २ । ६ ) १ । २२ । १० । वरयित्रीम् १३ । ४४ । [वरूत्रीभिः] वरणीयाभिर्विद्याभिः ७ । ३४ । २२ ॥

अहोरात्राणि वै वरूत्रयोऽह्योरात्रैर्हीदं सर्वं वृतम् । श० ६. ५. ४. ६ ॥

**वरूथम्** वरं श्रेष्ठम् ( अत्र जॄवृभ्यामूथन् उ० २ । ६ । अनेन वृञ्धातोरूथन्प्रत्ययः ) १ । २३ । २१ । गृहम् १ । ५८ । ६ । वरणीयमुत्तमम् १ । ११६ । ११ । स्वीकर्त्तुमर्हम् १ । १८९ । ६ ॥

वरूथम् गृहनाम । निघ० ३. ४ ॥

**वरूथिने** प्रशस्तानि वरूथानि गृहाणि विद्यन्ते यस्य तस्मै १६ । ३५ ॥

**वरूथ्यः** [ वरूथ्यः ] यो वरूथेषु श्रेष्ठेषु गुणकर्मस्वभावेषु भवः ३ । २५ । वरः १५। ४८ । वरूथेषु गृहेषु साधुः २५ । ४७ । [ वरूथ्यम् ] वरूथे गृहे भवम् ६ । ६७ । २ ।

**वरेण्यः** वरितुमर्हः । ( वृञ् एण्यः उ० ३ । २६ । अनेनैण्यप्रत्ययः ) १ । २६ । २ । सर्वत उत्कृष्टतमः १ । २५ । ३ । स्वीकर्त्तुं योग्यः १ । २६ । ७ । [ वरेण्यम् ] प्रशस्तगुणकर्मस्वभावकारकम् १ । ७६ । ८ । स्वीकर्तुं भोक्तुमर्हम् ३ । ४० । ५ । सर्वेभ्य उत्कृष्टं प्राप्तुं योग्यम् ३ । ६२ । १० ॥

वरेण्यः वरणीयः । नि० १२. १३॥
अग्निर्वै वरेण्यम् । जै० उ० ४. २८. १ ॥ आपो वै वरेण्यम् । जै० उ० ४. २८. १ ॥ चन्द्रमा वै वरेण्यम् । जै० उ० ४. २८. १ ॥

**वर्क्** [ वर्क् ] वर्जयसि ( अत्र मन्त्रे घसह्वर० इति च्लेर्लुक् ) १ । ६३ । ७ । छिनत्सि ६ । २६ । ३ ॥

**वर्क्तम्** त्यजतम् १ । १८३ । ४ । त्यजेताम् ६ । ५६ । ७ ॥

**वर्चः** अध्यापनतेजः ३ । ८ । ३ । दीप्तिः ३ । २२ । २ । अन्नम् ३ । २४ । १ । विज्ञानं प्रकाशनं वा २ । २६ । वर्चते दीप्यतेऽनेन तत्, वर्चो विद्याप्रापणम्, विद्याव्यवहारप्रापकम्, प्रकाशकं विद्युत्सूर्य्यप्रसिद्धाग्न्याख्यं तेजो वा ३ । ६ । विद्याप्राप्तिं दीप्तिं वा ३ । १७ । वेदाध्ययनम् ८। ३८ । विद्याबलन्यायदीपनम् ६ । ३७ ॥ पढ़ी हुई विद्या का विचार और उसका नित्य पढ़ना । अथर्व० १२ । ५ । ८ (१७६ विधिः । [ वर्चसे ] अन्नाय, पराक्रमाय, प्रागल्भ्याय, शब्दार्थसम्बन्धविज्ञानाय, अध्ययनदीप्त्यै, शुद्धसिद्धान्तप्रकाशाय ७ । २७ । निजात्मप्रकाशाय, योगबलप्रकाशाय, रोगापहारायौषधाय, सद्गुणप्रकाशाय ७ । २८ । तेजसे स्वप्रकाशाय वेदप्रवर्त्तकाय वा ८ । ३८ । अध्यापनाय २६ । ६ ॥



वर्चः अन्ननाम । निघ० २. ७॥

सूर्य्यस्य वर्चसा । तां० १. ३. ५ ॥ १. ७. ३ ॥
सूर्य्यस्य वर्चसा ( त्वाभिषिञ्चामीति ) । श० ५. ४. २. २ ॥ ततोऽस्मिन् ( अग्नौ ) एतद्वर्च आस । श० ४. ५. ४. ३ ॥ वर्चो वाऽएतद्यद्धिरण्यम् । श० ३. २. ४. ९ ॥ वर्चो वै हिरण्यम् । तै० १. ८. ९. १ ॥ यद्वै वर्चस्वी कर्म चिकीर्षति शक्नोति वै तत्कर्तुम् । श० ५. २. ५. १२ ॥ वर्चो द्वाविंशः ( यजु० १४. २३ ) संवत्सरो वाव वर्चो द्वाविंशस्तस्य द्वादशमासाः सप्तऽर्तवो द्वेऽअहोरात्रे संवत्सर एव वर्चो द्वाविंशस्तद्यत्तमाह वर्च इति संवत्सरो हि सर्वेषां भूतानां वर्चस्वितमः । श० ८. ४. १. १६ ॥

**वर्चस्यम्** वर्चसेऽध्ययनाय हितम् ३४ । ५० ॥

**वर्चस्वत्** प्रशस्तानि वर्चांस्यन्नानि यस्मात्तत् ३४ । ५० ॥

वर्चस्वान् प्रशस्तविद्याध्ययनः, सर्वविद्याध्ययनयुक्तः ८ । ३८ । विद्याविज्ञानवान् १३ । ४० ॥

वर्चस्विन् बहुवर्चोऽध्ययनं विद्यते यस्मिन् ८ । ३८ ॥

वर्चिनम् देदीप्यमानम् ६ । ४७ । २१ ॥

वर्चोदाः वर्चो विद्यां दीप्तिं वा ददातीति २ । २६ । यो वर्चो विज्ञानं ददातीति तत्प्राप्तिहेतुर्वा ३ । १७ । यथायोग्यं प्रकाशं ददाति तत्सम्बुद्धौ, दीप्तिप्रदो जाठराग्निरिव, वर्चो विद्याबलं ददातीति सत्यवक्तृत्वप्रदः विज्ञानप्रदः, ज्ञानदः ७ । २७ । योगब्रह्मविद्याप्रद, विद्याप्रद, वर्चो बलं ददातीति तत्सम्बुद्धौ ७ । २८ । [ वर्चोदसौ ] सूर्याचन्द्रमसाविवातिश्वध्यापकौ ७। २७। न्यायप्रकाशकौ सर्वाधिष्ठातारौ सभापतिन्यायाधीशाविव योगारूढयोगजिज्ञासू ७। २८ ॥

वर्चोधाम् या वर्चो विद्यादीप्तिं दधाति ताम् ४ । ११ ॥

वर्णः वरीतुं योग्यः ४ । २६ । [ वर्णौ ] परस्परेण व्रियमाणौ सुन्दरस्वरूपौ १।१७६। ६॥ [ वर्णम् ] स्वीकर्तुमर्हमतिसुन्दरम् ४। २ । स्वीकारम् ३ । ३४ । ५ । रूपम् १ । ९२ । १० आज्ञापालनस्वीकरणम् १। १०४ । २ । [ वर्णेन ] तेजसा ४ । ५ । १३ ॥ [ वर्णाय ] स्वीकरणाय (प्रवृत्तम्) ३० । ६ । सुरूपसम्पादनाय ३० । १७ । [ वर्णे ] शुक्लादिगुणे २ । १ । १२ ॥

वर्णः वृणोतेः । नि० २.३ ॥
चत्वारो वै वर्णाः । ब्राह्मणो राजन्यो वैश्यः शूद्रः। श० ५. ५. ४. ९ ॥

वर्त वर्तते १ । १६१ । १४ ॥

वर्तताम् सिद्ध करे, पूर्ण करे । २५ । १५ ॥

वर्तते वर्तते १ । १८३ । २ ॥

वर्तनिः वर्तमानः १ । १४० । ९ । [वर्तनिम्] वर्तन्ते यस्मिँस्तं मार्गम् १ । २५ । ६। वर्तन्ते यस्मिँस्तं न्यायमार्गम् ७ । १८। १६ ॥

वर्तनी वर्तते यया क्रियया सा १ । ५३ । ८ ॥

[ वर्तनीः ] मार्गान् ४ । १९ । २ ॥

वर्तन्ते वर्तन्ते ५ । ५३ । ७ ॥

वर्तम् वर्तयतम् ६ । ६२ । ११ ॥

वर्तमानः वर्ततेऽसौ वर्तमानः १ । ३५ । २ ॥

वर्तयत वर्तयत २ । ३४ । ९ ॥

वर्तयतु प्रवृत्तं कारयतु ४ । २० ॥

वर्तयथ निष्पादयथ १ । ३९ । ३ ॥

वर्तयध्यै वर्तयितुम् ५ । ४३ । २ ॥

वर्तयन् वर्तयन् ५ । ४८ । ३ ॥

वर्तयन्तु वर्तयन्तु ७ । ४८ । १ ॥

वर्तया दूरी कुरु २ । २३ । ७ । वर्ताइये ४। ३२ । १५ ॥

वर्तयाते वर्तयेत प्रथमैकवचन आडागमे णिजन्तस्य वर्तेः प्रयोगः ) ५ । ३७ । ३ ॥

वर्तयामसि प्रवर्तयामः १८ । ६४ ॥

वर्तयामि वर्तयामि ३ । ६३ ॥

वर्तयासि वर्तयेः २३ । ७ ॥

वर्तवे वर्तने के अर्थ २ । २५ । ३ । वरितुं स्वीकर्तुम् ३ । ३३ । ४ ॥

वर्तस्व वर्तस्व वर्तते वा १२ । १०३ ॥

वर्ता विपरिवर्तयिता । ( अत्र वृणोतेस्तृच् छन्दस्युभयथेति सार्वधातुकत्वादिडभावः) १ । ४० । ८ । निवारकः ४ । २० । ७ । स्वीकर्ता ५ । २६ । १४ ॥

वर्तिः वर्तन्ते व्यवहरन्ति यस्मिन्मार्गे तम् । (हृपिषिरुहिवृति० उ० ४।१२४. इत्यधिकरण इप्रत्ययः । अत्र सुपां सुलुगिति द्वितीयैकवचनस्य स्थाने सुरादेशः ) १ । ३४ । ४। वर्तन्ते यस्मिन्गमनागमनकर्मणि तत् १ । ६२ । १६ । वर्तमानम् १ । ११६ । १८ । वर्तमानं सैन्यम् १ । ११६ । ४ ॥

वर्तिका संग्रामे प्रवर्तमाना १ । ११७ । १६ । बत्तक इति भाषायाम् । २४ । ३० । [ वर्तिकाम् ] शकुनिस्त्रियम् १ । ११२। ८ । चटकापक्षिणीमिव १ । ११६ । १४। विनयादिसहितां नीतिम् १ । ११८ । ८ ॥

वर्ते वर्तमानो भवेयम् २ । २७ ॥

वर्तेते वर्तेते १ । १८५ । १ ॥

वर्तोभ्याम् गमनागमनाभ्याम् २५ । १ ॥

वर्त्मानि मार्गान् १ । ८५ । ३ ॥

वर्ध [ वर्ध ] वर्धय ५ । ५६ । २ । वर्धस्व ( अत्र व्यत्ययेन परस्मैपदम् ) ६ । १८ । १॥

वर्धः यो वर्धयति तत्सम्बुद्धौ १ । ७१ । ६ ॥

वर्धत् [ वर्धत् ] वर्धयेत् ५ । ६२ । ५ । वर्धते ( अत्र व्यत्ययेन परस्मैपदम् ) ५। ६२।५॥

वर्धत वर्धत २ । २ । १ ॥

वर्धतः यो गुणैर्दोषैर्वा वर्धते तस्य १। ५१।६॥

वर्धतम् वर्धेथाम् (अत्र व्यत्ययेन परस्मैपदम्) ४ । ५० । ११ ॥

वर्धताम् [ वर्धताम् ] वर्धताम् २७ । ४ ॥

वर्धतु [ वर्धतु ] वर्द्धताम् ५ । ३६ । ५ ॥

वर्धते [ वर्धते ] वर्धते १ । ९५ । ५ ॥

वर्धन् वर्धयन्तु ६ । ५१ । ११ ॥

वर्धनः उन्नेता ३ । ३२ । १२ । [ वर्धना ] सुखानां वर्धनानि १ । ५२ । ७ । वर्धन्ते तानि ५ । ७३ । १० । उन्नतिकराणि कर्माणि ७ । २२ । ७ ॥ [ वर्धनम् ] विद्यादिगुणानां वर्धकम् १ । १० । ५ । येन वर्धन्ति तत् १ । ८० । १ । वृद्धिकरम् १ । ११४ । ६ ॥ [ वर्धनेन ] वृद्धिनिमित्तेन न्यायेन सह ८ । ४६ । [ वर्धनेभिः ] वर्धकैः साधनैः ३ । ३६ । १ ॥

वर्धन्त वर्धन्ते ५ । १६ । ३ ॥

वर्धन्ताम् [ वर्धन्ताम् ] वर्धन्ताम् ५ । ४१ । १४ ॥

वर्धन्ति [ वर्धन्ति ] वर्धन्ते ५ । ३६ । ५ । वर्धयन्ति ( अत्र व्यत्ययेन परस्मैपदम् ) ६ । १ । ५ ॥

वर्धन्तु [ वर्धन्तु ] वर्धन्ताम् ( अत्र व्यत्ययेन परस्मैपदम् ) ३ । ५२ । ८ । वर्धयन्तु ( अत्रान्तर्गतो णयर्थः ) १ । ५ । ८ ॥

वर्धन्ते वर्धन्ते १ । १४० । ७ ॥

वर्धमानः यो विद्यया क्रियाकौशलेन नित्यं वर्धते ११ । २६ । सर्वथोत्कृष्टः १३ । २ । [ वर्धमानाः ] वृद्धिशीलाः ३ । ३८ । २ ॥ [ वर्धमानम् ] ह्रानिरहितम् ३ । २३ । ह्रासरहितम् ६ । १८ ॥

वर्धय [ वर्धय ] उत्कृष्टं सम्पादय १ । १० । ४ । उन्नय १ । १२५ । ३ । सर्वोत्कृष्टतां सम्पादय सम्पादयति वा ३ । १४ ॥

वर्धयतम् वर्धयतम् १ । ११८ । २ ॥

वर्धयन् उन्नयन् ३ । ६२ । १५ ॥

वर्धयन्ति उन्नयन्ति १ । ५४ । ८ ॥

वर्धयन्ती वर्धयन्ती ६ । ६१।१२ । [वर्धयन्तीः] उन्नयन्त्यः १ । ७१ । ३ ॥

वर्धयन्तु बढ़ाया करो अथर्व० १४ । १ । ५४। ( १४८ विधिः )

वर्धयमानः विद्यासुशिक्षयोन्नयमानः १।१२५। १ ॥

वधयस्त्र वर्धयस्व १२ । ४४ ॥

वर्धयामः वर्धयामः १ । ६१ । ११ ॥

वर्धयामसि वर्धयामः ( अत्रेदन्तोमसीतीकारादेशः ) ३।३ ॥

वर्धसे [ वर्धसे ] शमादिषु स्वात्मानमुन्नयसि ७ । १२ ।

वर्धस्व [ वर्धस्व ] वर्धस्व वर्धेत वा (सर्वत्रान्त्यपक्षे व्यत्ययो लडर्थे लोट् च ) २ । १४ ॥

वर्धात् वर्धयेत् ५ । ४१ । ६ ॥

वर्धान् वर्धयेयुः ( अत्र व्यत्ययेन परस्मैपदम् ) १ । ७० । ४ । वर्धयेरन् ६ । १७ । ११ ॥

वर्धासे वर्धसे ६ । १६ । १६ । वृद्धो भव ८६ । १३ ॥

वर्धिषीमहि पूर्णां वृद्धिं प्राप्नुयाम ३८ ।२१ ॥

वर्धेत वर्धेते ५ । ६८ । ४ ॥

वर्धेथाम् वर्धेथाम् ३ । ५३ । १ ॥

वर्पः रूपम् १ । १४० । ५ । रूपयुक्तः ३ । ५८। ६ ॥

वर्पणीतिः वर्पाणां नानाविधानां रूपाणां नीतिः प्राप्तिर्यस्य सः ३३ । २६ । वर्पस्य रूपस्य नीतिर्नायकः । ( अत्र नीतौ कर्त्तरि क्तिच् ) ३ । ३४ । ३ ॥

वर्म कवचम् १ । ११४ । ५ । वर्म इव रक्षकम् ६ । ७५ । १६ । सर्वतो रक्षणम ११ । ३० ॥

वर्मी कवचमान् २६। ३८॥ [ वर्मिणे ] बहूनि वर्माणि शरीररक्षासाधनानि विद्यन्ते यस्य तस्मै १६ । ३५ ॥

वर्वर्ति भृशं वर्तते १ । १६४ । ११ ॥

वर्वृतति भृशं गच्छति ६ । ४६ । १४ ॥

वर्षः यज्ञकर्मणा सर्वसुखसेचक ६।११। वर्षा के विन्दु ३ । २७। ६ ( १६ पञ्च० ) ॥

**वर्षतु** [ वर्षतु ] वर्षतु १। २५। शब्दविद्याया वृष्टिं करोतु सिञ्चतु वा १। २६॥

**वर्षते** यो वर्षति तस्मै २२। २६॥

**वर्षनिर्णिजः** वर्षस्य वृष्टेः शोधकाः पोषका वा ३। २६। ५। ये वर्षं निर्णेनिजन्ति ते ५। ५७। ४॥

**वर्षन्ति** वर्षन्ति ५। ८४। ३॥

**वर्षयतम्** वर्षयतम् ५। ६३। ६॥

**वर्षयथः** वर्षयथः ५। ६३। ३॥

**वर्षयथा** वर्षयथ ५। ५५। ५॥

**वर्षवृद्धम्** शस्त्रास्त्राणां वर्धयितारम्, वृष्टेर्वर्धकं यज्ञम् १। १६॥

**वर्षाः** वर्षाः १०। १२। यासु मेघा वर्षन्ति ताः १३। ५६॥ [ वर्षाभ्यः ] वर्षर्तौ कार्यसाधनाय २४। ११॥

वर्षाः वर्षत्यासु पर्जन्यः। नि० ४. २७॥

( ऋतुः ) यद्वर्षति तद्वर्षाणाम् ( रूपम् )। श० २. २. ३. ८॥ तस्य ( आदित्यस्य ) रथप्रोतश्चास-मरथश्च ( यजु० १५. १७ ) सेनानीग्रामण्याविति वार्षिकौ तावृतू। श० ८. ६. १. १८॥ यदा वै वर्षाः पिन्वन्तेऽथैनाः सर्वे देवा सर्वाणि भूता-न्युपजीवन्ति। श० १४. ३. २. २२॥ मरुतो वै वर्षस्येशते। श०९. १. २. ५॥ षड्भिः पार्जन्यैर्वा मारुतैर्वा ( पशुभिः ) वर्षासु ( यजते )। श० १३. ५. ४. २८॥ वर्षं सावित्री। गो० पू० १. ३३॥ वर्षा वै सर्वऽऋतवः। श० २. २. ३. ७॥ वर्षा ह त्वेव सर्वेषामृतूनाᳬरूपम्। श० २. २. ३. ७॥ वर्षाः पुच्छम् ( संवत्सरस्य )। तै० ३. ११. १०. ४॥ वर्षा उत्तरः ( पक्षः संवत्सरस्य ) तै० ३.११.१०.३॥ वर्षा एव यशः। गो० पू० ५. १५॥ वर्षा उद्गाता तस्माद्यदा बलवद्वर्षति साम्न इवोपब्दिः क्रियते। श० ११. २. ७. ३२॥ (प्रजा-पतिः ) वर्षामुद्गीथम् ( अकरोत् ) जै० उ० १. १२. ७॥ वर्षा उद्गीथः। ष० ३. १॥ वर्षाशरदौ सारस्वताभ्याम् ( अवरुन्धे )। श० १२. ८. २. ३४॥ वर्षाभिर्ऋतुनादित्याः स्तोमे सप्तदशे स्तुतं वैरूपेण विशौजसा। तै० २. ६. १९. १-२॥ वर्षा ह्यस्य ( वैश्यस्य ) ऋतुः। तां० ६. १. १०॥ तस्माद्वैश्यो वर्षास्वादधीत। विड्ढि वर्षाः। श० २. १. ३. ५॥ श्रोत्रᳬह्येतत् पृथिव्या यद्वल्मीकः। तै० १. १. ३. ४॥ ऊर्जं वा एत-ᳬरसं पृथिव्या उपदीका उद्दिहन्ति यद्वल्मीकम्। तै० १. १. ३. ४॥ प्राजापत्यो वै वल्मीकः। तै० ३. ७. २. १॥

**वर्षाह्वः** या वर्षा आह्वयति सा भेकी २४। ३८॥

**वर्षिमा** वृद्धस्य भावः १८। ४॥

**वर्षिष्ठः** अतिशयेन वृद्धः १। ३७। ६॥ [ वर्षिष्ठम् ] अतिशयेन वृद्धं वृद्धिकार-कम् ( अत्र वृद्धशब्दादिष्ठन् वर्षिरादेशश्च) १। ८। १॥ [ वर्षिष्ठाय ] अतिशयेन वृष्टि-कराय ५। ७। १॥ [ वर्षिष्ठे ] अतिशयेन वृद्धो वर्षिष्ठस्तस्मिन् विशाले सुखस्वरूपे १। २२॥

**वर्षिष्ठा** अतिशयेन वृद्धा ५। ८॥

**वर्षीयः** अतिशयेन श्रेष्ठम् ६। ४४। ६। वृद्धम् २३। ४७॥

**वर्षीयान्** अतिशयेन वृद्धो महान् २३। ४८॥ [ वर्षीयसे ] अतिशयेन विद्यावृद्धाय १६। ३०॥ [ वर्षीयसि ] सर्वसुखमभिवर्षति ६। ११॥

वर्षो यज्ञकर्मणा सर्वसुखसेचक ६ । ११ ॥

वर्ष्मणम् वर्षकम् ६ । ४७ । ४ ॥
[वर्ष्मन्] सुखवृष्टियुक्ते ५ । १७ । वर्षके मेघमण्डले २८ । १ ॥ सेचने ३ । ५ । ६ । सद्गुणानां सेचक ३ । ८ । ३ ॥

वर्ष्यम् वर्षासु भवम् ५ । ८३ । ३ ॥ [वर्ष्यान्] वर्षासु साधून् ५ । ८३ । ३ ॥

वर्हि उत्सन्नाभूत ३ । ५३ । १७ ॥

वलः बलः बलवान् ३ । ३० । १० ॥ [वलम्] बलयुक्तं मेघम् १ । ६२ । ४ । बलम् २ । १४ । ३ । वक्रगतिम् ४ । ५० । ५ ॥ [वलस्य] बलवतः शत्रोः १ । ५२ । ५ ॥

वलः मेघनाम । निघ० १. १० ॥

वलंरुजः यो बलं मेघं रुजति ३ । ४५ । २ ॥

वलगते गच्छते २२ । ७ ॥

वल्गू अत्युत्तमौ ६ । ६२ । ५ । शोभनवाचौ ६ । ६३ । १ ॥

वल्गूयति सत्करोति ४ । ५० । ७ ॥

वल्गूयति अर्चतिकर्मा । निघ० ३, १४ ॥

वल्मीकान् मार्गान् २५ । ८ ॥

श्रोत्रश्ह्येतत् पृथिव्या यद्वल्मीकः । तै० १. १. ३. ४ ॥ ऊर्जं वा एतद्रसं पृथिव्या उपदीका उद्दिहन्ति यद्वल्मीकम् । तै० १. १. ३. ४ ॥ प्राजापत्यो वै वल्मीकः । तै० ३ ७. २ ॥

वल्हामसि प्रधाना भवामः २३ । ५१ ॥

ववक्ष वहतु ( अत्र वर्तमाने लिटि वाच्छन्दसीति लुडागमः ) ३ । ७ । ६ । वहति ४ । ७ । ११ ॥

ववक्षिथ [ ववक्षिथ ] वोढुं प्राप्तुमिच्छथ २ । २४ । ११ । वक्षसि १ । ८१ । ५ । वोढुमिच्छसि ( अत्र लडर्थे लिट् सन्नन्तस्य वहधातोरयं प्रयोगः ) १ । १०२ । ८ । वहति ( अत्र पुरुषव्यत्ययः ) २ । २२ । ३ । वोढुमिच्छ ३ । ६ । ३ ॥

ववक्षिथ महन्नाम । निघ० ३. ३ ॥

ववक्षिरे रुष्टाः स्युः २ । ३४ । ४ ॥

ववक्षुः ये वक्षयन्ति रोषयन्ति ते १ । ६४ । ३ ॥

ववक्षे [ ववक्षे ] वक्षति रोषं संघातं करोति १ । ६१ । ६ । संहन्ति ( अयं वक्ष संघात इत्यस्य प्रयोगः ) १ । १४६ । २ । रुष इव विरुध्यति ३ । ५ । ८ । वहति ७ । ८ । २ ॥

ववक्षे प्रब्रूषे । नि० ५. ८ ॥

ववन्द वन्दति प्रशंसति ६ । ५१ । १२ । वन्दति नमस्करोति ६ । ६३ । ३ ॥

ववन्दिम प्रशंसेम ५ । २५ । ९ ॥

ववन्दिरे प्रणमन्तु ३ । ५४ । ४ ॥

ववन्मा याचामहे ७ । ३७ । ५ ॥

ववर्जुषीणाम् भृशं दोषान् वर्जयन्तीनाम् । ( अत्र यङ्लुङन्ताद् व्रजेः क्विबन्तं रूपम् ) १ । १३४ । ६ ॥

ववर्त वर्तते ( अत्रापि शपः श्लुः तस्य स्थाने

तप् च ) १ । १६५ । २ ॥

ववर्तत् वर्तयेत् ४।२४।१ । वर्तते ४ । ४४।३ ॥

ववर्थ [ ववर्थ ] वर्तते ३ । ४३ । ७ । वृणोषि ( अत्रापि वर्तमाने लिट् ) १ । ६१ । २२ ॥

ववर्ध वर्धते ३ । १ । ११ ॥

ववर्ह्ध वर्धयति २ । २३ । १३ ॥

ववव्रुषः रूपवतः । ( अत्र वव्रिरिति रूपनाम, धातोर्लिटः क्वसुः ) १ । १७३ । ५ ॥

ववाच उक्तवान् । ( सम्प्रसारणाच्चेत्यत्र वाछन्दसीत्यनुवर्तनाद् यणादेशः ) १ । ६७ । ४ ॥

ववार वृणात्युद्घाटयति ( अत्र वर्तमाने लिट् ) १ । ३२ । ११ ॥

ववाशिरे शब्दायन्ते २ । २ । २ ॥

ववृक्तम् छिनत्तम् ६ । ६२ । १० ॥

ववृजुः त्यक्तवन्तः १ । ३३ । ५ ॥

ववृतत् वर्तते ६ । १७ । १० ॥

ववृतीमहि भृशं वर्तेमहि १ । १३८ । ४ ॥

ववृतीय वर्तयामि ( अत्र बहुलं छन्दसीति साभ्यासत्वम् ) १ । १८० । ५ । वर्तेयम् १ । १८६ । १० ॥

ववृत्तन वर्तन्ते ५ । ६१ । १६ ॥

ववृत्याः वर्तेथाः १ । १७३ । १३ । वर्तयेः ६ । ११ । १ । प्रवर्तयेः ६ । ५० । ९ । प्रवर्तय ७ । ४२ । ३ ॥

ववृत्यात् वर्तेत ( अत्र व्यत्ययेन परस्मैपदम्, शपः स्थाने श्लुश्च ) १ । १०७ । १ । वर्तयेत् ६ । १७ । १३ ॥ वर्तताम् ( अत्र बहुलं छन्दसीति शपः श्लुर्व्यत्ययेन परस्मैपदञ्च ) ८ । ४ । आवर्तताम् ( वृतुधातोर्लिङि विकरणात्मनेपदव्यत्ययेन श्लुर्द्वित्वञ्च ) ३३ । ३८ ॥

ववृत्याम् वर्तयेयम् ( लिङ्प्रयोगोऽयम् । बहुलं छन्दसीत्यादिभिर्द्वित्वादिकम् ) १ । ५२ । १ ॥

ववृत्याम वर्तयेम ७ । २७ । ५ ॥

ववृत्युः वर्तेरन् ( अत्र बहुलं छन्दसीति शपः श्लुः, व्यत्ययेन परस्मैपदम् ) १ । १३५ । ५ ॥

ववृत्स्व वर्तताम् २ । १६ । ८ । वर्तते ३ । ३२ । ५ । वर्तस्व ३ । ६१ । ३ ॥

ववृधन्तः वर्धयन्ति ४ । २ । १७ ॥

ववृमहे स्वीकुर्महे १ । १८७ । २ ॥

वव्ने याचते (वनु याचन इत्यस्माल्लडर्थे लिट्, वन संभक्तावित्यस्माद्वाच्छन्दसो वर्णलोपो वेत्यनेनोपधालोपः ) १ । ३६ । १७ । संभजति ५ । ७४ । ७ ॥

वव्रः कूपः १ । ५२ । ३ ॥ [ वव्रासः ] सद्यो गन्तारः (अत्र व्रजधातोर्बाहुलकादौणादिको डः प्रत्ययः द्वित्वञ्च ) १ । १६८ । २ ॥ [ वव्रम् ]वरणीयम् ५ । ३२ । ८ ॥

वव्रः कूपनाम । निघ० ३. २३ ॥

**वव्राज** व्रजति प्राप्नोति ३ । १ । ६ ॥

**वव्रिः** अङ्गीकर्त्ता ५ । १६ । १ ॥ [ वव्रिम् ] रूपयुक्तं पदार्थसमूहम् १ । ४६ । ६ । संविभक्तारम् १ । ११६ । १० । वर्तुमर्हम् १ । १६४ । ७ । स्वकीयं रूपम् १ । १६४ । २६ । रूपम् ५ । ७४।५॥ [ वव्रेः ] स्वीकर्त्तुः ४ । ४२ । १ ॥

वव्रिः रूपनाम । निघ० ३.७ ॥ वव्रिरिति रूपनाम वृणोतीति सतः । नि० २. ८ ॥

**वव्रिवांसम्** आवरकम् २ । १४ । २ । व्रियमाणम् ३ । ३२ । ६ । विवृतम् ४ । १६ । ७ । विभजन्तम् ६ । २० । २ ॥

**वव्रुः** वृणयुः १२ । २८ । विवृणवति ४ । १ । १५ ॥

**वव्रे** [ वव्रे ] व्रियते १ । ६२ । ७। वृणोति ३ । ३८ । ८ ॥

**वशः** वशित्वगुणप्रापकः १ । ६१ । ६ । कामयमानः १ । १२६ । १ ॥ [ वशा ] कमनीयानि २ । २४ । १३ ॥ [ वशम् ] कमनीयम् १ । ११२ । १० । स्वाधीनताम् १ । ११६ । २१ । [ वशान् ] कामयमानान् पदार्थान् ३ । ५२ । शमदमादियुक्तान् धार्मिकान् जनान् १ । ८२ । १३ । वशवर्तिनः १ । १८१ । ५ ॥ [ वशे ] प्रकाशन्ते यस्मिँस्तस्मिन् ( अत्र बाहुलकादौणादिकोऽन्प्रत्ययः ) ४ । ११ ॥

**वशा** कामिताहुतिः २ । १६। वन्ध्या गौः १८ । २७ । अप्रसूता २१ । २१ ॥ [वशाः] देदीप्यमानाः २४ । १४ ॥

यद्वशमस्त्रवत्सा वशाऽभवत्तस्मात्सा हविरिव । ऐ० ३. २६ ॥ यदा न कश्चन रसः पर्यशिष्यत तत एषा मैत्रावरुणी वशा समभवत्तस्मादेषा न प्रजायते रसाद्धि रेतः सम्भवति रेतसः पशवस्तद्यदन्ततः समभवत्तस्मादन्तं यज्ञस्यानुवर्तते । श० ४. ५. १. ९ ॥ सा हि मैत्रावरुणी यद्वशा । श० ५. ५.१.११॥ वशामनूबन्ध्यामालभते । श०२.४.४.१४॥ वशामालभन्ते । तामालभ्य संज्ञपयन्ति संज्ञप्याह वपामुत्खिदेत्युत्खिद्य वपामनुमर्श गर्भमेष्टवै ब्रूयात्स यदि न विन्दन्ति किमाद्रियेरन् यद्यु विन्दति तत्र प्रायश्चित्तिः क्रियते । श० ४. ५. २. १ ॥ इयं ( पृथिवी ) वै वशा पृश्निः । श० १. ८. ३. १५ ॥ इयं ( पृथिवी ) वै वशा पृश्निर्यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निः । श० ५. १. ३. ३ ॥

**वशाम** कामयेमहि १ । १६५ । ७ ॥

**वशिम्** वशकर्त्तारम् २८ । ३३ ॥

**वशी** जितेन्द्रियः ८ । ५० । जितेन्द्रियान्तःकरणः १७ । ३५ । वशं कर्तु शीलः १ । १०१ । ४ ॥

**वश्मि** कामये २ । ३१ । ७ ॥

वश्मि कान्तिकर्मा । निघ० २. ६ ॥

**वषट्** क्रियाकौशलम् ११ । ३६ ॥

**वषट्काराः** उत्तमाः क्रियाः २० । १२ ॥ [ वषट्कारान् ] ये वषड् धर्म्यां क्रियां कुर्वन्ति तान् १६ । २० ॥ [ वषट्कारेण ] होम क्रिया के तुल्य ६ । ६ । ५ । ( २५६ त्रिधिः ) [वषट्कारैः] उत्तमकर्मभिः २० । १२ ॥

स वै वौगिति करोति । वाग्वै वषट्कारो वाग्रेतो रेत एवैतत्सिञ्चति षडित्यृतवो वै षट् तदृतुष्वेवैतद्रेतः सिच्यते तदृतवो रेतः सिक्तमिमाः प्रजाः प्रजनयन्ति तस्मादेवं वषट्करोति । श० १. ७. २. २१ ॥ वाक् च वै प्राणापानौ च वषट्कारः । ऐ० ३. ८ ॥ वाक् च ह वै प्राणापानौ च वषट्कारः । गो० उ० ३. ६ ॥ तस्यै ( वाचे ) द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च । श० १४. ८. ९. १ ॥ प्राणो वै वषट्कारः । श० ४. २. १. २९ ॥ एष एव वषट्कारो य एष ( सूर्यः ) तपति । श० १. ७. २. ११ ॥ एष वै वषट्कारो य एष ( सूर्यः ) तपति । श० ११. २. २. ५ ॥ यः सूर्यः स धाता स उ एव वषट्कारः । ऐ० ३. ४८ ॥ यो धाता स वषट्कारः । ३. ४७ ॥ निमेषो वषट्कारः । तै० २. १. ५. ९ ॥ त्रयो वै वषट्काराः वज्रो धामच्छद्रिक्तः । ऐ० ३. ७ ॥ त्रयो वै वषट्कारा वज्रो धामच्छद्रक्तः । स यदेवोच्चैर्बलवषट्करोति स वज्रः...अथ यः समः संततो निर्हाणच्छत्स्व धामच्छत्......अथ येनैव षट् पराध्नोति स ऋक्तः । गो० उ० ३. ३ ॥ वज्रो वै वषट्कारः । ऐ० ३.८॥ कौ०३.५। गो०उ०३.५॥ वज्रो वषट्कारः श० १. ३.३. १४॥ वज्रो वा एष यद्वषट्कारो यं द्विष्यात्तं ध्यायेद्वषट्करिष्यंस्तस्मिन्नेव तं वज्रमास्थापयति । ऐ० ३. ६ ॥ देवेषुर्वा एषा यद्वषट्कारः । तां० ८. १. २ ॥ देवपात्रं वाऽएष यद्वषट्कारः । श० १. ७. २. १३ ॥ देवपात्रं वा एतद्यद्वषट्कारः । ऐ० ३. ५ ॥ देवपात्रं वै वषट्कारः । गो० उ० ३. १ ॥ एत एव वषट्कारस्य प्रियतमे तनूर्यदोजश्च सहश्च । कौ० ३. ५ ॥ ओजश्च ह वै सहश्च वषट्कारस्य प्रियतमे तन्वौ । ऐ० ३. ८ ॥ तस्य वाऽएतस्य ब्रह्मयज्ञस्य चत्वारो वषट्कारा यद्वातो वाति यद्विद्योतते यत्स्तनयति यदवस्फूर्जति तस्मादेवंविद्वान् वाति विद्योतमाने स्तनयत्यवस्फूर्जत्यधीयीतैव वषट्काराणामच्छम्बट्काराय । श० ११. ५. ६. ९॥ वषट्कारो हैष परोऽक्षं यद्वेट्कारः । श० ९. ३. ३. १४ ॥

वषट्कृतम् संकलितमिव ७ । २६ । क्रियासिद्धम् २५ । ३७ । क्रियया निष्पादितम् १ । १६२ । १५ ॥ [ वषट्कृतस्य ] क्रियानिष्पादितस्य शिल्पविद्याजन्यस्य १ । १२० । ४ ॥ [ वषट्कृति ] वषट् करोति येन यज्ञेन तस्मिन् ( अत्र कृतो बहुलमिति वार्त्तिकमाश्रित्य करणे क्विप् ) १ । १४ । ८ ॥

वषट्कृतिम् वषट् क्रिया क्रियते यया रीत्या ताम् १ । ३१ । ५ । सत्यक्रियाम् ७ । १४ । ३ ॥

वष्टयः कामयमानाः ५ । ७६ । ५ ॥

वष्टि [ वष्टि ] प्रकाशते १ । ३३ । ३। कामयते २ । २४ । ८ ॥

वष्टि कान्तिकर्मा । निघ० २. ६ ॥

वष्टु [ वष्टु ] कामसिद्धिप्रकाशिका भवतु १। ३ । १० । प्रकाशयतु २० । ८४ । कामयताम् २६ । ८ ॥

वसः निवासय ७ । ८ । ३ ॥

वसत वसत ५ । ५२ । ६ ॥

वसतः निवसतः ६ । ३८ । २ ॥

वसति वसति २ । १० । ३ ॥

वसतिः यो निवसति सः ६ । ३। ३। निवासः १२ । ७६ ॥

वसना आच्छादनानि १ । ६५ । ७ ॥

वसन्तः वसन्तः १० । १० । यः सुगन्धादिभिर्वासयति १३।५॥ [ वसन्तेन ] वसन्ति सुखेन यस्मिँस्तेन २१।२३॥ [ वसन्ताय ]

वसन्ततौ सुखाय २४ । ११ ॥
एतौ (मधुश्च माधवश्च) एव वासन्तिकौ ( मासौ ) स यद्वसन्तऽओषधयो जायन्ते वनस्पतयः पच्यन्ते तेनो हैतौ मधुश्च माधवश्च । श० ४. ३. १. १४ ॥ तस्य ( अग्नेः ) रथगृत्सश्च रथौजाश्च ( यजु० १५. १५ ) सेनानीग्रामण्याविति वासन्तिकौ तावृतू । श० ८. ६. १. १६ ॥ यदेव पुरस्ताद्धाति तद्वसन्तस्य रूपम् । श० २. २. ३. ८ ॥ तस्य ( संवत्सरस्य ) वसन्त एव द्वारऽहेमन्तो द्वारं तं वाऽएतऽसंवत्सरऽस्वर्गं लोकं प्रपद्यते । श० १. ६. १. १९ ॥ मुखं वा एतदृतूनां यद्वसन्तः । तै० १. १. २. ६-७ ॥ तस्य ( संवत्सरस्य ) वसन्तः शिरः । तै० ३. ११.१०. २ ॥ ऊर्वै वसन्तः गे० ४. २६ ॥ वसन्त आग्नीध्रस्तस्माद्वसन्ते दावाश्चरन्ति तद्ध्यग्निरूपम् । श० ११. २. ७. ३२ ॥
वसन्तः समिद्धोऽन्यानृतून्त्समिन्धे । श० १. ३. ४. ७ ॥ वसन्तो वै समित् । श० १. ५. ३. ९ ॥ समिधो यजति वसन्तमेव वसन्ते वा इदं सर्वं समिध्यते । कौ० ३. ४ ॥ वसन्तो हिंकारः । ष० ३.१॥ स ( प्रजापतिः ) वसन्तमेव हिंकारमकरोत् जै० उ० १. १२. ७ ॥ षड्भिराग्नेयैः ( पशुभिः ) वसन्ते ( यजते ) । श० १३.५.४. २८ ॥ वसन्तेनर्त्तुना देवा वसवस्त्रिवृता स्तुतम् । रथन्तरेण तेजसा । हविरिन्द्रे वयो दधुः । तै० २. ६. १९. १ ॥ वसन्त एव भर्गः । गो० पू० ५. १५॥ वसन्तो वै ब्राह्मणस्यर्तुः । तै० १. १. २. ६ ॥ श० १३. ४. १. ३ ॥ तस्माद् ब्राह्मणो वसन्तऽआदधीत ब्रह्म हि वसन्तः । श० २. १. ३. ५ ॥

वसर्हा वसानां वासहेतूनामर्हकः ( अत्र शकन्ध्वादिना पररूपम् ) १ । १२२ । ३ ॥

वसवानः [वसवानः] वसोर्धनस्यानः प्राप्तियतः १ । १७४ । १ ॥ निवासयन् ५ । ३३ । ६ ॥ [ वसवानाः ] स्वगुणैः सर्वानाच्छादयन्तः ( अत्र बहुलं छन्दसीति शपो लुङ् न शानचि व्यत्ययेन मकारस्य वकारः ) १ । ६० । २ ॥

वसव्यम् वसुषु भवम् २ । ६ । ५ । वसुषु द्रव्येषु भवम् २।१३ १३। वसुषु पृथिव्यादिषु भवम् २ । १४ । १२ । [ वसव्यैः ] वसुषु धनेषु भवैः ६ । १३ । ४ । वसुषु धनेषु भवैः सुखैः ६ । ६० । १४ ॥ [ वसव्यस्य ] वसुषु धनेषु साधोः ४ । ५५ । ८ ॥

वसव्या वसुषु धनेषु साध्वी ७ । ३७ । ३ ॥

वसाते वसेताम् १६ । ८६ ॥

वसाथाम् आच्छादयतम् ११ । ३० ॥

वसाथे आच्छादयथः १ । १५२ । १ ॥

वसानः धरन् ५ । ४८ । ५ । धारयन् ६ । २६ । ३ । वासयन् १३ । ३१ । आच्छादयन् १६ । ५१ । स्वीकुर्वाणः ३३ । २२ । आच्छादकः ३७ । १७ । आच्छादितः ३ । १ । ५ ॥

वसाना परिदधती १ । १२२ । २ । स्वीकुर्वती १ । १२४ । ३ । धारयन्ती ३ । ३६ । २ ॥

वसापावानः वसां निवासं पान्ति ते ६ । १६ ॥

वसाम् [ वसाम् ] वीररसनीतिम् ६ । १६॥ वसतां प्राणिनाम् ५ । २ । ६ ॥ [ वसया ] निवासहेतुना जीवनेन २५ । ६ ॥

वसिष्ठ वसेत् २ । ३६ । १ ॥

वसिष्ठः अतिशयेन वासयिता २ । ६ । १ ।

अतिशयेन धनाढ्यः ७ । ६ । ६ । अतिशयेन वसुः ७ । १८ । ४ । अतिशयेन विद्यासु कृतवासः ७।२६।५ ॥ [ वसिष्ठाः ] अतिशयेन सद्गुणकर्मसु निवासिनः ७ । ३७ । ४ ॥ अतिशयेन ब्रह्मचर्ये कृतवासाः ७ । ३३ । ३ ॥ [ वसिष्ठम् ] यो वसति धर्मादिकर्मसु सोऽतिशयितस्तम् १ । ११२ । ६ । उत्तमं विद्वांसम् ७ । ३३ । १३ । [ वसिष्ठ ] अतिशयेन वसो ७ । १ । ८ ॥

( यजु० १३. ५४ ) यद्वै नु श्रेष्ठस्तेन वसिष्ठोऽथो यद्वस्तृतमो वसति तेनोऽएव वसिष्ठः । श० ८. १. १. ६ ॥ येन वै श्रेष्ठस्तेन वसिष्ठः ( हिंकारः ) । गो० उ० ३. ९ ॥ एष ( प्रजापतिः ) वै वसिष्ठः ( = सर्वश्रेष्ठ इति सायणः ) । श० २. ४. ४. २ ॥ प्रजापतिर्वै वसिष्ठः । कौ० २५. २ ॥ २६. १५ ॥ ( यजु० १३. ५४ ) प्राणा वै वसिष्ठ ऋषिः । श० ८. १. १. ६ ॥ सा ह वागुवाच । ( हे प्राण ) यद्वाऽअहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीति । श० १४. ९. २. १४ ॥ ( ऋ० २. ९. १ ) अग्निर्वै देवानां वसिष्ठः । ऐ० १. २८ ॥ वसिष्ठो वा एतं ( इन्द्रक्रतुन्न आभरेति प्रगाथं ) पुत्रहतो ( नीलकण्ठीयटीकायुते महाभारते, आदिपर्वणि, अ० १७६ ) ऽपश्यत् स प्रजया पशुभिः प्राजायत । तां० ४. ७. ३ ॥ ८. २. ४ ॥ वसिष्ठस्य जनित्रे ( सामनी ) भवतो वसिष्ठो वा एते पुत्रहतः सामनी अपश्यत् स प्रजया पशुभिः प्राजायत । तां० १९. ३. ८॥ ततो वै वसिष्ठपुरोहिता भरताः प्राजायन्त । तां० १५. ५. २४ ॥

**वसिष्ठहनुः** वसिष्ठस्यातिशयेन वासहेतोर्हनुरिव हनुर्यस्य तम् ( अत्र सुपां सुलुगित्यमः स्थाने सुः ) ३६ । ८ ॥

**वसिष्व** धर ( अत्र छन्दस्युभयथेत्यार्धधातुकमाश्रित्य लोट्यपि वलादिलक्षण इट् ) १ । २६ । १ ॥

**वसीयः** अतिशयेन वसु वसीयः १८ । ८ ॥

**वसु** सुखेषु वसन्ति येन तद्धनम्, विद्याऽऽरोग्यादिसुवर्णादिकं वा १ । १० । ६ । द्रव्यम् १६ । ८३ । कार्यकारणाद्रव्यं वा १ । ४७ । ६ । वसन्ति सुखेन यत्र तद्विज्ञानम् १ । ५५ । ८ । जलाख्यं द्रव्यम् ६ । ४७ । २८ । वासस्थानानि १ । ८१ । ७ । सुखेषु वासयित्री २ । २२ । ३ ॥

पशवो वसु । श० ३. ७. ३. ११, १३ ॥ पशवो वै वसु । तां० ७. १०. १७ ॥ १३. ११. २ ॥

**वसुः** वसन्ति सर्वाणि भूतानि यस्मिन्त्सः १ । ४३ । ५ । वस्ता वासयिता वा १ । ६४ । १३ । सुखेषु वस्ता १ । ११० । ७ । यः शरीरादिषु वसति ४ । ४० । ५ । द्रव्यस्वरूपः ५ । ६ । २ । द्रव्यप्रदः ५ । २५ । १ । सज्जनेषु निवस्ता तेषां निवासयिता वा १२ । १४ । विद्यासु वासयिता २५ । ४७ । पृथिव्यादयः ३ । ८।८ । ये विद्यायां वसन्ति ते ७ । ४८ । ४ । अग्न्यादयोऽष्टौ १४ । ३० । ये वसन्ति सद्गुणकर्मसु ते ८ । १८ । चतुर्विंशतिवार्षिकब्रह्मचर्येण कृतविद्याः १ । १६३ । २ । विद्यां जिज्ञासवः ३ । ५७ । २ ॥ [ वसुम् ] धनप्रदम् १५ । ४७ । वसुभिः सर्वैः लोकैः सह ३ । ४६ । ४ ॥ [ वसवे ] वासाय १८ । २८ । योऽस्मिन् शरीरे वसति तस्मै जीवाय २२ । ३० । [ वसोः ] वसुर्यज्ञः १ । ३ । उत्तमोत्तमपदार्थस्य १६ । ५५ । ४, १७ ( १४ पञ्च० ) [ वसो ] वसन्ति सर्वाणि भूतानि

यस्मिन्वा वसति सर्वेषु भूतेषु यस्तत्सम्बुद्धौ १ । १० । ४ ॥

(यजु० १. २) यज्ञो वै वसुः । श० १. ७. १. ९, १४॥ स एषो (अग्निः) ऽत्र वसुः । श० ९. ३. २. १॥ वसुरन्तरिक्षसत् (यजु० १२. १४) श० ५. ४. ३. २२ ॥ कतमे वसव इति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एते हीदꣳसर्वं वासयन्ते ते यदिदꣳ सर्वं वासयन्ते तस्माद्वसव इति । श० ११. ६. ३. ६ ॥ प्राणा वै वसवः । प्राणा हीदं सर्वं वस्वाददते । जै० उ०४.२.३ ॥ प्राणा वै वसवः । तै० ३. २. ३. ३ ॥ ३. २. ५. २॥ गायत्री वसूनां पत्नी । गो० उ० २. ९ ॥ वसवस्त्वा गायत्रेण छन्दसा संमृजन्तु । तां० १. २. ७॥ वसवो गायत्रीं समभरन् । जै० उ० १. १८. ४ ॥ वसवस्त्वा पुरस्तादभिषिञ्चन्तु गायत्रेण छन्दसा । तै० २. ७. १५. ५ ॥ अथैनं (इन्द्रं) प्राच्यां दिशि वसवो देवाः ......अभ्यषिञ्चन्... साम्राज्याय । ए० ८. १४ ॥ अग्निर्वसुभिरुदक्रामत् । ऐ०१.२४ ॥ वसव एव भर्गः । गो० पू० ५. १५ ॥ वसूनामेव प्रातःसवनम् श० ४. ३. ५. १ ॥ वसूनां वै प्रातःसवनम् । कौ० १६. १ ॥३०. १ ॥ अथेमं विष्णुं यज्ञं त्रेधा व्यभजन्त । वसवः प्रातःसवनꣳरुद्रा माध्यन्दिनꣳसवनमादित्यास्तृतीयसवनम् । श० १४. १. १. १५ ॥ तं (आदित्यं) वसवोऽष्टकपालेन (पुरोडाशेन) प्रातःसवनेऽभिषज्यन् । तै० १. ५. ११. ३ ॥ वसन्तेनर्त्तुना देवा वसवस्त्रिवृता स्तुतम् । रथन्तरेण तेजसा । हविरिन्द्रे वयो दधुः । तै० २. ६. १९. १ ॥ वसूनां वा एतद्रूपम् । यत्तण्डुलाः । तै० ३. ८. १४. ३ ॥ वसवो वै रुद्रा आदित्या सꣳस्रावभागाः । तै० ३. ३. ९. ७ ॥ वसूनाꣳश्रविष्ठाः (नक्षत्रम्) । तै० १. ५. १. ५ ॥ अष्टौ देवा वसवः सोम्यासः । चतस्रो देवीरजराः श्रविष्ठाः ते यज्ञं पान्तु रजसः पुरस्तात् । संवत्सरीणममृतꣳस्वस्ति । तै० ३. १. २. ६ ॥

**वसुता** वसूनां द्रव्याणां भावः ६ । १ । १३ ॥

**वसुतातिः** धनाद्यैश्वर्ययुक्तः १ । १२२ । १२ ॥ [वसुतातिम्] धनमेव १ । १२२ । ५ ॥

**वसुदात्रा** यो वसूनि ददाति सः २ । २७ । १२ ॥

**वसुदेयाय** दातव्यधनाय १ । ५४ । ६ । देयं वसु यस्य तस्मै २ । ३५ । ७ । वसूनि द्रव्याणि देयानि येन तस्मै ६ । ३६ । ५ ॥

**वसुधातम** योऽतिशयेन वसूनि दधाति सः २७ । १५ ॥

**वसुधिती** द्रव्यधारिके २८ । २५। विद्याधारिके २८ । ३८ । वसूनां पदार्थानां धत्र्यौ द्यावापृथिव्यौ ३ । ३१ । १७ ॥ [वसुधितिम्] पृथिव्यादिवसूनां धितिर्यस्मात्तम् २४ । २४ । वसूनां धितयो यस्य तम् १ । १२८ । ८ । वसूनां द्रव्याणां धारकम् ४ । ८ । २ ॥

**वसुधेयस्य** वसु धेयं यस्मिँस्तस्य २१ । ४८ । धनकोषस्य२१।४६। धनाधारस्य संसारस्य २१। ५२। अन्तरिक्षस्य २८। १५। वस्वैश्वर्यं धेयं यत्र तस्येश्वरस्य २८ । १६ । पृथिव्याद्याधारस्य २१ । ५७ ॥

वसुधेयस्य वसुधानाय । नि० ९. ४३ ॥

इन्द्रो वसुधेयः । श० १. ८. २. १६ ॥

**वसुनीथ** वेदादिशास्त्रबोधाख्यं सुवर्णादिधनञ्च यो नयति तत्सम्बुद्धौ १२ । ४४॥

**वसुपतिः** धनस्य स्वामी ४ । १७ । ६ । वसूनां पदार्थानां पालकः ६ । ५२ । ५ ॥ [वसुपतिम्] वसूनां अग्निपृथिव्यादीनां

पतिं पालकं स्वामिनम् ( कतमे वसव इति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं सर्वं वासयन्ते तस्माद्वसव इति । श० १४ । ५ । ७ । ४ ) १ । ६ । ६ ॥

वसुपत्नी वसूनां पालिका १ । १६४ । २७ ॥

वसुमती बहूनि वसूनि द्रव्याणि विद्यन्ते यस्यां सा २८ । १८ ॥

वसुमन्तम् बहुधनयुक्तम् १ । १५६ । ५ । प्रशस्तधनप्रापकं देशम् २ । २४ । २ । बहुविधद्रव्यसहितम् ४ । ३४ । १० । बह्वैश्वर्यम् ६ । ६८ । ६ ॥ [ वसुमते ] बहवो वसवश्चतुर्विंशतिवर्षब्रह्मचर्यसम्पन्ना विद्वांसो विद्यन्ते यत्र तस्मै कर्मणे ६ । ३२ ॥

वसुवनिम् धनानां सम्भाजनम् ७ । १ । २३ ।

[ वसुवने ] धनप्रापणाय २१ । ४८ । धनसेवनाय २१ । ४६ । धनसेविने २१ । ५० । धनेच्छुकाय २१ । ५६ । पृथिव्यादिसेवकाय २१ । ५७ । ऐश्वर्यसेवकाय २१ । ५८ । यो वसूनि वनुते याचते तस्मै २८ । १६ । वसुप्रदाय जीवाय २८ । २० । पदार्थविद्यायाचिने २८ । २१ ॥ पृथिव्यादीनां संविभागे जगति २८ । १५ । धनदानादिकरणे २८ । १६ ॥

वसुवने वसुवननाय । नि० ९. ४३ ॥
अग्निर्वै वसुवनिः । श० १. ८. २. १६ ॥

वसुवाहनम् वसूनां द्रव्याणां वाहनम् ५ । ७५ । १ ॥

वसुवित् वसूनि सर्वाणि द्रव्याणि विदन्ति ये येन वा १ । ६१ । १२ । वसूनि विन्दति प्राप्नोति १ । १६४ । ४६ । यो वसूनि सर्वाणि वस्तूनि यथावद् वेत्ति वेदयति वा सः ३ । २६ ॥ [ वसुविदा ] बहुधनप्रदौ ( अत्र सुपां सुलुगित्याकारादेशः ) १ । ४६ । २ ॥

वसुवित्तमः यो वसूनि द्रव्याणि वेदयति प्रापयति सोऽतिशयितः ३ । ३६ ॥ [ वसुवित्तमम् ] वसून् पृथिव्यादिलोकान् वेत्ति सोऽतिशयितस्तम् । पृथिव्यादिलोकान् वेदयति सूर्यरूपेणाग्निरेतान् प्रकाश्य प्रापयति स वसुवित् । अतिशयेन वसुविदिति वसुवित्तमो वा तम् ३ । ३८ ॥

वसुश्रवाः धनधान्ययुक्त ५ । २४ । २ वसूनि सर्वाणि श्रवांसि श्रवणानि यस्य सः ३ । २५ । वसूनि धनानि श्रवांस्यन्नानि च यस्मात् सः १५ । ४८ । वसूनि धनानि श्रवणे यस्य सः २५ । ४७ ॥

वसूयन्तः आत्मनो वसूनि विज्ञानादीनि धनानीच्छन्तः १ । १३० । ६ ॥

वसूया आत्मनो वसूनां धनानामिच्छया १ । १६५ । १ ॥

वसूयुः आत्मनो धनमिच्छुः १ । ५१ । १४ ।

[वसूयवः] ये वसून् पृथिव्यादीन् युवन्ति मिश्रयन्त्यमिश्रयन्ति ते विद्वांसः १ । ४६ । ४ । आत्मनो वसूनि विद्याधनानीच्छन्तः १ । ६२ । ११ । य आत्मनो वसूनि द्रव्या-

णीच्छन्ति ते (अत्र वसुशब्दात् सुप आत्मनः क्यजिति क्यच्प्रत्ययः । क्याच्छन्दसीत्युःप्रत्ययः । अन्येषामपीति दीर्घः) १ । १२८ । ८ । ये वसूनि युवन्ति मिश्रयन्ति ते ३ । २६ । १ ॥

वस्त वस्ते आच्छादयति (अत्र वर्तमाने लङडभावश्च) १ । २५ । १३ ॥

वस्तः व्यवहारैराच्छादितो युक्तः १४ । ९ ॥

वस्तवे निवसितुम् १ । ४८ । २ ॥

वस्ता आच्छादयिता ३ । ४६ । ४ ॥

वस्ताम् छादयतु ६ । ७५ । १८ ॥ आच्छादयताम् १७ । ४६ ॥

वस्तिः वासहेतुः ११ । ८८ ॥ [वस्तिना] नाभेरधोभागेन २५ । ७ ॥

वस्ते [वस्ते] कामयते ४ । २५ । २ । आच्छादयति ५ । ४६ । ६ । धरति २६ । ४८ ॥

वस्तोः दिनं दिवम् ३ । ८ । दिने २८ । १२ । दिनात् २६ । २६ । दिनस्य १ । ७६ । ६ ॥

वस्त्रदाः ये वस्त्राणि ददति ५ । ४२ । ८ ॥

वस्त्रमथिम् यो वस्त्राणि मथ्नाति तम् ४ । ३८ । ५ ॥

वस्त्रमथिम् वस्त्रमाथिनम् । नि० ४. २४ ॥

वस्त्राणि कार्पासौर्णकौशेयकादीनि १ । २६ । १ । शरीराच्छादनानि १ । १५२ । १ ॥ [वस्त्रा] वस्त्रिणम् ५ । ४७ । ६ ॥

वस्त्रम् वस्तेः । नि० ४. २४ ॥

वस्नम् हट्टस्नस्तरम् ४ । २४ । ६ ॥

वस्नयन्तौ वस्नमिवाचरन्तौ राजप्रजाजनौ ६ । ४७ । २१ ॥

वस्नेव पण्यक्रियेव ३ । ४६ ॥

वस्म निवासस्थानम् ४ । १३ । ४ ॥ [वस्मनः] निवसन्तः २ । ३१ । १ ॥

वस्यः अतिशयेन धनम् (अत्र वसुशब्दादीयसुन्प्रत्ययः । छान्दसो वर्णलोपो वेतीकारलोपः) १ । ३१ । १८ । वसुषु साधुः (छान्दसो वर्णलोपो वेत्युकारलोपः) १ । १०६ । १ । वस्तुं योग्यः १ । १४१ । १२ । अत्युत्तमं वासः स्थानम् २ । १ । १६ । वसीयोऽतिशयेन वासयितृ २ । २ । १३ । अतिशयेन श्रेष्ठं धनम् ४ । २१ । ४ । वसीयसोऽतिधनाढ्यान् ५ । ५५ । १० । अतिशयेन वासहेतुम् ६ । ४४ । ७ ॥

वस्यःइष्टये वसीयत इष्टये संगतये । (अत्र वसुशब्दान्मतुप् ततोऽतिशय ईयसुनि विन्मतोर्लुक् । अ० ५ । ३ । ६५ । इति मतोर्लुक् टेः । अ० ६ । ४ । १५५ । इति टेर्लोपस्ततश्छान्दसो वर्णलोपो वेतीकारस्य लोपश्च) १ । २५ । ४ । वसीयसोऽतिशयितस्य धनस्य संगमनाय १ । १७६ । १ ॥

वस्यसी अतिशयेन वसुमती ५ । ६१ । ६ ॥

वस्यान् अतिशयेन वासकर्त्ता ६ । ४१ । ४ ॥

वस्वी याऽग्न्यादिपदार्थाख्यवसुविद्यासम्बन्धिनी वसुभिश्चतुर्विंशतिवर्षकृतब्रह्मचर्यैः प्राप्ता सा ४ । २१ ॥ पृथिव्यादिवसु-

सम्बन्धिनी ६। १६। २५। वसूनामियम् ६। ६४। १। धनसम्बन्धिनी ७। २०। १०॥ [ वस्वीः ] बहुपदार्थयुक्ताः ५। ४१। ६॥ [ वस्वीभिः ] धनप्रापिकाभिः क्रियाभिः ३। १३। ५॥

वह [ वह ] वहसि प्रापयसि, वहति प्रापयति वा ( अत्र पक्षान्तरे पुरुषव्यत्ययः ) १। १३। १। प्रापय १। १४। १२। प्राप्नुहि १। २२। १०। प्राप्नोतु ६। ६४। ५॥

वहत वहन्ति ( अत्र व्यत्ययो लङर्थे लोट् च ) १।२३।२२। बहाइये अर्थात् दूर कीजिये ६। १७॥

वहतः प्राप्नुतः १। ८४। २। प्रापयतः २। १०। २। धरतः ५। ४१। ७॥

वहतः वहनशीलः ३। ७। ४॥

वहतम् प्रापयतम् १। ३४। ४। प्राप्नुतः १। ३४। १२। प्राप्नुतम् ३। ५३। १॥

वहताम् प्रापयताम् ३। ४१। ६॥

वहात प्राप्नोति प्रापयति वा ३। ५८। १॥

वहतु पहुंचावे ७। ३७।१। प्राप्नोतु १२। ३४॥

वहतुम् वहति प्राप्नोति स्त्रियमिति वहतुर्भर्त्ता तम् १६। ६७। प्रापकम् १।१८४।३। वोढारम् ४। ५८। ६॥

वहते प्राप्नोति प्रापयति वा ५। ३०। ३॥
वहते गतिकर्मा। निघ० २. २४॥

वहथ प्राप्नुथ ६। ६७। ४॥

वहथः प्राप्नुथः १। ११६। ३॥

वहध्वे वहत ५। ५२। १३। प्राप्नुत ५। ६०। ७॥

वहन् प्राप्नुवन् प्रापयन्वा ५। ७७। ३॥

वहन्ति [ वहन्ति ] प्राप्नुवन्ति १। ५०। १। चालयन्ति १। १६४। ३। प्रापयन्ति १। १६४। १४॥

वहन्तीः प्रापयन्तीः २। ३४॥

वहन्तु [ वहन्तु ] गमयन्तु ३४। ३६। प्राप्नुवन्तु प्रापयन्तु वा ६। ४४। १६॥

वहन्ते प्राप्नुवन्ति ५। ५८। १॥

वहमानः प्राप्नुवन् प्रापयन्वा ७। ४५। १॥

वहमानाः प्राप्नुवत्यः १। १२३। १२॥

वहसि [ वहसि ] प्राप्नोषि १। १२४। १२॥ ( वृ ) धारण करता है ९। ५। १७। ( २५३ विधिः )॥

वहसे प्राप्नोषि प्रापयसि वा ५। ३६। ५॥

वहातः [ वहातः ] वहेताम् ३। ३५। २। प्राप्नुतः ३। ४३। ४॥

वहाते वहेताम् ५। ३७। ३॥

वहान् समन्तात् प्राप्नुयुः १। ८४। १८ वहन्तु प्राप्नुवन्तु २०। ५६॥

वहामि प्राप्नोमि प्रापयामि वा ५। ४६। १॥

वहासि प्राप्नुयाः १। ७४। ६॥

वहिष्ठा अतिशयेन वोढा ( अत्राकारादेशः

१ । १३४ । ३ ॥ [ वहिष्ठान् ] अतिशयेन वोढ़ॄन् विद्याधर्मप्रापकान् १ । १२१ । १२ ॥

**वहीयसः** सद्यो देशान्तरे प्रापकानग्न्यादीन् १ । १०४ । १ ॥

**वहेथे** प्रापयतः १ । १३५ । ८ । प्राप्नुथः १ । १८२ । २ । प्रापयेताम् ( अत्र पुरुषव्यत्ययः ) ४ । ४५ । ३ ॥

**वहेन** प्रापणेन २५ । ३ ॥

**वहेयुः** प्राप्नुवन्तु ६ । ३७ । ३ ॥

**वह्निः** वोढा १ । १२६ । ५ । सुखप्रापकः १ । ७६ । ४ । वोढा वायुः ३ । २० । १ । विद्याया वोढा २७ । १४ । सद्यो वोढाऽग्निः ३५ । १३ । वोढा विद्यासुखप्रापकः ७ । १६ । ६ ॥ [ वह्नयः ] वहन्ति प्रापयन्ति वार्त्ता पदार्थान् यानानि च यैस्ते ( वहिश्रिश्रुयु० उ० ४ । ५१ । अनेन करणे नित्प्रत्ययः ) १ । १४ । ६ । शुभगुणकर्मणां वोढारः १ । २० । ८ । विद्वांसो जितेन्द्रियाः सुशीला मनुष्याः १ । ४८ । ११ । वोढारोऽश्वाः २ । २४ । १३ । सुखस्य वोढारः १ । ३ । ६ ॥ [ वह्निम् ] पदार्थानां वोढारम् १।६०।१॥ [ वह्निभिः ] कार्यनिर्वाहकैः ३३ । १५ । वोढृभिर्महद्भिः सह १ । ६ । ५ ॥ [ वह्नये ] राज्यभारं वोढ्रे २ । २१ । २ ॥

वह्निः अश्वनाम । निघ० १. १४ ॥ वोळ्हा । नि० ३. ४ ॥ वह्निम् पुत्रम् ३. ६ ॥

वह्निर्वा अनड्वान् । तै० १. १. ६. १० ॥

**वह्नितमः** अतिशयेन वोढा ४ । १ । ४ ॥ [ वह्नितमम् ] वहति प्रापयति यथायोग्यं सुखानि स वह्निः सोऽतिशयितस्तम् १ । ८ ॥

**वा** पक्षान्तरे १।६।६। चार्थे १। ६। १० ॥

वा विचारणार्थे, समुच्चयार्थे । नि० १. ५ ॥

**वाः** वाह्यमुदकम् ५ ११ ॥ [ वार्भ्यः ] वरणीयेभ्यः २२ २५ ।

यदवृणोत्तस्माद्वाः ( जलम् ) श० ६. १. १. ९ ॥

**वाक्** वक्ति यया सा वाणी १८।२६। यो वदति सः २६ । ५ । कर्मेन्द्रियाणामुपलक्षणम् २२ । ३३॥ सत्य प्रिय वाणी और तदनुकूल व्यवहार । अथर्व० १२।५ ७। ( १७६ विधिः ) [ वाचम् ] वदन्ति वाचयन्ति सर्वा विद्या यया तां सत्यलक्षणां वेदचतुष्टयीम् ( वागिति पदनामसु पठितम् । निघ० ५।५ ) २। १८ ॥ सुखदायक वाणी को । अथर्व ३ । ३१। २। ( १७३ विधिः ) [ वाचे ] वागिन्द्रग्रहोमाय ३६ । ३ । वेदार्थसुशिक्षायुक्तवाणीविज्ञानाय ६।३६॥

वाक् वचेः । नि० २. २३ ॥ वाचि आस्ये । ८.२१॥ वाग्वै गीः ( यजु० १२. ६८ ) । श० ७. २. २. ५॥ वाग्वै धेनुः । गो० पू० २. २१ ॥ तां० १८.९. २१॥ वाचं धेनुमुपासीत । तस्याश्चत्वार स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः । श० १४. ८. ९. १ ॥ वाग्वै शबली (=कामधेनुः इति सायणः ) । तां० २१. ३. १ ॥ वाक् सरस्वती । श० ७. ५. १. ३१ ॥ ११. २. ४. ९ ॥ १२. ९. १. १३ ॥ वाक्तु सरस्वती । ऐ० ३. १ ॥ वागेव सरस्वती । ऐ० २.

२४ ॥ वाग्घि सरस्वती । ऐ० ३. २ ॥ वाग्वै सरस्वती । कौ० ५. २ ॥ १२. ८ ॥ १४. ४ ॥ तां० ६. ७. ७ ॥ १६. ५. १६ ॥ श० २. ५. ४. ६ ॥ ३. ९. १. ७ ॥ तै० १. ३. ४. ५ ॥ ३. ८. ११. २ ॥ गो० उ० १. २० ॥ ऐ० ६. ७ ॥ वाग्वै सरस्वती पावीरवी । ऐ० ३. ३७ ॥ सरस्वती वाचमदधात् । तै० १. ६. २. २ ॥ अथ यत्स्फूर्जयन्वाचमिव वदन्दहति तदस्य ( अग्नेः ) सारस्वतं रूपम् । ऐ० ३. ४॥ सा ( वाक् ) ऊर्ध्वोदातनोद्यथापां धारा संततैवम् ( सरस्वती [ नदी ]=वाक् ) तां० २०. १४.२॥ वाग्वै समुद्रः । तां० ७. ७.९॥ वाग्वै समुद्रो मनः समुद्रस्य चक्षुः । तां०६.४.७॥ वाग्वै समुद्रो ( ऋ० ४. ५८. १ ) न वै वाक् क्षीयते न समुद्रः क्षीयते । ऐ० ५. १६ ॥ वाग्वै सरिरं छन्दः ( यजु० १५. ४ ) । श० ८. ५. २. ४ ॥ वाग्वै सरिरम् ( यजु० १३. ५३ ) । श० ७. ५. २. ५३ ॥ वाग्वै सोमक्रयणी ( गौः ) निदानेन । श० ३. २. ४. १०, १५ ॥ वाग्वाऽएषा निदानेन यत्साहस्री (गौः) तस्या एतत् सहस्रं वाचः प्रजातम् । श० ४. ५. ८. ४ ॥ तदाहुः किं तत्सहस्रम् ( ऋ० ६. ६९ ८ ) इतीमे लोका इमे वेदा अथो वागिति ब्रूयात् । ऐ० ६. १५ ॥ वाग्वै सिनीवाली ( यजु० ११. ५५ ) । श० ६. ५. १. ९ ॥ वाक् सावित्री । गो० पू० १. ३३ ॥ जै० उ० ४. २७. १५ ॥ वाग्वै सार्पराज्ञी । कौ० २७. ४ ॥ वागेव सुपर्णी ( माया ) । श० ३. ६. २. २ ॥ वाग्वाव शतपदी । ष० १. ४ ॥ वाग्वै रेवती । श० ३. ८. १. १२ ॥ वागषाढा । श० ६. ५. ३. ४ ॥ ७. ५. १. ७ ॥ वाग्वाऽअषाढा । श० ७. ४. २. ३४ ॥ ८. ५. ४. १ ॥ वाग्वै पथ्या स्वस्तिः । कौ० ७. ६ ॥ श० ३. २. ३. ८ ॥ ४. ५. १. ४ ॥ वाग्घ्येषा ( पथ्या स्वस्तिः ) । श० ३. २. ३. १५ ॥ जूरसि (यजु० ४. १७ ), ( जूः ) इत्येतत् ह वा अस्याः ( वाचः ) एकं नाम । श० ३. २. ४. ११ ॥ तस्यै ( वाचे ) जुहुयाद् वेकुरा नामासि । तां० ६. ७. ६ ॥ वाग्वै धिषणा ( यजु० ११. ६१ ) । श० ६. ५. ४. ५ ॥ वाग्वै मतिः (यजु० १३. ५८ ) वाचा हीदं सर्वं मनुते । श० ८. १. २. ७ ॥ वाग्वै बृहती । श० १४. ४. १. २२ ॥ यदस्यै वाचो बृहत्यै पतिस्तस्माद् बृहस्पतिः । जै० उ० २. २.५॥ बृहस्पतिः ( एवैनं ) वाचां (सुवते) । तै० १. ७. ४. १ ॥ अथ बृहस्पतये वाचे । नैवारं चरुं निर्वपति । श० ५. ३. ३. ५ ॥ वाग्वै राष्ट्री । ऐ० १. १९ ॥ इयं ( पृथिवी ) वै वागदो ( अन्तरिक्षम् ) मनः । ऐ० ५. ३३ ॥ इयं ( पृथिवी ) वै वाक् । श० ४. ६. ९. १६ ॥ वागिति पृथिवी । जै० उ० ४. २२. ११ ॥ वागेवायं ( पृथिवी–) लोकः । श० १४. ४. ३. ११ ॥ वागित्यन्तरिक्षम् । जै० उ० ४. २२. ११ ॥ वागिति द्यौः । जै० उ० ४. २२. ११ ॥ वाग्वै लोकम्पृणा ( इष्टका ) । श० ८. ७. २. ७ ॥ वाग्वै विराट् । श० ३. ५. १. ३४ ॥ वाग्वै विश्वामित्रः । कौ० १०. ५ ॥ १५. १ ॥ २९. ३ ॥ वाग्वै विश्वकर्मऽर्षिः ( यजु० १३. ५८ ) वाचा हीदꣳसर्वं कृतम् । श० ८. १. २. ९ ॥ वागेव सꣳस्तुप्छन्दः ( यजु० १५. ५ ) । श० ८.५.२. ५ ॥ वाग्वा अनुष्टुप् । ऐ० १. २८ ॥ ३. १५ ॥ ६. ३६॥ श० १. ३. २. १६ ॥ ८. ७. २. ६ ॥ गो० उ० ६. १६ ॥ वागनुष्टुप् । कौ० ५. ६ ॥ ७. ९ ॥ २६. १ ॥ २७. ७ ॥ श० १०. ३. १. १ ॥ तै० १. ८. ८. २ ॥ तां० ५. ७. १ ॥ महिषी हि वाक् । श० ६. ५. ३. ४ ॥ वागित्यृक् । जै० उ० १. ९. २ ॥ वागृक् । जै० उ० ४. २३. ४ ॥ सा या सा वागृक् सा । जै० उ० १. २५. ८ ॥ वागेवऽर्ग्वेदः । श० १४. ४. ३. १२ ॥ वागेवऽर्चश्च सामानि च । मन एव यजूꣳषि । श० ४. ६. ७. ५ ॥ वाग्ब्रह्म । गो० पू० २. १०. ( ११ ) ॥ वाग्घि ब्रह्म । ऐ० २. १५ ॥ ४. २१ ॥ वाग्वै ब्रह्म । ऐ० ६. ३ ॥ श० २. १. ४. १० ॥ १४. ४. १. २३ ॥ १४. ६.१०.५ ॥ वागिति तद् ब्रह्म । जै० उ० २. ९.६॥ सा या सा वाग्ब्रह्मैव तत् । जै० उ० २. १३. २ ॥ ब्रह्मैव वाचः परमं व्योम । तै० ३. ९. ५. ५ ॥ वाग्वै ब्रह्म च सुब्रह्म चेति । ऐ० ६. ३ ॥ वाग्वै सुब्रह्मण्या । ऐ० ६. ३॥ वागुक्थम् । ष० १. ५ ॥ वाग्घि शस्त्रम् । ऐ० ३. ४४ ॥ वाक् शंसः । ऐ० २. ४ ॥ ६. २७, ३२ ॥ गो० उ० ६. ८ ॥ वाग्वै रथन्तरम् । ऐ० ४. २८ ॥

वाग्रन्थरम् । तां० ७. ६. १७ ॥ वाग्वै त्वष्टा वाग्घीदं सर्वं ताष्टीव । ऐ० २. ४ ॥ वाग्वै दध्यङ्ङाथर्वणः ( यजु० ११. ३३ ) । श० ६. ४. २. ३ ॥ वाग्वा अर्बुदम् । तै० ३. ८ १६. ३ ॥ वाग्वै भर्गः । श० १२. ३. ४. १० ॥ वागेव भर्गः । गो० पू० ५. १५ ॥ वाग्वा उत्तरनाभिः । श० १४. ३. १. १६ ॥ वागुदयनीयम् । कौ० ७. ९ ॥ वाग्वामभृत् । श० ७. ४. २. ३५ ॥ वाग्वै शर्म ( ऋ० ३. १३. ४. ) ऐ० २. ४० ॥ वाग्वै स्रक् । श० ६. ३. १. ८ ॥ वागेवादाभ्यः ( ग्रहः ) । श० ११. ५. ९. १ ॥ वाग्वै सीतासमरः । श० ७ २. ३. ३ ॥ वागिति श्रोत्रम् । जै० उ० ४. २२. ११ ॥ वाग्वा इन्द्रः । कौ० २. ७ ॥ १३. ५ ॥ वाग्ध्यैन्द्री । ऐ० २. २६ ॥ एतद्ध वा इन्द्राग्न्योः प्रियं धाम यद्वागिति । ऐ० ६. ७ ॥ गो० उ० ५. १३ ॥ अग्निर्मे वाचि श्रितः । तै० ३. १०. ८. ४ ॥ सा या सा वागग्निस्सः । जै० उ० १. २८. ३ ॥ सा या सा वागासीत्सोऽग्निरभवत् । जै० उ० २. २. १ ॥ या वाक् सोऽग्निः । गो० उ०४.११ ॥ वागेवाग्निः । श० ३. २. २. १३ ॥ वाग्वाऽअग्निः । श० ६ १. २. २८ ॥ जै० उ० ३. २. ५ ॥ तपो मे तेजो मेऽन्नम्मे वाङ् मे । तन्मे त्वयि ( अग्नौ ) । जै० उ० ३. २०. १६ ॥ वाग्वाऽअस्य ( अग्नेः ? ) स्वो महिमा । श० १. ४. २. १७ ॥ वाग्वाऽअस्य ( प्रजापतेः ) स्वो महिमा । श० २. २. ४. ४ ॥ प्रजापतिर्वा इदमेक आसीत्तस्य वागेव स्वमासीद्वाग् द्वितीया स ऐक्षतेमामेव वाचं विसृजा इयं वा इद९ सर्वं विभवन्त्येष्यतीति स वाचं व्यसृजत ( काठकसंहितायाम् १२. ५ ॥ २७. १:–प्रजापतिर्वा इदमासीत्तस्य वाग् द्वितीयासीत्तामिथुनं समभवत्सा गर्भमधत्त सास्मादपाक्रामत्सेमाः प्रजा असृजत सा प्रजापतिमेव पुनः प्राविशत् ) । तां० २०. १४. २ ॥ प्रजापतिर्हि वाक् । तै० १. ३. ४. ५ ॥ वाग्घि प्रजापतिः । श० १. ६. ३. २७ ॥ वाग्वै प्रजापतिः । श० ५. १.५.६॥ १३. ४. १.१५॥ प्रजापतिर्वै वाक्पतिः । श०३. १. ३. २२ ॥ तदेता वाऽअस्य ( प्रजापतेः ) ताः पञ्च मर्त्यास्तन्व आसं-

लोम त्वङ् मांसमस्थि मज्जाथैता अमृता मनो वाक् प्राणश्चक्षुः श्रोत्रम् । श० १०. १. ३. ४ ॥ ( यजु० ३०. १ ) वाग्वाऽ इदं कर्म प्राणो वाचस्पतिः । श० ६. ३. १. १९ ॥ नमो वाचे प्राणपत्न्यै स्वाहा । ष० २. ९ ॥ वाक् च वै प्राणश्च मिथुनम् । श० १. ४. १. २ ॥ सा ह वागुवाच । ( हे प्राण ! ) यद्वाऽअहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीति । श० १४. ९. २. १४ ॥ वाग्वातस्य पत्नी । गो० उ० २. ९ ॥ वाग्वै वायुः तै० १. ८. ८. १ ॥ तां० १८. ८. ७ ॥ तस्मात्सर्वे प्राणा वाचि प्रतिष्ठिताः । श० १२.८. २. २५॥ तस्याः ( वाचः ) उ प्राण एव रसः । जै० उ० १. १. ७ ॥ यावद्धै प्राणेष्वापो भवन्ति तावद्वाचा वदति । श० ५. ३. ५. १६ ॥ वाक् च वै मनश्च देवानां मिथुनम् । ऐ० ५. २३ ॥ तस्य ( मनसः ) एषा कुल्या यद्वाक् जै० उ० १. ५८. ३ ॥ वाग्देवत्यं साम वाचो मनो देवता । जै० उ० १. ५९. १४ ॥ वाग्वै मनसो ह्रसीयसी । श० १.४.४. ७॥ अपरिमिततरमिव हि मनः परिमिततरेव हि वाक् । श० १. ४. ४. ७ ॥ मनो ह पूर्वं वाचो यद्धि मनसाभिगच्छति तद्वाचा वदति । तां० १. १. १. ३ ॥ अलगल (म्न)मिव ह वै वाग्वदेद्यन्मनो न स्यात्तस्मादाह धृता मनसेति । श० ३. २. ४. ११ ॥ वागिति मनः । जै० उ० ४. २२. ११ ॥ वाक् च वै मनश्च हविर्धाने । कौ० ९. ३ ॥ युनज्मि वाच सह सूर्य्येण । तां० १. २. १ ॥ सा या सा वागसौ स आदित्यः । श० १०. ५. १. ४ ॥ वागिति चन्द्रमाः । जै० उ० ३. १३. १२ ॥ वाग्घ चन्द्रमा भूत्वोपरिष्टात्तस्थौ । श० ८. १ २. ७ ॥ वाग्वै देवानां मनोता । ऐ० २. १० ॥ कौ० १०. ६ ॥ वाग्यज्ञस्य ( रूपम् ) । श० १२. ८ २. ४ ॥ वाग्घि यज्ञः । श० १. ५. २. ७ ॥ ३. १ ४. २ ॥ वाग्वै यज्ञः । ऐ० ५. २४ ॥ श० १. १. २. २ ॥ ३. १. ३. २७ ॥ ३. २. २. ३ ॥ वागु वै यज्ञः । श० १. १. ४. ११ ॥ वाचो रसो यज्ञायज्ञीयम् ( साम ) । तां० १८. ५. २१ ॥ १८. ११. ३॥ वाग्यज्ञायज्ञीयम् ( साम ) तां० ५. ३. ७ ॥ ११. ५. २८ ॥ वाग्वै रूपम् (साम) । तां० १६.५. १६॥

वाग्यज्ञस्य होता । ऐ० २. ५, २८ ॥ वाग्वै यज्ञस्य होता । श० १२. ८. २. २३ ॥ १४. ६. १. ५ ॥ वाग्घोता । श० १. ५. १. २१ ॥ गो० उ० ५. ४ ॥ वागेव होता । गो० पू० २. १० ॥ गो० उ० ३. ८॥ वाग्वै होता ( यजु० १३. ७ ) । कौ० १३. ९. १७. ७ ॥ वाग्घोता षड्ढोतॄणाम् । तै० ३. १२. ५. २ ॥ अग्निर्वै होताधिदैवतं वागध्यात्मम् । श० १२. १. १ ४॥ गो० पू० ४. ४. वाग्वै हविष्कृत् । श० १. १. ४. ११ ॥ उद्गातारो वै वाचे भागधेयं कुर्वन्ति । तां० ६. ७. ५ ॥ वाक् सर्वे ऋत्विजः । गो० उ० ३. ८ ॥ वाचा पशून्दाधार तस्माद्वाचा सिद्धा वाचाहूता आयन्ति तस्मादु नाम जानते । तां० १०. ३. १३ ॥ त्र्यावृद्वै वाक् । तां० १०. ४. ६.९॥ त्रधा विहिता हि वाग्—ऋचो यजूंषि सामानि । श० ६. ५. ३. ४ ॥ सा वाऽएषा वाक् त्रेधा विहिता । ऋचो यजूंषि सामानि । श० १०. ४. ५. २ ॥ वागिति सर्वे देवाः । जै० उ० १. ९. २ ॥ वागेव देवाः । श० १४. ४. ३. १३ ॥ वाग्देवः । गो० पू० २. १० ॥ वज्र एव वाक् । ऐ० २. २१ ॥ वाग्घि वज्रः । ऐ० ४. १ ॥ वज्रस्तेन यद्वाक् । ऐ० २. १६ ॥ वाक् च ह वै प्राणापानौ च वषट्कारः । गो० उ० ३. ६ ॥ वाक् च वै प्राणापानौ च वषट्कारः । ऐ० ३. ८ ॥ वाग्वै वषट्कारो वाग्रेतः । श० १. ७. २. २१ ॥ वागु हि रेतः । श० १. ५. २. ७ ॥ शीर्ष्णो हीयमधिवाग्वदति । श० १. ४४. ११ ॥ वाग्घृदये ( श्रिता ) । तै० ३. १०. ८. ४ ॥ तदेतत्तुरीयं वाचो निरुक्तं यन्मनुष्या वदन्त्यथैतत्तुरीयं वाचोऽनिरुक्तं यत्पशवो वदन्त्यथैतत्तुरीयं वाचोऽनिरुक्तं यद्वयांसि वदन्त्यथैतत्तुरीयं वाचोऽनिरुक्तं यदिदं क्षुद्रंसरीसृपं वदति । श० ४. १. ३. १६ ॥ वाग्वै देवानां पुरान्नमास । तै० १. ३. ५. १ ॥ वाग्वै वाजस्य प्रसवः तै० १. ३. २. ५॥ वाग्योनिः । ऐ० २. ३८ ॥ उदीचीमेव दिशम् । पथ्यया स्वस्त्या प्राजानंस्तस्मादत्रोत्तराहि वाग्वदति कुरुपञ्चालत्रा । श० ३. २. ३. १५ ॥ तस्मादुदीच्यां दिशि प्रज्ञाततरा वागुद्यत उदञ्च उ एव यन्ति वाचं शिक्षितुं यो वा तत आगच्छति तस्य वा शुश्रूषन्त इति । कौ० ७. ६ ॥ अयातयाम्नी वाऽइयं वाक् । श० ४. ५. ८. ३ ॥ वागु सर्वं भेषजम् श० ७. २. ४. २८ ॥ प्रादेशमात्रं हीदमभि वाग्वदति । श० ६. ३. १. ३३ ॥ सेयं वागृतुषु प्रतिष्ठिता वदति । श० ७. ४. २. ३७ ॥ तस्मात्संवत्सरवेलायां प्रजाः (=शिशवः) वाचं प्रवदन्ति । श० ७. ४. २. ३८ ॥ स ( प्रजापतिः ) वाचमयच्छत्स संवत्सरस्य परस्ताद्व्याहरद् द्वादश कृत्वः । ऐ० २. ३३ ॥ वाक् संवत्सरः । तां० १०. १२. ७ ॥ सर्वां वाचं पुरुषो वदति । तां० १३. १२. ३ ॥ तां वनस्पतयश्चतुर्द्धा वाचं विन्यदधुर्दुन्दुभौ वीणयामक्षे तूणवे तस्मादेषा वदिष्ठैषा वल्गुतमा वाग्या वनस्पतीनां देवानांह्येषा वागासीत् । तां० ६. ५. १३ ॥ परमा वा एषा वाग्या दुन्दुभौ । तै० १. ३. ६. २–३ ॥ एषा वै परमा वाग्या सप्तदशानां दुन्दुभीनाम् । श० ५. १. ५. ६ ॥ एतद्वाचश्छिद्रं यदनृतम । तां० ८. ६. १३ ॥ वाचो वा एतौ स्तनौ ( यदधिके द्वे अक्षरे ) । सत्यानृते वाव ते । गो० उ० ४. १९ ॥ वाचो वाव तौ स्तनौ सत्यानृते वाव ते । ऐ० ४. १ ॥ एतद्वै वाचो जितं यद्दामीत्याह । ऐ० ८. ९ ॥ एकाक्षरा वै वाक् । तां० ४. ३. ३ ॥ योषा हि वाक् । श० १. ४. ४. ४ ॥ योषा वाऽइयं वाग्यदेनं न युविता । श० ३. २. १. २२ ॥ वागिति स्त्री । जै० उ० ४.२२. ११॥

**वाकम्** यजुरथर्व च १ । १६४ । २४ ॥

**वाकाः** उच्यन्ते यास्ताः १७ । ५७ ॥

**वाक्पतिः** यो वाचोः वेदविद्यायाः पतिः स्वामी पालयिता ४ । ४ ॥

वाक्पतिः ( यजु० ४. ४ ) प्रजापतिर्वै वाक्पतिः । श० ३. १. ३. २२ ॥

**वाघतः** यज्ञविद्याऽनुष्ठानेन सुखसम्पादिन ऋत्विजः १ । ३ । ५ । मेधाविनः १ ।

५८। ७। वाग्विद्यायुक्ताः १ । ११०। ४। ये वाचा दोषान् घ्नन्ति ते मेधाविनः ३।३७।२॥ [वाघते] वाक् हन्यते ज्ञायते येन तस्मै विदुष ऋत्विजे मनुष्याय १। ३१। १४॥

वाघतः वाङ्नाम। निघ० ३. १८. वोढारः। नि० ११. १६॥

**वाच्यः** वाचो भावः कर्म्म वा १३। ५८॥

**वाजः** अन्नम् १८। १। शास्त्रबोधो वेगो वा १८। ३२। संग्रामः १। २७। ८। ज्ञानवान् २। १। १२। ऐश्वर्ययुक्तः ७। ४८। २। बलविज्ञानान्नयुक्तः ७। ४८। ३। वेगादिगुणयुक्तः १। १११। ५॥ [वाजाः] धनुर्वेदबोधजा वेगाः १२। ११३। सत्कर्मसु वेगाः ४। ३४। ३। प्राप्तब्रह्मचर्याः ४। ३४। ५। प्राप्तहस्तक्रियाः ४। ३६। २। प्राप्तसुशीला वेगवन्तः ४।३६।७। प्रशंसिता ४। ३७। ७। दातारः ४। ३७। ८॥ [वाजम्] धनम् ६।५४।५॥ [वाजान्] विज्ञानवेगयुक्तान् सम्बन्धिनः १। १२१। १४। प्राप्तव्यान् शुभगुणकर्मस्वभावान् ४। ३। १५। हिंसकान् ६। १७। २। वेगादिगुणयुक्तान् स्वसेनास्थान्वीरान् ७। ४४। अत्युत्तमान्नादिभोगान् ३५। १०॥ [वाजैः] उत्तमैरन्नैर्विमानादियानैः सह वा (बहुलं छन्दसि अ० ७। १। १०। अनेनैनसादेशाभावः) १। ५। ३॥ [वाजाय] विज्ञानप्रदाय ३। १६। १॥ [वाजस्य] वजन्ति प्राप्नुवन्ति सुखानि यस्मिन् व्यवहारे तस्य १। ११। ३। राज्यस्य ६। २४। विद्याविज्ञानजन्यस्य कार्यस्य २७। ३७॥

वाजः अन्ननाम। निघ० २. ७॥ वाजेभिः अन्नैः। नि० ११. २६॥

अन्नं वै वाजः। तै० १. ३. ६. २, ६॥ १. ३. ८. ५॥ श० ५. १. ४. ३॥ ६. ३. २. ४॥ तां० १३. ९. १३, २१॥ १५. ११. १२॥ १८. ६. ८॥ अन्नं वाजः। श० ५. १. १. १६॥ ८. १. १, ९॥ (ऋ० ३. २७. १) अन्नं वै वाजाः। श० १. ४. १. ९॥ वीर्यं वै वाजाः। श० ३. ३. ४. ७॥ ओषधयः खलु वै वाजः। तै० १. ३. ७. १॥ वाजो वै पशवः। ऐ० ५. ८॥ वाजो वै स्वर्गो लोकः। तां० १८. ७. १२॥ गो० उ० ५. ८॥ वाग्वै वाजस्य प्रसवः। तै० १. ३. २. ५॥

**वाजजठरः** वाजो क्षुद्वेगो जठरे यस्मात्सः ५। १६। ४॥

**वाजजित्** [वाजजित्] वाजमन्नं जयति येन सः (वाज इत्यन्ननामसु पठितम्। निघ० २। ७। अत्र कृतो बहुलमिति करणे क्विप्) २। ७। वाजं सर्वस्य वेगं जयति स ईश्वरः। वाजं जयति येन वा स भौतिकः २। १०। संग्रामं विजयमानः ६।६। [वाजजितम्] यो येन वा वाजं संग्रामं जयति तम् २। १४॥

वाजजिद् (साम) भवति सर्वस्याप्त्यै सर्वस्य जित्यै। तां० १३. ९. २०॥ तां० १५. ११. ११-१२॥

**वाजदाः** यो वाजमन्नादिकं ददाति सः ३।३६।५॥ [वाजदा] विज्ञानप्रदौ १।१३५।५।

**वाजदाव्नाम्** वाजस्य विज्ञानस्यान्नस्य दातॄणामुपदेशकानां वा १। १७। ४॥

**वाजपतिः** अन्नादिरक्षको गृहस्थ इव ११। २५। अन्नाद्यधिष्ठाता १८। ३३। अन्नादि-

रत्नकः १८ । ३४ ॥

एष ( अग्निः ) हि वाजानां पति । ऐ० २. ५॥

वाजपस्त्यः वाजानि अन्नानि पस्त्ये गृहे यस्य सः ६ । ५८ । २ ॥

वाजपेशसम् वाजस्य विज्ञानस्य पेशो रूपं यस्यां ताम् २ । ३४ । ६ ॥

वाजप्रमहः वाजैर्विज्ञानादिभिर्विद्वद्भिर्वा प्रकृष्टतया मह्यते पूज्यते यस्तत्संबुद्धौ १ । १२१ । १५ ॥

वाजप्रसूता वाजेन सूर्यस्य गमनेन प्रसूतोत्पन्ना १ । ६२ । ८ ॥ [ वाजप्रसूताः ] विज्ञानादिगुणैः प्रकाशिताः १ । ७७ । ४॥

वाजम्भरः प्राप्तं बहुभारं धरति सः ४ । ११। ४ ॥ [ वाजम्भरम् ] यो वाजं वेगं बिभर्ति तम् १ । ६० । ५ ॥

वाजयते गमयति ४ । ७ । ११ ॥

वाजयध्यै विज्ञापयितुम् ४ । २६ । ३ ॥

वाजयन् विज्ञापयन्तो योधयन्तो वा ( अत्र सुपां सुलुगिति जसः स्थाने सुः ) १ । १०६ । ४ । प्रापयन् ३ । ६० । ७ । वेगं कारयन् ७ । २४ । ५ । प्राप्तुमिच्छन् ७ । ३२ । ११ ॥ [ वाजयन्ता ] वाजमन्नादिकमिच्छन्तौ ६ । ६० । १॥ [वाजयन्तः] विज्ञानमन्नं वेच्छन्तः ४ । १७ । १६ । जानन्तो ज्ञापयन्तो वा ४ । ४२ । ५ । हर्षयन्तः ६ । २४ । ६ । गच्छन्तो गमयन्तो वा ६ । ७५ । ७ । जलं चालयन्तो वायवः १ । ३० । १ । कुर्वन्तः कारयन्तो वा ५ । ४ । १ । [ वाजयन्तम् ] भूगोलान् गमयन्तम् ५ । ३१ । १ । कृताऽन्वेषणम् ५ । ३५ । ७ ॥

वाजयन्ती प्रापयन्ती ५ । १ । ३ ॥ [ वाजयन्तीः ] ज्ञापयन्त्यः ४ । ४१ । ८ ॥ [ वाजयन्तीम् ] सबलानां विद्यानां प्रज्ञापिकाम् १ । १०६ । १। सत्याऽसत्यं विज्ञापयन्तीम् ३ । ६२ । ८ ॥

वाजयामः विज्ञापयामः (वज गतावित्यन्तर्गतण्यर्थेन ज्ञापनार्थोऽत्र गृह्यते ) १ । ४ । ६ ॥

वाजयुः यो वाजं वेगं कामयते सः २ । २० । १ । वाजं प्रशस्तमन्नं धनं वाऽऽत्मन इच्छति ७ । ३१ । ३ ॥ [वाजयुम्] यो वाजयति वेगेन गच्छति तम् २ । ३१ । २ ॥

वाजरत्ना वाजो बोधो रत्नं धनं ययोस्तौ ४। ४३ । ७ ॥ [ वाजरत्नाः ] वाजाऽन्नादयो रत्नानि सुवर्णादीनि च येषां ते ४ । ३५। ५ ॥ धनधान्योन्नतिकरीः ६।३५। १ ॥

वाजवत् वाजो बहुविधं भोक्तव्यमन्नमस्त्यस्मिन् तत् ( अत्र भूम्न्यर्थे मतुप् ) १ । ६ । ७ ॥

वाजवतीः प्रशस्ता वाजा वेगादयो गुणा विद्यन्ते यासु नौकादिषु ताः । ( अत्र प्रशंसार्थे मतुप् ) १ । ३४ । ३ ॥ [वाजवत्या] वाजः प्रशस्तमन्नं युद्धं विज्ञानं वा विद्यते

यस्यां तया १ । ३१ । १८ । [ वाजवत्यै ] वाजः प्रशस्तं ज्ञानं विद्यते यस्यां तस्यै १ । १२० । ६ ॥

**वाजवान्** बहवो वाजा अन्नाद्यैश्वर्यभोगा विद्यन्ते यस्य सः ३ । ६० । ६ ॥ [ वाजवन्तम् ] वाजाः शुष्कान्नविशेषा विद्यन्ते यस्य तम् ३ । ५२ । ६ । बह्वन्नविज्ञानसाधकम् ४ । ३४ । १० ॥

**वाजश्रवसः** वाजोऽन्नं विद्याश्रवणञ्च पूर्णं येषां ते ६ । ३५ । ४ ॥ [ वाजश्रवसम् ] वाजो वेगः श्रवोऽन्नं यस्मात्तम् ३ । २ । ५ ॥

**वाजश्रुतासः** वाजं विज्ञानं श्रुतं यैस्ते ४ । ३६ । ५ ॥

**वाजसनिम्** अन्नविज्ञानविभाजकम् ३ । ५१ । २ । वाजस्य सनिर्विभागो यस्य तस्मिन् २० । ७६ ॥

**वाजसाः** यो वाजान् संग्रामान् विभजति सः ६ । ५ । वाजान् संग्रामान् सनन्ति सम्भजन्ति येन सः ६ । ६ ॥

**वाजसातमा** वाजान् युद्धसमूहान् सनन्ति सम्भज्य विजयन्ते याभ्यां तावतिशयितौ ( अत्र सुपां सुलुगित्याकारादेशः ) १ । २८ । ७ । वाजस्य विज्ञानस्य धनस्य वातिशयेन विभक्तारौ ३ । १२ । ४ ॥ [ वाजसातमम् ] वाजानां विज्ञानानां वेगानामतिशयेन विभाजकम् ५ । १३ । ५ ॥

**वाजसातये** युद्धविभागाय पदार्थविभागाय वा १ । १३० । १ । वाजस्य संग्रामस्य सम्यक् सेवनाय २ । ३१ । ३ । अन्नादीनां संविभागाय ३।२।७। धनादिसंविभागाय ३।३७।५ संग्रामविभाजिकायै ६ । ५३ । १ । विज्ञानस्य धनस्य वा प्राप्तयेऽथवा संग्रामाय ६ । ५३ । ४ । अन्नादीनां विभागे यस्मिँस्तस्मै ६ । ५७ । १ । वाजस्य वेगस्य संभजनाय ३३ । ७५ । परोपकार के अर्थ विज्ञान और अन्न आदि के दान के लिये । अथर्व० १४ । २ । ७२ ( १७१ विधिः ) [ वाजसातौ ] वाजान् धनाद्यान् पदार्थान् सनन्ति विभजन्ति यस्मिँस्तस्मिन् संग्रामे ( वाजसाताविति संग्रामनाम । निघ० २ । १७ ) ३ । ३० । २२ ॥

वाजसातौ संग्रामनाम । निघ० २. १७ ॥
वाजसातये अपत्यजननाय चान्नसंसननाय च । नि० १२. ४५ ॥

**वाजसाम्** वाजस्यान्नादेर्विभाजिकाम् ६ । ५३ । १० ॥

**वाजिनम्** धार्मिकं शूरवीरं मनुष्यं प्राप्तिनिमित्तं सूर्यलोकं वा ( वाजिन इति पदनामसु० । निघ० ५ । ६ । अनेन युद्धेषु प्राप्तवेगहर्षाः शूराः सूर्यलोका वा गृह्यन्ते ) १ । ४ । ८ । विजयप्रापकम् १ । ४ । ६ । विज्ञानयुद्धविद्याकुशलम् १ । १०६ । ४ । वाजिनां विज्ञानवतामिदमवयवभूतं विज्ञानम् १३ । ३६ । वाजः प्रशस्तान्यन्नानि विद्यन्ते येषु तेषामिदं सारं वस्तु १६ । २१ । बह्वन्नं साररूपम् १६ । २३॥ [वाजिनानि]

शीघ्रगमनानि १७ । ४२ ॥ [ वाजिना ] ज्ञानगमनप्राप्तिरूपाणि ३ । २० । २ ॥ [ वाजिनेषु ] वाजिनानां संग्रामाणामवयवेषु कर्मसु १३ । ४८ ॥

**वाजिनी** वजितुं प्राप्तुं शीलं यस्याः ३ । ६ । १ ॥ [ वाजिनीम् ] बलवेगवतीम् १ । २६ ॥ [ वाजिनि ] प्रशस्तविज्ञानयुक्ते ६ । ६१ । ६ ॥

वाजिनी उषोनाम । निघ० १. ८ ॥

**वाजिनीवती** सर्वविद्यासिद्धक्रियायुक्ता । वाजिनः क्रियाप्राप्तिहेतवो व्यवहारास्तद्वती (वाजिन इति पदनामसु० । निघ०५।६। अनेन वाजिनीति गमनार्था प्राप्त्यर्था च क्रिया गृह्यते ) १।३ ।१०। सर्वोत्तम क्रिया विज्ञान युक्त १।६।१० (३५ आर्य०) । प्रशस्तविज्ञानक्रियासहिता ६।६१। ४॥ [ वाजिनीवति ] बहवो वाजिन्यः क्रिया विद्यन्ते यस्या स्तत्सम्बुद्धौ १ । ४८ । १६ । वाजयन्ति ज्ञापयन्ति गमयन्ति वा यासु क्रियासु ताः प्रशस्ता वाजिन्यो विद्यन्तेऽस्यां सा १ । ९२ । १५ ॥

वाजिनीवती उषोनाम । निघ० १. ८ ॥

**वाजिनीवसू** उषोवत्प्रकाशवेगयोर्वासतः ( वाजिनीत्युषसो नामसु पठितम् । निघ० १ । ८ ) १ । २ । ५। यौ वाजिनीं वेगवतीं क्रियां वासयतस्तौ २ । ३७ । ५ । यौ वाजिनीं बह्वन्नादिक्रियां वासयतस्तौ ५ । ७४ । ६ । धनधान्यप्रापकौ ५ । ७४ । ७। यौ वाजिनीमन्नादियुक्तां सामग्रीं वासयतस्तौ ५ । ७५ । ३। यौ विज्ञानक्रियां वासयतस्तौ ५ । ७८ । ३ ॥ [ वाजिनीवसो ] यो वाजिनीमुषसं वासयति तत्सम्बुद्धौ ३ । ४२ । ५ ॥

**वाजिनीवान्** प्रशस्तवेगक्रियायुक्तः १।१२२। ८। वेगक्रियाज्ञानयुक्तः ५ । ३६ । ६ ॥ [ वाजिनीवतोः ] प्रशस्ता विज्ञानादियुक्ता सभा सेना च विद्यते ययोस्तयोः १।१२०। १० ॥ [ वाजिनीवति ] बह्वैश्वर्यान्नादियुक्ते २ । ४१ । १८ । प्रशस्तक्रियान्नयुक्ते १ । ९२ । १३ ॥

**वाजिनेयः** वाजिन्या ज्ञानवत्या अपत्यम् ६ । २६ । २ ॥

**वाजिन्तमम्** प्रशंसिता बहवोऽतिशयिता वाजिनो विद्यन्ते यस्मिँस्तम् ४ । ३७ । ५ ॥

**वाजी** [ वाजी ] वेगवानश्वः ११ । १८ । प्राप्तनीतिः ११ । ४४ । वेगवान् २२ । १६ । विज्ञानवान् २३ । २० । वेगः १ । १६२ । २१ । बलवान् २ । ४३ । २ ( आर्य० ) । वेगवान् वह्निः ३ । २७ । ८ । बह्वन्नवान् ४ । ३ । १२ । विज्ञापको दिवसः ५ । १ । ४ ॥ [ वाजिनः ] वेगगुणवन्तो जलादयः १ । १६८ । १८ । ज्ञानवन्तो योद्धारः ७ । ३८ । ७ ॥

वाजी अश्वनाम । निघ० १. १४ ॥ वाजी वेजनवान् । नि० २. २८ ॥ वाजिनेषु वाग्ज्ञेयेषु बलवत्स्वपि । नि० १. २० ॥

यत्सद्यो वाजान्त्समजयत । तस्माद्वाजी नाम । तै० ३. ९. २१. २ ॥ ( हे ऽश्व त्वं ) वाज्यसि । तां० १. ७. १ ॥ वाजिनो ह्यश्वाः । श० ५. १. ४. १५ ॥ ( अश्वो ) वाजी ( भूत्वा ) गन्धर्वान् (अव-

हत)। श० १०. ६. ४. १ ॥ देवाश्वा वै वाजिनः। कौ० ५. २ ॥ देवाश्वा वै वाजिनोऽत्र देवाः साश्वा अभीष्टाः प्रीता भवन्ति। गो० उ० १. २० ॥ अग्निर्वायुः सूर्य्यः। ते वै वाजिनः। तै० १. ६. ३. ९ ॥ आदित्यो वाजी। तै० १. ३. ६. ४ ॥ इन्द्रो वै वाजी। ऐ० ३. १८ ॥ पशवो वै वाजिनः। गो० उ० १. २० ॥ ऋतवो वै वाजिनः। कौ० ५. २ ॥ श० २. ४. ४. २२ ॥ गो० उ० १. २० ॥ छन्दांसि वै वाजिनः। गो० उ० १. २० ॥ तै० १. ६. ३. ९ ॥ उक्थ्या वाजिनः। गो० उ० १. २२ ॥ (ऋ १०. ७२. १०) इन्द्रियं वै वीर्यं वाजिनम्। ऐ० १. १३ ॥ योषा पयस्या रेतो वाजिनम्। श० २. ४. ४. २१ ॥ २. ५. १. १६ ॥ रेतो वाजिनम्। तै० १. ६. ३. १० ॥ पशवो वै वाजिनम्। तै० १. ६. ३. १० ॥

**वाजेध्यायै** वाजेनान्नेन युद्धेन वा इध्या दीपनीया सेना यज्ञपात्रे वा यया क्रियया तस्यै, वाजेन बहुसाधनसमूहेन संग्रामेण सेनया यज्ञेन वा प्रकाशनीयायै सत्यनीत्यै वा १। २६ ॥

**वाञ्छन्तु** अभिलषन्तु १२। ११ ॥

**वाट्** वहन्ति सुखानि यया क्रियया सा वाट् (निपातोऽयम्) २। १८। क्रियार्थे २। २०। येन वहति सः १८। ३८। वहनम् १८। ३९। सुष्ठु ३८। ६ ॥ [ **वाहः** ] ये वहन्ति ते ३। ३०। २०। प्राप्तान् ३। ५३। ३ ॥ [ **वाहसा** ] प्रापणेन २६। ८॥

**वाणम्** वाणादिशस्त्रास्त्रसमूहम् १। ८५। १०। वाणीम् ४। २४। ६ ॥

(वाणः) (महावीणा) शततन्त्रीको भवति। तां० ५. ६. १३॥अन्तो वै वाणः (वाद्यानाम)। तां० ५. ६. १२ ॥ १४. ७. ८ ॥

**वाणिजम्** वणिगपत्यम् ३०। १७ ॥ [ **वाणिजाय** ] वणिजां व्यवहारेषु कुशलाय १६। १६ ॥

**वाणी** वाणी १। ८८। ६। वेदवाक् ६। ६३। ६। उपदेशकावित्र (इञ् वपादिभ्य इति शब्दार्थाद् वणधातोरिञ्) १। ११६। ५ ॥ [ **वाणीः** ] वेदचतुष्टयीः १। ७। १। सप्तद्वारावकीर्णा वाचः ३। ७। १ ॥

वाणी वाङ्नाम। नि० १. ११ ॥

**वाणीची** वाक् ५। ७५। ४ ॥

वाणीची वाङ्नाम। नि० १. ११ ॥

**वातः** बाह्यो वायुः ८। ५८। मध्यो वायुः १। १६१। १४। गन्ता १५। ६२ ॥ [ **वातम्** ] प्राप्तम् १६। ८४ ॥ [ **वाताय** ] विज्ञानाय ८। ३। ६। वायोः शुद्धये, सुखवृद्धये १। ६। वायुविद्यायै वायोः शोधनाय वा, गृहस्थाय वायवे, ओषधिस्थवायुविज्ञानाय, वायुवेगगतिविज्ञानाय, प्राणशक्तिविज्ञानाय, उदानाय वा ३८। ७॥ [ **वातस्य** ] प्राणस्य १। १८१। १२ ॥ [ **वाते** ] विज्ञातव्ये व्यवहारे (वात इति पदनामसु। निघ० ५। ४) ८। २१ ॥

वातः वातीति सतः। नि० १०. ३४ ॥

(यजु० १५. ६२) वातो हि वायुः। श० ८. ७. ३. १२ ॥ यो वै प्राणः स वातः। श० ५. २. ४. ९ ॥ प्राणो वै वातः। श० १. १. २. १४॥ (=विश्वव्यचाः–यजु० १८. ४१) एष (वातः) हीदं सर्वं व्यचः करोति। श० ९. ४. १. १० ॥ न वै वातात् किञ्चनाशीयोऽस्ति न मनसः किञ्चनाशीयोऽस्ति तस्मादाह वाता वा मनो वेति। श०५.१. ४. ८ ॥ वातो वै यज्ञः। श० ३. १. ३. २६ ॥ युक्तो वातोन्तरिक्षेण ते सह। तां० १. २. १ ॥

वाग्वातस्य पत्नी । गो० उ० २. ९ ॥ तस्मादेषो-ऽर्वाचीनमेव वातः पवते । श० ८. ७. ३. ९ ॥

वातचोदितः वायुना प्राणेन वा प्रेरितः १ । १४१ । ७ ॥

वातजूतः वातेन वायुना जूतः प्राप्तवेगः १ । ५८।४॥ [वातजूता] वायुवद्वेगौ (अत्राकारादेशः) १ । ६४ । १० ॥ [वातजूताः] वात इव जूतं शीघ्रगमनं येषां ते १ । १४० । ४ । वायु प्रेरितास्त्रसरेण्वादिपदार्थाः ४ । ३३ । १ ॥ वायुना प्राप्ततेजस्काः ३३ । २ ॥

वातत्विषः वातविद्यया त्विषः कान्तयो येषां ते ५ । ५४ । ३। वातस्य त्विट् कान्तिर्येषां ते ५ । ५७ । ४ ॥

वातप्रमियः या वातं वायुं प्रमिन्वन्ति ताः ४ । ५८ । ७ । वातेन प्रमातुं ज्ञातुं योग्याः १७ । ६५ ॥

वातयामसि वात इव प्रेरयेम १। १२८ । २ ॥

वातरंहाः वात इव रंहो गमनं यस्य १। ११८। १ । वायुवद्वेगवन्तोऽग्न्यादयः ५ । ७७ । ३ ॥

वातस्वनसः वातस्य स्वनः शब्द इव शब्दो येषां ते ७ । ५६ । ३ ॥

वातापे वात इव सर्वान् पदार्थान् व्याप्नोति तत्सम्बुद्धौ १। १८७ । ८ ।

इन्द्र उ वै वातापिः स हि वातमाप्त्वा शरीराण्यर्हन्प्रतिप्रैति । कौ० २७. ४ ॥

वाताप्यम् वातेन शुद्धेन वायुनाप्तुं योग्यम १ । १२१ । ८ ॥

वाति गच्छति ६ । १५ ॥

वाति गतिकर्मा । निघ० २. १४ ॥

वातु प्रापयतु २५ । १७ । गच्छतु ७ । ३५ । ४ ॥

वात्याय वायुविद्यायां भवाय १६ । ३६ ॥

वादिष्टम् वदतम् ५ । १७ ॥

वानस्पत्यः वनस्पतेर्विकारो रसमयः १ । १४ । यो वनस्पतेर्विकारस्तं हविःसंस्कारार्थम् १ । १५ ॥

वान्ति गच्छन्ति ५ । ८३ । ४ ॥

वापुषः वपुषि भवः ९ । ७५ । ४ ॥

वामजाताः वामेषु प्रशस्तेषु कर्मसु वा जाताः प्रसिद्धाः ( वाम इति प्रशस्यनाम निघ० ३ । ८ ) १२ । १०८ ॥

वामदेवस्य सुरूपयुक्तस्य विदुषः ४ । १६ । १८ ॥

वामदेव्यम् वामदेवेन दृष्टं विज्ञतं विज्ञापितम्वा १२ । ४ ॥

( कया नश्चित्र आ भुवत्-ऋ० ४. ३१. १-३ ॥ ) तौ (मित्रावरुणौ) अब्रूतां वामं मर्या इदं देवेष्वाजनीति तस्माद्वामदेव्यम् ( साम ) । तां० ७. ९. १ ॥ पिता वै वामदेव्यं पुत्राः पृष्ठानि । तां० ७. ९. १ ॥ वामदेव्यं वै साम्नाऽ सत् । तां० ४. ८. १० ॥ सत (=उत्कृष्टमिति सायणः) वै वामदेव्यऽसाम्नाम् । तां० १५. १२. २ ॥ वामदेव्यमात्मा ( महाव्रतस्य ) । तां० १६. ११. ११ ॥ शान्तिर्वै वामदेव्यम् । तै० १. १. ८. २ ॥ शान्तिर्वै भेषजं वामदेव्यम् । कौ० २७. २ ॥ २९. ३, ४ ॥ सर्वदेवत्यं वै वामदेव्यम् । तां० ७. ८. २ ॥ प्राजापत्यं

वै वामदेव्यम् । तां० ४. ८. १५ ॥ ११. ४. ८ ॥ प्रजापतिर्वै वामदेव्यम् । श० १३. ३. ४ ॥ प्रजननं वै वामदेव्यम् । श० ५. १. ३. १२ ॥ वामदेव्यं मैत्रावरुणसाम भवति । श० १. ३. ३. ४ ॥ प्राणो वै वामदेव्यम् । श० ९. १. २. ३८ ॥ पशवो वै वामदेव्यम् । तां० ४. ८. १५ ॥ ७. ९. ९ ॥ ११. ४. ८ ॥ १४. ९. २४ ॥ इदं वा वामदेव्यं यजमानलोकोऽमृतलोकः स्वर्गो लोकः । ऐ० ३. ४६ ॥ उपहूतं वामदेव्यं सहान्तरिक्षेण । श० १. ८. १. १९ ॥ अन्तरिक्षं वै वामदेव्यम् । तै० १. १. ८. २॥ तां० १५. १२. ५ ॥ अन्तरिक्षं वामदेव्यम् । २. १. ५. ७ ॥

**वामनः** वक्राङ्गः २४ । १ ॥ [ **वामनम्** ] ह्रस्वाङ्गम् ३० । १० ॥ [ **वामनाय** ] वामं प्रशस्तं विज्ञानं विद्यते यस्य तस्मै ( वाम इति प्रशस्यनाम । निघ० ३ । ८ । अत्र पामादित्वान्नः । अ० ५ । २। १०० ) १६ । ३० ॥

वामनो ह विष्णुरास । श० १. २. ५. ५ ॥ स हि वैष्णवो यद्वामनः ( गौः ) । श० ५. २. ५. ४ ॥ वैष्णवो वामनः ( पशुः ) । श० १३. २. २. ९ ॥ वैष्णवं वामनम् ( पशुम् ) आलभन्ते । तै० १. २. ५. १ ॥

**वामनीतिः** वामा प्रशंसिता नीतिर्यस्य सः ६ । ४७ । ७ ॥

**वामभाजः** प्रशस्तकर्मसेविनः श्रेष्ठभोगा वा ३ । ५५ । २२ । ये वामं भजन्ति ते ६ । ७१ । ६ ॥

**वामम्** वमत्युद्गिरति येन तम् (टुवम् उद्गिरणेऽस्माद्धातोर्हलश्चेति घञ् । उपधावृद्धिनिषेधे प्राप्ते अनाचमिकमिवमीनामिति वक्तव्यम् । अ० ७ । ३ । ३४ । इति वार्त्तिकेन वृद्धिः सिद्धा ) १ । ३३। ३ । प्रशस्यम् १ । १२४ । १२ । सुरूपम् १ । १४१ । १२। प्राप्तव्यम्, भजनीयम्, श्रेष्ठं विज्ञानं वा ४ । ३० । २४ । प्रशस्यं कर्म ६ । १६ । १० । प्रशस्यसुखम्, प्रशंसनीयम्, अत्युत्कृष्टम् ६ । ७१ । ६ ॥ प्रशस्तं गुणकर्मसमूहम् ४ । ५ । प्रशस्यं गृहाश्रमधर्मम् ८ । ५ ॥ [ **वामानि** ] वननीयानि सम्भजनीयानि धनानि ५ । ८२ । ६ ॥ [ **वामेन** ] प्रशंसितेन प्रकाशेन १ । ४८ । १॥ [**वामस्य**] शिल्पगुणैः प्रशस्तस्य १ । १६४ । १ । प्रशस्तस्य जगतः १ । १६४ । ७ ॥

वाम प्रशस्यनाम । निघ० ३. ४ ॥ वामम् वसूनि वननीयानि । नि० ११. ४६ ॥

प्राणा वै वामम् । श० ७. ४. २. ३५ ॥ वामं हि पशवः । ऐ० ५. ६ ॥

**वामा** प्रशस्ता वाक् १ । ४० । ६ ॥

**वामभाजः** प्रशस्यकर्मसेविनः ८ । ६ ॥

**वामी** बहुप्रशस्तकर्मा ६ ।४८। २०॥ [ **वामोः** ] प्रशस्ताः ३ । ५३ । १ ॥

**वायतस्य** विज्ञानवतः ७ । ३३ । २ ॥

**वायव्यः** वायुदेवताकः २४ । १ । वायौ भवः ३६ ।५॥ [ **वायव्यानि** ] वायुषु साधूनि १८ । २१। वायुषु भवानि वायुदेवताकानि वा १६ । २७ ॥ [ **वायव्यान्** ] वायुवद्गुणान् ३१ । ६। वायुसहचरितान् पक्षिणः ३१ । ६ ( १२४ भूमि० ) ॥ [ **वायव्यैः** ] वायुषु साधुभिर्मार्गैः १६ । ८५ ॥

**वायसम्** अतिगन्तारम् ( वा गतिगन्धनयो-

रित्यतोऽसुन् युकागमश्चोणादिः ) १ । १६४ । ५२ ॥

**वायुः** पवनः ३ । ३५ । १ । प्राण इव प्रियः १४ । १४ । अनन्तबलत्वसर्वधातृत्वाभ्यां परमेश्वरो वायुशब्दवाच्यः ३२।१। बलिष्ठो बलप्रदः ३२।१५। विज्ञानवान् अनन्तबलः ३२ । १५ ( ३४५ आर्य० ) ॥ [ वायवः ] सर्वक्रियाप्राप्तिहेतवः स्पर्शगुणा भौतिकाः प्राणादयः ( वायुरिति पदनामसु०। निघ० ५ । ४ । अनेन प्राप्तिसाधका वायवो गृह्यन्ते । वा गतिगन्धनयोरित्यस्मात् कृवापा० । उ० १ । १ अनेनाप्युक्तार्थो गृह्यते ) १ । १ ॥ [ वायुम् ] वेगवन्तम् ५ । ४१ । ६ । वायुविद्याम् ५ । ५१ । १२॥ [ वायवे ] वायुवद् गत्यादिसिद्धये, यद्वा वाति प्रापयति योगबलेन व्यवहारानिति वायुर्योगविचक्षणस्तस्मै तादृशसम्पन्नाय ७ । ८ । प्राप्तुं योग्याय १ । १४८ । १२। वायुवद्बलाय ५ । ५१ । ७ ॥ [ वायो ] वाति जानाति सूचयति सदसत्पदार्थानिति वा वायुस्तत्सम्बुद्धौ ६ । १६ । वायुवद्वर्त्तमान बलिष्ठराजन् ३३ । ७० । दुष्टानां हिंसक १ । १३५ । ४ । विद्वन् ४ । ४८ । १ । अनन्तबलसर्वप्राणान्तर्यामिन्नीश्वर तथा सर्वमूर्त्तद्रव्याधारो जीवनहेतुर्भौतिको वा ( प्र वावृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट इयाते । विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ॥ यजु० ३३ । ४४ । अस्योपरि निरुक्त व्याख्यानरीत्येश्वरभौतिकौ पुष्टिकर्त्तारौ नियन्तारौ द्वावर्थौ वायुशब्देन गृह्येते तद्यथा । अथातो मध्यस्थान.देवतास्तासां वायुः प्रथमागामी भवति वायुर्वातेर्वेत्तेर्वा स्याद्गतिकर्मण एतेरिति स्थौलाष्ठीविरनर्थको वकारस्तस्यैषा भवति । १ । २ । १ ॥

वायुः वातेः । वेतेर्वा स्याद्गतिकर्मणः । एतेरिति स्थौलाष्ठीविः । अनर्थको वकारः । नि० १०. ४ ॥ अयं वै वायुर्योऽयं पवते । श० २. ६. ३. ७ ॥ अयं वै वायुर्योऽयं पवतऽएष वा इदꣳसर्वं विविनक्ति यदिदं किञ्च विविच्यते । श० १. १. ४. २२ ॥ वातो ( यजु० १५. ६२ ) हि वायुः । श० ८. ७. ३. १२ ॥ वायुर्वातहोमाः । श० ९. ४. २. १ ॥ वायुर्वा उशन् । तां० ७. ५. १९ ॥ वायुरनुवत्सरः । तां० १७. १३. १७ ॥ तै० १. ४. १०. १ ॥ वायुर्वै निकायश्छन्दः ( यजु० १५. ५ ) श० ८. ५. २. ५ ॥ अयं वाऽअवस्युरशिमिदो योऽयं ( वायुः ) पवते । श० १४. २. २. ५ ॥ वायुर्वै देवः । जै० उ० ३. ४. ८ ॥ अयं वै ब्रह्म योऽयं ( वायुः ) पवते । ऐ ८. २८ ॥ अयं वै बृहस्पतिः ( यजु० ३८. ८ ) योऽयं ( वायुः ) पवते । श० १४. २. २. १० ॥ अयं वै पवित्रं ( यजु० १. १२ ) योऽयं ( वायुः ) पवते । श० १. १. ३. २ ॥ १. ७. १. १२ ॥ पवित्रं वै वायुः । तै० ३. २. ५. ११ ॥ अयं वायुः पवमानः । श० २. ५. १. ५ ॥ (वायुः) यत्पश्चाद्वाति । पवमान एव भूत्वा पश्चाद्वाति । तै० २. ३. ९. ६ ॥ वायुर्ह्येव प्रजापतिस्तदुक्तमृषिणा पवमानः प्रजापतिरिरिति । ऐ० ४. २६ ॥ स यो ऽयं ( वायुः ) पवते स एष एव प्रजापतिः । जै० उ० १. ३४. ३ ॥ स एष वायुः प्रजापतिरस्मिंस्त्रैष्टुभेऽन्तरिक्षे समन्तं पर्यक्तः । श० ८. ३. ४. १५ ॥ एतद्वै प्रजापतेः प्रत्यक्षं रूपं यद्वायुः । कौ० १९.२॥ अर्धꣳ ह प्रजापतेर्वायुरर्धं प्रजापतिः । श० ६. २. २. ११ ॥ यो वै वायुः स इन्द्रो य इन्द्रः स वायुः । श० ४. १. ३. १९ ॥ अयं वै वायुर्मित्रो ( यजु० ११. ६४ ) यो ऽयं पवते । श० ६. ५. ४. १४ ॥ अयं वै यमो ( यजु० ३८. ९ )

योऽयं ( वायुः ) पवते । श० १४. २. २. ११ ॥ वायुर्वै यंता ( ऋ० ३. १३. ३ ) वायुना हीदं यतमन्तरिक्षं न समृच्छति । ऐ० २ ४१ ॥ अयं वै वायुर्मातरिश्वा योऽयं पवते । श० ६. ४. ३. ४ ॥ ( वायुः ) यद्दक्षिणतो वाति । मातरिश्वेव भूत्वा दक्षिणतो वाति । तै० २. ३. ९. ५ ॥ वायुर्वै जातवेदा वायुर्हीदं सर्वं करोति यदिदं किंच । ऐ० २. ३४ ॥ वायुर्वा अग्नेः स्वो महिमा । कौ० ३. ३ ॥ तेजो वै वायुः । तै० ३. २. ९. १ ॥ अयं वै पूषा ( यजु० ३८. ३, १५ ) यो ऽयं ( वायुः ) पवताऽएष हीदꣳ सर्वं पुष्यति । श० १४ । २. १. ९॥ १४.२.२. ३२॥ यो वाऽअयं पवताऽएष द्युतानो मारुतः । श० ३. ६. १. १६ ॥ यो वाऽअयं ( वायुः ) पवतऽएष तनूनपाच्छाक्करः सोऽयं प्रजानामुपद्रष्टा प्रविष्टस्ताविमौ प्राणोदानौ । श० ३. ४. २. ५ ॥ यो वाऽअयं ( वायुः ) पवतऽएष तनूनपा शाक्करः । श० ३. ४. २. ११ ॥ वायुर्वै ताक्ष्यः । कौ० ३०. ५ ॥ अयं वै ताक्ष्यो योऽयं ( वायुः ) पवते एष स्वर्गस्य लोकस्याभिवोढा । ऐ० ४. २० ॥ एष ( ताक्ष्यः=वायुः ) वै सहावांस्तरुता ( ऋ० १०. १७८. १ ) एष हीमांल्लोकान्तद्यस्तरति । ऐ० ४. २० ॥ वायुर्वाऽआशुस्त्रिवृत्स एष त्रिपु लोकेषु वर्तते । श० ८. ४. १. ९ ॥ वायुर्वै देवानामाशुः सारसारितमः । तै० ३. ८. ७. १ ॥ वायुर्वै देवानामाशिष्ठः । श० १३. १. २. ७ ॥ ( वायो ! ) त्वं वै नः ( देवानाम् ) आशिष्ठोऽसि । श० ४. १. ३. ३ ॥ एष ( वायुः ) हि सर्वेषां भूतानामाशिष्ठः । श० ८. ४. १. ९ ॥ वायुर्वै तूर्णिर्हव्यवाड्वायुर्देवेभ्यो हव्यं वहति । ऐ० २. ३४ ॥ वायुर्वै तूर्णिर्वायुर्हीदं सर्वं सद्यस्तरति यदिदं किंच । ऐ० २. ३४ ॥ वायुः सप्तिः । तै० १. ३. ६. ४ ॥ वायुर्वै चरन् । तै० ३. ९. ४. १ ॥ अयं वै सरिरः ( यजु० ३८. ७ ) योऽयं ( वायुः ) पवत एतस्माद्वै सरिरात् सर्वे देवाः सर्वाणि भूतानि सहेरते । श० १४. २. २. ३ ॥ अयं वै समुद्रः ( यजु० ३८. ७ ) योऽयं ( वायुः ) पवतऽएतस्माद्वै समुद्रात्सर्वे देवाः सर्वाणि भूतानि समुद्रवन्ति । श० १४. २. २. २ ॥ य एवायं ( वायुः ) पवत एष एव स समुद्र एतं हि संद्रवन्तं सर्वाणि भूतान्यनुसंद्रवन्ति । जै० उ० १. २५. ४ ॥ अयं वै साधुः ( यजु० ३७. १० ) योऽयं ( वायुः ) पवतऽएष हीमांल्लोकान्त्सिद्धोऽनुपवते श० १४. १. २. २३ ॥ वायुरेव सविता । गो० पू० १. ३३ ॥ जै० उ० ४. २७. ५ ॥ अयं वै सविता ( यजु० ३८. ८ ) योऽयं ( वायुः ) पवते । श० ११. २. २. ९ ॥ ( वायुः ) यदुत्तरतो वाति । सवितैव भूत्वोत्तरतो वाति । तै० २. ३. ९. ७ ॥ तस्मादुत्तरतः पश्चादयं भूयिष्ठं पवमानः ( =वायुः ) पवते सवितृप्रसूतो ह्येष एतत्पवते । ऐ० १. ७ ॥ वायुर्वै वसुरन्तरिक्षसत् ( यजु० १२. १४ ) । श० ६. ७. ३. ११ ॥ अयमेव वत्सो योऽयं ( वायुः ) पवते । श० १२. ४. १. ११ ॥ योऽयं वायुः पवतऽएष सोमः । श० ७. ३. १. १ ॥ एष ( वायुः ) वै सोमस्योद्गीथो यत्पवते । तां० ६. ६. १८ ॥ अयं वै वायुर्विश्वकर्मा ( यजु० १३. ५५ ॥ १५. १६ ) योऽयं पवतऽएष हीदꣳसर्वं करोति । श० ८. १. १. ७ ॥ ८. ६. १. १७ ॥ एष वै पृथग्वर्त्मा वैश्वानरः ( यद्वायुः ) । श० १०. ६. १. ७ ॥ प्राणस्त्वाऽएष वैश्वानरस्य ( यद्वायुः ) । श० १०. ६. १. ७ ॥ वायुर्वै मध्यमा विश्वज्योतिः ( इष्टका ) । श० ८. ३. २. १ ॥ वायुर्वै त्रिकर्णी ( इष्टका ) । श० ८. ७. ३. ९ ॥ तस्माद्वायुरेव साम । जै० उ० ३. १. १२ ॥ अयमेव स्तुतो योऽयं ( वायुः ) पवते । श० १. ३. २. ५ ॥ वायुर्वै स्तोता । तै० ३. ९. ४. ४ ॥ श० १३. २. ६. २ ॥ वायुरेव हिंकारः । जै० उ० १ ३६. ९ ॥ १. ५८. ९ ॥ वायुरेकपात्तस्याकाशं पादः । गो० पू० २. ८ ॥ वायुर्धायिया । जै० उ० ३. ४. २ ॥ वायुरापश्चन्द्रमा इत्येते भृगवः । गो० पू० २ ८. (९) ॥ यस्स प्राणो वायुस्सः । जै० उ० १. २९. १ ॥ प्राणा उ वा वायुः । श० ८. ४. १. ८ ॥ वायुर्वै प्राणः । कौ० ८. ४ ॥ जै० उ० ४. २२. ११ ॥ वायुर्हि प्राणः । ऐ० २. २६॥ ३. २ ॥ प्राणो हि वायुः । तां० ४. ६. ८ ॥ प्राणो वै वायुः । कौ० ५. ८ ॥ १३. ५ ॥ ३०

५ ॥ श० ४. ४. १. १५ ॥ ६. २. २. ६ ॥ गो० उ० १. २६ ॥ यः स प्राणोऽयमेव स वायुर्योऽयं पवते । श० १०. ३. ३. ७ ॥ प्राणो वै वायव्या (ऋक्) । कौ० १६. ३, ४ ॥ वायुर्मे प्राणे श्रितः । तै० ३. १०. ८. ४ ॥ प्राणापानौ मे श्रुतम्मे । तन्मे त्वयि (वायौ) । जै० उ० ३. २१. १० ॥ स (वायुः) यत्पुरस्ताद्वाति । प्राण एव भूत्वा पुरस्ताद्वाति । तस्मात्पुरस्ताद्वान्तं सर्वाः प्रजाः प्रतिनन्दन्ति । तै० २. ३. ९. ४-५ ॥ वायुर्वै प्रणीर्यज्ञानां यदा हि प्राणित्यथ यज्ञोऽथाग्निहोत्रम् । ऐ० २. ३४ ॥ वायुप्रणेत्रा वै पशवः । श० ४. ४. १. १५॥ यत्पशुपतिर्वायुस्तेन । कौ० ६. ४ ॥ ते (पशवः) अब्रुवन्वायुर्वा अस्माकमीशे । जै० उ० १. ५२. ४ ॥ एताभिः (एकोनविंशतिभी रात्रिभिः) वायुरारण्यानां पशूनामाधिपत्यमाश्नुत । तां० २३. १३. २ ॥ वायुर्वाऽउग्रः । श० ६. १. ३. १३ ॥ वायुर्वाव पुरोहितः । ऐ० ८. २७ ॥ वायुर्वा उपश्रोता । गो० उ० २. १९ ॥ ४. ९ ॥ तै० ३. ७. ५. ४ ॥ वायुरेव महः । गो० पू० ५. १५ ॥ वायुर्महः । श० १२. ३. ४. ८ ॥ मनो ह वायुर्भूत्वा दक्षिणतस्तस्थौ । श० ८. १. १. ७ ॥ इमे वै (त्रयो) लोका पूरयमेव पुरुषो योऽयं (वायुः) पवते सोऽस्यां पुरि शेते तस्मात्पुरुषः । श० १३. ६. २. १ ॥ अय वै यज्ञो योऽयं (वायुः) पवते । ऐ० ५. ३३ ॥ श० १. ९. २. २८ ॥ २ १. ४. २१ ॥ ४ ४. ४. १३ ॥ ११. १. २ ३ ॥ अयं वाव यज्ञो योऽयं (वायुः) पवते । जै० उ० ३. १६. १ ॥ अयमु वै यः (वायुः) पवते स यज्ञः । गो० पू० ३. २ ॥ ४. १ ॥ वाग्वै वायुः । तै० १. ८. ८. १ ॥ तां० १८. ८. ७ ॥ वायुर्वै रेतसां विकर्त्ता । श० १३. ३. ८. १ ॥ वायुर्वै पयसः प्रदापयिता । तै० ३. ७. १. ५ ॥ वायुर्वै सर्वेषां देवानामात्मा । श० १४. ३. २. ७ ॥ सर्वेषामु हैष देवानामात्मा यद्वायुः । श० ९. १. २. ३८ ॥ एका ह वाव कृत्स्ना देवताऽर्धदेवता एवाऽन्याः । अयमेव (वायुः) यो ऽयम्पवते । जै० उ० ३. १. १ ॥ द्यौरसि वायौ श्रिता । तै० ३. ११. १. १० ॥ वायुरस्यन्तरिक्षे श्रितः । दिवः प्रतिष्ठा । तै० ३. ११. १. ९ ॥ वायुर्वै नभसस्पतिः । गो० उ० ४. ९ ॥ वायुर्वा अन्तरिक्षस्याध्यक्षाः । तै० ३. २. १. ३ ॥ (प्रजापतिः) भुव इत्येव यजुर्वेदस्य रसमादत्त । तदिदमन्तरिक्षमभवत् । तस्य यो रसः प्राणेदत् स वायुरभवद्रसस्य रसः । जै० उ० १. १. ४ ॥ वायुर्दिशां यथा गर्भः । श० १४. ९. ४. २१ ॥ वायुरेव यजुः । श० १०. ३. ५. २ ॥ वायोर्यजुर्वेदः (अजायत) । श० ११. ५. ८. ३ ॥ यजुषां वायुर्दैवतं तदेव ज्योतिस्त्रैष्टुभं छन्दोऽन्तरिक्षं स्थानम् । गो० पू० १. २९ ॥ त्रैष्टुभो हि वायुः । श० ८. ७ ३. १२ ॥ वायुरध्वर्युः । गो० पू० १. १३ ॥ वायुर्वा अध्वर्य्युः । गो० पू० २. २४ ॥ वायुर्वा एतं (आदित्यं) देवतानामानशे । तां० ४. ६. ७ ॥ तदसावादित्य इमांल्लोकान्त्सूत्रे समावयते तद्यत्तत्सूत्र वायुः सः । श० ८. ७. ३. १० ॥ एष वाऽअपाꣳरसो योऽयं पवते स एष (वायुः) सूर्ये समाहितः सूर्यात्पवते । श० ५. १. २. ७ ॥ अयं वै वायुर्योऽयं पवतऽएष वाऽइदꣳसर्वं प्रप्याययति यदिदं किंच वर्षत्येष वाऽएतासां (गवां) प्रप्याययिता । श० १. ७. १. ३ ॥ अयं वै वर्षस्येष्टे योऽयं (वायुः) पवते । श० १.८. ३. १२॥ तस्माद्यां दिशं वायुरेति तां दिशं वृष्टिरन्वेति । श० ८.२. ३.५॥ यस्माद्वायत्रमध्यो द्वितीयः (त्रिरात्रः) तस्मात्तिर्य्यङ् वायुः पवते । तां० १०. ५. २ ॥ तस्मादेष (वायुः) दक्षिणैव भूयिष्ठं वाति । श० ८. १. १. ७ ॥ ८. ६. १. १७ ॥ शुक्रो हि वायुः । श० ६. २. २. ७ ॥ तथेति वायुः पवते । जै० उ० ३. ६. २ ॥ अनिरुक्तो हि वायुः । श० ८. ७. ३. १२ ॥ शान्तिर्हि वायुः । तां० ४. ६. ९ ॥ वायोर्निष्ट्या (="स्वातिः" इति सायणः) । तै० १ ५. १. ३ ॥ ३. १. १. १० ॥ (वायोः) मेनका च सहजन्या (यजु० १५. १६) चाप्सरसाविति दिक् चोपदिशा चेति ह स्माह माहित्थिरिम तु ते द्यावापृथिवी । श० ८. ६. १. १७ ॥ तस्य (वायोः) रथस्वनश्च रथेचित्रश्च (यजु० १५. १५) सेनानीग्रामण्याविति ग्रैष्मौ तावृतू । श० ८. ६. १. १७ ॥ तम् (वायुं) एताः पञ्च देवताः परिम्रियन्ते

विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निः। ऐ० ८. २८॥
सोऽयं (वायुः) पुरुषेऽन्तः प्रविष्टस्त्रेधा विहितः प्राण उदानो व्यान इति। श० ३. १. २. २०॥

**वायुकेशान्** वायुरिव केशाः प्रकाशा येषां तान् ३।३८।६॥

**वाय्ये** तन्तुसदृशे सन्ताननीये विस्तारणीये सन्ततिरूपे ५।७६।१॥

**वारः** वरीतुमर्हः १।३२।१२॥ [वारान्] वालानिव वरणीयांल्लोकान् २।४।४॥

**वारणः** सर्वदोषनिवारकः १। १४०। २॥
[वारणम्] वरणीयम् ६।४।५॥
[वारणेषु] वारयन्ति यैर्युद्धैस्तेषु वा वारयन्ति ये चोरदस्युव्याघ्रादयो येषु तेषु ३।३२॥

**वारम्** पुनः पुनर्वर्तुम् १।१२८।६॥

**वारयन्ते** निषेधयन्ति ४।१७।१६॥

**वारवन्तम्** बालवन्तम् (एतद्यास्कमुनिरेवं व्याचष्टे। अश्वमिव त्वा वालवन्तं। वाला दंशवारणार्था भवन्ति। दंशो दशतेः। नि० १।२०) १।२७।१॥

**वारि** जलम् २१।६१॥

वारि उदकनाम निघ० १. १२॥

**वारितीनाम्** वारिणि जले इतिर्गतिर्येषां तेषाम् २१।५७। वरणीयानां पदार्थानां मध्ये २८।२१। अन्तरिक्षस्थसमुद्राणाम् २८।४४॥

**वारिवस्कृताय** वरिवः सेवनं कृतं येन तस्मै (अत्र स्वार्थेऽण्) १६।१६॥

**वारुणः** वरुणदैवत्यः २६।५८। जलगुणः २६।५६॥

**वार्कार्याम्** जलमिव निर्मलां सम्प्रापक्तव्याम् १।८८।४॥

**वार्त्रघ्नम्** मेघविनाशकम् १०।८॥

**वार्त्रहत्याय** विरुद्धभावेन वर्ततेऽसौ वृत्रः, वृत्र एव वार्त्रः। वार्त्रस्य वर्तमानस्य शत्रोर्हत्या हननं तत्र साधुः तस्मै १८।६८। वृत्रहत्याया इदं तस्मै ३।३७।१॥

**वार्ध्रीनसः** कण्ठे स्तनवान् महानजः २४।३६॥

**वार्यम्** वरितुमर्हं पदार्थसमूहम् १।२६।८। वर्तुमर्हं धनम् ३।२१।२। वरणीयेषु वा जलेषु भवम् ४।५३।१। वरणीयम् ५।६।३। वरेषु पदार्थेषु भवं विद्युदग्निम् ५।१७।५। वरणीयं सुखम् ५।४१।२३। वर्तुं योग्यमुपदेशम् ५।४८।५। वरणीयं धर्म्यं व्यवहारम् ७।१६।५। वरणीयं विज्ञानम् ७।४२।४॥ [वार्याणि] ग्रहीतुं योग्यानि साधनानि १।११४।५। वारिषूदकेषु साधूनि २८।१५। वर्तुमर्हाण्युदकानि २८।१७। स्वीकार्याणि भोग्यवस्तूनि २६।२३॥ [वार्याणाम्] वरणीय परमानन्द मोक्षादि पदार्थ १।५।२ (३७ आर्य०) स्वीकर्त्तुमर्हाणां पृथिव्यादिपदार्थानाम् १।२३।३॥

वार्याणाम्। अश्वनाम। निघ० १. १४॥ वार्यम् वृणोतेरथापि वरतमम्। नि० ५. १॥

वार्षागिराः वृषस्य उत्तमस्य गीर्भिर्निष्पन्नाः पुरुषाः १ । १०० । १७ ॥

वार्षिकौ वर्षासु भवौ १४ । १५ ॥

वार्षी वर्षाणां व्याख्यात्री १३ । ५६ ॥

वालः बालकः १९ । ८८ ॥

वालम् पर्वं वृणोतेः । नि० ११. ३१ ॥

वावक्रे वक्रा गच्छन्ति ७ । २१ । ३ ॥

वावदत् भृशं वदति ६ । ५९ । ६ ॥

वावदीति भृशं वदति ६ । ४७ । ३१ ॥

वावनः संभज ४ । ११ । २॥

वावन्धि बध्नन्ति ५ । ३१ । १३ ॥

वावशतीः भृशं कामयमानाः प्रजाः ४।५० ५॥

वावशन्त पुनः पुनः प्रकाशयन्त १ । ६२ ।३ ॥

वावशानः भृशं कामयमानः १२ । ४७ ॥

[ वावशानाः ] कमनीयाः ७ । ५ । ५ ॥

वावशाना भृशं कामयमाना १ । १६४ । २८॥

वावशुः कामयन्ते ६ । ५१ । १४ ॥

वावशे भृशं कामयते २ । १४ । ९ ॥

वावसाना सुखेष्वतिशयेन वस्तारौ (अत्र सुपां सुलुगित्याकारादेशः) १ । ४६ । १३ ॥ [ वावसानाः] आच्छाद्यमानाः ६। ११ । ६ ॥ [ वावसानस्य] आच्छादकस्य (अत्र यङ्लुगन्ताद् वस आच्छादने धातोः कर्त्तरि ताच्छीलिकः शानच् । बहुलं छन्दसीति शपः श्लुः ) १ । ५१ । ३ ॥

वावाता दोषहन्त्री विद्याजनयित्री ४ । ४।८ ॥

वावान वनते (अत्र तुजादीनामित्यभ्यासदैर्घ्यम्) ६ । २३ । ५ ॥

वावृजे व्रजति गच्छति ३३।४४ ॥

वावृतुः वर्तन्ते (अत्र वर्तमाने लिट् व्यत्ययेन परस्मैपदम् । तुजादीनां दीर्घोऽभ्यासस्येति दीर्घत्वम् । ) १ । १०५ । १० । वर्तेरन् ४ । ३० । २ ॥

वावृते पुनः पुनरावर्तते १। १६४ । १४ । वर्तते १ । १६६ । ६ । प्रवर्तते १ । १६१ । १५ ॥

वावृधध्यै पुनः पुनर्वर्धितुम् १ । ६१ । ३ । वर्धयितुम् (अत्र बहुलं छन्दसीति शपः श्लुः तुजादित्वाद्दीर्घश्च ) १ । १२२ । २ । अतिशयेन वर्द्धितुम् ६ । ६७ । १ ॥

वावृधन्त वर्धन्ते (अत्र तुजादीनामित्यभ्यासदैर्घ्यम्) ६ । ६६ । २ ॥

वावृधस्व भृशमेधस्वैधय वा ( अत्र वृधुधातोः लेटि मध्यमैकवचने विकरणव्यत्ययेन श्लुरन्येषामपि दृश्यत इति दीर्घः ) १ । ३१ । १८ ॥

वावृधाति वर्धयेत् (अत्र वृधुधातोर्लेट्, बहुलं छन्दसीति शपः श्लुः, व्यत्ययेन परस्मैपदम् । तुजादीनां दीर्घ इत्यभ्यासदीर्घत्वमन्तर्गतो ण्यर्थश्च ) १ । ३२ ।१ ॥

वावृधाते वर्धयतः ७ । ७ । ५ ॥

वावृधानः वर्धमानः सन् १७ । २२ ॥

[वावृधानम्] अतिशयेन शुभगुणकर्मसु वर्धमानम् ७ । ३६ ॥
वावृधानः वर्द्धयमानः । नि० १०. २७ ॥

वावृधीथाः वर्धेथाः (अत्र वाच्छन्दसीति शपः श्लुः । तुजादीनामित्यभ्यासस्य दैर्घ्यम् । वाच्छन्दसीत्युपधागुणो न ) १ । १३० । १० ॥

वावृधुः [ववृधुः] वर्धेरन् २ । २० । ४ । वर्धयन्ति २ । ८ । ५ । वर्धन्ते २ । ३४ । १३ । वर्धयेयुः ५ । १४ । ६ । वर्धयन्तु ५ । ५५ । ३ । वर्धन्ताम् ५ । ५६ । ५ ॥

वावृधे [ववृधे] वर्धयति ७ । ५ । १। वर्धेत ३ । ३६ । १ । अतिशयेन वर्धते १ । ५२ । २ ॥

वावृषाणाः वृषं बलं कुर्वाणाः ६ । २६ ।१ ॥

वाशति वाणीवाचरन्ति ५ । ५४ । २ ॥

वाशाः य उशन्ति कामयन्ते ते १० । ४ ॥

वाशी: वेदविद्यायुक्ता वाणीः १ । ८८। ३ ॥
वाशी वाङ्नाम । निघ० १. ११ ॥ वाङ्नाम वाश्यत इति सत्याः । नि० ४. १६ ॥

वाशीमन्तः प्रशस्ता वाशी वाक् विद्यते येषां ते १ । ८७ । ६ ॥

वाश्रेव [वाश्राऽइव] यथा कामयमाना धेनुः १ । ३८ । ८ । कमनीय इव २ । ३४ । १५। यथा शब्दायमाना गावो वत्सानभितो गच्छन्ति तथा १ । ३७ । १० ॥

वासः वसत आच्छादयन्ते शरीरं येन तद्वस्त्रादिकम् २ । ३२ । वस्त्रादिकं निकेतनम्वा १२ । ७८ । आच्छादनम् ३३ । ३७ ॥ [वासमः] वसन्ति यस्मिँस्तद्वासो दिनं तस्य मध्ये ( दिवसोपलक्षणेन रात्रिरपि ग्राह्या ) १ । ३४ । १ ।
रूपं वाऽ एतत्पुरुषस्य यद्वासः । श० १३. ४. १. १५ ॥ तस्मादु सुवासा इव बुभूषेत् । श० ३. १. २. १६॥ ओषधयो वै वासः । श० १.३.१.१४॥ सर्वदेवत्यं वै वासः । तै० १.१.६.११॥ सर्वदेवत्यं वासः । तै० ७.३॥ सौम्यꣳहि देवतया वासः । तै० १. ६. १. ११ ॥ २. २. ५ २ ॥ तस्य वाऽएतस्य वाससः । अग्नेः पर्यासो भवति वायोरनुछादो नीविः पितॄणांꣳ सर्पाणां प्रवातो विश्वेषां देवानां तन्तव आरोका नक्षत्राणामेवꣳहि वाऽएतत्सर्वे देवा अन्वायत्ताः। श० ३. १. २. १८ ॥ त्वग्वि वासः । श० ४. ३. ४. २६ ॥ तद्वै निष्पेष्टवै ब्रूयाद्देवास्य (वाससः) अत्रामेध्या (स्त्री) कणत्ति (=Spins) वा वयति वा तदस्य (वाससः) मेध्यमसदिति । श० ३. १. २. १९ ॥

वासन्तिकौ वसन्ते भवौ १३ । २५ ॥

वासन्ती वसन्तस्य व्याख्यात्री १३ । ५४ ॥

वासःपल्पूलीम् वाससां शुद्धिकरीम् ३०।१२॥

वास्तव्याय वास्तूनि निवासस्थाने भवाय १३ । ३६ ॥

वास्तुपाय वास्तुनि निवासस्थानानि पाति तस्मै १६ । ३६ ॥

वासयम् आच्छादयितुं योग्यं सर्वतोऽभिव्याप्यम् ४० । १ ॥

वासय कलायन्त्रादिषु स्थापय, विशुद्धिद्वया स्थापय वा १ । १३४ । ३ । आच्छादय १ । १४० । १ ॥

वासयः वासयेः ६ । ३५ । १ ॥

वासयत् वासयत ६ । ३१ । ४ ॥

वासयथः वासयथः ६ । ७२ । २ ॥

वासयसीव [ वासयसिऽइव ] वासयसि ७ । ३७ । ६ ॥

वासरीम् निवासयित्रीम् १ । १३७ । ३ ॥

वास्तूनि वासाऽधिकरणानि १ । १५४ । ६ ॥

[ वास्तोः ] वासहेतोर्गृहस्य ७ । ५४ १ ॥

वाहसः अजगरः सर्पविशेषः २४ । ३४ ॥

वाहाः वृषभादयः ४ । ५७ । ४ ॥

वाहि प्राप्नुहि १८ । ४५ ॥

वाहिष्ठः अतिशयेन वोढा ६ । ४५ । ३० ॥

वाहिष्ठः वोढृतमः । नि० ५. १ ॥

वि अच्छे प्रकार ३ । ३ । १ ( २०२ विधिः )

वि इत्येकीभावस्य प्रातिलोम्यम् । नि० १. ३ ॥

विः पक्षी १ । १८३ । १ ॥ [ विम् ] पक्षिणम् ३ । ४५ । १ ॥ [ वीनाम् ] विमानानां सर्वलोकानां पक्षिणां वा १ २५ । ७ ॥

विः इति शकुनिनाम । नि० २. ६ ॥

विंशतिः एतत्संख्याकानि १ । ८० । ६ । विंशतिः १।१६४ ॥ [ विंशती ] चत्वारिंशत् २७ । ३३ ॥

विंशतिः द्विदशतः । नि० ३. १० ॥

प्रजापतेर्विस्रस्तादाप आयंस्तास्वितास्वविशद्यद्विशत्तस्माद्विंश्शतिः । श० ७. ५. २. ४४ ॥

विकिरान् विकिरकान् पक्षिविशेषान् २४ । २० ॥

विक्रस्तम् विविधतया शासितारम् १ । ११७ । २४ । विविधतया कस्यते शस्यते यत्तत् ११ । ३६ ॥

विकिरिद्र विशेषेण किरिः सूकर इव द्रायति शेते विशिष्टं किरिं द्राति निन्दति वा तत्सम्बुद्धौ १६ । ५२ ॥

विकृतम् प्राप्तविकारम् २ । ३८ । ६ ॥

विकृन्तन्तम् विच्छेदयन्तम् ३० । १८ ॥

विकृन्तानाम् विविधोपायैर्ग्रन्थिं छित्वा परस्वापहर्त्तॄणाम् १६ । २१ ॥

विक्त विजानीत २५ । ३७ ॥ वियुज्यात पृथक्कुर्यात् १ । १६२ । १५ ॥

विकथाः चल ( ओविजी भयचलनयोरित्यस्माल्लोडर्थे लङ् । लङि मध्यमैकवचने बहुलं छन्दसीति विकरणाभावश्च ) १ । २३ । भयं कम्पनं च कुर्याः ६ । ३५ ॥

विक्रमणम् विक्रमन्तेऽस्मिँस्तत् १० । १६ । विक्रमन्ते यस्मिन् जगति तत् १६ । ५६॥

[ विक्रमणेषु ] विविधेषु सृष्टिक्रमेषु १ । १५४ । २ ॥ विविधक्रमेषु ५ । २० ॥

विक्रान्तम् विविधतया क्रान्तम् १० । १६ ॥

विक्षिणत्केभ्यः ये शत्रून् विक्षयन्ति तेभ्यः १६ । ४६ ॥

विक्षिपः यो विक्षिपति विक्षेपं प्राप्नोति सः ३६ । ७॥

विख्याय प्रसिद्धीकृत्य ११ । २० ॥

विगामभिः विविधप्रशंसायुक्तैः १ । १५५ । ४ ॥

विगाहम् विविधान् पदार्थान् गाहन्ते विलो डयन्ति येन तम् ॥

विग्रम् [विग्रम्] मेधाविनम् (वेर्ग्रो वक्तव्य इति वेः परस्या नासिकायाः स्थाने ग्रः समासान्तादेशः। उपसर्गाच्च। अ० ५। ४। ११९। इति सूत्रस्योपरि वार्त्तिकम्) १। ४। ४॥

विघनिना विशेषेण हन्तारौ ६। ६०। ५॥

विघृते विशेषेण प्रकाशिते ३। ५४। ६॥

विचक्र कुर्वन्ति ४। ३५। २। विदधति ४। ३५। ४॥

विचक्रमाणः विशेषेण प्रचालयन् १। १५४। १। यथायोग्यं जगद्रचनाय कारणादान् प्रक्षिपन्नियोजयन् ५। १८॥

विचक्रमे विविधतया रचितवान् १। २२। १६॥

विचक्रमे विक्रमते। नि० १२. १९॥

विचक्षणः प्रशस्तचातुर्यादिगुणोपेतः १।१०१। ७। विविधतया दर्शकः १। ११२। ४। यो विविधान् सत्योपदेशान् चष्टे २। २३। ६। अतीव धीमान् ४। ४५। ५। विविधपदार्थानां प्रकाशः ४। ५३। २॥ [विचक्षणम्] वाग्विषयम् १। १६४। १२॥

चक्षुर्वै विचक्षणं वि ह्येनेन पश्यतीति। ऐ० १.६॥
चक्षुर्वै विचक्षणं चक्षुषा हि विपश्यति। कौ० ७.३॥

विचक्षे [विचक्षे] विविधप्रकटत्वाय १। ११३। ५। विख्यापयितुम् १। ११६। १४। विविधदर्शनाय १। ११६। १६। प्रकाशयति ४। १६। ४॥

विचचक्षिरे व्याचक्षते ४०। १०। व्याख्यातवन्तः ४०। १३॥

विचयिष्ठः अतिशयेन वियोजकः ४। २०। ६॥

विचरन्ति विचरन्ति १। ५१। १॥

विचरन्ती विविधगत्या प्राप्नुवन्ती ६। ४६। ३॥

विचर्षणिः विलेखनस्वभावेन विच्छेदकः (कृषेरादेः। उ० २। १०० इति कृष विलेखने धातोरनिःप्रत्ययः) १। ३५। ६। साक्षाद् द्रष्टा १। ७६। १२। विद्याप्रकाशयुक्तो विद्वान् २। २२। ३। दर्शकः (विचर्षणिरिति पश्यतिकर्मा। निघ० ३। ११) २। ४१। १०। प्रकाशकः ३। ११। १। सर्वद्रष्टव्यद्रष्टा मनुष्यः ४। ३६। ५। विविधविद्याप्रद ईश्वरः १६। ४२॥

विचर्षणिम् विलेखकम् १। ६४। १२॥ [विचर्षणे] तेजस्विन् ६। १६। २६॥

विचर्षणिः पश्यतिकर्मा। निघ० ३. ११॥

विचाकशत् विशिष्टतया प्रकाशमानः १।२४। १०॥

विचारिणि विचारितुं शीलं यस्यास्तत्सम्बुद्धौ ५। ८४। २॥

विचितः विविधविद्याशुभगुणधनादिभिश्चितः संयुक्तः ४। २४॥

विचिन्वत्केभ्यः ये विचिन्वन्ति तेभ्यः १६। ४६॥

विचृ॑त्ताः विस्तृताः २। २७। १६ ॥ [ विचृ-त्ताय ] ग्रन्थकाय २२। ७ ॥

विचृ॒त्य॑ विविधतया ग्रन्थित्वा बद्ध्वा ३२। १२ ॥

विचे॑ताः विविधाश्चेताः प्रज्ञा यस्य ( चेत इति प्रज्ञानाम। निघ० ३। ६ ) १। १६०। ४। विगतं चेतो विज्ञानं यस्मात्स जडः २। १०। १। विविधं चेतो ज्ञानं यस्मात्सः २। १०। २। विविधानि चेतांसि संज्ञानानि ज्ञापनानि वा यस्य सः ४। ५। २। विविधप्रज्ञः ६। २४। २ ॥ [ विचेतसः ] विज्ञापकस्य ५। १७। ४ ॥ विगतं चेतः संज्ञानं याभिस्ताः १।८३।१॥

विच्छ॑न्दाः विविधानि छन्दांस्यूर्जनानि यासु ताः २३। ३४ ॥

विच्यु॑ताः विशेषेण चलिताः २। १७। ३ ॥

विजः॑ इतस्ततश्चलतः पक्षिणः १। ६२। १०॥ [ विज इव ] भयेन सञ्चलित इव २।१२। ५ ॥

विजयन्ते विजयन्ते २। १२। ६ ॥

विज॑र्जराम् विशेषेण जर्जरीभूताम् ३०। १५॥

विज॑र्भृतः विविधं धरतः १। २८। ७ ॥

विजर्भृतः विह्रियेते। नि० ९. ३६ ॥

विजानन् सर्वविद्या अनुभवन् १। ६६। २। विशेषेण विदन् ३। ३६। ७ ॥

विजानात् विशेषेण जानीयात् १। १६४। १६ ॥

वि॒ज्ञामन् विजानन् ७। ५०। २ ॥

विजा॑मातुः विगतो विरुद्धश्च जामाता च तस्मात् १। १०६। २ ॥

विजायते॑ विशेषेणोत्पद्यते ३। २९। ११ ॥

विजावा॑ विशेषेण प्रादुर्भूतः ३। १। २३। विविधैश्वर्यजनकः १२। ५१ ॥

विजृम्भ॑माणाय विशेषेणाङ्गविनामकाय २२। ७ ॥

विजेन्य॑म् विजेतुं योग्यम् १। ११६। ४॥

विजेह॑मानः शब्दायमानः ६। ३। ४॥

विज्ञा॑तम् विज्ञातम् ११। ६६ ॥

विज्ञान॑म् सम्यग्ज्ञानं विविधज्ञानं वा २०। ६ ॥

विज्य॑म् विगता ज्या यस्मात्तत् १६। १० ॥

विञ्चन्ति विभञ्जन्ति १। ३६। ५ ॥

विट् प्रजा ७। ६५। ५। वणिग्जनः १०। १२ ॥

वितक्ष॑त् तक्षतु १। १५८। ५ ॥

विते॑तः विस्तीर्णः ८। ६२ ॥ [वितितम्] विस्तृतं कार्यं जगत् १। ८३।२। व्याप्तम् १।११५।४॥ [ वितता ] विस्तृतानि तेजांसि १। १५२। ४ ॥

वितता विस्तृता २६। ४० ॥

वितत्निरे विस्तारयन्ति ८। ६१ ॥

वितनोति॑ विस्तीर्णां करोति ५। ४८। १ ॥

वितन्तसाय्यः भृशं विस्तारणीयः ६ । १८ । ६ । यो वितन्तस्यति विजयते सः ६ । ४५ । १३ ॥

वितन्तसैते भृशं युध्येताम् ६ । २५ । ६ ॥

वितन्वते विस्तारयन्ति १ । ११५ । २ ॥

वितरम् सुखदातारम् १ । १२३ । ११ । विविधानि दुःखानि तरन्ति येन कर्मणा तत् १ । १२४ । ५ । विशेषेण तरणीयमुल्लंघनीयम् २ । ३३ । २ । विविधप्रकारेण तरितुं योग्यम् ४ । १८ । ११ । विशेषेण प्लवनम् ५ । २६ । ४ विविधतया तरन्ति येन तम् ६ । १ । ११ । विशेषेण सन्तारकम् २६ । २६ ॥

वितरम् विकीर्णतरमिति वा विस्तीर्णतरमिति वा । नि० ८. ९ ॥

वितरित्रता विविधतयाऽतिशयेन तरितुमिच्छन्तौ सम्पादयितुमिच्छन्तौ ( अत्र सर्वत्र विभक्तेराकारादेशः ) १ । १४३ । ३ ॥

वितर्तुरम् अतिशयेन विविधप्लवे तरणार्थम् १ । १०२ । २ ॥

वितर्तुराणः विशेषेण भृशं हिंसन् ६ । ४७ । १७ ॥

वितस्थानाम् विशेषेण स्थिताम् ४ । ३० । १२ ॥

वितस्थिरे विविधतया तिष्ठन्ति १६ । ६३ । विशेषेण तिष्ठन्ति ३८ । २६ ॥

वितेनिरे विस्तृतं कुर्वन्ति १७ । ६८ ॥

वित्तधम् यो वित्तं धनं दधाति तम् ३० । ११ ॥

वित्तम् विचारितम् १८ । ११ । लब्धम् १८ । १४ । विजानीतम् १ । १०५ । १ ॥

वित्तम् जानीतम् । नि० ४. ६ ॥

वित्तम् धनं भोगं वा । ४ । ४२ । ६ ॥

एतावान्खलु वै पुरुषो यावदस्य वित्तम् ॥ तै० १. ४. ७. ७ ॥

वित्तजानिम् वित्ता प्रतीता जाया हृद्या स्त्री येन तम् । ( अत्र जायाया निङ् । अ० ५ । ४ । १३४ इति जायाशब्दस्य समासान्तो निङादेशः ) १ । ११२ । १५ ॥

वित्तात् विजानीहि ६ । २ ॥

वित्तायनी या वित्तानां भोगानां प्रतीतानां पदार्थानामयनी प्रापिका सा ( वित्तो भोगप्रत्यययोः । अ० ८।२।५८। अनेन वित्तशब्दः प्रतीतार्थे भोगार्थे च निपातितः ) ५ । ६ ॥

वित्तिः प्राप्तिः १८ । १४ ॥

वित्वक्षणः विशेषेण दुःखस्य विच्छेत्ता ५ । ३४ । ६ ॥

वित्वा लब्ध्वा २ । २१ । विज्ञाय ८ । २१ ॥

विथुरा व्यथकानि ६ । २५ । ३ । व्यथायुक्तानि ६ । ४६ । ६ ॥ [ विथुरेव ] शीतज्वरव्यथिता दुग्ना कन्येव १ । ८७ । ३ । यथा व्यथितानि १ । १६८ । ६ ॥

विद [ विदा ] वित्थ ( द्व्यचोतस्तिङ इति

दीर्घः ) १ । ८६ । ८ । विजानीत १ । १५६ । ३ ॥

विदः [ विदः ] वेदय ५ । ३० । ४ । प्राप्नुहि ( अत्र वाच्छन्दसीति गुणविकल्पो लेट्प्रयोगोऽन्तर्गतो णयर्थश्च । सायणाचार्येणेदमडागमेन साधितम् । गुणप्राप्तिर्न बुद्धाऽतोऽस्यानभिज्ञता दृश्यते ) १ । ४२ । ७ ॥

विदत् प्राप्नुवन् १ । ६१ । ६ । प्राप्नोतु, प्राप्नुयात् १ । ६२ । ३ । जानाति १ । ७२ । ४ । लभते १ । ७२ । ८ । लम्भयन् १ । ६६ । ४ । लभमानः ४ । २१ । ८ । लभेत् ५ । ७ । ६ । जानीयात् ( अडभावः ) ३३ । ५६ ॥

विदतम् प्राप्नुतम् १ । १५१ । २ ॥

विदथम् विज्ञानकारकमध्ययनाध्यापनं यज्ञम् १ । ११७ । २५ । विज्ञानस्वरूपम् २ । १२ । १५ ॥ [ विदथानि ] विज्ञानानि ३ । १ । १८ । वेदितुं योग्यानि कर्मोपासनाज्ञानानि ६ । ५१ । २ ॥ [ विदथस्य ] विज्ञानयुक्तस्य १ । ५६ । २ । विज्ञातव्यजगतः १ । ६० । १ । परार्थविज्ञानस्य ३ । ३ । ३ । विज्ञानकरस्य ३ । ३८ । ५ । लब्धुं योग्यस्य ५ । ३३ । ६ ॥ [ विदथे ] संग्रामे १ । १६२ । १ । विज्ञानमये व्यवहारे १ । १८६ । १ । विद्यासंग्रामे २ । १ । १६ । विद्यादाने यज्ञे २ । १७ । ६ । विद्याप्रचारे २ । १८ । ६ । विद्वत्सत्काराख्ये यज्ञे ३ । १ । १ । औषधविज्ञानव्यवहारे २ । ३४ । १५ । शिल्पाख्ये यज्ञे २ । ३६ । १ । धर्म्येषु व्यवहारेषु १ । १६७ । ६ ॥

विदथः यज्ञनाम निघ० ३. १७. विदथानि वेदनानि । नि० ६. ७॥ विदथा वेदनेन । ३. १२॥ विदथेषु यज्ञेषु ८. १२ ॥

विदथुः विजानीथः १ । १८२ । ४ ॥

विदथ्यः विज्ञातुं योग्यः ४ । २१ । २॥

[ विदथ्यम् ] विदथेषु यज्ञेषु युद्धेषु वा साधुम् १ । ९१ । २० । विदथेषु संग्रामविज्ञानादिषु भवम् ६ । ८ । ५ ॥

विदथ्या विदथेषु संग्रामादिषु व्यवहारेषु भवा ७ । ४० । १ ॥ [ विदथ्येव ] विदथेषु संग्रामेषु विज्ञानेषु भवेव १ । १६७ । ३ ॥ [ विदथ्याम् ] विदथेषु गृहेषु साध्वीं नीतिम् ७ । ४३ । ३ ॥

विदद्वसुः विदन्ति वसूनि येन सः ३ । ३४ । १ । [ विदद्वसुम् ] विदद्भिः सुखज्ञापकैर्वसुभिर्युक्ताम् १ । ६ । ६ । [ विदद्वसो ] लब्धधन ५ । ३९ । १ ॥

विदद्वसुः वित्तधन । नि० ४. ४॥
यज्ञोऽसुरेषु विदद्वसुः । तां० ८. ३. ३ ॥ यज्ञो वै विदद्वसुः । तां० ११. ४. ५॥ यज्ञो विदद्वसुः । तां० १५. १०. ४ ॥ विदद्वसुः वै तृतीयसवनम् । तां० ८. ३. ६ ॥

विदधत् विधानं कुर्वन् ६ । ६२ । ६ ॥

विदधुः विदध्यासुः ४ । ५१ । ६ ॥

विदन् विन्दन्तु, प्राप्नुवन्तु (अत्र वाच्छन्दसीति नुमटोरभावो लोडर्थे लुङ् च ), लभन्ताम् ४ । ३४ ॥

**विदन्त** जानन्ति ४ । १ । १४ ॥

**विदन्ति** जानन्ति १ । ६७ । २ ॥

**विदम्** प्राप्नुयाम् २ । २७ । १७ ॥

**विदयते** विविधं दापयति १ । ८४ । ७ ॥

**विदलकारीम्** या विगतान् दलान् करोति ताम् ३० । ८ ॥

**विदा** विदन्ति येन ज्ञानेन ( अत्र कृतो बहुलमिति करणे क्विप् ) १ । ३१ । १८ ॥ [ विदे ] विदन्ति युद्धविद्याविजयान् यया क्रियया तस्यै ( अत्र सम्पदादित्वात्क्विप् ) १ । १०० । १० । ज्ञानवते १ । १३२ । २ ॥

**विदाः** लम्भय ( अत्र लोडर्थे लेट् ) १ । ३६ । १४ । विज्ञापय १ । ७१ । ७ ॥

**विदाः** विद्वांसः ५ । ४५ । १ । विद्यादि उत्तमोत्तम धन १।१०।१४ ( ६० आर्य० ) ॥

**विदात्** प्राप्नुयात् २ । २२ । ४ ॥

**विदाथ** जानीथ ( लेट्प्रयोगः ) १७ । ३१ ॥

**विदानः** विद्वान् १ । १६५ । ६ । विद्यमानः २ । ६ । १ । जानन् ६ । २१ । २ । विविदिषुः सन् ११ । ३६ । [ विदानाः ] लभमानः ३ । ३६ । २ । [ विदानासः ] ज्ञानवन्तो विद्याग्रहणाय कृतप्रतिज्ञाः ४ । ३४ । २ ॥

**विदाना** ज्ञापयन्ती ५ । ८० । ५ ॥ [ विदाने ] विज्ञायमाने १ । १२२ । २ ॥

( यजु० ११. ३६ ) विदान इति विद्वानित्येतत् । श० ६. ४. २. ७ ॥

**विदाम्** विदताम् ( विद ज्ञान इत्यस्माल्लटि प्रथमबहुवचने लोपस्त आत्मनेपदेषु । अ० ७ । १ । ४८ । अनेन तकारलोपे सवर्णदीर्घे विदामिति रूपम् ) ६ । ३६ ॥

**विदित्वा** विज्ञाय ३१ । १८ ॥

**विदिद्युतानः** विशेषेण प्रकाशमानः ६ । १६ । ३५ ॥

**विदिशः** विरुद्धदिशः ६ । १६ ॥

**विदुः** जानन्ति १ । ३४ । २ ( २०३ भूमि० ) जानीयुः २ । २३ । १६ ॥

**विदुः** विद्वान् ७ । १८ । २ ॥

**विदुषी** पूर्णविद्या स्त्री ५ । ४१ । ७ ॥

**विदुष्टरः** यो विविधानि दुरिष्टानि तारयति प्लावयति सः १ । ३१ । १४ । अतिशयेन विद्वान् १ । १०५ । १३ ॥ [ विदुष्टरम् ] अतिशायितमीश्वरम् ६ । १५ । १० ॥

**विदे** प्राप्नुयाम् ( वाच्छन्दसीति नुमभावः ) १ । १२० । १२ । वेद्मि ( अत्र व्यत्ययेनात्मनेपदम् ) १ । १३२ । ३ । प्राप्नोमि ७ । ४० । ५ ॥

**विदेत्** विजानीयात्, प्राप्नुयात् ५ । ६ ॥

**विदेय** अन्यायेन विन्देय ( अत्र वा छन्दसीति नुमभावः अत्रावैय्याकरणेन महीधरेण भ्रान्त्या विद्लृ लाभ इत्यस्य व्यत्ययेन तुदादिभ्यः श प्रत्ययेन लिङि रूपमित्य-

शुद्धं व्याख्यातम् । कुतः विदल् लाभे धातोः स्वत एव तुदादित्वं वर्तते ) ४ । २३ ॥

विदेयम् प्राप्नुयाम ( अत्र छान्दसो वर्णलोपो वेति नलोपः ) ७ । ४६ ॥

विद्धि जानीहि २ । २० । १ ॥

विद्म [ विद्मा ] विजानीयाम १२ । १६ । जानीमः १६ । ६७ । ( २८० भूमि० ) ॥

विद्मना विज्ञातव्यानि ७ । ४ । १ ॥ वेत्ति येन तेन विज्ञानेन १ । ११० । ६ ॥

विद्मनापसः वेदनं विद्म तद्विद्यते येषु तानि विज्ञाननिमित्तानि समन्तादपांसि कर्माणि येषां ते १ । ३१ । १ । विज्ञानेन युक्तानि कर्माणि येषां ते ( अत्र तृतीयाया अलुक्) १ । १२१ । १ । विद्मनानि विदितान्यपांसि कर्माणि येषां ते ३४ । १२ ॥

विद्मनापसम् विदितकर्माणम् । नि० ११.३३॥

विद्यते भवति २३ । ४७ ॥

विद्यद्भिः विद्यमानैः ( अत्र व्यत्ययेन परस्मैपदम् ) २६ । ४ ॥

विद्यया आत्मशुद्धान्तःकरणसंयोगधर्मजनितेन यथार्थदर्शनेन ४० । १४ ॥ [ विद्यायाम् ] शब्दार्थसम्बन्धविज्ञानमात्रेऽवैदिकाचरणे ४ । १२ ॥

विद्या वै धिषणा । तै० ३. २. २ २ ॥ विद्या ह वै ब्राह्मणमाजगाम । तवाऽहमस्मि त्वं मा पालयस्वाऽनर्हते मा दा गोपाय मा श्रेयसे तेऽहमस्मीति विद्यया सह म्रियेत न विद्यामूषरे वपेद् ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियो विद्यया वा विद्यां यः प्राह तानि तीर्थानि षण्ममेति ( नि० २. ४ ॥ मनु० २. ११२-११५ ) । संहितो० खं० ३ ॥ विद्यया देवलोकः ( जय्यः ) देवलोको वै लोकानाꣳश्रेष्ठस्तस्माद्विद्यां प्रशꣳसन्ति । श० १४. ४. ३. २४ ॥

विद्यात् [ विद्यात् ] विजानीयात् ३१ । २१ । (१३१ भूमि०) वेत्ति ( अत्र लडर्थे लिङ् ) १ । २३ । २४ ॥

विद्याम् जानीयां लभेय वा २ । २७ । ५ ॥

विद्याम जानीयाम १ । ४ । ३ । लभेमहि १ । १६५ । १५ । प्राप्ता भवेम १ । १६८ । १० ॥

विद्युः विदन्ति ( अत्र लडर्थे लिङ् ) १ । २३ । २४ ॥

विद्युत् स्तनयित्नुः १ । ३८ । ८ ॥ [ विद्युतः ] विविधतया द्योतयन्ते यास्ताः १ । २३ । १२ ॥ विशेषेण द्योतमानात् ३२ । २ ॥ [ विद्युता ] विद्युन्निष्पन्नेनास्त्रसमूहेन १८६ । ६ ॥ [ विद्युते ] विद्युदिवाभिव्याप्ताय ३६ । २१ ॥

(प्रजापतिः) तान् ( देवान् ) व्यद्यत (=पाप्मनः सकाशाद् "वियोगितवान्" इति सायणः ) । यद्व्यद्यत् । तस्माद्विद्युत् । तै० ३. १०. ९. १ ॥ विद्युद्ब्रह्मेत्याहुः । विदानाद्विद्युद्विद्यत्येनꣳसर्वस्मात्पाप्मनो य एवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म । श० १४. ८. ७. १ ॥ विद्युद्वाऽअशनिः । श० ६. १. ३. १४ ॥ विद्युत्सावित्री । जै० उ० ४. २७. ९ ॥ विद्युदेव सविता । गो० पू० १. ३३ ॥ अथैतस्या-

मुदीच्यान्दिशि भूयिष्ठं विद्योतते। ष० २. ४॥ वृष्टिर्वै याज्या विद्युदेव, विद्युद्धीदं वृष्टिमन्नाद्यं सम्प्रयच्छति। ऐ० २. ४१॥ वृष्टिर्वै विराट् तस्या एते घोरे तन्वौ विद्युच्च ह्रादुनिश्च। श० १२. ८. ३.११॥ विद्युद्वाऽअपां ज्योतिः (यजु० १३, ५३)। श० ७. ५. २. ४९॥ (वसोर्धारायै) विद्युत्स्तनः। श० ९. ३. ३. १५॥ यो विद्युति (पुरुषः) स सर्वरूपः। सर्वाणि ह्येतस्मिन् रूपाणि। जै० उ० १. २७. ६॥

विद्युत्याय विद्युति भवाय १६। ३८॥

विद्युद्रथः विद्युता चालितो रथः विद्युद्रथः ३। १४। १॥ [विद्युद्रथाः] विद्युद्युक्ता रथा यानानि येषां ते ३। ५४। १३॥

विद्युन्मद्भिः तारयन्त्रादिसम्बद्धा विद्युतो विद्यन्ते येषु तैः १। ८८। १॥

विद्युन्महसः ये विद्युद्विद्यायां महसो महान्तः ५। ५४। ३॥

विद्योत् दीप्तिमानाग्न्यास्त्रादेः (अत्र द्युत धातोर्विच्) २०। २॥

विद्योतमानाय विद्युतः प्रवर्त्तकाय २२। २६॥

विद्रधे विशेषेण दृढे ४। ३२। २३॥

विद्रे [विद्रे] विन्दन्ति लभन्ते। (छन्दसि वा द्वे भवतः अ० ६। १। ८ अनेन वार्त्तिकेन द्विर्वचनाभावः) १। ८७। ६॥

विद्वान् ज्ञानवान् १। २४। १३। अनन्तविद्य ईश्वर, आप्तमनुष्यो वा १। ६०। १। सकलविद्याप्रापकः, परिमितविद्याप्रदो वा १। ९४। १६। सत्यासत्यवेत्ता ३। १७। ३॥

ये वै विद्वांसस्ते पक्षिणो येऽविद्वांसस्तेऽपक्षास्त्रिवृत्पञ्चदशावेव स्तोमौ पक्षौ कृत्वा स्वर्गं लोकं प्रयन्ति। तां० १४. १. १३॥ विद्वांसो हि देवाः। श० ३. ७. ३. १०॥

विधन् विदधतु १। १४६। १॥

विधन्त सेवन्ते ३। ३। १॥

विधन्तः परिचरन्तः २। ४। २॥ [विधतः] ताडयितॄन् १। १६७। ५। सेवकान् २। १। ६। विधानं कुर्वतः ६। ३। ७। विविधव्यवहारं यथावत्कुर्वते ४। २। १३। पुरुषार्थं कुर्वते ४। ४४। ४। सत्कर्त्रे ६। ५। ३॥

विधर्ता विविधानां लोकानां धारकः २। २८। ४। विशेषेण धारकः ७। ७। ५। विविधाकर्षणेन पृथिव्यादिधारकः १५। ११। विविधानां रत्नानां धारकः १५। १२। विविधस्य शीतस्य धर्त्ता १५। १३। विविधानां धर्त्ता १५। १४। विविधतया धारकः १७। ८२। यो विविधान् पदार्थान् धरति सः ३४। ३५॥ [विधर्तः] या विविधान् शुभान् गुणान् धरति तत्सम्बुद्धौ २। १। ३॥

विधर्मणि विरुद्धधर्मण्याकाशे १। १६४। ३६। विविधं च तद्धर्म च तस्मिन् ३। २। ३। विशिष्टे धर्मे ६। ७१। १॥ [विधर्मन्] विशेषधर्मानुचारिन् ५। १७। २॥

**विधवाम्** विगतो धवः पतिर्यस्यास्ताम् ४ । १८ । १२ ॥

विधवा विधातृका भवति, विधवनाद्वा, विधवनाद्वेति चर्मशिराः । अपि वा धव इति मनुष्यनाम, तद्वियोगाद्विधवा । नि० ३. १५ ॥

**विधाता** निर्माता १७ । २६ । कर्मानुसारेण फलप्रदाता जगन्निर्माता १७। २७। विविध विचित्र जगत् का उत्पादक १७ । २६ ( ( ३०२ आर्याभि० ) । सर्वेषां पदार्थानां कर्मफलानाञ्च विधानकर्त्ता ३२ । १० ।

चन्द्रमा एव धाता च विधाता च । गो० उ० १. १० ॥

**विधाति** विदधात् १ । १२० । १ ॥

**विधाना** करती हुई ४ । ५१ । ६ ॥

**विधाभिः** अद्भिः, विविधानि वस्तूनि ददति याभिः प्राणचेष्टाभिस्ताभिः विविधाभिः सत्क्रियाधारिकाभिः क्रियाभिः, समस्ताभिः सुखव्यापिकाभिर्वा १४ । ७ ॥

**विधारयः** यो विशेषेण धारयति सः १७ । ८२ ॥

**विधारे** धारयामि २२ । १८ ॥

**विधावतः** विविधान् मार्गान् धावतः १ । ८८ । ५ ॥

**विधूनाय** येन विविधं धूनं कम्पितं तस्मै २२ । ८ ॥

**विधून्वानाय** यो विविधं धुनोति तस्मै २२ । ८ ॥

**विधृतिः** विविधा धारणा यस्याः सा ३७ । १२ ॥ [ विधृतिम् ] विविधं धारणम् ११ । ६६ । विशेषेण धारणाम् २५ । ६ ॥

तस्मात् ( द्वे तृणे ) तिरश्ची निदधाति तस्माद्धेव ( अनयोः ) विधृती ( इति ) नाम । श० १. ३. ४. १० ॥

**विधेम** [ विधेम ] प्राप्नुयाम २ । २४ । १ । विचरेम २ । ६ । ३ । विधानं कुर्याम् ४ । ७ । वदेम ५ । ३६ । कुर्याम ७ । ४३ । निष्पादयेम ८ । २५ । परिचरेम १२ । १०२ ॥

परिचरणकर्मा । निघ० ३. ५ ॥ विधेम विधतिर्दानकर्मा । नि० १०. २३ ॥

**विध्य** ताड्य २१ । ३० । ४ ॥

**विध्यत्** विध्यति १ । ६१ । ७ । [ विध्यता ] ताडनकर्त्रा १ । ८६ । ६॥ [ विध्यद्भ्यः ] शस्त्रैः दुष्टांस्ताडयद्भ्यः १६ । २३ ॥

**विध्यताम्** ताडयनम् ६ । ७५ । ४ । ताडयेताम् २६ । ४१ ॥

**विध्यति** ताडयति ४ । ८ । ८ ॥

**विनंशिने** विनष्टुं शीलाय ६ । २० ॥

**विनक्तु** वेचयति वेचयतु वा ( अत्राद्ये पक्षे लडर्थे लोडन्तर्गतो ण्यर्थश्च ) १ । १६ ॥

**विनयः** विविधो नयो यस्य सः २ । २४। ६ ॥

**विनाशम्** विनश्यन्त्यदृश्या पदार्था भवन्ति

यस्मिन् ४० । ११ ॥ [ विनाशेन ] नित्य-स्वरूपेण विज्ञातेन कारणेन सह ४० । ११ ॥

विनाशयन् अविद्याऽदर्शनं प्रापयन् १ । ५५ । ६ ॥

विनिक्षे विनाशाय ५ । २ । ६ ॥

विनिक्षे विनिक्षणाय । नि० ४. १८ ॥

विनुदः विविधतया प्रेरकस्य २ । १३ । ३ ॥

विन्द प्राप्नुहि ७ । १३ । ३ । लभेरन् ७ । १८ । १८ ॥

विन्दत् विन्दति ६ । ४४ । २३ ॥

विन्दते [ विन्दते ] प्राप्नोति ६ । ५१ । १६ । प्राप्त होवे ११ । ५ । १८ (७६ सत्य०) ॥

विन्दन् लभन्ते १ । ७२ । २ । जानन्ति ४ । १ । १६ ॥

विन्दान्ति लभन्ते १ । १०५ । १ ॥

विन्दमानः प्राप्नुवन् ३ । ५५ । २० ॥

विन्दसि लभसे १ । १७६ । १ ॥

विन्दसे लभसे २ । १३ । ११ ॥

विन्धे विन्दामि ( अत्र वर्णव्यत्ययेन दकारस्य धकारः ) १ । ७ । ७ ॥

विन्धे विन्दामि । नि० ६. १८ ॥

विपः विविधं पातीति विपो मेधावी ७ । १७ ॥ [विपा] यौ विविधप्रकारेण पातस्तौ ५ । ६८ । १ ॥

विपः मेधाविनाम । निघ० ३. १५ ॥

विपक्षसा विविधानि यन्त्रकलाजलचक्र-भ्रमणयुक्तानि पक्षांसि पार्श्वे स्थितानि ययोस्तौ १ । ६ । २ । विविधैः परिगृहीतौ २३ । ६ ॥

विपतमनः विशेषेण गमनशीलस्य १ । १०८ । २ ॥

विपथयः विविधा विरुद्धा वा पन्थानो येषां ते ५ । ५२ । १० ॥

विपन्या विपणे विविधव्यवहारे साध्व्या ४ । १ । १२ ॥ [ विपन्यया ] स्तोतुं योग्यया धर्म्यया नीत्या १ । ११६ । ७ ॥ विशेषेण स्तुतया प्रशंसितया प्रज्ञया क्रियया वा ३ । २८ । ५ । विशिष्टोद्यमेन ६ । १६ । ३४ । विशेषव्यवहारयुक्तया ३३ । ६ ॥

विपन्यवः [ विपन्यवः ] विशेषेण स्तोतुमर्हा ईश्वरस्य वा स्तावकाः ३४ । ४४ । विविधं जगदीश्वरस्य गुणसमूहं पनायन्ति स्तुवन्ति ये ते ( अत्र बाहुलकादौणादिको युच्प्रत्ययः ) १ । २२ । २१ । विविधव्यवहारकुशला मेधाविनः १ । १०२ । ५ । विशेषेणात्मनः पणं स्तवनमिच्छवः १ । १३८ । ३ । विशेषेण प्रशंसिताः ३ । १० । ६ ॥

विपन्यवः मेधाविनाम । निघ० ३. १५ ॥

विपन्यामहे विशेषेण स्तुमहे १ । १८० । ७ ॥

विपयन्ति विशेषेण गच्छन्ति ७ । २१ । २ ॥

विपर्वम् विविधैरंगोपांगैः पूर्णम् १ । १८७ । १ । विगतानि पर्वाणि ग्रन्थयो यस्य तम् ३४ । ७ ॥

विपर्वम् विपर्वाणम् । नि० ९. २५ ॥

**विपश्चितम्** विद्वांसम् । य आप्तः सन्नुपदिशति तम् १ । ४ । ४ ।

विपश्चित् मेधाविनाम । निघ० ३. १५ ॥

यज्ञो वै बृहन्विपश्चित् । श० ३. ५. ३. १२ ॥

**विपश्यति** विविधतया प्रेक्षते ३ । ६२ । ६ ॥

**विपाका** विविधगुणैः परिपक्का १ । १६८ । ७ ॥

**विपाट्** या विविधं पटति गच्छति विपाटयति वा सा ३ । ३३ । १॥ [ **विपाशम्** ] विगता पाड् बन्धनं यस्यां ताम् ३ । ३३ । ३ ॥ [ **विपाशि** ] विगतपाशे बन्धनरहिते ४।३०। ११ ॥

**विपानम्** विविधशब्दार्थसम्बन्धयुक्ताम् १६ । ७३ । विविधरक्षान्वितम् १६ । ७४ । विविधं पानं रक्षणं यस्मात्तत् १६ । ७५ । विविधं पानं येन तत् १६ । ७६ । विविधरक्षणम् १६ । ७७ । विविधपाननिमित्तम् १६ । ७८ । विशिष्टेन पानेन युक्तम् १६ । ७६ ॥

**विपिपानः** विशेषेण रक्षन् ४ । १६ । ३ ॥ [ **विपिपाना** ] विविधं राज्यं रक्ष्यमाणौ १० ।३३॥ [ **विपिपानम्** ] औषधरसानां विविधं पानं कर्त्तुं शीलम् १ । ११२ । १५॥ [ **विपिपानस्य** ] विविधानि पानानि यस्मात्तस्य ७ । २२ । ४ ॥

**विपृक्तः** विशेषेण सम्बद्धः २६ । १४ । स्वरूपेण सम्पर्करहितः १ । १६३ । ३ ॥

**विपृक्तत्** विशेषेण सम्बद्धम् ५ । २।३ ॥

**विपृचः** ये वियुञ्जते वियुक्ता भवन्ति ते १६ । ११ ॥ [ **विपृचे** ] वियोजनाय ४ । १३ । ३ ॥

**विप्रः** मेधावी १ । १४ । ६ ॥ [ **विप्रैः** ] विविधान् पदार्थान् प्रान्ति तैः किरणैः १ । ६२ । ४ ॥ [ **विप्रस्य** ] विशेषेण प्राति व्याप्नोति तस्य ५ । ८१ । १ । अनन्तप्रज्ञाकर्मणो जगदीश्वरस्य ५ । १५ ॥

विप्रः मेधाविनाम । निघ० ३. १५॥

( यजु० ११. ४ ) विप्रा विप्रस्येति प्रजापतिर्वै विप्रो देवा विप्राः । श० ६.३.१.१६॥ एते वै विप्रा यदृषयः । श० १. ४. २. ७ ॥

**विप्रजूतः** विप्रेभिर्मेधाविभिर्जूतः शिक्षितः२०। ८८ ॥ विप्रैर्मेधाविभिर्विद्वद्भिर्ज्ञातः १ । ३ । ५ ॥

**विप्रतमः** अतिशयेन मेधावी ३ । ३१ । ७ ॥

**विप्रमन्मनः** विप्रस्य मन्म विज्ञानं यस्मिँस्तस्य ६ । ३६ । १ ॥

**विप्रराज्ये** विप्राणां मेधविनां राज्ये राष्ट्रे ३३ । ८३ ॥

**विप्रवाहसा** यौ विद्वद्भिर्प्रापणीयौ ५ । ७४ । ७ ॥

**विप्रुतम्** विप्रवमाणम् १ । ११६ । २४ । विविधानां व्यवहाराणां वेत्तारम् १।११७। ४ ॥ [ **विप्रुड्भिः** ] विशेषेण पूर्णैः २५। ६ ॥

विबध्नते विशिष्टतया बध्नन्ति ( अत्र व्यत्ययेनात्मनेपदम् ) १ । २८ । ४ ॥

विबभाज विशेषेण भजेत सेवेत ७ । १८ । २४ ॥

विबाध्य निःसार्य्य २ । २३ । ३ ॥

विबाल्यम् विगतं बाल्यं यस्य तम् ४ । ३० । १२ ॥

विभक्ता विविधानां पदार्थानां संभागकर्त्ता १ । २७ । ६ । विभज्य दाता ५ । ४६ । ६ । विभागं प्राप्ताः ६ । ३६ । १ । विभक्ते भिन्ने ७ । १८ । २४ । सत्याऽसत्ययोर्विभाजकः ७ । २६ । ४ । [ विभक्तारम् ] जीवेभ्यस्तत्तत्कर्मानुकूलफलविभाजितारम्, विविधपदार्थानां पृथक् पृथक्कर्त्तारं वा १ । २२ । ७ ॥

विभर्जन् विभागं कुर्वन् १ । १०३ । ६ ॥ [ विभजन्तः ] विविधतया सेवमानाः २ । १३ । ४ ॥

विभजासि विभजेः १ । १२३ । ३ ॥

विभञ्जनुः शत्रूणां विभञ्जकः ४ । १७ । १३ ॥

विभराः ये विशेषेण विभरन्ति पोषयन्ति ते ५ । ३१ । ६ ॥

विभागे सेवनव्यवहारे १ । १०६ । ५ । विशेषेण भजनीये व्यवहारे ७ । ४० । १ । विभजन्ति यस्मिँस्तस्मिन्व्यवहारे ७ । ५६ । २१ ॥

विभाति विशेषतया प्रकाशते २६ । ३ । विशेषेण प्रकाशयन् प्रकाशयिता भवति ३२ । ७ ॥

विभाती विविधानि मूर्त्तद्रव्याणि प्रकाशयन्ती १ । ९२ । ६ । विविधतया सद्गुणैः प्रकाशमाना १ । १२३ । १० । प्रकाशन्ती १ । १२४ । ६ ॥ [ विभातीः ] विशिष्टप्रकाशान् १ । १२३ । ६ ॥ [ विभातीनाम् ] प्रकाशयन्तीनां सूर्यकान्तीनाम् १ । ११३ । १५ ॥

विभावः विभावय १ । ५८ । ६ ॥

विभावरि विविधं जगत् भाति दीपयति सा विभावरी ( अत्र वनोरच्च । अ० ४ । १ । ६ अनेन ङीप् रेफादेशश्च ) १ । ३० । २० । या विविधतया भाति प्रकाशयति तत्सम्बुद्धौ १ । ४८ । १० । विविधदीप्तियुक्ते १ । ९२ । १४ । प्रकाशयुक्तोषर्वद्वर्तमाने ५ । ७९ । ४ ॥

विभावसुः यो विविधा भा वासयति सः ३ । २ । २ । येन विविधा भा विद्यादीप्तिर्वास्यते १२ । ३१ । यो विविधासु भास्सु विद्याप्रकाशेषु वा वसति सः १७ । ५३ ॥ [ विभावसुम् ] प्रकाशयुक्तं वसु धनं यस्य तम् ५ । २५ । २ ॥ [ विभावसो ] विविधया भया दीप्त्या सहितं वसु धनं यस्य तत्सम्बुद्धौ ११ । ४० । यो विविधायां भायां वसति तत्सम्बुद्धौ १२ । १०६ । प्रकाशितधन । २६ । १२ ॥ स्वप्रकाश । ५ । २५ । ७ ॥

( यजु० १२. १०६ ) ( = प्रभूवसुः ) महि भ्राजन्ते

अर्चयो विभावसविति महतो भ्राजन्तेऽर्चयः प्रभूवसविल्येतत् । श० ७. ३. १. २९ ॥

**विभावा** यो विशेषेण भाति प्रकाशयति सः १ । ५९ । ७ । यो विविधान् पदार्थान् भाति प्रकाशयति सः १ । ६६ । १ । विविधदीप्तिमान् ३। ३। ६। विभववान् ४ । १ । ८ । विविधविद्याप्रकाशयुक्तः ४ । १ । १२ । विशेषेण भानवान् ५ । १ । ६ । विशेषेण भावुकम् १ । १४८ । १ ॥

**विभासि** विविधान् दीपयति १ । ६२ । ८ । विशेषता से प्रकाशित करते हैं । ६ । ४८ । ३ ॥

**विभिन्दन्** विदारयन्त्सन् १ । १०३ । ३ ॥

**विभिन्दुना** विविधभेदकेन १ । ११६ । २० ॥

**विभीषणः** भयप्रदः ५ । ३४ । ६ ॥

**विभु** बहुसुखव्यापकम् १ । ६ । ५ । व्यापकम् १ । १६५ । १० । अखिलविषयेषु व्यापकं मन आदि १८ । १० ॥

**विभुः** सर्वव्यापकः, सर्वसभासेनाङ्गैः शत्रुबलेषु व्यापनशीलो वा १ । ३१ । २ । सर्वमार्गव्यापनशीलः १ । ३४ । १ । व्यापक ईश्वरः १ । १४१ । ६ ॥ [ विभुभिः ] सद्गुणादिषुव्याप्तैः ७।४८। २ ॥ [ विभुवे ] व्यापकाय वायवे २२ । ३० ॥

**विभूः** यथा व्यापक आकाशो वैभवयुक्तो राजा वा ५ । ३१ । व्यापकः २२ । १९ । [ विभ्वः ] सकल विद्यासु व्याप्ताः ४ । ३६ । ३ । समर्थाः १। १६६ । ॥ [विभ्वम्] विभुं विद्युदाख्यमग्निम् ३३ । ६ ॥

**विभूतद्युम्नः** विशिष्टानि भूतानि द्युम्नानि धनानि यशांसि वा यस्य सः १ । १५६ । १ ॥

**विभूतिः** विविधमैश्वर्यम् १ । ३० । ५ ॥ [ विभूतयः ] विविधा भूतय ऐश्वर्याणि यासु ताः १ । ८ । ६ । विविधैश्वर्यप्रदाः १ । १६६ । ११ ॥ [ विभूतिम् ] महदैश्वर्यम् ६ १७ । ४ ॥

याष्वद्विभूतय ऋतवस्ते । जै० उ० १. २१. १ ॥

**विभूषति** अलङ्करोति १ । ११२ । ४ ॥

**विभूषन्** अलंकुर्वन् ६ । १५ । ६ ॥

**विभृतः** विविधद्रव्यविद्याधारकाः १ । ७१ । ४ । विशेषेण धृतः पोषितो वा ११ । ४३ ॥

**विभृत्रः** यो विविधं बिभर्ति सः २ । १०।२॥ [ विभृत्राः ] विशिष्टानि धृत्राणि भरणानि यासां ताः १ । ७१। ३। विशेषेण पोषकाः ७ । ४३ । ३ ॥ [ विभृत्रम् ] विविधक्रियाधारकम् १ । ६५। २ ॥

**विभ्राजन्ते** शोभन्ते ५ । ६१ । १२ ॥

**विभ्राजमानः** विशेषेण विद्यान्यायाभ्यां देदीप्यमानः १५ । ५२ ॥ [ विभ्राजमानान् ] प्रकाशमानान् ४ । ३३ । ६ ॥

**विभ्राट्** यो विशेषेण भ्राजते सः ३३ । ३० ॥

**विभ्राष्टिम्** विविधा भ्राष्टयः प्रकाशनानि

यस्मिँस्तम् १५। ४७। विविधतया भुञ्जन्ति परिपचन्ति येन तम् १ । १२७ । १ ॥

विभ्वतष्टः यो विभुषु पदार्थेष्वष्टोऽविचक्षणः सः ४ । ३६ । ५॥ [ विभ्वतष्टम् ] विभुना जगदीश्वरेण निर्मितम् ३ । ४६ । १ । विभूनां मेधाविनां मध्ये तष्टं तीव्रप्रज्ञम् ५ । ५८ । ४ ॥

विभ्वन् विभूततमम् । नि० २. १९ ॥

विभ्वने विभुत्वाय ६ । ६१ । १३ ॥

विभ्वासहम् यो विभूनासहते तम् ५ । १० । ७ ॥

विभ्वान् विभून् विद्याव्याप्तानमात्यान् ७ । ४८ । ३ ॥

विभ्वी व्यापिका ५ । ३८ । १ ॥

विमदाय विविधा मदा हर्षा यस्मिन्व्यवहारे तस्मै १ । ५१ । ३ । विविधानन्दाय १ । ११२ । १९ । विशिष्टो मदो हर्षो यस्मात्तस्मै १ । ११६ । १ । विशेषमदयुक्ताय १ । ११७ । २० ॥

( विमदेन दृष्टं सूक्तम् । ऋ० १०. २१ ॥ ) विमदेन वै देवा असुरान्व्यमदन् । को० २२. ६ ॥

विमध्ये विशेषान्धकारे ४ । ५१ । ३ ॥

विमनाः विविधं मनो विज्ञानं यस्य सः १७ । २६ ।

विमन्यवः विविधो मन्युर्येषां ते १ । २५ । ४ ॥

विमेम विविधतया मिमीते ५ । १८ । विमानयानवन्निर्मिमीते ११ । ६ । विशेषेण रचयति १ । १५४ । १ ॥

विमहसः [ विमहसः ] विशेषेण महागुणविशिष्टान् ५।८७। ४ । विविधानि महांसि पूज्यानि कर्माणि येषां तत्सम्बुद्धौ १ । ८६ । १ । विविधतया पूजनीयाः ८ । ३१ ॥

विमानः विविधं मानं यस्य सः ३ । २६ । ७ । विमानमिव स्थितः १७। ५६ । विमानयानमिव धर्त्ता १८ । ६६ । विविधं मानं यस्मिन्त्सः ३२। ६॥ [ विमानम् ] वियति गमकम् २ । ४० । ३॥ [ विमाने ] विगतं मानं परिमाणं यस्यान्तरिक्षस्य तस्मिन् ७ । १६ ॥

विमितानि विशेषेण परिमितानि ६ । ७ । ६ ॥

विमिन्वन् विशेषेण प्रक्षिपन् ४ । ५६ । १ ॥

विमिमानः विशेषेण निर्माता सन् १ । १८६। ४ ॥

विमुचः विमुञ्च १ । ४२ । १ ॥

विमुचन्ति त्यजन्ति ५ । ६२ । १ ॥

विमुचम् विमुचन्ति येन तम् ५ । ४६ । १ ॥

विमुच्य त्यक्त्वा १ । १०४ । १ ॥

विमृधे विशिष्टा मृधः शत्रवो यस्मिँस्तस्मै संग्रामाय, विगतशत्रवे ८ । ४४ ॥

विमोक्तारम् दुःखाद्विमोचकम् ३० । १४ ॥

विमोचनम् पृथक्करणं २ । ३७ । ५ ॥

वियत् विविधैः प्रकारैर्यतते येन तत् १५। ५ ॥

[वियतम्] अजितेन्द्रियम् ४ । १६ । ३ ॥

वियत् अन्तरिक्षनाम । निघ० १. ३ ॥

वियन्ता विविधान् प्राप्नुवन्तौ १ । १६४ । ३८ ॥ [वियन्तः] विशेषेण प्राप्नुवन्तः ४ । ३८ । ६ ॥

वियन्ति व्याप्नुवन्ति ७ । ४३ । १ ॥

वियासाय विविधप्राप्तये ३६ । ११ ॥

वियुते मिश्रिताऽमिश्रिते ३ । ५४ । ७ ॥

वियुता वियुक्तानि ४ । ७ । ७ ॥ [वियुताः] वियुक्ताः ५ । ३० । १० ॥

वियुते द्यावापृथिव्यौ वियावनात् । नि० ४. २५ ॥

वियूय पृथक्कृत्य १० । ३२ । विभज्य १६ । ६ । वियोज्य सम्मिश्र्य च २३ । ३८ ॥

वियेमिरे विशेषेण नियच्छन्ति ४ । ५४ । ५ ॥

वियोतारः विभाजकाः ४ । ५५ । २ ॥

वियोषत् सन्दधीत ४ । १६ । २० ॥

विरप्शम् महान्तं संसारम् ४ । ५० । ३ ॥

विरप्शी महाविद्यायुक्ता १ । ८८ । विविधा विरप्शा प्रसिद्धा उपदेशा विद्यन्ते यस्य सः ३ । ३६ । ४ । महान् ४ । १७ । २० ॥ [विरप्शिनः] सर्वसामग्र्या महान्तः पूर्णविद्याशिक्षावीर्याः १ । ११६ । ८ ॥ [विरप्शिने] प्रशंसिताय ६ । ३२ । १ ॥

[विरप्शिन्] महागुण विशिष्टश्वर वा महैश्वर्यमिच्छुक मनुष्य १ । २८ ॥

विराजतः देदीप्येते १ । १८८ । ६ ॥

विराजथ विशेषेण प्रकाशध्वम् १ । १८८ । ४॥

विराट् या विविधासु राजते १३ । २४ । विविधविनयविद्याप्रकाशयुक्ता १४ । १३ । विविधैः पदार्थैः राजमाना १५ । ११ । यो विविधेषु गुणेषु कर्मसु वा राजते सः १ । १८८ । ५ । विविधप्रकाशयुक्तः १४ । १४। विशेषेण राजमानः २७ । ७। विविधैः पदार्थैः राजते प्रकाशते स विराट् ब्रह्माण्डरूपः ३१ । ५ ॥ विविधविद्याप्रकाशनम् १४ । १८ । विविधशास्त्रश्रवणयुक्तम् २० । ५ । य द्विविधं राजते तत् २१ । १६ ॥ [विराजम्] विविधानां पदार्थानां प्रकाशकम् २८ । ३१ । विराट् छन्दोवाच्यम् ६ । ३३ । [विराजा] विशेषेण प्रकाशेन ३८ । २७ ॥

विराट् विराजनाद्वा, विराधनाद्वा. विप्रापणाद्वा। विराजनात्सम्पूर्णाक्षरा, विराधनादूनाक्षरा, विप्रापणादधिकाक्षरा । नि० ७. १३ ॥

( छन्दः ) विराड् विरमणाद्विराजनाद्वा । दे० ३. १२ ॥ वृष्टिर्वै विराट् तस्या एते घोरे तन्वौ विद्युच्च ह्रादुनिश्च । श० १२. ८. ३. ११ ॥ विराडग्निः । श० ६. २. २. ३४ ॥ ६. ३. १. २१ ॥ ६. ८. २. १२ ॥ ९ १. १. ३१ ॥ वाग्वै विराट् । श० ३. ५. १. ३४ ॥ विराड्ढीयम् ( पृथिवी ) । श० २. २. १. २० ॥ इयं ( पृथिवी ) वै विराट् । श० १२. ६. १. ४० ॥ गो० उ० ६. २ ॥ ( यजु० १३. २४) अयं वै ( पृथिवी ) लोको विराट् । श० ७. ४. २. २३ ॥ ( यजु० १३. ४३) विराड्वै गौः । श० ७. ५. २. १९॥ एषा वै स्तनवती विराड् यं कामं कामयते

तमेतां दुग्धे ( "तस्याथ कामधुग्धेनुर्वसिष्ठस्य महात्मनः। उक्ता कामान्प्रयच्छेति सा कामान्दुह्यते सदा॥" इति नीलकंठीयटीकायुते महाभारत आदिपर्वणि १७५.९॥) अन्नं विराट्। कौ० ९.६॥१२.३॥तै० १.६.३.४ ॥ १.८.२.२ ॥ तां० ४.८.४॥ अन्नं वै विराट् तस्माद्यस्यैवेह भूयिष्ठमन्नं भवति स एव भूयिष्ठं लोके विराजति तद्विराजो विराट्त्वम्। ऐ० १.५ ॥ अन्नं विराट्। श० ७.५. २. १९ ॥ ऐ० १.५॥ ४.११॥ विराडन्नम्। ऐ० ५.१९ ॥ ६. २० ॥ अन्नं वै श्रीर्विराट्। गो० पू० ५. ४॥ गो० उ० १.१९॥ श्रीर्विराडन्नाद्यम्। कौ० १.१॥ १२.२ १४.२ २.३॥१५.५॥ श्रीर्वै विराड् यशोऽन्नाद्यम्। गो० पू० ५. २० ॥ गो० उ० ६. १५ ॥ एतद्वै कृत्स्नमन्नाद्यं यद्विराट्। कौ० १४. २॥ विराडन्नाद्यम्। ऐ० ४. १६ ॥ ८. ४ ॥ ऊर्ग्विराट्। तै० १. २. २. २ ॥ वैराजीर्वा आपः। कौ० १२. ३ ॥ वैराजो वै पुरुषः। तां० २. ७. ८ ॥ १९. ४. ५ ॥ तै० ३. ९. ८. २ ॥ विराड् वै यज्ञः। श० १. १. १. २२ ॥ २. ३. १. १८ ॥ ४. ४. ५. १९ ॥ वैराजो यज्ञः। गो० पू० ४. २४ ॥ गो० उ० ६. १५ ॥ विराड् वाऽअग्निष्टोमः। कौ० १५. ५ ॥ वैराजः सोमः। कौ० ९. ६ ॥ श० ३. ३. २. १७ ॥ ३. ९. ४. १९ ॥ विराड् वरुणस्य पत्नी। गो० उ० २. ९ ॥ अथैतद्वामेऽक्षणि पुरुषरूपम्। एषास्य ( दक्षिणेऽक्षणि वर्त्तमानस्येन्द्राख्यस्य पुरुषस्य ) पत्नी विराट्। श० १४.६.११.३॥ सा (विराट्) तत ऊर्ध्वारोहत्। सा रोहिण्यभवत्। तै० १.१. १०.६ ॥ विराट् सृष्टा प्रजापतेः। ऊर्ध्वारोहद्रोहिणी। योनिरग्नेः प्रतिष्ठितिः। तै० १.२.२.२७॥ सर्वदेवत्यं वा एतच्छन्दो यद्विराट्। श० १३. ४. १. १३ ॥ सत् (उत्कृष्टमिति सायणः) विराट् छन्दसाम्। तां० १५. १२. २. विराट् छन्दसाम् ( सत् )। तां० ४. ८. १० ॥ विराड् वै छन्दसां ज्योतिः। तां० ६. ३. ६ ॥ विराड्ढि छन्दसां ज्योतिः। तां० १०. २. २ ॥ विराजो वा एतद्रूपं यदक्षरम्। तां० ८. ६. १४ ॥ दशाक्षरा वै विराट्। श० १. १. १. २२ ॥ दशाक्षरा विराट्। ऐ० ६. २० ॥ गो० पू० ४. २४ ॥ गो० उ० १. १८ ॥ ६. २, १५ ॥ तां० ३. १३. ३ ॥ दशदशिनी विराट्। कौ० २. ३ ॥ १७. ३ ॥ १९. ५, ७ ॥ दश च ह वै चतुर्विराजोऽक्षराणि। गो० पू० ५. २० ॥ त्रिंशदक्षरा वै विराट्। ऐ० ४. १६॥ ८. ४ ॥ श० ३. ५. १. ७ ॥ त्रिंशदक्षरा वा एषा विराट्। तै० ३. ८. १०. ४ ॥ तां० १०. ३. १२ ॥ तै० १. ६. ३. ४ ॥ सा विराट् त्रयस्त्रिंशदक्षरा भवति। ऐ० २. ३७ ॥ त्रयस्त्रिंशदक्षरा वै विराट् कौ० १४. २ ॥ १८. ५ ॥ श० ३. ५. १. ८ ॥ एषा वै परमा विराड् यच्चत्वारिंशद्द्वात्रयः पङ्क्तिर्वै परमा विराट्। तां० २४. १०. २ ॥ सहस्राक्षरा वै परमा विराट्। तां० २५. ९. ४ ॥ विराड् वाऽअनाधृष्टं छन्दः ( यजु० १४. ९ ) श० ८. २. ४. ४ ॥ स ( प्रजापतिः ) पुरुषमेवेनेष्ट्वा विराडिति नामाधत्त। गो० पू० ५. ८ ॥ बृहद् विराट्। तै० १. ४. ४. ९ ॥

विराषाट् वीरान् ज्ञानवतः प्राप्तिशीलान् जीवान् सहते सः ( अत्र वर्णव्यत्ययेन दीर्घेकारस्य स्थाने ह्रस्वेकारोऽकारस्थान आकारश्च। स्फायितं चि०। उ० २। १३। इत्यजधातोरक्प्रत्ययः छन्दसि सहः अ० ३। २। ६३ इति णिवः। सहेः साढः सः। अ० ८। ३। ५६। इति षत्वम्) १। ३५। ६ ॥

विरुक्मान् विविधदीप्तियुक्तः ६। ४६। ५ ॥

विरुद्रस्य विविधा रुद्राः प्राणा यस्मिँस्तस्य १। १८०। ८ ॥

विरुरुचुः विदीपयन्ति ( अत्र लडर्थे लिट् ) ३। १५। विरोचन्ते प्रकाशन्ते १५। २६। विशेषेण दीपयेयुः ३३। ६ ॥

विरूपवत् विविधानि रूपाणि यस्य तद्वत् १ । ४५ । ३ ॥

विरूपे तमःप्रकाशाभ्यां विरुद्धे रूपे १२ । २ । विरुद्धस्वरूपे १७ । ९० । विविधं रूप ययोरह्नो रात्रेश्च ते १ । ६२ । ८ । [ विरूपाः ] विविधानि रूपाणि यासां ताः १ । ७० । ४ । विविधरूपा विकृतरूपा वा ३ । ५३ । ७ ॥ [ विरूपम् ] विविधानि रूपाणि यस्मिँस्तम् ३ । १ । १३ ॥ [ विरूपान् ] विविधस्वरूपान् ३० । २२ ॥

विरूपासः बहुरूपाः । नि० ११. १७ ॥

विरोकिणः विविधो रोको रुचिर्विद्यते येषु ते ५ । ५५ । ३ ॥

विरोके अभिप्रीते प्रदीपने वा ३ । ५ । २ । विविधतया रुचिकरे व्यवहारे १० । १६ ॥

विरोचमानः प्रकाशमानः ५ । ४४ । २ ॥ [ विरोचमानम् ] विविधप्रकारेण प्रकाशमानम् १ । ६५ । २ । विविधदीप्तियुक्तम् १ । ६५ । ६ ॥

विरोहसि विविधतया वर्धसे १३ । २१ ॥

विलायकः येन विविधतया लीयते श्लिष्यते २० । ३४ ॥

विलिष्टम् परिपूर्णम् (अत्र विरुद्धार्थे विशब्दः) २ । २४ । विशेषेण न्यूनमङ्गम् ८ । १४ । रोगादिमललेशम् ८ । १६ । विरुद्धमल्पमपि व्यसनम् २३ । ४१ ॥

विलोहितः विविधैः शुभगुणकर्मस्वभावैः रोहितो वृद्धः १६ । ७ ॥ [ विलोहिताः ] विविधरक्तवर्णाः १६ । ५८ ॥ [ विलोहित ] विविधान् पदार्थानारूढस्तत्सम्बुद्धौ १६ । ५२ ॥

विवक्तन वदत, उपदिशत १ । १५६ । ३ ॥

विवक्मि विशेषेण वदामि ( अत्र वाच्छन्दसीति कुत्वम् ) १ । १६७ । ७ । विशेषेणोपदिशामि ३ । ५७ । ४ । विवेकेन परीक्षयामि ७ । २२ । ५ ॥

विवक्षत इव वक्तुमिच्छोरिव २३ । २३ ॥

विवधः विशेषेण वध्नन्ति पदार्था यस्मिँस्तदन्तरिक्षम् १५ । ५ ॥

विवरे अवकाशे १ । ११२ । १८ ॥

विवर्तनम् विविधं वर्तनम् १ । १६२ । १४ । विशेषेण वर्तन्ते यस्मिँस्तत् २५ । ३८ ॥

विवर्तमानाय विशेषेण वर्तमानाय २२ । ८ ॥

विवर्तः विविधं वर्तते यस्मिन्त्सः १४ । २३ ॥

विवलम् विविधं वलं यस्मात् १४ । ६ ॥

विवष्टि विशेषेण कामयते ७ । १६ । ११ ॥

विवस्व विशेषेण वस ( अत्र व्यत्ययेनात्मनेपदम् ) १ । १८७ । ७ ॥

विवस्वत्याः या विवस्वति साध्व्यः ३ । ३० । १३ ॥

**विवस्वान्** सूर्य्य इव ७ । ६ । ३ । [विवस्वते] सूर्यलोकाय १ । ३१ । ३ ॥ [विवस्वतः] परमेश्वरस्य १ । ५८ । १ । सवितुः ३ । ३४ । ७ ॥ [विवस्वन्] विविधे स्थाने वसति तत्सम्बुद्धौ ८ । ५ ॥

विवस्वतः आदित्यात् । विवस्वान् विवासनवान् । नि० ७. २६ ॥

असौ वाऽआदित्यो विवस्वानेष ह्यहोरात्रे विवस्ते तमेष वस्ते सर्वतो ह्येनेन परिवृतः । श० १०. ५ २. ४ ॥ विवस्वन्नादित्यैष ते सोमपीथः । श० ४. ३. ५. १८ ॥ (देवा आदित्याः) यं (मार्तण्डं) उ ह तद्विचक्रुः, स विवस्वानादित्यस्तस्येमाः प्रजाः । श० ३. १. ३. ४ ॥

**विवाचः** विविधा वाणीः ३ । ३४ । १० । विविधविद्याशिक्षायुक्ता वाचो येषां ते ६ । ३१ । १ ॥ विविधार्थसत्यार्थप्रकाशिका वाचो यस्मिन्व्यवहारे ६ । ४५ । २६ । विविधासु विद्यासु प्रवृत्ता वाक् तस्याम् ७ । २३ । २ । विरुद्धा वाचो यस्मिन् संग्रामे भवन्ति तस्मिन् ७ । ३० । २ ॥

विवाक् संग्रामनाम । निघ० २. १७ ॥

**विवाय** [विवाय] गच्छेत् १ । १५६ । ५ । संवृणोति १ । ७१ । ४ । दूरं गमयति ७ । ६ । ३ ॥

**विवास** विवसति ५ । ८३ । १ ॥

**विवासति** परिचरति १ । ५८ । १ ॥

विवासति परिचरणकर्मा । निघ० ३. ५ ॥

**विवासते** परिचरति १ । ११७ । १ ॥

**विवासथः** सेवेथाम् १ । ११६ । ९ ॥

**विवासन्ति** परिचरन्ति ७ । ३५ ॥

**विवाससि** परिचरसि १ । ७४ । ६ ॥

विवाससि विवासतिः परिचर्यायाम् । नि० ११. २३ ॥

**विवासान्** सेवेरन् १ । १७३ । १ ॥

**विवासे** परिचरामि १ । ४१ । ८ । वासयामि ७ । ५८ । ५ ॥

**विवासेत्** सेवेत ६ । १६ । ४६ ॥

**विवासेम** नित्यं परिचरेम ६ । ३८ । ५ ॥

विवासेम परिचरेम । नि० २. २४ ॥

**विवासेयम्** परिचरेयम् २ । ३३ । ६ ॥

**विविक्तः** पृथक्कुरुतः ३ । ५४ । ८ ॥

**विविक्त्यै** विवेकाय ३० । १३ ॥

**विविक्वान्** विविक्तः ३ । ५७ । १ ॥

**विविचिम्** विवेचकं विभागकर्त्तारम् ५ । ८ । ३ ॥

**विविड्ढि** व्याप्नुहि (अत्र वाच्छन्दसि सर्वे विधयो भवन्तीति नियमाद् निजां त्रयाणां गु० अ० ७ । ४ । ७५ अनेनाभ्यासस्य गुणनिषेधः) १ । २७ । १० ॥

विविड्ढि कुरु । नि० १०. ८ ॥

**विवित्से** प्राप्नोषि (अत्र व्यत्ययेनात्मनेपदम्) १ । ३२ । ४ ॥

**विविदत्** प्राप्नोति ७ । २१ । ६ ॥

**विविदथुः** विन्दतः (अत्र व्यत्ययः) ६ । ७२ । १ ॥

**विविदुः** वेदयन्ति १ । ७१ । २ ॥

**विविदे** विन्देत २ । १५ । ६ । लभते ४ । १८ । १३ । विन्दति ४ । २६ । ५ । विज्ञायते ७ । ७ । १ ॥

**विविद्रिरे** लभन्ते २ । २१ । ५ ॥

**विविद्र** विदन्ति ६ । २७ । १ ॥

**विविद्वान्** विशेषेण विपश्चित् ४ । ५ । ३ ॥

**विविध्यन्ति** बाणा इव सक्षतान् कुर्वन्ति १६ । ६२ ॥

**विविध्यन्तीभ्यः** शत्रुवीरान् निहन्त्रीभ्यः १६ । २४ ॥

**विविप्रे** क्षिपन्ति ३ । ३२ । ४ ॥

**विविशुः** प्रविशेयुः ३ । ७ । १ । आविशन्ति ५ । १६ । २ ॥

**विविषुः** व्याप्नुवन्ति ६ । ३२ । ५ ॥

**विविष्मः** व्याप्नुमः ६ । २३ । ५ ॥

**विवृक्णा** विविधतया छिन्नानि (अत्र ओव्रश्चू छेदन इत्यस्मात्कर्मणि निष्ठा । अदितश्चेति नत्वम् निष्ठादेशः । षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः । अ० ८ । २ । ६ इति वार्त्तिकेन झलि षत्वे कर्त्तव्ये झलपरत्वाभावात् षत्वं न भवति । चोः कुरिति कुत्वं शेश्छन्सीति शेर्लोपः) १ । ३२ । ५ ॥ विविधछेदनसाधनेन वज्रेण १ । ३२ । ३ (२८४ भूमि० ) ॥

**विवृत्** यद्विविधैराकारैर्वर्तते तज्जगदुपकर्त्ता १५ । ६ ॥ [ विवृते ] जगदुपकाराय १५ । ६ ॥

**विवृत्ताय** विविधतया कृतवर्तमानाय २२ । ८ ॥

**विवृश्चत्** छिनत्ति ३ । ३३ । ७ ॥

**विवृश्चन्** विविधतया छिन्दन् २ । १५ । ६ ॥

**विवेः** प्राप्नोषि (अत्र बहुलं छन्दसीति श्लुः) १ । ६६ । ४ ।

**विवेक्षि** व्याप्नोषि ७ । ३ । ४ ॥

**विवेद** [ विवेद ] विजानीयात् ३ । ३२ । ४ । वेत्ति ३ । १ । ६ । विन्दति ३ । ३९ । ५ ॥

**विवेश** प्रविष्टोऽस्ति १ । ६८ । २ । विशति १ । १६४ । २१ । प्रविष्टवान् ३ । ३ । ४ । विश ३ । ३१ । ५ । विशेत् ३ । ३४ । ५ । व्याप्नोति ४ । ५८ । ३ ॥

विवेश विशति । नि० १०. ४६ ॥

**विवेशुः** विशन्ति ४ । २३ । ६ ॥

**विवेष** [ विवेष ] व्याप्नोति ३ । ३२ । १४ । वेवेष्टि ५ । ७७ । ४ । व्याप्नुयात् ७ । २१ । ४ ॥

**विवेषः** व्याप्नोति ७ । ३७ । ५ ॥

**विव्यक्** व्याप्नुयात् ७ । २१ । ६ ॥

**विव्यथुः** सन्तनुतं वेष्टयतम् ६ । ७२ । ५ ॥

**विव्याच** छलयति ३ । ३६ । ४ ॥

**विव्ये** संवृणोति १ । १७३ । ६ ॥

**विव्रता** विविधानि व्रतानि शीलानि याभ्यां तौ १ । ६३ । २ ॥

**विश** प्राप्नुहि १ । १७६ । १ ॥

**विशः** प्रजाः १ । १२१ । १ । धनानि २ । २४ । १० । मनुष्याः ६।१४।२ [ विशम् ] वैश्यवर्ण प्रजां च । ३८ । १४ । ( १५२ भूमि० ), अनेक विद्योद्यम, बुद्धि, विद्या धन और धान्यादि वलयुक्त ३८ । १४ ( २७६ आर्य० ) ॥

विशः मनुष्यनाम । निघ० २. २ ॥
यज्ञो वै विशो यज्ञे हि सर्वाणि भूतानि विष्टानि । श० ८. ७. ३. २१ ॥ ( यजु० ३८. १९ ) यज्ञो वै विट् । श० १४. ३. १. ९ ॥ विडुक्थानि । तां० १८. ८. ६ ॥ १९. १६. ६ ॥ विट् शस्त्रम् । ष० १. ४ ॥ विट् सूक्तम् । ऐ० २. ३३ ॥ ३. १९ ॥ विशो ग्रावाणः । श० ३. ९. ३.३॥ विड्वै ग्रावाणः । तां० ६. ६. १ ॥ विड् वै गर्भः । श० १३. २. ९. ६ ॥ तै० ३. ९. ७. ३ ॥ विड्वै शकुन्तिका ( यजु० २३. २२ ) । श० १३. २. ९. ६ ॥ तै० ३. ९. ७. ३ ॥ विड्वै हरिणी । तै० ३. ९. ७. २ ॥ विशो विश्वेदेवाः । श० २. ४. ३. ६ ॥ ३. ९. १. १६ ॥ विशो वै विश्वेदेवाः । श० ५. ५. १. १० ॥ विशो वै पस्त्याः । श० ५. ३. ५. १९ ॥ ५. ४. ४. ५ ॥ विशो वै सूच्यः । श० १३.२.१०.२ ॥ विशो होत्राशंसिनः । ऐ० ६. २१ ॥ गो० उ० ६. ३ ॥ विट् सप्तदशः । तां० १८. १०. ९ ॥ विड् वै सप्तदशः तां० २, ७. ५ ॥ २. १०. ४ ॥ विशः सप्तदशः । ऐ० ८. ४ ॥ वर्षाभिर्ऋतुनादित्याः स्तोमे सप्तदशे स्तुतं वैरूपेण विशौजसा । तै० २.६. १९. १–२ ॥ राष्ट्राणि वै विशः । ऐ० ८. २६ ॥ विट् सुरा । श० १२. ७. ३. ८ ॥ आद्या हीमाः प्रजा विशः । श० ४. २. १. १७ ॥ अन्नं वै विशः । श० ४. ३. ३. १२ ॥ ५. १. ३. ३ ॥ ६. ७. ३. ७ ॥ अन्नं विशः । श० २. १. ३. ८ ॥ अन्नं वै क्षत्रियस्य विट् । श० ३.३.२.८॥ तस्माद्राष्ट्री विशं घातुकः । श० १३. २. ९. ६ ॥ तस्माद्राष्ट्री विशमत्ति । श० १३. २. ९. ८ ॥ दैव्यो वाऽएता विशो यत्पशवः । श० ३. ७. ३. ९ ॥ अपरजना ह वै विशोऽदेवीः । गो० उ० ६. १६ ॥ क्षत्रं वै प्रस्तरो विश इतरं बर्हिः । श० १. ३. ४. १० ॥ तस्माद् ब्रह्म च क्षत्रं विशि प्रतिष्ठिते । श० ११. २. ७. १६ ॥ स्वरिति ( प्रजापतिः ) विशम् ( अजनयत ) । श० २. १. ४. १२ ॥ स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वे देवा मरुत इति । श० १४. ४. २. २४ ॥ पूषा विशां विट्पतिः । तै० २. ५. ७. ४ ॥ तस्याः ( विशः ) राजा गर्भः । तां० २. ७. ५ ॥ अहुतादो वै विशः । श० २. ५. २. २४ ॥ भूमो वै विट् । श० ३. ९. १. १७ ॥ अनिरुक्तेव हि विट् । श० ९. ३. १. १५ ॥

**विशत** प्रवेशं कुरुत ४ । १३ ॥

**विशतात्** विशताम् ८ । ४२ । विशतु तिष्ठतु ३४ । ५० ॥

**विशतु** प्रविशतु १२ । १०५ ॥

**विशन्ति** प्रविशन्ति ३ । ४६ । ४ । प्राप्नुवन्ति ६ । ३६ । ३ ॥

**विशन्तु** आविष्टा भवन्तु १ । ५ । ७ । प्राप्नुवन्तु ४ । ५० । १० ॥

**विशल्यः** विगतानि शल्यानि यस्य सः १६ । १० ॥

विशस्ता विच्छेदकः २५ । ४२ ॥

विशस्व प्रवेशं कुरु १४ । ३ ॥

विशालम् विस्तीर्णम् १४ । ६ । विस्तीर्णं कर्म १५ । ५ ॥

विशिक्षुः सुशिक्षकः २ । १ । १० ॥

विशिखा इव यथा विगतशिखा विविधशिखा वा १७।४८। [विशिखासः] विगतशिखाः संन्यासिनः १६ । ५६ ॥

विशिप्रियाणाम् विविधे धर्म्ये कर्मणि हनुनासिके येषां तेषाम् ( शिप्रे हनुनासिके वा नि० ६ ७ ) ६ । ४ ॥

विशिशिप्रम् विशी शिप्रे शोभने हनुनासिके यस्य तम् ५ । ४५ । ६ ॥

विशौजाः विशा प्रजया सहौजाः पराक्रमो यस्य सः १० । २८ ॥

विश्पतिः विशां प्रजानां पालकः सभापतिः राजा ( अत्र वाच्छन्दसि सर्वे विधयो भवन्तीति नियमाद् व्रश्चभ्रस्जसृजमृजयज० इति षत्वं न भवति ) १ । २६। ७॥

विश्पतिम् सर्वस्य पातारं वा पालयितारं वा। नि० ४. २६ ॥

विश्पत्नीम् प्रजायाः पालिकाम् ३ । २६ । १ ॥

विश्पलाम् विशः प्रजाः पात्यनेन सैन्येन तल्लाति यया ताम् १ । ११२। १० । विशां पालिकां विद्याम् १ । ११७ । ११ । [ विश्पलायै ] विशां प्रजानां पलायै सुखप्रापिकायै नीत्यै १ । ११६ । १५ ॥ [ विश्पलायाः ] प्रजायाः १।११८। ८ ॥

विश्पलावसू विशां पालयितारौ च तौ वासकौ १ । १८२ । १ ॥

विश्यषु विक्षु प्रजासु भवेषु वणिग्जनेषु १८। ४८ ॥

विश्रयमाणः विशेष सेवन करता हुआ ७। ४५ । ३ ॥

विश्रिता विविधैराप्तैः श्रिता सेविता १ । ११७ । १ ।

विश्रिताः विविधप्रकारैः सेवमानाः १ । ५५ । २ ॥

विश्रुतम् यद्विविधं श्रूयते तद्यशः १ । ५२ ११ ॥ [ विश्रुताय ] विशेषेण श्रुता गुणा यस्मिँस्तस्मै ३४ । १६ ॥

विश्रुति विविधा श्रुतयः श्रवणानि तद्वति ८ । ४३ ॥

विश्वः अखिलश्चेतनस्वरूपः १ । ७० । २। सर्वः १ । १२८ । ६ ॥ [विश्वम्] जगत् १। १६ । ८ । सर्वं राज्यम् ४ । १७ । १० ॥

विश्वम् बहुनाम। निघ० ३. १ ॥ सर्वम् । नि० ३. २२ ॥

यद्वै विश्वं सर्वं तत्। श० ३. १.२. ११ ॥ तदन्नं वै विश्वम्प्राणो मित्रम्। जै० उ० ३. ३.६ ॥

विश्वकर्मा विश्वं सम्पूर्णं क्रियाकाण्डं सिध्यति यया सा १ । ४ । विश्वानि सर्वाणि कर्माणि यस्या यस्य वा सा वाक् स विद्वान् वा ५ । ११ । सर्वोत्तमकर्मा सभापतिः ८ । ५४ । अखिलोत्तमक्रियाः

१२।६१। विश्वानि कर्माणि यस्य सः १३।४५। अखिलोत्तमकर्मकर्त्ता राजा १४। ६ विश्वानि सर्वाणि कर्माणि यस्मात्स वायुः १५।१६। विश्वान्यखिलानि कर्माणि यस्य परमेश्वरस्य सः १७।१८। विश्वं सर्वं जगत् क्रियमाणं यस्य सः १७। २६। विश्वानि सर्वाणि शुभानि कर्माणि यस्य सः १७।३२ ॥ [ विश्वकर्माणम् ] विश्वानि सर्वाणि धर्म्याणि कर्माणि यस्य तम् ८।४५। अखिलेषु कर्मसु कुशलम् १७। २३ ॥ [ विश्वकर्मणा ] विश्वानि समग्राणि धर्म्यकर्माणि यस्य पत्युस्तेन १३।१६ ॥ [ विश्वकर्मणे ] अखिलकर्मसाधनाय ८। ४५। अखिलशुभकर्मानुष्ठानाय १२। ४३। विश्वं कर्म्म क्रियमाणं कृतं येन तस्मै १७। ७८। [ विश्वकर्मणः ] विश्वानि सर्वाणि सत्यानि कर्माणि यस्याश्रयेण तस्मात्सूर्यात् ३१। १७। विश्वं सर्वं कर्म क्रियमाणमस्य स विश्वकर्मा तस्य परमेश्वरस्य ३१।१७ ( १३२ भूमि० ) ॥

अथो विश्वकर्मणे। विश्वं वै तेषां कर्म्म कृतं सर्वं जितं भवति ये संवत्सरमासते। श० ४. ६. ४. ५ ॥ ( यजु० १३. ५८ ) वाग्वै विश्वकर्मर्षिर्वाचा हीदꣳसर्वं कृतम्। श० ८. १. २. ९ ॥ ( यजु० १३. १६ ॥ १४. ५, ९ ) प्रजापतिर्वै विश्वकर्मा। श० ७. ४. २. ५ ॥ ८. २. १. १० ॥ ८. २. ३. १३ ॥ संवत्सरो विश्वकर्मा। ऐ० ४. २२ ॥ असौ वै विश्वकर्म्मा योऽसौ ( सूर्यः ) तपति। कौ० ५. ५ ॥ गो० उ० १. २३ ॥ विश्वकर्मा त्वादित्यैरुत्तरतः पातु। श० ३. ५. २. ७ ॥ असौ ( द्यौः ) विश्वकर्मा। तै० ३. २. ३. ७ ॥ तस्य ( इन्द्रस्य ) असौ ( द्यु- ) लोको नाभिजित आसीत्तं ( इन्द्रः ) विश्वकर्म्मा भूत्वाभ्यजयत्। तै० १. २. ३. ३ ॥ इन्द्रो वै वृत्रं हत्वा विश्वकर्माऽभवत्प्रजापतिः प्रजाः सृष्ट्वा विश्वकर्माऽभवत्। ऐ० ४. २२ ॥ विश्वकर्माऽयमग्निः। श० ९.२.२.२ ॥ ९.५.१.४२ ॥ ( यजु० १३. ५५ ॥ १५. १६ ) अयं वै वायुर्विश्वकर्मा योऽयं पवतऽएष हीदꣳसर्वं करोति। श० ८. १. १. ७ ॥ ८. ६. १. १७ ॥ वैश्वकर्मण एककपालः पुरोडाशो भवति। विश्वं वा एतत्कर्म कृतꣳसर्वं जितं देवानामासीत्साकमेधैरीजानानां विजिग्यानानाम्। श० २. ५. ४. १० ॥ ( प्रजापतिः ) वैश्वकर्मणं पुरुषम् ( आलिप्सत )। श० ६. २. १. ५ ॥

**विश्वकाय** विश्वस्यानुकम्पकाय १। ११६। २३। अनुकम्पिताय समग्राय राज्ञे १। ११७। ७ ॥

**विश्वकृष्टिः** विश्वा सर्वाः कृष्टीर्मनुष्यादिकाः प्रजाः १। ५९। ७ ॥ [ विश्वकृष्टयः ] विश्वा कृष्टिर्येभ्यस्ते ३। २६। ५॥ [ विश्वकृष्टिम् ] विश्वे सर्वे कृष्टयो मनुष्या विजयिनो यस्मात्तम् ४। ३८। २ ॥

**विश्वगूर्तः** विश्वं सर्वं भोज्यं वस्तु निगलितं येन सः १। ६१। ६ ॥

**विश्वगूर्त्ती** समग्रोद्यमौ १। १८०। २ ॥

**विश्वचक्षाः** यो विश्वं सर्वं जगच्चष्टे पश्यति सः १७। १८। [ विश्वचक्षसे ] विश्वस्य चक्षुर्दर्शनं यस्मात्तस्मै १। ५०। २ ॥

**विश्वचन्द्राः** विश्वानि चन्द्राणि सुवर्णानि याभ्यस्ताः १। १६५। ८। विश्वानि समग्राणि चन्द्राणि सुवर्णादीनि येषां ते

(अत्र ह्रस्वाच्चन्द्रोत्तरपदे मन्त्र इति सुडागमः) ३ । ३१ । १६ ॥

**विश्वचर्षणिः** विश्वे सर्वे चर्षणयो मनुष्या रद्या यस्य सः (अत्र कृषेरादिश्च चः उ० २ । १०० अनेनानिःप्रत्यय आदेश्च-कारादेशश्च) १ । २७ । ६ । विश्वस्य दर्शकः २ । ३१ । ३ । विश्वप्रकाशकः ५ । ६ । ३ । अखिलविद्याप्रकाशः ५ । २३ । ४ । विश्वे चर्षणयो मननशीला मनुष्या यस्य सः ६ । २ । २ ॥ [विश्वचर्षणं] विश्वस्य सर्वस्य जगतश्चर्षणिर्द्रष्टा तत्संस्बुद्धौ १ । ६ । ३ । समस्त द्रष्टव्यदर्शन ५ । ३८ । १ ॥

विश्वचर्षणिः पश्यतिकर्मा । निघ० ३. ११॥

**विश्वजनस्य** विश्वास्मिन् जगति सर्वस्य जनसमूहस्य ५ । २८ ॥

**विश्वजन्यम्** विश्वान् जनयितुं योग्यम् विश्वसुखजनकं वा ६ । ४७ । २५ ॥ [विश्वजन्या] विश्वानि जन्यानि सुखानि येषु ते ६। ३६।६॥

विश्वजन्यम् सर्वजन्यम् । नि० ११. १० ॥

**विश्वजन्या** या विश्वं जनयन्ति ताः (अत्र भव्यगेयेति कर्त्तरि जन्यशब्दः सुपां सुलुगिति जसः स्थाने आकारादेशः) १ । १६६ । ८ ॥ [विश्वजन्याम्] विश्वं समग्रमपत्यं जायते यस्यास्ताम् ३ । ५७। ६ । विश्वं जन्यं यया ताम् ७ । १० । ४ । या विश्वमखिलं जगज्जनयति प्रकटयति ताम् १७ । ७४ ॥

**विश्वजिते** यो विश्वं जयति तस्मै २ । २१ । १ ॥

विश्वजित् (यज्ञः) (देवाः) विश्वजिता विश्वमजयन् । तां० २२. ८. ४ ॥ विश्वजिता वै प्रजापतिः सर्वाः प्रजा अजनयत्सर्वमुदजयत्तस्माद्विश्वजित । कौ० २५.१३॥एष ह प्रजानां प्रजापतिर्यद्विश्वजित् । गो० पू० ५.१०॥ प्रजापतिर्विश्वजित् । कौ० २५. ११, १२.१५॥ ततो वा इदमिन्द्रो विश्वमजयद्यद्विश्वमजयत्तस्माद्विश्वजित् । तां० १६. ४. ५ ॥ इन्द्रो विश्वजिदिन्द्रो हीद सर्वं विश्वमजयत् । कौ० २४. १ ॥ अथ यद्विश्वजितमुपयन्ति । इन्द्रमेव देवतां यजन्ते । श० १२ १. ३ १५ ॥ सर्वं विश्वजित् । कौ० २५. १४ ॥ सर्वं वै विश्वजित । श० १०. २. ५. १६ ॥ स वा एष विश्वजिद्यः सहस्रसंवत्सरस्य प्रतिमा । गो० पू०५. १० ॥ एकाहो वै विश्वजित् । कौ० २५. ११ ॥ स कृत्स्नो विश्वजिद्योऽतिरात्रः । कौ० २५. १४ ॥ चक्रीवान्वा एष (विश्वजित्) यज्ञः कामाय । तां० १६. १५. ४ ॥

**विश्वजिन्वा** विश्वपोषक (अत्र संहितायामिति दीर्घः) ६ । ६७ । ७ ॥

**विश्वजुवम्** समग्रवेगाम् ४ । ३३ । ८ ॥

**विश्वतश्चक्षुः** विश्वतः सर्वस्मिञ्जगति चक्षुर्दर्शनं यस्य सः १७ । १६ ।

**विश्वतस्पात्** विश्वतः सर्वत्र पाद् गतिर्व्याप्तिर्यस्य सः १७ । १६ ॥

**विश्वतुरा** यद्विश्वं सर्वं तुरति त्वरयति तेन १। ४८ । १६ ॥

**विश्वतूः** विश्वान् शत्रून् तूर्यति हिनास्ति सः ३३ । ६६ ॥

**विश्वतूर्तिः** विश्वस्मिँस्त्वरमाणा २० । ४३ । या विश्वं सर्वं जगत् त्वरति २ । ३ । ८ ॥

**विश्वतोधारम्** विश्वतः सर्वतो धाराः सुशिक्षिता वाचो यस्मिँस्तम् १७ । ६८ ॥

**विश्वतोबाहुः** सर्वतो बाहुर्बलं वीर्यं वा यस्य सः १७ । १९ ॥

**विश्वतोमुखः** विश्वतः सर्वतो मुखमुपदेशनमस्य सः १७।१९॥ [ विश्वतोमुख ] सर्वत्र व्यापकत्वादन्तर्यामितया सर्वोपदेष्टः १ ६७ । ६ । विश्वतः सर्वतो मुखमुत्तममैश्वर्यं यस्य तत्सम्बुद्धौ १ । ६७ । ७ ॥

**विश्वथा** सर्वथा १ । १४१ । ९ । विश्वस्मिन् २ । २४ । ११ । विश्वमिव ५ । ४४ । १ ॥

**विश्वदर्शतः** विश्वैः सर्वैः संप्रेक्षितुं योग्यः १। ४४। १०। यो विश्वस्य दर्शयिता १ । ५०। ४॥ [ विश्वदर्शतम् ] सर्वैर्विद्वद्भिर्द्रष्टव्यं जगदीश्वरम् १ । २५ । १८ । विश्वस्य प्रकाशकम् ५ । ८ ।३ । सर्वविद्याबोधस्य द्रष्टारम् १२ । १११ ॥

**विश्वदानीम्** विश्वं समग्रं दानं यस्यास्ताम् १ । १६४ । ४० । सर्वस्मिन् काले ४ । ५० । ८ । सर्वदा ६ । ५२ । ४ ॥

विश्वदानीम् सर्वदा । नि० ११. ४४ ॥

**विश्वदृष्टः** सर्वैर्दृष्टः १ । १९१ । ६ ॥

**विश्वदेवः** विश्वेषां सर्वेषां देवः प्रकाशकः ६ । ६७। ६॥ [ विश्वदेवाः ] सर्वे विद्वांसः ७ । ३५ । ११ ॥ [ विश्वदेवेभिः ] स्वकीयैः रश्मिभिः ( रश्मयो ह्यस्य विश्वे देवाः । श० ३ । ७ । ३ । ६ ) २ । २२॥ [ विश्वदेवाय ] विश्वस्य प्रकाशाय ४। ५०। ६ ॥

**विश्वदेवनेत्राः** विश्वेषु देवेषु नेत्रं प्रज्ञानं येषां ते ९ । ३६ । [ विश्वदेवनेत्रेभ्यः ] सर्वविद्वत्तुल्यं नेत्रं नीतिर्येषां तेभ्यः ९ । ३५ ॥

**विश्वदेव्यः** विश्वान् समग्रान् देवान् दिव्यगुणानर्हति १ । ११० । १ । विश्वेषु सर्वेषु देवेषु दिव्यगुणेषु साधुः १ । १६२ । ३। विश्वेभ्यो देवेभ्यो हितम् २८ । १४ ॥ [ विश्वदेव्यम् ] विश्वेषु देवेषु पृथिव्यादिषु भवम् १ । १४८ । १ ॥

**विश्वदेव्यावती** विश्वेषु देवेषु विद्वत्सु भवं विज्ञानं प्रशस्तं विद्यते यस्यां सा ( अत्र मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ । अ० ६। ३।१३१ इति दीर्घत्वम् ) ११। ६१। [ विश्वदेव्यावतीः ] विश्वेषु देवेषु विद्वत्सु भवं विज्ञानं प्रशस्तं विद्यते यासां ताः ११ । ६१ ॥

**विश्वदेव्यावते** विश्वानि देव्यानि विद्यन्ते यस्मिँस्तस्मै ३८ । ८ ॥

**विश्वदोहसः** विश्वं सर्वं जगद् गुणैर्दुहन्ति पिपुरति ते, विश्वस्मिन् सुखप्रपूरकाः १ । १३० । ५ ॥

विश्वदोहसम् विश्वं सर्वविज्ञानात् दोग्धि यया ताम् ६ । ४८ । १३ ॥

विश्वधा [ विश्वध ] विश्वैः सर्वैः प्रकारैरिति विश्वध ( अत्र छान्दसो ह्रस्वः ) १।१७४। १०॥ यो विश्वं दधाति सः (अत्र छान्दसो वर्णलोप इति सलोपः ) ७ । २२ । ७ ॥

विश्वधायाः यो विश्वं दधाति ( अत्र विश्वोपपदाद् वाहुलकादसुन् युडागमश्च) १।७३।३॥ या विश्वं सर्वं जगद्विद्यागुणैः सह दधाति सा ( विश्वोपपदे डुधाञ-धातोरसुन्प्रत्ययः वाहुलकाणिणच्च ) १ । ४ । या विश्वं सर्वं गृह्णाति गृहाश्रमं राजव्यवहारं दधाति सा १३ । १८ ॥ [ विश्वधायसम् ] विश्वस्य धारणसमर्थम् २ । १७ । ५ । सर्वव्यवहारधनधर्त्तारम् ५ । ८ । १ । यो विश्वा समग्रा विद्या दधाति तम् ७ । ४ । ५ ।

विश्वधायाः (यजु० १३. १८) (=पृथिवी) अस्याꣳ हीदꣳ सर्वꣳ हितम् । श० ७. ४. २. ७ ॥ पृथिवी विश्वधायाः । तै० ३. २. ३ २ ॥

विश्वधेनाः विश्वाः सर्वा धेना वाचो येषां ते ४ । १६ । २ ॥

विश्वपिशः विश्वस्यावयवभूताः ७ । ५७ । ३ ॥

विश्वपेशसम् विश्वानि सर्वाणि पेशांसि रूपाणि यस्यां ताम् १ । ६१ । १६ ॥ [विश्वपेशसा] विश्वानि सर्वाणि पेशांसि रूपाणि यस्मात्तेन १ । ४८ । १६ । सर्वस्वरूपेण ४।४८ । ३ ॥

विश्वप्सन्या विश्वं सर्वं भोग्यं वस्तु प्सायते भक्ष्यते यया १२ । १० । विश्वान् सर्वान्भोगान् यया प्साति तया १२ । ४१ ॥

विश्वप्सु विविधरूपम् ६ । ३५ । ३ ॥

विश्वप्स्न्याय विश्वस्य पालनाय २ । १३ । २ ॥ [ विश्वप्स्न्यस्य ] विश्वेषु समग्रेषु स्तुषु स्वरूपेषु भवस्य ७ । ४२ । ६ ॥

विश्वभरः यो विश्वं विभर्ति सः ११ । ३२ ॥

विश्वभानुषु विश्वस्मिन् भानुषु सूर्येष्विव प्रकाशकेषु ४ । १ । ३ ॥

विश्वभृतः ये विश्वं विभ्रति ते १० । ४ ॥

विश्वभेषजः सम्पूर्ण ओषधि रूप २० । ३४॥

विश्वभेषजीः विश्वाः सर्वा भेषज्य ओषध्यो यासु ताः ( अत्र केवलमामक०। अ० ४। १। ३० अनेन भेषजशब्दान्ङीप्प्रत्ययः ) १ । २३ । २० ॥

विश्वभोजाः यो विश्वं भुनक्ति पालयति सः ५ । ४१ । ४ ॥

विश्वमिन्वः विश्वं मिनोति व्याप्नोति यः सः २।४०।६॥ [ विश्वमिन्वम् ] यो विश्वं सर्वं विज्ञानमिन्वति व्याप्नोति तत् (अत्र विभक्त्यलुक्) १।६१।४॥ [विश्वमिन्वेभिः] सर्वं जगद्व्यवहारं प्रापयद्भिः ५ । ६० । ८ ॥ [ विश्वमिन्व ] सर्वं जगन्मिन्वं व्याप्तं

येन तत्सम्बुद्धौ ३ । २० । ३ । यो विश्वं मिनोति तत्सम्बुद्धौ ७ । २८ । १ ॥

**विश्वमिन्वा** या विश्वं सर्वं जगन्मिनोति ५ । ८० । २ ॥ [ विश्वमिन्वे ] विश्वतर्पके १ । ७६ । २ । विश्वव्यापिके ३ । ३८ । ८ ॥ [ विश्वमिन्वाः ] विश्वव्यवहारव्यापिन्यः २६ । ३० ॥

विश्वमिन्वाः विश्वमाभिरेति । नि० ८. १० ॥

**विश्वयत्** यो विश्वं करोति सः ७ । ५० । १ ॥

**विश्वरूपः** विश्वानि सर्वाणि रूपाणि यस्य सः १ । १६२ । २ । विश्वानि रूपाणि यस्मात्सः ३ । ३८ । ४ । विश्वमखिलं रूपं यस्मिन् यस्माद्वा सः ३ । ५६ । ३ । विविधस्वरूपः ६ । ४१ । ३ ॥ [ विश्वरूपम् ] विश्वस्य रूपं यस्मिन्परमात्मनि वा विश्वः सर्वो रूपगुणो यस्य तम् १ । १३ । १० । विश्वानि बहूनि रूपाणि यस्मिन्प्रकाशे तम् १ । ३५ । ४ । विविधस्वरूपम् २ । ११ । १६ । विचित्रस्वरूपम् २ । ३३ । १० । विश्वानि कर्माणि वस्तूनि वा रूपयन्तम् ३ । ६२ । ६ ॥

विश्वरूपः सर्वरूपः । नि० १०. ३४ ॥

त्वष्टुर्ह वै पुत्रः । त्रिशीर्षा षडक्ष आस तस्य त्रीण्येव मुखान्यासुस्तद्यदेवंरूप आस तस्माद्विश्वरूपो नाम । श० ५. ५. ४. २ ॥ तस्य ( विश्वरूपस्य ) सोमपानमेवैकं मुखमास । सुरापाणमेकमन्यस्माऽअशनायैकं तमिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद । श० १. ६. ३. २ ॥ स ( इन्द्रः ) यत्र त्रिशीर्षाणं त्वाष्ट्रं विश्वरूपं जघान । श० १. २. ३. २ ॥

**विश्वरूपा** विविध सुन्दर रूप को धारण करने हारी १४ । २।३ । (१७० विधिः)॥ [ विश्वरूपाम् ] विश्वानि सर्वाणि रूपाणि यस्यां पृथिव्याम् १।१६१।६। समग्रशास्त्रस्वरूपविदम् ८ । ३३ । ८ ॥

**विश्वरूपी** विश्वं सर्वं रूपं यस्याः सा ( अत्र जातेरस्त्रीविषयादयोपधात् अ० । ४।१ । ६३ इति ङीप्प्रत्ययः ) ३ । २२ ॥

विश्वरूपी ( = कामधेनुः ) इयं ( पृथिवी ) वै देव्यदितिर्विश्वरूपी ( विश्वरूपा धेनुः कामदुघा मे अस्तु अथर्व० ४. ३४. ८ ॥ विश्वरूपा धेनुः कामदुघाऽस्येका । अथर्व० ९. ५. १० ॥ पश्चिमा वारुणी दिक् च धार्यते वै सुभद्रया । महानुभावया नित्यं मातले विश्वरूपया ॥ सर्वकामदुघा नाम धेनुर्धारयते दिशम् । उत्तरां मातले धर्म्यां तथैलविलसंज्ञिताम् ॥ इति महाभारते उद्योगपर्वणि १०२. ९–१० ॥ अथर्ववेदे १२. १. ६१ पृथिवीसूक्ते—त्वमस्यावपनी जनानामदितिः कामदुघा पप्रथाना... ...अत्र पृथिवी = कामदुघा ) । तै० १. ७. ६. ७ ॥

**विश्वरूप्यम्** विश्वेष्वखिलेषु रूपेषु भवम् १ । १६४ । ९ ॥

**विश्ववारः** यो विश्वं वृणोति सः २७ । १३॥ [ विश्ववारम् ] यो विश्वं सर्वं सुखं करोति तम् ६ । ३७ । १ । यो विश्वं सर्वमुत्तमं व्यवहारं वृणोति तम् ६ । ४६ । ४ । विश्वैः सर्वैर्वरणीयम् ७ । ७ । ५ ॥ [ विश्ववारस्य ] समग्रं सुखं स्वीकृतं यस्मात्तस्य ३ । ३६ ।१०। समग्रस्वीकरणीयस्य ५ ।४४ ।११ । विश्वे सर्वे वारा स्वीकारा यस्मिँस्तस्य ६ । २३। १०॥ [ विश्ववार ] विश्वान् सर्वानानन्दान्

वृणोति तत्सम्बुद्धौ ७ । ७ ॥

**विश्ववारम्** येन विश्वं सर्वं वृणोति तत् १ । ४८ । १३ ॥ [ विश्ववारे ] सर्वसुखवरितारौ ७ । ७ । ३ ॥ [ विश्ववाराणि ] विश्वैः सर्वैः वरणीयानि ६ । ५ । १॥

**विश्ववारा** विश्वस्मिन्वारो वरणं यस्याः सा ३ । ४ । ३ । या विश्वं वृणोति सा ५ । २८ । १ । विश्वैः सर्वैर्मनुष्यैर्वरणीया ५ । ८० । ३॥ [ विश्ववाराः ] याः सर्वं जगद् वृणवन्ति ताः १ । १२३ । १२ [ विश्ववाराभिः] सर्वैः स्वीकरणीयाभिर्गतिभिः ६ ।२२ ।११ ॥ [ विश्ववारायाः ] अर्थात् इस घर के द्वार चारों ओर के वायु को स्वीकार करने वाले हों ३ । ३ । १ ( २०२ विधिः) [ विश्ववारे ] या विश्वं सर्वं भद्रं वृणोति तत्सम्बुद्धौ १ । ११३ । १९ ।सर्वतो वरणीये ३ । ६१ । १ ॥

**विश्वविद्** विश्वं सर्वं सुखं विन्दति याभ्यां ते ६।७०। ६॥ [ विश्वविदम् ] यो विश्वानि सर्वाणि शास्त्राणि वेत्ति तम् ३ ।०१९ । १ । यः समग्रं विन्दति तम् ३ । २९ । ७। यो विश्वं वेत्ति तम् ५।४।३। विश्वे विदन्ति ताम् १ । १६४ । १० ॥

**विश्ववेदाः** विश्वस्य वेदो विज्ञानं, विश्वेषु सर्वेषु पदार्थेषु वेदः स्मरणं वा यस्य सः १ । ८९ । ६ । यो विश्वं विज्ञानं वेत्ति सः १ । १४७। ३। यो विश्वं धनं विन्दति सः ३ । २५ । १ । यथा सूत्रात्मा पवनस्तथा ५ । ३१। विश्वं सर्वमौषधं विदितं येन सः १० । ६ । विश्वं सर्वं जगद् वेदो धनं यस्य सः २५ । १९ ॥ [ विश्ववेदसः] ये विश्वानि सर्वाणि कर्माणि वेदयन्ते ते १ । ६४ । ८ । विश्वानि सर्वाणि वस्तूनि विदन्ति येभ्यस्ते १ । ६४ । १० । यैर्विश्वं विन्दन्ति ते ३ । २६ । ४। सकलविद्यावेत्तारः ६ । ८॥ [ विश्ववेदसम् ] विश्वं सर्वं सुखं वेदयति प्रापयति स भौतिकोऽग्निः ( अत्र विदिभुजिभ्यां विश्वे । उ० ४ । २४३ । अनेनासिःप्रत्ययः ) ३ । ३८ । विश्वानि सर्वाणि सुखानि विन्दति यस्मात्तम् १ । ४४ । ७ । विश्वस्मिन् विद्यमानम् ४ । ८ । १ । विश्वानि सर्वाणि शिल्पादिसाधनानि विन्दन्ति यस्मात्तं सर्वप्रजासमाचारज्ञं वा १ । ३६ । ३ ॥

**विश्वव्यचाः** यथा विश्वस्मिन् व्यचो व्याप्तिर्यस्यास्ति तथा ५ । ३३ । विश्वं व्यचति प्रकाशेनाभिव्याप्य प्रकटयति सः १३ । ५६ । विश्वं व्यचति व्याप्नोति स विद्युद्रूपोऽग्निः १५ । १७ विश्वस्मिन् सर्वस्मिन् जगति व्यचो व्याप्तिर्यस्य सः १८ । ४१ ॥ ( यजु० १३. ५६ ॥ १५. १७ ) असौ वाऽआदित्यो विश्वव्यचा यदा ह्येवैष उदेत्यथेदꣳसर्वं व्यचो भवति । श० ८. १. २. १ ॥ ८. ६. १. १८ ॥ ( यजु० १८. ४१ ॥ वातः ॥ ) एष ( वातः ) हीदꣳ सर्वं व्यचः करोति । श० ९. ४. १. १० ॥ अन्तरिक्षं विश्वव्यचाः । तै० ३. २. ३. ७ ॥

**विश्वशम्भूः** विश्वं सर्वं शं सुखं भावयति ८ । ४५ ॥ [विश्वशम्भुवः] या विश्वस्मै

शं सुखं भावयन्ति ताः ४। ७॥

विश्वशर्धसौ समग्रबलयुक्तौ ५। ३४। ८॥

विश्वशुचे यो विश्वं सर्वं जगच्छोचयति तस्मै ७। १३। १॥

विश्वश्रुष्टिः विश्वाः श्रुष्टयस्त्वरिता गतयो यस्य सः ( अत्र श्रुधातोर्बाहुलकादौणादिकः क्तिन्प्रत्ययः ) १। १२८। १॥

विश्वसहम् सर्वसहम् ३। ४७। ५। यो विश्वानि सर्वाणि शत्रुसैन्यानि सहते ६। ४४। ४॥

विश्वसामा विश्वं सर्वं साम सन्निधौ समीपे यस्य सः १८। ३६ ॥ [ विश्वसामन् ] विश्वानि सामानि यस्य तत्सम्बुद्धौ ५। २२। १॥

विश्वसुविदः विश्वानि सर्वाणि सुष्ठुतया विदन्ति याभ्यस्ताः १। ४८। २॥

विश्वसौभगः विश्वे सुभगाः शोभनैश्वर्या भोगा येन सः १। १५७। ३॥ [ विश्वसौभग ] विश्वेषां सर्वेषां सुभगानां श्रेष्ठाणामैश्वर्याणां भावो यस्य तत्सम्बुद्धौ १। ४२। ६॥

विश्वह [ विश्वहा, विश्वाहा ] विश्वहा विश्वेष्वहस्सु ( अत्र छान्दसो वर्णलोपो वेत्यलोपः। सुपां सुलुगिति विभक्तेर्लुक् ) २। १२। १५। विश्वं हन्ति जानाति प्राप्नोति वा सः २। २४। १५। बहूनि च तान्यहानि च ( अत्र शेश्छन्दसि बहुलमिति लुक्। विश्वमिति बहुनामसु पठितम्। निघ० ३। १) ८।५। विश्वान् सर्वान् हन्ति सः १। १०२। ११॥

विश्वाची या विश्वं सर्वं जगदञ्चति व्याप्नोति सा १५। १८॥ [ विश्वाचीः ] या विश्वमञ्चन्ति प्राप्नुवन्ति ता द्युतीः १७। ५६॥

( अप्सराः = वेदिः। यजु० १७. ५९ ) विश्वाचीरभिचष्टे घृताचीरिति स्रुचश्चैतद्वेदीश्चाह। श० ९. २. ३. १७॥ ( यजु० १५. १८) वेदिरेव विश्वाची। श० ८. ६. १. १९॥

विश्वानरः यो विश्वानि सर्वाणि भूतानि नयति सः १। १८६। १॥ [ विश्वानराय ] विश्वे नरा नायका यस्मात्तस्मै ( अत्र संहितायामिति दीर्घः ) ७३। २३॥

विश्वानरः कस्माद्विश्वान्नरान्नयति। विश्व एनं नरा नयन्तीति वा। अपि वा विश्वानर एव स्यात् प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरः। नि० ७. १२॥

विश्वापुष्पम् सर्वपुष्टिप्रदम् १। १६२। २२॥

विश्वाप्सुम् विश्वं समग्रं रूपं गुणो यस्य तम् १। १४८। १॥

विश्वाभुवे यो विश्वे भवते प्राप्नोति विश्वाभूर्यस्य वा विश्वं भवति यस्मादिति वा तस्मै ( अत्र संहितायामिति दीर्घः ) २३। २३॥

विश्वामित्रः सर्वेषां सुहृत् ३। ५३। ६। विश्वं मित्रं येन भवति सः १३। ५७॥

विश्वामित्रः सर्वमित्रः। नि० २. २४॥
विश्वस्य ह वै मित्रं विश्वामित्र आस विश्वं हास

मित्रं भवति य एवं वेद । ऐ० ६. २० ॥ ( यजु० १३. ५७ ) श्रोत्रं वै विश्वामित्र ऋषिर्यदेनेन सर्वतः शृणोत्यथो यदस्मै सर्वतो मित्रं भवति तस्माच्छ्रोत्रं विश्वामित्र ऋषिः । श० ८. १. २. ६ ॥ तदन्नं वै विश्वम्प्राणो मित्रम् । जै० उ० ३ ३. ६ ॥ वाग्वै विश्वामित्रः । कौ० १०. ५ ॥ १५. १ ॥ २९. ३ ॥ जन्हुवृचीवन्तो (? = 'जह्नोः पुत्रा ऋचीवन्नामाकाः' इति सायणः ) राष्ट्र भाहिंसन्त स विश्वामित्रो जाह्नवो राजैतम् ( चतूरात्रम् ) अपश्यत् स राष्ट्रमभवदराष्ट्रमितरे । तां० २१. १२. २ ॥

**विश्वायु** विश्वं सर्वमायुर्यस्मात्तत १ । ५७ । १ । सम्पूर्णमायुष्करम् ५ । ५३ । १३ । सर्वं जीवनम् ६ । २० । ५ ॥

**विश्वायुः** पूर्णमायुर्यस्यां सा १ ४। विश्वं पूर्णमायुर्यस्मात् सः १।२२॥ विश्वं शतवार्षिकमधिकं वाऽऽयुर्यस्मात्तत् १।६।७ विश्वं सर्वमायुर्यस्माद् यस्य वा १ । ६८ । ३ । अखिलं जीवनं यस्य सः १। ७३ । ४ । पूर्णायुः ३ । ३१ । १८ [ विश्वायुम् ] यो विश्वं सर्वं वोधयति तम् १ । १२८ । ८ । प्राप्तसमग्रशुभगुणम् १ । १२६ । ४ ॥

इयं ( पृथिवी ) वै विश्वायुः । तै० ३ २. ३. ७ ॥

**विश्वायुपोषसम्** अखिलायुःपुष्टिकारकम् १ । ७६ । ६ । समग्रायुःपुष्टिकराम् ६ । ५६ । ६ ॥

**विश्वावसुः** विश्वं वासयति यः सः २ । ३ ॥

**विश्वासाहम्** विश्वान् सर्वान् सहते तम् ( अत्र विश्वपूर्वात् सहधातोः छन्दसि सहः । अ० ३ । १ । ६३ इति शिवः । अन्येषामपीतीति दीर्घश्च ) ७ । ३६ ॥

**विश्व्या** विश्वस्मिन् भवा २ । ४२ । १ ॥

विश्व्या सर्वतः । नि० ९. ४ ॥

**विषक्ताम्** विविधैः पदार्थैर्युक्ताम् १ । ११७ । २० ॥

**विषम्** व्याप्नोत्यङ्गानि यत्तत् १ । १६१ । ११ । प्राणहरं विषम् १ । १६१ । १४ ॥ उदकम् ६।६१।:॥ [ विषेण ] विपर्ययकरेण निजवज्रेन १ । ११७ । १६ ॥

विषमित्युदकनाम । विष्णातेर्विपूर्वस्य स्नातेः शुद्ध्यर्थस्य, विपूर्वस्य वा सचतेः । नि० १२. २६ ॥

यवमात्रं वै विषस्य न हिनस्ति । गो० उ० १. ३ ॥

**विषमेभ्यः** विकटदेशेभ्यः ३० । १६ ॥

**विषह्य** विशेषेण सोढ्वा ७ । २१ । ७॥

**विषाणम्** प्रविष्टम् ५ । ४४ । ११ ॥

**विषाणिनः** विषाणमिव तीक्ष्णा हस्ते नखा येषां ते ७ । १८ । ७ ॥

**विषितः** व्याप्तः ६ । १२ । ५ ॥ [ विषितम् ] बन्धे हुए को ५ । ८३ । ७ ॥ [ विषिते ] विद्याशुभगुणकर्मव्याप्ते ३।३३। १ ॥

**विषितस्तुका** विविधतया सिता बद्धा स्तुका स्तुतिर्यया सा १ । १६७ । ५ ॥

**विषुणः** व्याप्तविद्यस्य ५ । ३४ । ६॥ [ विषुणम् ] यो विष्वग्गच्छति तम् ३ । ५४ ।

८ ॥ [ विषुणस्य ] विषमस्य ४ । ६ । ६। शरीरे व्याप्तस्य ७ । २१ । ५ ॥

विषुणक् वेविषत्यधर्मेण ये ते विषवस्तान् नाशयति सः ( अत्रान्तर्गतो णयर्थः ) १। ३३ । ४ ॥

विषुणस्य विषमस्य । नि० ४. १९ ॥

विषुरूपः प्राप्तविद्यः ५ । १५ । ४ ॥ विषूणि व्याप्तानि रूपाणि येन सः ८ । ३० ॥ [ विषुरूपे ] विरुद्धस्वरूपे १ । १८६ । ४ ॥ [ विषुरूपम् ] व्यापकं विविधरूपं वा ६ । २० । व्याप्तस्वरूपम् ७ । २७ । ३ ॥

विषुरूपे विषमरूपे । नि० १२. १७ ॥

विषुवता व्याप्तिमता १ । १६४ । ४३ ॥ [ विषुवतः ] प्रशस्ता विषुर्व्याप्तिर्यस्य तस्य १ । ८४ । १० ॥

विषूचिका या विविधानर्थान् सूचयति सा १६ । १० ॥

विषूवी या विषून् व्याप्तानञ्चति सा ३। ५५। १५ । [ विषूचीः ] विविधा गतीः १ । १६४ । ३१ । व्याप्नुवतीः ६ । २५ । २ । [ विषूचीम् ] विषूच्यादिरोगम् ६। ७४। २ ॥

विषूचीना विष्वगञ्चितारौ १ । १६४ । ३८ ॥ [ विषूचीनान् ] विरुद्धमाचरतः १७।६४।

विषूवृतम् विषुणा व्यापकेन गमनेन वृतम् २। ४० । ३ ॥

विष्कभिते विशेषेण धृते दृढीकृते ३४ । ४५॥

विष्कम्भनन्तः ये विशेषेण स्कम्भनन्ति धरन्ति ते ३ । ३१ । २२ ॥

विष्टपम् व्याप्तिम् ( अत्र विश्धातोर्बाहुलका- दौणादिकस्तपःप्रत्ययः ) १४ । २३ । विष्टान् प्रविष्टान् पाति येन तत् १८ । ५१। [ विष्टपाय ] विशन्ति यत्र तस्मै मार्गाय ३० । १२ ॥ [ विष्टपि ] अन्तरिक्षे १ । ४६ । ३ ॥

विष्टम् व्याप्तम् ३ । ३० । ६ ॥

विष्टम्भः विशो वैश्यस्य विष्टम्भो रक्षणं येन १४। ६। [ विष्टम्भेन ] विशेषेण स्तभ्नोति शरीरं येन तेन १५ । ६ ॥

( यजु० १४. ९ ) प्रजापतिर्वै विष्टम्भः । श० ८. २. ३. १२ ॥

विष्टम्भनीम् आधारभूताम् १४ । ५ ॥

विष्टारः प्रसारः ५ । ५२ । १० ॥

विष्टारपङ्क्तिः सर्वा दिशः १५ । ४ ॥

( यजु० १५. ४ ) दिशो वै विष्टारपङ्क्तिश्छन्दः । श० ८. ५. २. ४ ॥

विष्टी व्यापनशीलावश्विनौ ( अत्र क्तिच् क्तौ च संज्ञायाम् । अ० ३ । ३ । १७४ । अनेन क्तिच्प्रत्ययः ) १ । २० । ४ ॥ [ विष्टिभिः ] व्याप्तिभिः १ । ६२ । ३ ॥

विष्टीमिनम् विशिष्टा बहवः ष्टीमा आर्द्री- भूता पदार्था विद्यन्ते यस्मिँस्तम् २३ । २९ ॥

विष्टुतीः विविधाश्च ताः स्तुतयश्च १६।

२८ ॥

**विष्ट्वी** व्यापनशीलानि १ । २१० । ४ । कर्म ३ । ६० । ३ ॥

विष्ट्वी कर्मनाम । निघ० २.१॥ कृत्वा । नि० ११. १६ ॥

**विष्ठाः** ये विविधेषु स्थानेषु तिष्ठन्ति ताः १३। ३ । विशेषेण तिष्ठति यज्ञो यासु ताः २३। ५७ ॥

**विष्ठितः** विशेषेण स्थितः । २ । ३८ । ६ । [ विष्ठितम् ] व्याप्तम् २९ । ५५ ॥

विष्ठितम् स्थावरम् । नि० ९. १३ ॥

**विष्णापूम्** विष्णान् विद्याव्यापिनो विदुष आप्नोति बोधस्तम् ( अत्र विष्लृधातोर्नक् तत आप्लृधातोरु, वाच्छन्दसीति पूर्वसवर्णप्रतिषेधाद्यण् ) १ । १६० । २३ । विष्णानि कृषिव्याप्तानि कर्माण्याप्नोति येन पुरुषेण तम् १ । ११७ । ७ ॥

**विष्णुः** वेवेष्टि व्याप्नोति चराचरं जगत् स परमेश्वरः ( विषेः किच्च । उ० ३ । ३८ अनेन विष्लृधातोः नुःप्रत्ययः किच्च ) १ । २२ । १६ । विश्वान्तर्यामी १ । २२ । १८ । सर्वविद्याङ्गव्यापनशीलः १ । ६१ । ७ । शिल्पविद्याव्यापनशीलो मनुष्यः १ । ८५ । ७ । सर्वगुणेषु व्यापनशीलः १ । ९० । ६ । स्वदीप्त्या व्यापकः सूर्यः १ । १५६ । ४ । व्यापको विद्युदग्निः ६ । ५० । १२ । यो वेवेष्टि व्याप्नोत्यन्तरिक्षस्थलवाय्वादिपदार्थान् स यज्ञः ( यज्ञो वै विष्णुः । श० । १ । १ । २ । १३ ) २ । २५ । हिरण्यगर्भः, व्याप्तो धनञ्जयः ८ । ५५ । परमेश्वर इव न्यायकारी ९ । ३१ । सकलविद्यायोगाङ्गव्यापी योगिराजः ११ । ६० ॥ [ विष्णुम् ] व्यापकं वायुम् ७ । ३६ । ५ ॥ [ विष्णुना ] व्यापकेनाकाशेन ५ । ५१ । ९ ॥ [ विष्णो ] सर्वव्यापिन् जगदीश्वर व्यापनशीलः प्राणो वा ५ । १६ ॥

विष्णुः यज्ञनाम । निघ० ३. १७ ॥ यद् विषितो भवति तद्विष्णुर्भवति, विष्णुर्विशतेर्वा, व्यश्नोतेर्वा । नि० १२. १८ ॥ शिपिविष्टो विष्णुः । ५. ६॥ तद्यदेवेदं क्रीतो विशतीव तदु हास्य ( सोमस्य ) वैष्णवं रूपम् । कौ० ८.२॥ यो वै विष्णुः स यज्ञः । श० ५. २. ३. ६ ॥ विष्णुर्यज्ञः । गो० उ० १. १२ ॥ तै० ३ ३. ७. ६ ॥ विष्णुर्वै यज्ञः । ऐ० १. १५ ॥ 'पवित्रे स्थो वैष्णव्यौ' ( यजु० १. १२) इति यज्ञो वै विष्णुर्यज्ञिये स्थ इत्येवैतदाह । श० १. १. ३. १॥ ( यजु० २२. २० ) यज्ञो वै विष्णुः । श० १३. १. ८. ८ ॥ यज्ञो वै विष्णुः । कौ० ४. २ ॥ १८. ८, १४ ॥ श० १. १. २. १३ ॥ ३. २. १. ३८ ॥ गो० उ० ४. ६ ॥ तै० १. २. ५. १ ॥ यज्ञो वै विष्णुः शिपिविष्टः । तां० ९. ७. १०॥ यज्ञो वै वैष्णुवारुणः । कौ० १६.८ ॥ यज्ञो विष्णुः । श० १. ९. ३. ९ ॥ तां० १३. ३. २ ॥ ९. ६. १० ॥ गो० उ० ६. ७ ॥ विष्णवे हि गृह्णाति यो यज्ञाय ( हविः ) गृह्णाति । श० ३. ४. १. १४ ॥ अथेमं विष्णुं यज्ञं त्रेधा व्यभजन्त । वसवः प्रातःसवनꣳरुद्रा माध्यन्दिनꣳसवनमादित्यास्तृतीयसवनम् । श० १४.१.१.१५॥ ( विष्णुः ) (=आदित्यः) स यः स विष्णुर्यज्ञः स। स यः स यज्ञोऽसौ स आदित्यः । श० १४. १. १. ६ ॥ स उ एव मखः स विष्णुः । श० १४. १. १. १३ ॥ ( प्रजापतिः ) यजुर्भ्योऽधि विष्णुम् ( असृजत )। तद्विष्णुं यशः आच्छेत् । तम् (विष्णुम् ) आलभत । विष्णोरध्यो-

षधीरसृजत । तै० २. ३. २. ४ ॥ यजूंषि विष्णुः ( स्वभागरूपेणाभजत ) । श० ४. ६. ७. ३ ॥ यो वै विष्णुः सोमः सः । श० ३. ३. ४. २१ ॥ ३. ६. ३. १९ ॥ जुष्टा विष्णव इति । जुष्टा सोमायेत्येवैतदाह ( विष्णुः = सोमः ) । श० ३. २. ४. १२ ॥ यत्तदन्नमेष स विष्णुर्देवता । श० ७. ५. १. २१ ॥ वीर्यं विष्णुः । तै० १. ७. २. २ ॥ प्रादेशमात्रो वै गर्भो विष्णुः । श० ६. ५. २. ८ ॥ ६. ६. २. १२ ॥ ७. ५. १. १४ ॥ अग्निर्वाऽअहः सोमो रात्रिरथ यदन्तरेण ( अह्नो रात्रेश्च योऽन्तरालः कालः ) तद्विष्णुः । श० ३. ४. ४. १५ ॥ यदह दीक्षते तद्विष्णुर्भवति । श० ३. २. १. १७ ॥ विष्णुः सर्वा देवताः । ऐ० १. १ ॥ तस्मादाहुर्विष्णुर्देवानाᳪश्रेष्ठ इति । श० १४. १. १. ५ ॥ अग्निर्वै देवानामवमो विष्णुः परमः । ऐ० १. १ ॥ अन्तो विष्णुर्देवतानाम् । तां० २१.४.६॥ अग्निर्वै देवानामवरार्ध्यो विष्णुः परार्ध्यः । कौ० ७. १ ॥ अग्निर्वै यज्ञस्यावरार्ध्यो विष्णुः परार्ध्यः । श० ५. २. ३. ६ ॥ एते वै यज्ञस्यान्त्ये तन्वौ यदग्निश्च विष्णुश्च । ऐ० १. १ ॥ अग्नाविष्णू वै देवानामन्तभाजौ । कौ० १६. ८ ॥ आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति । श० ३. १. ३. १ ॥ ५. २. ३. ६ ॥ यज्ञो विष्णुः स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्रथमेन पदेन पस्पाराथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेन । श० १ ९. ३. ९ ॥ यज्ञो वै विष्णुः स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्रथमेन पदेन पस्पाराथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैताम्वेवैष एतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते । श० १. १.२. १३॥ इमे वै लोका विष्णोर्विक्रमणं विष्णोर्विक्रान्तं विष्णोः क्रान्तम् । श०५.४. २.६॥ स (विष्णुः) इमाँल्लोकान्विचक्रमेऽथो वेदानथो वाचम् । ऐ० ६. १५ ॥ वामनो ह विष्णुरास ( विष्णुपुराणे ३. १. ४२-४३:-मन्वन्तरे तु संप्राप्ते तथा वैवस्वते द्विज । वामनः कश्यपाद्विष्णुरदित्यां संबभूव ह ॥ त्रिभिः क्रमैरिमाँल्लोकाञ्जित्वा येन महात्मना । पुरन्दराय त्रैलोक्यं दत्तं निहतकंटकम् ॥ ) । श० १. २. ५. ५ ॥ स हि वैष्णवो यद्वामनः ( गौः ) । श० ५. २. ५. ४ ॥ वैष्णवं वामनम् ( पशुम् ) आलभन्ते । तै० १. २. ५.१ ॥ वैष्णवो वामनः ( पशुः ) । श० १३. २. २.९ ॥ चक्रपाणये ( विष्णवे ) स्वाहा । ष० ५. १० ॥ विष्णुर्वै देवानां द्वारपः । ऐ० १. ३० ॥ विष्णवाशानां पते । तै० ३. ११. ४. १॥ तस्य ( विष्णोः ) उपपरासृत्य । ( वम्र्यः ) ज्यामपिजक्षुस्तस्यां छिन्नायां धनुरार्त्न्यौ विष्फुरन्त्यौ विष्णोः शिरः प्रचिच्छिदतुः ( विष्णोर्हयग्रीवावतारकथाः-देवीभागावते १. ५. १९, २५, २६, ३०, ४२ ॥ १. ६. ८—९ ॥ हयशिरा विष्णुः—नीलकंठीयटीकायुते महाभारते शान्तिपर्वणि, ३४७. ४८ ॥ ) । श० १४. १. १. ९ ॥ तस्य ( मखस्य = विष्णोः ) धनुरार्त्निरूर्द्धा पतित्वा शिरोऽछिनत्स प्रवर्ग्योऽभवत् । तां० ७. ५. ६ ॥ ( दध्यङ्ङाथर्वणः ) तौ ( अश्विनौ) ह (छिन्नस्य विष्णुशिरसः पुनःसन्धानविद्याऽध्यापनार्थम्) उपनिन्ये तौ यदोपनिन्येऽथास्य (दधीच आथर्वणस्य ) शिरश्छित्वान्यत्रापनिदधतुरथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुः । श० १४. १.१. २४ ॥ विष्णुर्वै यज्ञस्य दुरिष्टं पाति । ऐ० ३. ३८॥ ७. ५ ॥ पंक्तिर्विष्णोः पत्नी । गो० उ० २. ९ ॥ शृण्वन्ति श्रोणाममृतस्य गोपाम् ।......महीं देवीं विष्णुपत्नीमजूर्याम् । तै० ३. १.२. ५-६ ॥ विष्णोः श्रोणा (=श्रवणनक्षत्रमिति सायणः ) । तै० १. ५. १. ४ ॥ यच्छ्रोत्रं स विष्णुः । गो० उ० ४. ११॥ वैष्णवाः पुरुषाः । श० ५. २. ५. २ ॥ वैष्णवो हि यूपः । श० ३. ६. ४. १॥ वैष्णवस्त्रिकपालः ( पुरोडाशः ) । तां० २१. १०. २३ ॥ अथ यद्वैष्णवः । त्रिकपालो वा पुरोडाशो भवति चरुर्वा । श० ५. २. ५. ४ ॥ तान् ( पशून् ) विष्णुरेकविंशेन स्तोमेनाप्नोत् । तै० २. ७. १४. २ ॥ उपसद्देवतारूपाया इषोः ) विष्णुस्तेजनम् । ऐ० १.२५॥ तथैवैतद्यजमानो विष्णुर्भूत्वेमांल्लोकान् क्रमते । स यः स विष्णुर्यज्ञः सः । श० ६. ७. २. १०—११ ॥

तद्यदेनेन (यज्ञेन विष्णुना) इमाꣳसर्वाꣳ (पृथिवीं) समविन्दन्त तस्माद्वेदिर्नाम्। श० १. २. ५. ७॥ यन्न्वेवात्र विष्णुमन्वविन्दँस्तस्माद्वेदिर्नाम। श० १. २. ५. १०॥ वैष्णवꣳहि हविर्धानम्। श० ३. ५. ३. १५॥ या सा द्वितीया (ओंकारस्य) मात्रा विष्णुदेवत्या कृष्णा वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्वैष्णवं पदम्। गो० पू० १. २५॥

**विष्णुपत्न्यै** विष्णुना व्यापकेन पालितायै २६। ६०॥

**विष्पट्** यो विषो व्याप्नुवतः पतति प्राप्नोति सः १। १८९। ६॥

**विष्पर्धाः** विशेषेण यः स्पर्ध्यते सः १५। ५॥

[**विष्पर्धसः**] परस्परं विशेषतः स्पर्धमानाः १। १७३। १०। ये विशेषेण स्पर्धन्ते तान् ५। ८७। ४॥

**विष्पुलिङ्गकाः** ह्रस्वाः पक्षिणः १। १९१। १२॥

**विष्फुरन्ती** विशेषेण चालयन्त्यौ २९। ४१। कम्पयन्त्यौ ६। ७५। ४॥

विष्फुरन्ती विघ्नन्त्यौ। नि० ९. ४०॥

**विष्यन्** व्याप्नुवन्ति ५। ४५। १॥

**विष्यन्दमाने** विशेषेण गम्यमाने ३९। ५॥

**विष्वक्** सर्वतः १। ३६। १६। विषुं व्याप्तिमञ्चति १। १४६। ३। सर्वशः ४। ४। २। यो विष्वक् सर्वमञ्चति ६। ६। ३। व्याप्तम् ७। ३४। १३। विषु व्याप्तमञ्चतीति ७। ४३। १॥

**विष्वङ्** यो विषु सर्वत्राञ्चति प्राप्नोति ३१।४॥

[**विषूचोः**] व्याप्तविद्याधर्मसुशीलयोर्द्वयोः ७। १८। ६॥

**विश्वद्र्यक्** यद् विश्वगञ्चति व्याप्नोति तत् ७। २५। १॥

**विश्वाचः** विविधगतिमतः (शत्रुमण्डलस्य) १। ११७। १६॥

**विषितस्तुका** विविधतया सिता बद्धास्तुका स्तुतिर्यया सा १। १६७। ५॥

**विसदृशा** विविधधर्म्यैर्व्यवहारैस्तुल्यानि १। ११३। ६॥

**विसर्जनम्** यजमानेन होतृभिश्च हविषस्त्यागो मौनं वा १। १५॥

**विसर्माणम्** यो विसृजति तम् ५। ४२। ६॥

**विसारे** विशेषेण स्थिरत्वे १। ७९। १॥

**विसृजद्भ्यः** त्यजद्भ्यः १६। २३॥

**विसृतः** ये विशेषेण सरन्ति तान् ४। १९। ५॥

**विसृपः** योद्धृभिर्विविधं यत् सृप्यते तस्य (सृपितृदोः कसुन्। अ० ३। ४। १७। अनेन भावलक्षणे सृपिःधातो कसुन्) १। २८॥

**विसृष्टधेना** विविधविद्यायुक्ता धेना वाग् यस्याः सा ७। २४। २॥

**विसृष्टरातिः** विविधाः श्रेष्ठा रातयो दानादीनि येन सः १। १२२। १०॥

**विस्रसः** जीर्णावस्थायाः २। ३९। ४॥

**विस्रुहः** विसरन्ति विशेषेण गच्छन्ति ६ । ७ । ६ ॥

विस्रुहः आपो भवन्ति विस्रवणात् । नि० ६ ३ ॥

**विस्रुहा** यो विस्रुन् रोगान् हन्ति ५ । ४४ । ३ ॥

**विहत्या** विविधवधैर्हत्वा ( अत्र संहिताया मिति दीर्घः ) ५ । ४ । ५ ॥

**विहन्ता** विशेषेण नाशकः १ । १७३ । ५ ॥

**विहरन्** विचरन् । ४ । १३ । ४ ॥

**विह्वन्त** विशेषेणाह्वयन्ति ७ । २८ । १ ॥

**विह्वे** विशेषेण ह्वयति शब्दयति यस्मिँस्त-स्मिन् ३ । ८ । १० ॥

**विहव्यः** विविधतया ग्रहीतुं योग्यः १ । १०८ । ६ । विहोतुमर्हः २ । १८ । ७ । विविधानि हव्यानि साधनानि यस्य ८ । ४६ । विविधैः साधनैरादातुमर्हः १७ । २४ । विशेषेण स्तोतुं योग्यः २७ । ५ ॥

विहव्यम् (सूक्तम्) जमदग्नेश्च वा ऋषीणाञ्च सोमौ स-ङ्सुतावास्तां तत एतज्जमदग्निर्विहव्यमपश्यत्तमिन्द्र उपावर्त्तत यद्विहव्यं होता शंसतीन्द्रमेवैषां वृङ्क्ते । तां० ९. ४. १४ ॥

**विहायाः** महती १ । १२३ । १ । शुभगुणव्याप्तः १ । १२८ । ६ । योऽनर्थान् विजहाति सः ३ । ३६ । २ । विजिहीते सद्यो गच्छति येन सः ४ । ११ । ४ । महान् ६ । १३ । ६ । विविधेषु पदार्थेषु व्याप्तः ( अत्रोहाङ् गतावित्यस्मादसुन् णित्कार्यश्च ) १७ । २६ ॥

**विहि [ विहि ]** व्याप्नुहि ( अत्र वाच्छन्दसीति ह्रस्वः ) ४ । ४८ । १ । प्राप्नुहि २ । २६ । २ ॥

**विहितानि** रचितानि १ । १६४ । १ ॥

**विहुतमतीनाम्** जुह्वति स्वीकुर्वन्ति याभिस्ता विहुतो मतयो यासु तासाम् १ । १३४ । ६ ॥

**विहुतः** विशेषकुटिलान् २५ । ७ ॥

**विह्वयामहे** विशेषेण स्पर्द्धामहे ११ । ४२ ॥

विविधैः शब्दैः स्तुमः १ । ३६ । १३ ॥

**विह्वयेते** विस्पर्द्धेते २ । १२ । ८ ॥

**वीक्षिताय** विशेषेण कृतदर्शनाय २२ । ८ ॥

**वीडयस्व [ वीडयस्व ]** प्रेरयस्व ३ । ५३ । १९ । दृढान् कारय ६ । ४७ । २६ । बलयस्व ६ । ४७ । ३० । स्तुहि २ । ३७ । ८ ॥

**वीडयेथाम्** दृढबलौ भवेताम् ६ । ३५ ॥

**वीडितः** विविधैर्गुणैः स्तुतः २ । २१ । ४ ॥

[ वीडिता ] प्रशंसितानि २ । २४ । ३ । स्थितानि ६ । २२ । ६ ॥

**वीडु** दृढं बलम् १ । ६ । ५ । वीड्वनि दृढानि बलकारीणि ( अत्र ईषा अक्षादित्वात् प्रकृतिभावः ) १ । ३९ । २ ॥

वीडु बलनाम । निघ० २. ९ ॥

वीडुः प्रशंसितः ३ । ५३ । १७ ॥ [ वीडोः ] बलवतः १ । १०१ । ४ ॥

वीडुजम्भम् वीडु बलवज्जम्भो मुखमिव ज्वाला यस्य तम् ३ । २६ । १३ ॥

वीडुद्वेषाः दृढद्वेषाः २ । २४ । १३ ॥

वीडुपत्मभिः बलेन पतनशीलैः १ । ११६ । २ ॥

वीडुपविभिः दृढचक्रैः ५ । ५८ । ६ ॥

वीडुपाणिः वीडुः बलं पाणयो यस्य सः ७ । १ । १४ ॥ [ वीडुपाणिभिः ] वीडूनि दृढानि बलानि पाणयो ग्रहणसाधन व्यवहारयोर्येषां तैः ( वीड्विति बलनाम सु० । निघ० २ । ६ ) १ । ३८ । ११॥

वीडुहर्षिणः बलेन बहु हर्षो विद्यते यस्य तस्य २ । २३ । ११॥

वीड्वङ्गः वीडूनि दृढानि बलिष्ठान्यङ्गानि यस्य सः ११ । ४४ । प्रशंसिताङ्गः २६ । ५२ ॥

वीड्वंगः दृढांगः । नि० ९.१२ ॥

वीड्वी बलवती ( वीड्विति बलनामसु० । निघ० २ । ६ ) ६ । ३५ ॥ [ वीड्वीः ] विशेषेण स्तोतुं योग्याः २८ । १३ ॥

वीणावादम् वाद्यविशेषम् ३० । १९ ॥

वीततमानि अतिशयेन व्याप्तुं समर्थानि ७ । १ । १८ ॥

वीतपृष्ठः वीता व्याप्ताः पृष्ठा विद्यासिद्धान्ता येन सः १ । १६२ । ७ । वीतं व्याप्तं पृष्ठं यस्य सः २५ । ३० । [ वीतपृष्ठा ] वीते व्याप्तिशीले पृष्ठे ययोस्तौ ३ । ३५ । ५॥ [ वीतपृष्ठाः ] वीतं व्याप्तं पृष्ठं पृथिव्यादितलं यैस्ते १ । १८१ । २ । वीतानि व्याप्तानि लोकलोकान्तराणां पृष्ठानि यैस्ते ५ । ४५ । १० । विविधानीतानि विदितानि पृष्ठानि प्रच्छन्नानि याभिस्ताः १६ । ४४ ॥

वीतम् व्याप्नुतः १ । ६३ । ७ । प्राप्नुतं व्याप्नुतं वा ६ । ६० । १५ ।

वीतम् अश्नीतम् । नि० ४. १९ ॥

वीतम् गमनशीलम् १७ । ५७ । प्राप्तम् २५ । ३७। व्याप्तम् ४ । ७ । ६ । व्याप्तिशीलम् १ । १६२ । १५ ।

वीतये ज्ञानाय भोगाय वा ( वी गतिव्याप्तिप्रजनकान्त्यसनखादेनष्वस्मान्मन्त्रे वृषेषपचमनभूवीरा उदात्तः अनेन क्तिन्प्रत्यय उदात्तत्वञ्च ) १ । ५ । ५ । प्राप्तये १ । १३ । २ । विज्ञानाय १ । ७४ । ४ । सर्वसुखव्याप्तये १ । ७४ । ६ । कामनायै, व्याप्तये १ । १३५ । ३२ । धर्मप्रवेशाय, आनन्दप्राप्तये १ । १३५ । ४ । विद्याप्राप्तये १ । १४२ । १३ ॥

वीतिः ( यजु० ११. ४६ ) अग्नऽआयाहि वीतयऽइत्यवितवऽइत्येतत् । श० ६. ४. ४. ९ ॥

वीतहव्यम् प्राप्तप्राप्तव्यम् ७ । १९ । ३ ॥

वीताम् प्राप्नुताम् २८ । ६ । व्याप्नुताम् २८ ।

१४ । व्याप्नुतः २१ । ३८ ॥

**वीतिहोत्रः** प्राप्ताप्तविज्ञानः १ । ८४ । १८ । वीतीनां शुभगुणव्याप्तानां विद्यानां होत्रं स्वीकरणं यस्य सः ३ । २४ । २ ॥ [ वीतिहोत्राः ] वीतिः सर्वतः प्रकाशितो होत्रा यज्ञो येषां ते १७ । ७८ ॥ [ वीतिहोत्रम् ] गृहीतेश्वरव्याप्ति २ । ३८ । १ । वीतेर्व्याप्तेर्होत्रं ग्रहणं यस्मात्तम् ५ । २६ । ३ । वीतयो विज्ञापिता होत्राख्या यज्ञा येनेश्वरेण यद्वा वीतयः प्राप्तिहेतवो होत्राख्या यज्ञक्रिया भवन्ति यस्मात्तं परमेश्वरं भौतिकं वा ( वी गतिव्याप्तिप्रजनकान्त्यसनखादनेष्वित्यस्य रूपम् ) २ । ४ ॥

**वीती** वीत्या व्याप्त्या ६ । ६ । १ । कामनया ६ । १६ । ४६ ॥

**वीथः** [ वीथः ] कामयेथाम् १ । १५१ । ७ । व्याप्नुथ १ । १५१ । ३ ॥

**वीध्रयाय** विविधेषु ईधेषु दीपनेषु भवाय ( अत्र वीपूर्वकादिन्धिधातोरौणादिको रक्प्रत्ययः ) १६ । ३८ ॥

**वीरः** अजति व्याप्नोति शत्रुबलानि यः १ । १८ । ४ । अजति प्राप्नोति सकला विद्याः सः २ । ३ । ६ । शुभगुणव्यापी २ । ३३ । १ । विद्यया प्राप्तशरीरात्मबलः ४ । २३ । २ । व्याप्तविद्याशौर्यादिगुणः ४ । २४ । १ । बलिष्ठः ४ । २५ । ६ ॥ [ वीरम् ] पूर्णशरीरात्मबलप्रदम् १ । ४० । ३ । उत्तमसन्तानम् २ । ३२ । ४ । दोग्धारम् ७ । ३४ । ६ । सर्वदुःखप्रक्षेप्तारम् ३७ । ७ ॥ [ वीर ] अजति वेद्यं जानाति, प्रक्षिपति विनाशयति सर्वाणि दुःखानि वा यस्तत्सम्बुद्धौ ( अत्र स्फायितञ्चिवञ्चि उ० २ । १२ अनेनाजेरक्प्रत्ययः ) १ । ३० । ५ ॥

वीरः वीरयत्यमित्रान् । वेतेर्वा स्याद् गतिकर्मणो वीरयतेर्वा । नि० १. ७ ॥

( यजु० ४. २३ ) पुत्रो वै वीरः । श०३.३. १.१२ ॥ ( वीरता–यजु० ७. १२ ) अत्ता हि वीरः । श० ४. २. १. ९ ॥ प्राणा वै दश वीराः ( यजु० १९. ४८ ) । श० १२. ८. १. २२ ॥

**वीरतमः** वेति स्वबलेन शत्रुबलं व्याप्नोति सोऽतिशयितः १५ । ५२ । [ वीरतमा ] अतिशयेन वीरौ ( अत्राकारादेशः ) ८ । ५६ ॥

**वीरताम्** वीरस्वभावम् ७ । १२ ॥

**वीरपत्नी** वीरः पतिर्यस्याः सा १ । १०४ । ४ ॥

**वीरपस्त्यः** वीरा पस्त्ये गृहे यस्य सः ५ । ५० । ४ ॥

**वीरपेशाः** वीराणां पेशो रूपमिव रूपं येषां ते ४ । ११ । ३ ॥

**वीरयध्वम्** विक्रमयध्वम् १७ । ३८ ॥

**वीरयस्व** आरब्धस्य कर्मणः समाप्तिमाचर ११ । ६८ ॥

**वीरया** वीरयुक्तया ३३ । ७० ॥

**वीरवक्षणम्** वीराणां वहनम् ५ । ४८ । २ ॥

वीरवत् बहवो वीरा विद्यन्ते यस्मिन् विज्ञाने तत् १ । १९० । ८ । वीरा विद्यन्ते यस्मिँ स्तत् ४ । ३२ । १२ । प्रशस्तवीरकारकम् ४ । ३६ । ६ । शूरवीरतुल्याः ६ । ६५ । ३ । प्रशस्तवीरसदृशमन्नादिपदार्थमयं यज्ञम् (अत्रार्श आदित्वादच्) ८ । ६३ । वीरैस्तुल्यम् २८ । १२ ॥

वीरवतीः बहवो वीराः सन्ति यासु ताः ३४।४०॥ [वीरवतीम्] प्रशस्ता वीरा विद्यन्तेऽस्याम् १ । ९६ । ८ ॥

वीरवत्तमम् वीरा विद्वांसः शूराश्च विद्यन्ते यस्मिन् तदतिशयितं वीरवत्तमम् १ । १ । ३ ॥

वीरवन्तः वीरपुत्राः ४ । ५० । ६ । [वीरवन्तम्] प्रशस्ता वीरा विद्यन्ते यस्मिँस्तम् । १ । ६४।१५। वीरा भवन्ति यस्मात्तम् २ । ११ । १३ ॥

वीरवाहः ये वीरान् वहन्ति प्राप्नुवन्ति ते ७ । ४२ । २॥

वीरशुष्मया वीराणां योद्धृणां शुष्माणि बलानि यस्यां तया १ । ५३ । ५ ॥

वीरहणम् यो वीरान् हन्ति तम् ३० । ५ ॥

वीरिटे अन्तरिक्षे ३३ । ४४ ॥

वीरुधः [वीरुधः] अतिविस्तृता लताः १ । १४१ । ४ । ओषधयः २ । ३५ । ८ । वृक्षान् १२ । ६ । सोमादीन् १२ । ७७ ॥ [वीरुत्सु] सत्तारचनाविशेषेण निरुद्धेषु कार्यकारणद्रव्येषु (वीरुध इति पदनाम । निघ० ४ । ३) १ । ६७ । ५ ॥

वीरुधः ओषधयो भवन्ति विरोहणात् । नि० ६. ३ ॥

वीर्यकृतः यो वीर्यं करोति तस्य १० । २५ ॥

वीर्यम् पराक्रमं बलं वा १ । ५७ । ५ । पृथिव्यादिलोकानां बलम् १। ६३ ।४ । सर्वाङ्गस्फूर्तिः १६। ६। अनन्तपराक्रमवान् १६ ६। (१५३ भूमि०) । शरीरबलकरं घृतादि २० । ५८ । वीरेषु साधु २ । ३१ ॥ [वीर्याणि] आकर्षणप्रकाशयुक्तादिवत्कर्माणि १ । ३२ ।१ ॥ [वीर्या] विद्यावीर्याणि १ । ८०। १५। वीरेषु शत्रुप्रक्षेपकेषु विद्वत्सु साधूनि २ । १६ । २ । पराक्रमयुक्तानि कर्माणि २ । २१ । ३ । वीरेभ्यो हितानि धनानि २ । ३० । १२ । वीर्ययुक्तानि सैन्यानि ५ । २९ । १३ ॥ [वीर्याय] वीर्यवृद्धये ३० । ११ । योगबलाय १९ ।६०॥ [वीर्यस्य] वीरकर्मणः (अत्र अधीगर्थदयेषां कर्मणि । अ० २ । ३ । ५२ । इति कर्मणि षष्ठी) ३४ । २३ ॥

वीर्याय वीरकर्मणे । नि० २०. १९ ॥

वीर्यं विष्णुः । तै० १. ७. २. २ ॥ वीर्यं वा इन्द्रः । तां० ९. ७. ५. ८ ॥ गो० उ० ६. ७ ॥ वीर्यं वा अग्निः । तै० १. ७. २. २ ॥ गो० उ० ६. ७ ॥ वीर्यंषोडशी । तां० २१. २. २. ७ ॥ इन्द्रियं वीर्यंषोडशी । तां० २१. ५. ६ ॥ इन्द्रियं वै वीर्यं वाजिनम् (ऋ० १०. ७२. १०) । ऐ० १. १३ ॥ वीर्यं त्रिष्टुप् । श० ७. ४. २. २४ ॥ तिष्ठन्वै वीर्यवत्तरः । श० ६. ६. २. १ ॥

**वीहि** व्याप्नुहि १।४। प्राप्नुहि कामय वा ६।५०।२॥

**वुरीत** स्वीकुर्य्यात् ५।५०।१॥

**वृकः** स्तेनः १।४२।२। स्तेनो व्याधः १।१०५।७। यथा चन्द्रमाः शान्तगुणस्तथा १।१०५।१८। वृकवदुत्कोचकश्चौरः २।२८।१०। वज्रः २१।३८। चित्रकः २४।३३॥ [ वृकम् ] विद्युतम् १।१०५।११। अजादीनां हन्तारम् १६।१०॥ [ वृकस्य ] यो वृश्चति छिनत्ति तस्य १६।६२। वन्यस्य पशुनः १।११७।१६ व्याघ्रस्य ३३।५१।

वृकः वज्रनाम । निघ० २. २०॥ स्तेननाम । ३. २४॥

अथ यत्कर्णाभ्यामद्रवत्ततो वृकः समभवत्। श० ५. ५. ४. १०॥ मूत्रादेवास्यौजोऽस्रवत । स वृकोऽभवदारण्याणां (-नां) पशूनां जूतिः। श० १२. ७. १. ८॥

**वृकताति** वृको वज्र एव २।३४।६॥

**वृकति:** वृकवच्छत्रुहिंसकः ४।४१।४॥

**वृकद्वरसः** वृकस्य मेघस्य द्वाराणि २।३०।४॥

**वृकीः** स्तेनस्त्री (अत्र सुपां० इति सोः स्थाने सुः) १।११७।१८॥

**वृक्कः** रोगादिवर्जयिता १।१८७।१०॥ [ वृक्काभ्याम् ] याभ्यां वर्जन्ति ताभ्याम् २५।८॥

**वृक्णासः** छिन्नाविद्याः ३।८।७॥

**वृक्तबर्हिषः** वृक्तं छेदितं धूमेन बर्हिरन्तरिक्षं यैस्ते ऋत्विजः ३।२।५। वृक्तं वर्जितं बर्हिर्यस्मिन् ५।६।२। श्रोत्रिया ऋत्विज इव सर्वविद्यासु कुशलाः ५।२३।३। वृक्तं छेदितं बर्हिरुदकं येन तस्य (बर्हिरित्युदकनाम। निघ० १।१२) ६।६८।१॥ [ वृक्तबर्हिषम् ] वृक्तं वर्जितं बर्हिर्यैस्ते ३३।५८॥

वृक्तबर्हिषः ऋत्विङ्नाम। निघ० ३. १८॥

**वृक्ये** वृकस्य स्तेनस्य स्त्रियै स्तेन्यै १।११६।१६। वृकेषु स्तेनेषु भवे व्यवहारे ६।५१।६॥

**वृक्षः** यो वृश्च्यते छिद्यते सः संसारः १७।२०॥ [ वृक्षम् ] यो वृश्च्यते छिद्यते तं कार्यकारणाख्यं वा १।१६४।२०। वृश्चनीयं जलं स्थलं वा २।३१।१। वटादिकम् ५।५४।६। यो वृश्च्यते तम् ५।७८।६॥ [ वृक्षान् ] छेत्तुमर्हान् ५।८३।२॥ [ वृक्षेभ्यः ] ये शत्रून् वृश्चन्ति छिन्दन्ति तेभ्यः पादपेभ्यो वा १६।४०॥ [ वृक्षस्य ] व्रश्चितुं छेत्तुं योग्यस्य संसाराख्यस्य राज्यस्य २३।२४। राज्यस्य २३।२५॥ [ वृक्षे ] व्रश्चनीये छेदनीये शत्रुसैन्ये १६।५१॥

वृक्षः व्रश्चनात्। वृत्वा क्षां तिष्ठतीति वा। नि० २. ६॥

वृक्षि वर्जयेयम् ( अत्र वृजी वर्जन इत्यस्मा-
ल्लिङर्थे लुङ् । छन्दस्युभयथेति सार्वधातु-
काश्रयणादिण् न । वृजीत्यस्य सिद्धे सति
सायणाचार्येण ओव्रश्चू इत्यस्य व्यत्ययं
मत्वा प्रमादादेवोक्तमिति ) १ । २७ ।
१३ ॥

वृङ्क्त त्यजत १ । १७२ । ३ ॥

वृङ्धि वर्धय ६ । ७५ । १२ । वर्जय १३ । ४१ ।
वर्चय २६ । ४६ ॥

वृचयाम् छेदनभेदनप्रकाराम् १ । ५१ । १३ ॥

वृचीवन्तः रोगाच्छादितवन्तः ६ । २७ । ६ ॥
[ वृचीवतः ] वृचिरविद्याछेदनं प्रश-
स्तं यस्य तस्य ६ । २७ । ५ । छेदनवतः
६ । २७ । ७ ॥

वृजध्यै वर्जितुम् ३ । ३१ । १७ ॥

वृजनाः वृजन्ति येषु यैस्सह वा ते ७ । ३२ ।
२७ ॥ [ वृजनम् ] सन्मार्गम् १ । १७३ ।
१३ । गमनम् १ । १८० । १० । शरीरात्म-
बलम् १ । १८४ । ६ । वर्जनीयं बलम्
६ । ११ । ६ । व्रजन्ति येन यस्मिन्वा ६ ।
३५ । ५ । योगबलम् ७ । १२ । वर्जन्ति
दुःखानि येन तद्बलम् ३४ । ४८ ॥ [ वृज-
नस्य ] दुःखवर्जितस्य व्यवहारस्य १ ।
१०१ । ११ ॥ [ वृजने ] वृजते शत्रून्
येन तस्मिन् १ । ६३ । ३ । अनित्ये कार्ये
जगति २ । २४ । ११ । वर्जन्ति दुःखानि
जना यत्र तस्मिन् व्यवहारे १ । १०१ ।
८ ॥

वृजनम् बलनाम । निघ० २. ९ ॥

वृजनीषु वर्जनीयासु कक्षासु १ । १६४ । ६ ॥

वृजिनवर्तनिम् वृजिनस्य बलस्य वर्तनिर्मार्गो
यस्य तम् ( अत्र सहसुपेति समासः )
१ । ३१ । ६ ॥

वृजिनाः पापाचारा वर्जनीयाः ५।३।११ ॥
[ वृजिनानि ] धनानि बलानि वा ५ ।
१२ । ५ । बाधकानि ६ । ५२ । २ ॥
[ वृजिनम् ] वर्जनीयम् ६ । ५१ । १३ ॥

वृजिनानि वर्जनीयानि । नि० १०. ४१ ॥

वृज्यते त्यज्यते २६ । २६ ॥

वृज्याः वृणक्तु ६ । २८ । ७ ॥

वृज्याः वर्जनीयाः पीडाः २ । ३३ ।
१४ ॥

वृज्याम् त्यजेयम् २ । २७ । ५ ॥

वृञ्जते त्यजन्ति ७ । २ । ४ ।

वृञ्जन्ति त्यजन्ति ( अत्र व्यत्ययेन परस्मै-
पदम् ) ६ । ३६ । २ ॥

वृञ्जे [ वृञ्जे ] वृञ्जते (अत्र लोपस्त आत्म-
नेपदेष्विति तलोपो व्यत्ययेनात्मनेपदञ्च)
१ । १४२ । ५ । त्यजामि ६ । ११ । ५ ॥
छिनद्मि १ । ११६ । १ ॥

वृणक् [ वृणक् ] छिनत्ति ६ । १८ । ८ ।
वृणक्ति ७ । १८ । १२ ॥

वृणक्ति [ वृणक्ति ] सम्भजति ४ । ७ । १० । दूरीकरोति ६ । ५१ । १६ । वर्जयति ( अत्रान्तर्गतो ण्यर्थः ) ४ । २६ । त्यजति १ । १२४ । ६ । छिनत्ति ३ । २६ । ६ ॥

वृणक्ति वधकर्मा । निघ० २. १९ ॥

वृणक्तु छिन्नो भवतु १३ । ४५ । परित्यजतु १६ । १२ । पृथक्करोतु १६ । ५० ॥

वृणाक्षि त्यजसि १ । ५४ । ५ ॥

वृणते सम्भजन्ति १ । १४१ । ६ । स्वीकुर्वन्ति ४ । १६ । १ ॥

वृणानः स्तूयमानः १।१०८ ।६॥ [ वृणानाः ] स्वीकुर्वाणाः ३ । ४ । ५ ॥

वृणीत वृणीते ( अत्र लडर्थे लङ् ) १ । १३ । स्वीकुर्यात् ४ । ८ ॥

वृणीते स्वीकुरुते १ । ६७ । १ ॥

वृणीध्वम् स्वीकुरुत ५ । २८ । ६ ॥

वृणीमहे स्वीकुर्महे १ । १२ । १ ॥

वृणीष्व स्वीकुर्य्याः ४ । ३१ । ११ ॥

वृणे स्वीकरोमि ३ । १२ । ३ । प्राप्नुयाम् ३ । १२ । ५ । शुभगुणैराच्छादयामि ३ । ३७ । ६ ॥

वृण्वते [ वृण्वते ] स्वीकुर्वन्ति ७ । ३२ । १६ । सम्भजन्ते १५ । ४ ॥

वृण्वे स्वीकुर्याम् ४ । २१ । ८ ॥

वृतः स्वीकृतः ७ । ७ । ५ । [ वृतम् ] स्वीकर्तव्यम् १ । १०२ । ४ ॥

घृतम् धननाम । निघ० २. १० ॥

वृतश्चयः यो वर्तते तं चिनोति सः २ । २१ । ३ ॥

वृतया आवरकया क्रियया ५ । ४८ । २ ॥

वृता संयुक्तया ४ । ३१ । १ । या वर्तते तथा २७ । ३६ । वर्तमानया ३६ । ४ । [ वृतेव ] वर्तन्ते यस्मिँस्तेन मार्गेण ६ । १ । ३ ॥

वृतौ संवृतावाच्छादने ५ । ३७ । ५ ॥

वृत्तम् गोल १ । १५५ । ६ । सर्वतो दृढम् ४ । ३१ । ४ । वरते हुए ५ । ३६ । ३ ॥

वृत्रः मेघः १। ३२ ७ ( ३०३ भूमि० ) । मेघ इव शत्रुः १ । ८० । १२ ॥ [ वृत्रम् ] जलं स्वीकुर्वन्तं प्रजासुखं स्वीकुर्वतं वा १ । ८० । २ । मेघमिवाविद्याम् ४ । १८ । ११ । वरणीयं धनम् १ । १८७ । ३ ॥ [ वृत्राणि ] शत्रूणामावरकाणि कर्माणि १ । ५३। ६। वृत्रसम्बन्धिभूतानि जलानि १ । ८४ । १३ । शत्रुसैन्यानि ७ । ३० । २ ॥ [ वृत्राणाम् ] धर्मावरकाणाम् ६ । २६ । ८ ॥

वृत्रः धननाम । निघ० २. १० ॥ मेघनाम १. १०॥ मेघ इति नैरुक्ताः । त्वाष्ट्रोऽसुर इत्यैतिहासिकाः वृणोतेर्वा वर्त्ततेर्वा वर्द्धतेर्वा । नि० २. १६ ॥ वृत्रो ह वाऽइदंꣳसर्वं वृत्वा शिश्ये । यदिदमन्तरेण द्यावापृथिवी स यदिदꣳसर्वं वृत्वा शिश्ये तस्माद् वृत्रो नाम । श० १. १. ३. ४ ॥ स यद्वर्त्तमानः

समभवत् । तस्माद् वृत्रः । श० १. ६. ३. ९ ॥ तथैवैतद्यजमानः पौर्णमासेनैव वृत्रं पाप्मानं हत्वापहतपाप्मैतत्कर्मारभते । श० ६. २. २. १९॥ पाप्मा वै वृत्रः । श० ११. १. ५. ७ ॥ १३. ४. १. १३ ॥ ( यजु० ११. ३३ ) वृत्रहणं पुरंदरमिति पाप्मा वै वृत्रः पाप्महनं पुरन्दरमित्येतत् । श० ६. ४. २. ३ ॥ इन्द्रो वै वृत्रहा । कौ० ४. ३ ॥ वृत्र-शङ्कुं दक्षिणतोऽघस्यैवानत्ययाय । श० १३. ८. ४. १ ॥ ( यजु० १०. ८ ) त्वयायं वृत्रं वधेदिति त्वयायं द्विषन्तं भ्रातृव्यं वधेदित्येवैतदाह । श० ५. ३. ५. २८ ॥ यदिमाः प्रजा अशनमिच्छन्तेऽस्माऽ एवैतद् वृत्रायोदराय बलिंहरन्ति । श० १. ६. ३. १७ ॥ ( इन्द्रः ) तं ( वृत्रं ) द्वेधान्वभिनत्तस्य यत्सौम्यं न्यक्तमास त चन्द्रमसं चकाराथ यदस्या-सुर्यमास तेनेमाः प्रजाः उदरेणाविध्यत् । श० १. ६. ३. १७ ॥ वृत्रो वै सोम आसीत् । श० ३. ४. ३. १३ ॥ ३. ९. ४. २ ॥ ४. २. ५. १५ ॥ अथैष एव वृत्रो यच्चन्द्रमाः । श० १. ६. ४. १३, १८ ॥ वार्त्रघ्नं वै पौर्णमासं ( हविः ) । इन्द्रो ह्येतेन वृत्रमहन्नथैतदेव वृत्रहत्यं यदामावास्यं ( हविः ) वृत्रंह्यस्माऽएतज्जघ्नुषऽआप्यायनमकुर्वन् । श० १. ६. ४. १२॥ महानाम्नीभिर्वा इन्द्रो वृत्रमहन् । कौ० २३.२॥ ( इन्द्रः ) एताभिः ( अद्भिः ) ह्येनम् ( वृत्रम् ) अहन् । श० १. १. ३. ८ ॥ वृ तुरः ( यजु० ६. ३४ ) इति वृत्रंह्येताः ( आपः ) अघ्नन् । श० ३. ९. ४. १६ ॥ आपो ह वै वृत्रं जघ्नुस्तेनैवैतद्वीर्येणापः स्यन्दन्ते । श० ३. ९. ४. १४ ॥ महाहविषा ह वै देवा वृत्रं जघ्नुः । श० २. ५. ४. १ ॥ एतैर्वै ( साकमेधैः ) देवाः वृत्रमघ्नन्ने-तैर्वेव व्यजयन्त येयमेषां विजितिस्ताम् । श० २ ५. ३. १ ॥ ( वृत्रस्य वधसमये ) महान् घोष आसीत् । तां० १३. ४. १ ॥ अथ ( वृत्रः ) यद-पात्समभवत्तस्मादहिस्तं दनुश्च दनायुश्च मातेव च पितेव च परिजगृहतुस्तस्माद्दानव इत्याहुः । श०१. ६. ३. ९ ॥ तस्य ( वृत्रस्य ) एतच्छरीरं यद् गिरयो यदश्मानः । श० ३. ४. ३. १३ ॥ ३. ९. ४.२॥ ४. २.५.१५॥ वृत्रस्य ह्येष कनीनकः ( यदाञ्जनम् ) । श० ३. १. ३. १५ ॥ मरुतो ह वै सांतपना मध्य-न्दिने वृत्रंसंतेपुः स संतप्तोऽनन्नेव प्राणन्परिदीर्णः शिश्ये । श० २. ५. ३. ३ ॥ मरुतो ह वै क्रीडिनो वृत्रंहनिष्यन्तमिन्द्रमागतं तमभितः परिचिक्री-डुर्महयन्तः । श० २. ५. ३. २० ॥ स यो हैवमेतं वृत्रमन्नादं वेदान्नादो हैव भवति । श०१.६.३.१७॥

**वृत्रखादः** यो वृत्रं मेघं खादति किरणो वायुर्वा ३ । ४५ । २ । यो वृत्रं खादति स्थिरीकरोति सः ३ । ५१ । ६ ॥

**वृत्रघ्ना** वृत्रं मेघं हन्ति यस्तेन सूर्येणेव १ । १७५ । ५ ॥ [ वृत्रघ्ने ] यः सूर्यो मेघं वृत्रं हन्ति तद्वद्वर्तमानाय ३ । ३१ । १८ ॥

या रोहिणी ( गौः ) सा वार्त्रघ्नी यामिदंराजा संग्रा' जित्वोदाकुरुते । श० ३. ३. १. १४ ॥ वार्त्रघ्नं वै धनुः । श० ५. ३. ५. २७ ॥

**वृत्रतरम्** अतिशयेनावरकम् १ । ३२ । ५ । अत्यन्तबलवन्तम् ( ३०३ भूमि० ) ॥

**वृत्रतुरः** वृत्रं मेघं तूर्वति यास्ता विद्युत इव ६ । ३४ ॥ [ वृत्रतुरा ] यौ वृत्राणां मेघ-वदुन्नतानां शत्रूणां तुरौ हिंसकौ ६। ६८ । ८ ॥ [ वृत्रतुरम् ] यो वृत्रं मेघं धनं वा त्वरयति तम् ४ । ४२ । ८ ॥ वृत्रानिव शत्रूँस्तूर्वति हिनस्ति येन तम् ६ । २० । १ ॥

( यजु० ६ ३४ ) वृत्रतुर इति वृत्रंह्येता ( आपः) अघ्नन् । श० ३. ९. ४. १४ ॥

**वृत्रतूर्ये** शत्रुवधे २ । २६ । २ । वृत्रस्य मेघ-स्य तूर्यं हननं यत्र तद्वद्वर्तमाने संग्रामे

६।३१।१। वृत्रस्य मेघस्य तूर्यो वधस्तस्मिन् ( वृत्र इति मेघनामसु०। निघ० १ । १० । तूरी गतित्वरणहिंसनयोरित्यस्मात् कर्मणि यत् ) १।१३॥

वृत्रपुत्रा वृत्रः पुत्र इव यस्याः सा १। ३२। ६॥

वृत्रहत्याय मेघस्य हननाय ४।२६। ७॥ [ वृत्रहत्ये ] वृत्रस्य शत्रुसमूहस्य मेघस्य वा हत्या हननं येन तस्मिन्संग्रामे १। १०६।४॥

वृत्रहथानाम् वृत्रा मेघा इव वर्तमानाः शत्रवो हथा हता यैस्तेषाम् ३।१६।१॥

वृत्रहन्तमा अतिशयेन वृत्राणामावरकाणां पापिनां हन्तारौ ३३।७६। [ वृत्रहन्तमम् ] यो वृत्रं मेघं हन्ति तमतिशयितम् ६।१६।४८। यो वृत्रं मेघं हन्ति तमतिशयितं सूर्यमिव २०। ३०॥ [ वृत्रहन्तम ] यो वृत्रं धनं हन्ति प्राप्नोति सोऽतिशयितस्तत्सम्बुद्धौ ४। ३५। ६॥

वृत्रहा यो वृत्रं मेघं हन्ति सः (अत्र ब्रह्म भ्रूण वृत्रेषु क्विप्। अ० ३।२। ८७। अनेन हनधातोः क्विप् ) १। १६। ८। मेघहन्ता सूर्य इव अविद्यान्धकारनाशकः १। ७४। ३। यो दुःखप्रदान् शत्रून् मेघदोषान्वा हन्ति सः १।६१।५। तत्तत्पापफलदानेन वृत्रान् धर्मावरकान् हन्ति १।१००। २। यो वृत्रं मेघं हन्ति सः सूर्यः २०। ७५॥ [ वृत्रहभिः ] यैः कर्मभिः वृत्रं हतस्तैः ६।६०। ३॥ [ वृत्रहन् ] यो वृत्रं धनं हन्ति प्राप्नोति तत्सम्बुद्धौ ३। ४०।८॥

वृत्वाय स्वीकृत्य ( अत्र क्त्वो यगिति यगागमः ) ११।१६॥

वृत्वी आवृत्य १।५२।६॥

वृथक् पृथक् ( वर्णव्यत्ययः ) ३३।२॥

वृथा निष्प्रयोजनाय १।१३०।४। मिथ्या १।१४०।५॥

वृथाषाट् यो वृथाऽनायासेन सहते सः १। ६३।४॥

वृद्धः ज्ञानादिसर्वगुणग्रहणेन सर्वोपकारकरणेन च श्रेष्ठः १।५।६। स्थविरः ६। ४४।३॥ [ वृद्धम् ] विद्यावयोभ्यां ज्येष्ठम् ३।१।१४। भुक्ताऽऽयुष्कं विद्यया महान्तं वा ३।३२।७। सर्वेभ्यो विस्तीर्णम् ४।१६।१। प्रभूतं बहुरूपं धनादिकम् १८।४॥

वृद्धमहाः वृद्धा महान्तः सहाया यस्य सः ६।२०।३। वृद्धैः पूजितः ६। ३७। ५॥

वृद्धयः वर्ध्यन्ते यास्ताः १।१०।२२॥

वृद्धवयाः वृद्धं वयो जीवनं यस्य सः २। २७।१३॥

वृद्धशवसः वृद्धं शवो बलं येषां तत्सम्बुद्धौ ५।८७।६॥

**वृद्धशोचिषः** वृद्धा शोचिर्दीप्तिर्यस्य सः ५ । १६ । ३ ॥

**वृद्धश्रवाः** वृद्धं श्रवः श्रवणमन्नं वा सृष्टो यस्य सः १ । ८९ । ६ । वृद्धं श्रवः सर्वशास्त्रश्रवणं यस्य सः १० । ९ ॥

**वृद्धसेनाः** वृद्धा प्रौढा सेना येषां ते १ । १८६ । ८ ॥

**वृद्धायुम्** वृद्ध इवाचरन्तम् ( क्याच्छन्दसीत्युः ) ५ । २६ । आत्मनो वृद्धमिच्छतीति तम् १ । १० । १२ ॥

**वृद्धिः** वर्द्धन्ते यया सत्क्रियया सा १८ । ४ । [ वृद्ध्या ] वर्धनेन २३ । १३ ॥

**वृधः** वर्धकः ५ । ३४ । ६ । ये युद्धे वर्धन्ते तान् १ । ८१ । २ ॥ [ वृधासः ] वर्धमाना वर्धयितारो वा १ । १७१ । २ । सुखवर्धकाः १ । १८६ । २ ॥ [ वृधम् ] वर्धनम् १ । १६७ । ४ । वर्धकं व्यवहारम् ३ । १६ । २ ॥ [ वृधे ] वर्धनाय १२ । ११४ । वृद्धये २५ । १४ ॥

**वृधन्तम्** वर्धमानं वर्धयन्तं वा ६ । ६६ । ११ ॥

**वृधसानः** यो वृधान् वर्धकान् विभजति ४ । ३ । ६ । वर्धमानः ६ । १२ । ३ ॥

**वृधसानासु** वर्धमानासु प्रजासु २ । २ । ५ ॥

**वृधसे** वर्धितुम् ५ । ६४ । ५ ॥

**वृधस्नू** यौ वृधान् प्रस्रवतस्तौ ४ । २ । ३ ॥

**वृधातः** वर्धताम् ( अत्र लेटि विकरणव्यत्ययेन शः परस्मैपदञ्च ) २० । ४२ ॥

**वृधानः** वर्धमानो वर्धयिता वा १ । ६५ । ११ ॥

**वृधि** उद्घाटयोद्घाटयति वा ( वृञ्धातोः प्रयोगः । बहुलं छन्दसि । अ० २ । ४ । ७३। अनेन श्नोर्लुक् । श्रुशृणुपृकृवृभ्यश्छन्दसि । अ० ६। ४ । १०२ अनेन हेर्धिः ) १ । ७ । ६ । वृणु वृणोति वा ( अत्र पक्षा तरे सूर्यस्य प्रत्यक्षत्वात् प्रथमार्थे मध्यमः ) १ । १० । ७ । वर्धय ४ । ३१ । १३ । दूरीकुरु ७ । १७ । २ ॥

**वृश्च** छिन्धि ६ । ८ । ५ ॥

**वृश्चः** छिन्धि ४ । १७ । ७ ॥

**वृश्चत्** छिनत्ति १ । ६१ । १० ॥

**वृश्चति** छिनत्ति ३ । ५३ । २२ ॥
वृश्चति वधकर्मा । निघ० २. १९ ॥

**वृश्चद्वनम्** वृश्चत् छिन्दद् वनं यस्मिन् ६ । ६ । १ ॥

**वृश्चन्ति** छिन्दन्ति ६ । २ । ९ ॥

**वृश्चसि** छिनत्सि १ । १३० । ४ ॥

**वृश्चिक** यो वृश्चति छिनत्यङ्गानि तत्संबुद्धौ १ । १९१ । १६ ॥

**वृषकर्मन्** वृषस्य श्रेष्ठस्येव कर्माणि यस्य सः १ । ६३ । ४ । वृषस्य मेघस्य कर्माणीव कर्माणि यस्य तत्सम्बुद्धौ १ । १३० । १० ॥

वृषक्रतुः वृषा बलवती क्रतुः प्रज्ञा यस्य सः ६ । ४५ । १६ ॥ [ वृषक्रतो ] वृषाणां बलवतां प्रज्ञाकर्माणीव प्रज्ञाकर्माणि यस्य सः ५ । ३६ । ५ ॥

वृषखादयः ये वृषान् रसवर्षकान् पदार्थान् खादयन्ति ते १ । ६४ । १० ॥

वृषजूतिः वृषस्येव जूतिर्वेगो यस्य सः ५ । ३५ । ३ ॥

वृषणश्वस्य वृषणो वृष्टिहेतवो यानगमयितारो वाऽश्वा यस्य तस्य ( वृषण्वस्वश्वयोश्च १ । ४ । १८ अनेन वार्त्तिकेन भसंज्ञाकरणान्नलोपो न । णत्वं च भवति ) १।५१। १३ ॥

वृषण्वन्तम् वेगवन्तम् १ । १०० । १६ ॥

वृषण्वसू वृषाणो विद्याक्रियाबलयुक्ता वसवो वासकर्त्तारो मनुष्या ययोस्तौ १ । १११ । १ । वर्षकौ वसन्तौ च ११ । १३ । वृष्णां वर्षयित्रीणां वासयितारौ २ । ४१ । ८ । यौ वृष्णो बलिष्ठान् वीरान् वासयतस्तौ ४ । ५० । १० । यौ वृष्णौ बलिष्ठौ देहौ वासयतस्तौ ५ । ७५ । ६ ॥

वृषण्वान् वृष्टिहेतुः १ । १२२ । ३ । बलवान् १ । १७३ । ५ । अन्ययानानां वेगशक्तिबन्धयिता १ । १८२ । १ ॥ [ वृषण्वन्तम् ] वेगवन्तम् १ । १०० । १६ ॥

वृषत्वा सुखवर्षकाणां भावस्तानि ( अत्र शेश्छन्दसि बहुलमिति शिलोपः ) १ । ५४ । २ ॥ [ वृषत्वेभिः ] विद्यासुखवर्षकैः १ । ६१ । २ ॥

वृषदंशः मार्जारः २४ । ३१ ॥

वृषधूतस्य वृषैः सेचनैर्यो धूतो विलोडितस्तस्य ३ । ३६ । २। वृषा बलिष्ठाः पदार्था धूताः कम्पिता येन तस्य ३ । ४३ । ७॥

वृषन् आनन्दं वर्षयन् १ । १३१ । ५ । वृष इवाचरन् ५ । ४० । १ ॥

वृषन्तमः अतिशयेन सुखवर्षकः १ । १०० । २ । अतिशयेन वृष्टिकर्त्ता ६ । ५७ । ४ ॥ [ वृषन्तमम् ] सर्वानभीष्टान् कामान् वर्षतीति वृषा सोऽतिशयितस्तम् ( कनिन् युवृषि० उ० १ । १५४ अनेन वृषधातोः कनिन्प्रत्ययः । अयस्मयादीनि छन्दसीति अ० १ । ४ । २० अनेन भसंज्ञया नलोपाभावः । उभयसंज्ञान्यपि छन्दांसि दृश्यन्त इति पदसंज्ञाश्रयणाट्टीलोपाभावः ) १ । १० । १० ॥ [ वृषन्तमस्य ] अतिशयेनोत्तमानामभिवर्षयितुः १ । १० । १० । अतिशयेन बलिष्ठस्य ५ । ३५ । ३ ॥

वृषनिधम् बलिष्ठानां धारकम् ४ । २२ । २ ॥

वृषपर्वा वृषाणि समर्थानि पर्वाणि पालनानि यस्य सः ३ । ३६ । २ ॥

वृषपाणयः वृषस्येव पाणिः व्यवहारो येषां ते ६ । ७५ । ७ । रक्षका वृषा बलिष्ठा वृषभादय उत्तमाः प्राणिनः पाणिवद्येषां ते २६ । ४४ ॥

वृषपाणासः वर्षन्ति यैस्तानि वृषाणि वृषाणि पानानि येषां ते १ । १३६ । ६ ॥ [ वृषपाणेषु ] ये वृषन्ति पोषयन्ति ते

वृषाः सोमादयः पदार्थास्तेषां पानेषु १ । ५१ । १२ ॥

वृषप्रभर्मा यो वर्षणशीलं मेघं प्रविभर्ति सः ५ । ३२ । ४ ॥

वृषभः यो वर्षति सुखानि सः १ । ३१ । ५ । जलवद् वर्षयति शस्त्रसमूहम् १ । ३३ । १० । यो वृषान् वृष्टिनिमित्तानि भाति सः १ । ५४ । २ । यः वृषान् भाति सः १ । ५४ । ३ । वृष्टिहेतुः सूर्यः १ । ७६ । २ । विजयवर्षकः १ । ११६ । १८ । वर्षकः १ । १२८ । ३ । श्रेष्ठः १ । १४० । १० । अतीव बलवान् १ । १७७ । १ । विद्व च्छिरोमणिः १ । १६० । ८ । दुष्टसामर्थ्य-हन्ता २ । १ । ३ । मेघशक्तिनिरोधकः २ । १२ । २२ । वर्षको मेघः ५ । ५८ । ६ । शरीरात्मबलैश्वर्ययुक्तः ७ । ३८ । बलीवर्दः १७ । ३३ ॥ [ वृषभम् ] सर्व-लोकस्तम्भकम् १ । १६ । ३॥ [ वृषभस्य] यज्ञादिकर्मद्वारा वृष्टिकरस्य १ । १४१ । २ । पुष्टिकरस्य २ । १६। ६ । वर्षकस्याग्नेः ४ । १ । १२ । सुखाभिवर्षकस्य सभापतेः ८ । ४६ ॥ [ वृषभ ] रोगनिवारणेन बल-प्रद २ । ३३ । १५ । उपदेशवर्षक १ । १६५ । ७ ॥

वृषभः वर्षितापाम्। नि० ४. ८। वृषभः प्रजां वर्षतीति वातिबृहति रेत इति वा तद् वर्षकर्मा वर्षणाद् वृषभः । ९. २२ ॥

( ऋ० २.१२. १२ ) वृषभ इति । एष (आदित्यः) ह्येवाऽऽसाम्प्रजानामृषभः । जै० उ० १. २९. ८ ॥ स एष ( आदित्यः ) सप्तरश्मिर्वृषभस्तुविष्मान् ( ऋ० २. १२. १२ ) जै० उ० १. २८. २ ॥

वृषभान्नाय वृषभमन्नं यस्मात्तस्मै २ । १६ । ५ ॥

वृषमनाः वृषे वीर्यसेचने मनो यस्य सः १ । १६७ । ७॥ [ वृषमनः ] वृषेषु शूरवीरेषु मनो विज्ञानं यस्य तत्सम्बुद्धौ १ । ६३ । ४ । वृषस्य बलयुक्तस्य मन इव मनो यस्य तत्सम्बुद्धौ ४ । २२ । ६ ॥

वृषमन्यवः वृषस्य मन्युरिव मन्युर्येषां ते १ । १३१ । २ ॥

वृषरथः बलिष्ठा वृषभा रथे यस्य ५ । ३६ । ५ ॥ [ वृषरथासः ] वृषाः शक्तिबन्धका रथा रमणसाधनानि येषां ते १ । १७७ । २ । वृषा बलयुक्ता रथाः सेनाङ्गानि येषां ते ६ । ४४ । १९ ॥

वृषरश्मयः रश्मय इव विजयसुखवर्षकास्ते-जस्विनः ६ । ४४ । १९ ॥

वृषव्रातासः वृषाः शस्त्रास्त्रवर्षयितारो व्रा-तासो मनुष्या येषां ते १ । ८५ । ४ ॥

वृषशुष्मम् वृषणां बलीनां बलम् ४ । ३६ । ८ ॥

वृषसेनः वृषा बलयुक्ता सेना यस्य सः, हृष्ट-पुष्टसेनः १० । २ ॥

वृषस्व सिञ्चस्व १ । १०४ । ९ । वृष इव बलिष्ठो भव ३ । ३२ । २ ॥

वृषा शुभगुणवर्षणकर्त्ता १ । ७ । ८ । सुख-वृष्टिकर्त्ता १ । ३६ । ८ । विद्यावर्षकः १ । ३६ । १० । जलानां वर्षकः १ । ५४ । २ । सत्योपदेशवर्षकः, समर्थः १ । ५५ । ४ । न्यायवर्षकः १ । ८० । २ । वृष्टिहेतुः

१ । १०० । १ । श्रेष्ठो बलिष्ठः १ । १४९ । २ । वीर्यकारी १ । १७५ । २ । बलिष्ठः १ । १७६ । १ । कृषिकर्मकुशलः १ । १७६ । २ । रसादिपूर्णः १ । १७७ । ३ । परशक्तिप्रतिबन्धको वेगवान् वा २ । १६ । ६ । वीर्यसेचकः ८ । १० ॥ [ वृषणौ ] बलिष्ठौ राजामात्यौ [ वृषणा ] बलिष्ठावश्वौ १ । १७७ । १ । वरौ २ । १६ । ५ । वृष्टिकरौ वायुविद्युतौ ३ । ४३ । ४ । पोषकौ ( अत्र द्विवचनस्थाने सुपां सुलुगित्याकारादेशः ) १ । १०८ । ३ । [ वृषणम् ] अग्निजलवर्षणयुक्तं यानसमूहम् १ । ८५ । ७ । शत्रुसेनाया उपरि शस्त्रास्त्रवर्षानिमित्तम् १ । ११८ । ६ । वृष्टिकरं यज्ञम् ३४ । १४ ॥ [ वृषभिः ] उपदेशकैः १ । १७३ । २ । वीर्यवद्भिः पतिभिः १ । १७६ । २ । बलिष्ठैर्युवभिः ६ । ५ । ४ ॥ [ वृष्णे ] वीर्यसेचनसमर्थाय प्राप्तचत्वारिंशद्वर्षाय ब्रह्मचारिणे ३ । ५७ । ३ ॥ [ वृषन् ] तेजस्विन् ६ । ३३ । १ ॥

वृषा ( यजु० ३८. २२ ) एष वै वृषा हरिर्य एष ( सूर्यः ) तपति । श० १४. ३. १. २६ ॥ इन्द्रो वै वृषा । तां०९. ४. ३॥ इन्द्रो वृषा । श० १.४. १. ३३ ॥ समग्निरिध्यते वृषा ( ऋ० ३. २७. १३ ) । श० १. ४. १. २९ ॥ योषा वै वेदिर्वृषाग्निः । श० १. २, ५. १५ ॥ वृषा हि मनः । श० १. ४. ४. ३ ॥ योषा वै स्रुग्वृषा स्रुवः । श० १. ३. १. ९ ॥ वृषा हि स्रुवः । श० १. ४. ४. ३ ॥ वृषा वै राजन्यः । तां० ६. १०. ९ ॥ ( हेऽश्व त्वं) वृषासि । तां० १. ७. १ ॥ आण्डाभ्याᳪहि वृषा पिन्वते । श० १४. ३. १. २२ ॥ पश्चाद्वै परीत्य वृषा योषामधि द्रवति तस्याᳪरेतः सिञ्चति । श० २. ४. ४. २३ ॥ वृषा हिंकारः । गो० पू० ३. २३ ॥

**वृषायते** वृष इवाचरति १ । ५५ । २ ॥

**वृषायध्वम्** आनन्दसेक्तारो वृषा इवाचरत ( कर्त्तुः क्यङ् सलोपश्च । अ० ३ । १ । ११ । अनेन क्यङ्प्रत्ययः ) २ । ३१ ॥

**वृषायन्ते** वृष इवाचरन्ति ३ । ७ । ६ ॥

**वृषायमाणः** वृष इवाचरन् १ । ३२ । ३ । वृषं बलं कुर्वाणः ३ । ५२ । ५ ॥

**वृषायसे** वृष इवाचरसि १ । ५८ । ४ ॥

**वृषायुधः** ये वृषेण वीर्यवता शूरवीरेण सह युध्यन्ते ते ( वृषोपपदे क्विप् चेति क्विप् अत्राऽन्येषामपीति दीर्घः ) १ । ३३ । ६ ॥

**वृषायिषत** विद्याधर्मशिक्षया हर्षकारका भवत ( लोडर्थे लुङ् ) २ । ३१ ॥

**वृषेथाम्** वर्षतः ( व्यत्ययेन शः प्रत्यय आत्मनेपदञ्च ) १ । १०८ । ३ । बलिष्ठौ भवेथाम् ६ । ६८ । ११ ॥

**वृष्टिः** अन्तरिक्षाज्जलस्याधःपतनम् २ । ३८ । ८ । दुष्टानां शक्तिबन्धिका शक्तिः १ । १५२ । ७ । [ वृष्ट्या ] वृष्टिविद्यया १५ । ६ ॥

वृष्टिः ( प्रजापतिः ) तम् ( पाप्मानम् ) अवृश्चत् । यदवृश्चत । तस्माद् वृष्टिः । तै० ३. १०. ९. १ ॥ ( सविता ) रश्मिभिर्वर्षं ( समदधात् ) । गो०

पू० १. ३६ ॥ वृष्टिर्वै याज्या विद्युदेव विद्युद्धीदं वृष्टिमन्नाद्यं संप्रयच्छति । ऐ० २. ४१ ॥ वृष्टिर्वै विराड् तस्या एते घोरे तन्वौ विद्युच्च ह्रादुनिश्च । श० १२. ८. ३. ११ ॥ तौ (अनड्वाहौ) यदि कृष्णौ स्यातामन्यतरो वा कृष्णस्तत्र विद्याद्वर्षिष्यत्यैषमः पर्जन्यो वृष्टिमान्भविष्यतीत्येतदु विज्ञानम् । श० ३. ३. ४. ११ ॥ अन्नं वृष्टिः । गो० पू० ४. ४. ५ ॥ वृष्टिर्वै विश्वधायाः । तै० ३. २. ३. २ ॥ अयं वै वर्षस्यष्टे योऽयं (वायुः) पवते । श० १. ८. ३. १२ ॥ तस्माद्यां दिशं वायुरेति तां दिशं वृष्टिरन्वेति । श० ८. २. ३. ५ ॥ मित्रावरुणौ त्वा वृष्ट्यावताम् (यजु० २. १६) । श० १. ८. ३. १२ ॥ इतःप्रदाना वै वृष्टिरितो ह्यग्निर्वृष्टिं वनुते स एतैः (घृत–) स्तोकैरेतान्स्तोकान् वनुते तऽएते स्तोका वर्षन्ति । श० ३. ८. २. २२॥ अर्वाचीनाग्रा (अवाचीनाग्रा इति भास्करसम्मतः पाठः) हि वृष्टिः । तै० ३.३.१.३॥ वृष्टिः सम्मार्जनानि । ३.३. १.२॥ यदा वै द्यावापृथिवी सञ्जानाथेऽअथ वर्षति । श० १. ८. ३. १२ ॥ वृष्टिर्वै वृष्ट्वा चन्द्रमसमनुप्रविशति । ऐ० ८. २८ ॥

**वृष्टिद्या॑वा** वृष्टिश्च द्यौश्च याभ्यां तौ ५ । ६८ । ५ ॥

**वृष्टिमाँ॑ इव** वह्वयो वृष्ट्यो विद्यन्ते यस्मिँस्तद्वत् ७ । ४० ॥

वृष्टिवनिम् वृष्टियाचिनम् । नि० २. १२॥

**वृष्टिवन॑ये** वृष्टेः संविभाजकाय ३८ । ६ ॥

**वृष्ट्वी** वृष्ट्वा वर्षित्वा ५ । ५३ । १४ ॥

**वृष्णि॑** सुखवर्षकम् ५ । ३५ । ४ ॥

**वृ॑ष्णिः** [ **वृ॒ष्णिः** ] वर्षति सुखानि वर्षयति वा ( सृवृषिभ्यां कित् । उ० ४।५१। अनेन वृषधातोर्निःप्रत्ययः स च कित् ) १ । १० । २ । सुखसेचकः १६ । ६ ॥

**वृष्ण्य॑म्** वृष्णो वीर्यवतः कर्म १२ । ११२ । वृषा समर्थस्तस्येमम् ३३ । ६७ । शत्रुसामर्थ्यप्रतिबन्धकेभ्यो वृषेभ्यो हितम् १ । ५४ । ८ । वृषसु वीर्यवत्सु भवम् (वृषन्शब्दाद् भवे छन्दसि इति यत् वाच्छन्दसीति प्रकृतिभावनिषेधः पक्षे अल्लोपः) १ । ६१ । १६ । वृषसु भवं साधुं वा ६ । ८ । ३ । वृषसु हितं बलम् ६ । ४६ । ८ ॥ [ **वृष्ण्या॑नि** ] वीर्यप्रापकानि १ । ६१ । १८ । पुरुषार्थयुक्तानि कर्माणि १ । १०८ । ५ । बलकराणि ४ । १६ । १० । बलेषु साधूनि ४ । २१ । २ । बलिष्ठानि ६।२५।३। दुष्टशक्तिनिरोधकानि ६ । ३६ । ३ । वीर्य्याणि १२ । ११३ । [ **वृष्ण्या** ] वृषभ्यो वीरेभ्यो हितानि बलानि १ । ५१ । ७ । सुखसेचनसमर्थानि १ । ५३ । ६ । वृष्णां वर्षकाणां शस्त्रवृष्टये हितया सेनया १ । १०२ । ४ । [ **वृष्ण्ये॑भिः** ] वृषसु भवैः किरणैः (वा छन्दसि सर्वं विधयो भवन्तीति प्रकृतिभावाभावेऽल्लोपः) १ । १०० । १ । वृषेषु बलिष्ठेषु भवैर्गुणैः ३ । ४६ । २ ॥

वृष्ण्यम् (यजु० २. ११२) रेतो वै वृष्ण्यम् । श० ७. ३. १. ४६ ॥

**वृष्ण्य॑वान्** बलादिवहुप्रियुक्तः ६ । २२ ।१॥ [ **वृष्ण्यव्रतः** ] वृष्ण्यानि वर्षितुं योग्यान्यभ्राणि विद्यन्ते येषु तान् ५ । ८३ । २॥

वृष्ण्यावतः वर्षकर्मवतः । नि० १०. ११ ॥

**वृह** [ **वृह** ] उच्छिन्धि ६ । ४५ । ६ । वर्धस्व

३ । ३० । १७ । पृथक्कुरु ६ । ४४ । ११ ॥

**बृहः** उच्छेदयेः ६ । ४८ । १७ ॥

**बृहत्** बृहत १ । १३० । ६ ॥

**बृहतम्** छेदयतम् ६ । ७४ । २ ॥

**बृहतात्** वर्धयन्तु १ । १७४ । ५ । छिन्द्यात ४ । १६ । १२ ॥

**बृहथः** वर्धयेथाम् २ । ३० । ६ ॥

**वेः [ वेः ]** विद्धि ( अत्राडभावः ) १ । ६३ । २ । आवहति १ । ७७ । २ । स्वीकुर्याः १ । १७३ । १ । जानाति २ । ५ । ३ । विद्धि वेदयति प्रापयति वा ( अत्र लडर्थे लङ् । वी गति० इत्यस्य प्रयोगोऽडभावश्च ) २ । ६। प्राप्नुयाः ४ । ३ । १३ ॥

**वेट्** यो न्यायासने विशति सः ( अत्र विशधातोरन्येभ्योऽपि दृश्यन्त इति विच्प्रत्ययः ) १७ । १२ । सत्क्रियया १८ । १६ ॥

**वेतसः** कमनीयः ४ । ५८ । ५ । वेगवत्यः (अत्र वीधातोर्बाहुलकादौणादिकस्तसिः-प्रत्ययः ) १३ । ३८ । [ वेतसे ] पदार्थ-विस्तारे १७ । ६ ॥

वेतसः तस्माद्वेतसो वनस्पतीनामनुपजीवनीयतमो यातयामा हि सः । श० ९. १. २. २४ ॥ ताः ( आपः ) प्रजापतिमब्रुवन् । यद्वै नः कमभूदवा-क्रदगादिति सोऽब्रवीदेष व एतस्य वनस्पतिर्वे-त्त्विति वेत्तु संवेत्तु सोऽह वै तं वेतस इत्याचक्षते परोऽक्षम् । श० ९. १. २. २२ ॥ अप्सुयोनिर्वै वेतसः । श० १२. ८. ३. १५ ॥ अप्सुजा वेतसः । श० १३. २. २. १९ ॥ अप्सुजो वेतसः । तै० ३. ८. ४. ३ ॥ ३. ८. १९. २ ॥ ३. ८. २०. ४ ॥

**वेतसवे** व्याप्तैश्वर्ये ६ । २६ । ४ ॥

**वेतसुम्** व्यापनशीलम् ६ । २० । ८ ॥

**वेति [ वेति ]** अस्तमेति ३४ । २५ । नश्यति ५ । ६१ । १८ । प्रजनयति ( अत्रान्तर्गतो ण्यर्थः ) १ । ३५ । ९ । प्राप्नोति १ । १४१ । ६ । कामयते ५ । ३४ । ४ । व्याप्नोति ६ । १५ । १ ॥

वेति कान्तिकर्मा । निघ० २. ६ ॥ गतिकर्मा २. १४ ॥

**वेतु [ वेतु ]** व्याप्नोति ( अत्र लडर्थे लोट् ) ३ । १० । जानातु ५ । ३५ । व्याप्नोतु १० । २६ । प्राप्नोतु २८ । १ ॥

**वेत्तु** जानातु, ज्ञापयतु १ । १४ ॥

**वेत्थ** जानासि १६। ६७। ( २८० भूमि० ) ॥

**वेद [ वेद ]** जानामि २३ । ६० । जानाति ४० । ११ । विजानीत ४० । १४ । जानी-यात् ४ । २३ । ३ । जानीहि ५ । १२ । ३ । विदन्ति ७ । ५६ । २ । जानासि वेत्ति वा २ । २१ । जानीयाम् १२ । ६४ । जानाति ३२ । १० ॥

**वेदः** प्राप्नुहि १ । ४३ । ६ ॥

**वेदः** विदन्ति सुखानि येन तद्धनम्, विज्ञान-धनम् १ । ८१ । ६ । द्रव्यम् ४ । २५ । ७ ।

वेदः धननाम । निघ० २. १० ॥

**वेदः** वेत्ति चराचरं जगत् स जगदीश्वरः

विदन्ति येन स ऋग्वेदादिर्वा, वेदयिता, ज्ञापकः २।२१॥

वेदः (=दर्भमुष्टिः) प्राजापत्यो वेदः। तै०३. ३.२. १॥ प्राजापत्यो वै वेदः। तै० ३. ३. ७. २॥ ३. ३. ८. ९॥ प्रजापतेर्वा एतानि श्मश्रूणि यद्वेदः। तै० ३. ३.९. ११॥ योषा वै वेदिर्वृषा वेदः। श० १. ९. २.२१,२४॥ वृषा वै वेदो योषा पत्नी। कौ० ३.९॥ वेदाः सोऽपहतपाप्मानन्तां श्रियमश्नुते य एवं वेद यश्चैवं विद्वानेवमेतां वेदानां मातरं सावित्रीं सम्पदमुपनिषदमुपास्ते। गो० पू० १. ३९॥ एतानि ह वै वेदानामन्तःश्लेषणानि यदेता (भूर्भुवःस्वरिति) व्याहृतयः। ऐ० ५. ३२॥ नाऽवेदविन्मनुते तं बृहन्तम्। तै० ३. १२. ९. ७॥ स इमानि त्रीणि ज्योतींष्यभितताप। तेभ्यस्तप्तेभ्यस्त्रयो वेदा अजायन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सूर्यात्सामवेदः। श० ११. ५. ८. ३॥ चत्वारो वा इमे वेदा ऋग्वेदो यजुर्वेदः सामवेदो ब्रह्मवेद इति। गो० पू० २. १६॥ चत्वारोऽस्यै (स्वाहायै) वेदाः शरीरं षडंगान्यंगानि। ष० ४. ७॥ ते सर्वे त्रयो वेदाः। दश च सहस्राण्यष्टौ च शतान्यशीतीनाम् (१०८००×८० = ८६४००० अक्षराणि) अभवन्। श० १०. ४. २. २५॥ एवमिमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्यानाः सपुराणाः सस्वराः ससंस्काराः सनिरुक्ताः सानुशासनाः सानुमार्जनाः सवाकोवाक्याः। गो० पू० २. १०॥ वेदो ब्रह्म। जै० उ० ४. २५. ३॥ वेदा एव सविता। गो० पू० १. ३३॥ तदाहुः किं तत्सहस्रम् (ऋ० ६. ६९. ८) इतीमे लोका इमे वेदा अथो वागिति ब्रूयात्। ऐ० ६. १५॥ (इन्द्रो भरद्वाजमुवाच-) अनन्ता वै वेदाः। तै०३.१०.११. ३॥ अथो सर्वेषां वा एष वेदानां रसो यत् साम। १२. ८. ३. २३॥ गो० उ० ५. ७॥

**वेदत** विद्यात् २।३५।२॥

**वेदनम्** धनम् ३।१७६।४। विज्ञानम् ४। ३०।१३। प्रापणम् ७।३२।७॥

**वेदयामसि** वेदयामः प्रज्ञापयामः ४।३६। २॥

वेदयामसि वेदयामः। नि० ९. ३१॥

**वेदि[1]** विज्ञायते ४।१६।४॥

**वेदि[1]ः** विदन्ति शब्दान् यस्यां साऽऽकाशवायुस्वरूपा १।१६४।३५। कुण्डादिकम् ७।३५।७। विन्दति सुखान्यनया सा २।१।यत्र हूयते १८।२१। यज्ञभूमिः १६।१७। मध्यरेखा २३। ६२॥ [वेदिम्] वेत्ति यया तां प्रज्ञाम् १। १७०।४। अग्निस्थानम् ५।३१।१२। हवनार्थं कुण्डम् ७।६०।६॥

तं (यज्ञं) वेद्यामन्वविन्दन् यद् वेद्यामन्वविन्दंस्तद्वेदेर्वेदित्वम्। ऐ० ३.९॥ यन्न्वेवात्र विष्णुमन्वविन्दंस्तस्माद्वेदिर्नाम। श० १.२.५.१०॥ तद्यदेनेन (यज्ञेन विष्णुना) इमाꣳसर्वाꣳ (पृथिवीं) समविन्दन्त तस्माद्वेदिर्नाम। श०१.२.५.७॥ वेदिर्देवेभ्योऽनिलायत। तां वेदेनान्वविन्दन्। तै० ३. ३. ९. १०॥ पृथिवी वेदिः। ऐ० ५. २८॥ तै० ३. ३. ६. २, ८॥ इयं (पृथिवी) वै वेदिः। श० ७. ३. १. १५॥ ७. ५. २. ३१॥ एतावती वै पृथिवी। यावती वेदिः। तै० ३. २. ९. १२॥ यावती वै वेदिस्तावती पृथिवी। श० ३. ७. २. १॥ तस्मादाहुर्यावती वदिस्तावती पृथिवीति। श० १. २. ५. ७॥ यावती वै वेदिस्तावतीयम्पृथिवी। जै० उ० १. ५ ५॥ तस्याः (पृथिव्याः) एतत्परिमितं रूपं यदन्तर्वेद्यथैष भूमाऽपरिमितो यो बहिर्वेदि। ऐ० ८. ५॥ वेदिर्वै परोऽन्तः पृथिव्याः। तै० ३. ९. ५. ५॥ उर्व्वरा वेदिर्भवत्येतत् (स्थानं) वा अस्याः (पृथिव्याः) वीर्य्यवत्तमम्। तां० १६. १३. ६॥ वेदिर्वै देवलोकः। श० ८. ६. ३. ६॥ वेदिर्वै सलिलम्। श० ३. ६. २. ५॥ वेदिरेव विश्वाची

( अप्सराः । यजु० १५. १८ ) । श० ८. ६. १. १९ ॥ स विश्वाचीरभिचिष्टे घृताचीः ( यजु० १७. ५९ ) इति स्रुचश्चैतद्वेदीश्चाह ( विश्वाची = वेदिः । घृताची = स्रुक् ) । श० ९. २. ३. १७ ॥ योषा वै वेदिः । श० १. ३. ३. ८ ॥ योषा वै वेदिर्वृषा वेदः ( दर्भमुष्टिः ) । श० १. ९. २. २१, २४ ॥ योषा वै वेदिर्वृषाग्निः । श० १. २. ५. १५ ॥ सा वै ( वेदिः ) पश्चाद्वरीयसी स्यात् । मध्ये सङ्ग्राहिता पुनः पुरस्तादुर्वी । श० १.२. ५. १६ ॥ व्याममात्री ( वेदिः ) पश्चात्स्यादित्याहुः । एतावान्वै पुरुषः पुरुषसम्मिता हि त्र्यरत्निः प्राची । श० १ २. ५ १४ ॥ तस्मात्त्र्यंगुला वेदिः स्यात् । श० १. २. ५. ९ ॥ ( वेदिः ) चतुरंगुलं खेया । तै० ३.२. ९.११ ॥ सा वै ( वेदिः ) प्राक्प्रवणा स्यात् । श० १. २. ५. १७ ॥ अथो ( वेदिः ) उदक्प्रवणा । श० १. २. ५. १७ ॥

**वेदिषत्** या वेद्यां जगत्यां यज्ञशालायां वा सीदति १२ । १४ । [ वेदिषदः ] ये वेद्यां पृथिव्यां सीदन्ति ते (यावती वेदिस्तावती पृथ्वी । श० १ । २ । ३ । ७) २ । २६ ॥

**वेदी** विन्दन्ति सुखानि यस्यां सा ६ । १ । १० । वेद्याम् ( अत्र सुपां सुलुगिति ङेर्लोपः ) २ । ३ । ४ । [ वेद्या ] यस्यां हूयते तया १८ । ६३ । यज्ञसामग्र्या १६ । १७ । सुखप्रापिकया ६ । १३ । ४ ॥ [ वेद्यै ] विदन्ति सुखानि यया तस्यै १६ । १६ ॥ [ वेद्याम् ] हवनाधारे कुण्डे २८ ॥ १२ ॥

**वेद्यः** वेदितुं योग्यः ६ । ४ । २ ॥ [ वेद्यम् ] विचार्यम् १८ । ११ ॥

**वेद्याभिः** वेदितुं योग्याभिः १ । १७१ । १ । वेत्तुं योग्याभिः प्रजाभिः ३ । ५६ । १ । ज्ञातव्याभिर्नीतिभिः ७ । २१ । ५ ॥

**वेधस्तमः** विद्वत्तमः ६ । १४ । २ ॥

**वेधाः** विविधशास्त्रजन्यमेधायुक्तः ( विधात्रो वेध च उ० ४ । २३२ । अनेनासुन्प्रत्ययो वेधादेशश्च ) १ । ६० । २ । पोषकः १ । ६५ । ५ । ज्ञानवान् ( वेधा इति मेधाविनाम । निघ० ३ । १५ ) १ । ६६ । २ ॥ [ वेधसे ] धारणाय १ । ६४ । १ ॥

वेधः मेधाविनाम । निघ० ३. १५ ॥
( ऋ० ८. ४३. ११ ) इन्द्रो वै वेधाः । ऐ० ६. १० ॥ गो० उ० २. २० ॥

**वेनः** कामयस्व १ । ४३ । ६ । कामयेः ५ । ३१ । २ । कामयथाः ६ । ४४ । १० ॥

**वेनः** कमनीयश्चन्द्रः ७ । १६ । कमनीयः ( वेनतीति कान्तिकर्मा । निघ० २ । ६ ) १३ । ३ । [ वेनात् ] कमनीयात्परमात्मनः ४ । ५८ । ४ ॥

वेनः मेधाविनाम । निघ० ३. १५ ॥ यज्ञनाम । ३. १७ ॥

वेनः ( ऋ० १०. १२३. १ ) अयं वै वेनोऽस्माद्वा ऊर्ध्वा अन्ये प्राणा वेनन्त्यवाञ्चोऽन्ये तस्माद्वेनः ( = नाभिः, प्राणः ? ) । ऐ० १. २० ॥ ( यजु० १३. ३ ) असावादित्यो वेनो यद्वै प्रजिजनिषमाणोऽवेनत्तस्माद्वेनः । श० ७. ४. १. १४ ॥ ( ऋ० १०. १२३. १ ) इन्द्र उ वै वेनः । कौ० ८. ५ ॥ आत्मा वै वेनः । कौ० ८. ५ ॥

**वेनतम्** कामयतम् ५ । ७५ । ७ ॥ [ वेनतः ] सर्वशास्त्रैः श्रुतस्य कमनीयस्य ( अत्र

वेनृधातोर्बाहुलकादौणादिकोऽतन्प्रत्ययः) १ । ८६ । ८ ॥

वेनन्ता वादित्रवादकौ (अत्र वेनृधातोर्वादित्राद्यर्थो गृह्यते । सुपां सुलुगित्याकारादेशः) १ । २५ । ६ ॥

वेनाम् कामिनां यात्राम् (धापृवस्यज्यतिभ्यो नः । उ० ३ । ६ । इत्यजधातोर्नःप्रत्ययः) १ । ३४ । २ ॥

वेन्यः कमनीयः ६ । ४४ । ८ ॥ [वेन्यस्य] कमितुं योग्यस्य २ । २४ । १० ॥

वेपते कम्पते ५ । ३६ । ३ ॥

वेपध्वम् कम्पध्वम् ३ । ४१ ॥

वेपयन्ति चालयन्ति १ । ३६ । ५ । कम्पयन्ति ३ । २६ । ४ ॥

वेपसा वेगेन १ । ८० । १२ । राज्यपालनादिकर्मणा ४ । ११ । २ ॥

वेपिष्ठः अतिशयेन कम्पकः ६ । ११ । ३ ॥

वेपी धीमती ६ । २२ । ५ ॥

वेपेते चलतः १ । ८० । ११ ॥

वेम प्रजनम् १६ । ८३ ॥

वेविजानः कम्पमानः ४ । ३६ । ५ ॥

वेविज्रे भृशं विभीतः (ओविजी भयचलनयोरित्यस्माद् यङ्लुङन्ताद् व्यत्ययेनात्मनेपदमेकवचनञ्च) १ । १४० । ३ ॥

वेविज्यते अत्यन्तं बिभेति १ । ८० । १४ ॥

वेविदानः विज्ञापयन् ५ । १६ । ५ ॥ [वेविदानाः] अतिशयेन विज्ञानवन्तः १।७२। ४ ॥

वेविदाम यथावल्लभेमहि ७ । २४ । ६ ॥

वेविषत् भृशं व्याप्नोति ३ । २ । १० ॥

वेविषतः व्याप्नुवतः ६ । २१ । ५ ॥

वेविषाणाः शत्रुबलानि व्याप्नुवन्तः ७ । १८। १५ ॥

वेवेति भृशं व्याप्नोति (अत्र वाच्छन्दसीतीडभाव) ३ । ५५ । ६ । गच्छति ४ । ३८ । ६ ॥

वेशम् यो विशति तम् ५ । ८५ । ७ ॥ [वेशस्य] प्रवेशस्य ४ । ३ । १३ ॥

वेशय प्रापय १ । १७६ । २ ॥

वेश्यम् वेशेषु प्रवेशेषु भवम् ४ । २६ । ३ ॥

वेश्या उपवेष्टुं योग्येन ६ । ६१ । १४ । वेशी प्रवेशयित्री सूची तया ७ । १८ । १७ ॥

वेषणा व्याप्तेन पदार्थेन ४ । ३३ । २ ॥ [वेषणे] व्याप्ते ५ । ७ । ५ ॥

वेषत् अभिगच्छतु (तिपि लेट्प्रयोगः) १ । १८० । ६ ॥

वेषन्तीः व्याप्नुवत्यः १ । १८१ । ६ ॥

वेषाय सर्वशुभगुणविद्याव्याप्तये १ । ६ ॥

वेषि प्राप्नोषि १ । ७४ । ४ । व्याप्नोषि १ । ७६ । ४ । कामयसे १ । १७३ । ८ ॥

**वेष्पः** वेवेष्टि व्याप्नोति पृथ्वीमन्तरिक्षं वा स यज्ञोत्थो वाष्पो ज्ञानसमूहो वा (पानीविषिभ्यः पः। उ० ३ । २३ । अनेन विषेः पःप्रत्ययः ) १ । ३० ॥

**वेहत्** यस्य वीर्यं यस्या गर्भो वा विहन्यते स सा च १८ । २७ । या प्रसवं विहन्ति सा २१ । २१ । अकाले वृषभोपगमनेन गर्भघातिनी २४ । १ ॥

**वै** निश्चयेन २३ । १६ ॥

**वैकर्णयोः** विविधेषु कर्णेषु श्रोत्रेषु भवयोर्व्यवहारयोः ७ । १८ । ११ ॥

**वैदथिनाय** विज्ञानवतोऽपत्याय ४ । १६ । १३ । विदिथिना संग्रामकर्त्रा निर्मिताय ५ । २६ । ११ ॥

**वैददश्विः** योऽश्वान् विन्दति स विददश्वः तस्यापत्यं वैददश्विः ५ । ६१ । १० ॥

**वैद्युताः** विद्युद्देवताकाः २४ । १० ॥

**वैनंशिनाय** विनाशशीलेषु कर्मसु भवाय ६ । २० । विनष्टं शीलं यस्य तस्यायं बोधस्तस्मै १८ । २८ ॥

**वैन्दम्** निषादस्यापत्यम् ३० । १६ ॥

**वैरदेये** वैरं देयं येन तस्मिन् ५ । ६१ । ८ ॥

**वैरहत्याय** वैरं हत्या च यस्मिन् कर्मणि तस्मै ( प्रवर्तमानम् ) ३० । १३ ॥

**वैराजम्** यद् विविधैरर्थैः राजते तदेव १० । १३। विविधानां पदार्थानामिदं प्रकाशकम् १३ । ५७ । विराट्प्रतिपादकम् १५। १३॥

**[ वैराजेन ]** विराजि भवेनार्थेन २१।२६॥

**[ वैराजाभ्याम् ]** विराट्छन्दोज्ञापिताभ्याम् २६ । ६० ॥

वैराजम् ( साम ) (पिबा सोममिन्द्र मन्दतु त्वा ( ऋ० ७. २२. १ ) इत्यस्यामृच्युत्पन्नं वैराजं साम इति ऐ० ४. १३ भाष्ये सायणः) स वैराजमसृजत तदग्नेर्घोषोऽन्वसृज्यत । तां० ७. ८. ११ ॥ यद् बृहत्तद्वैराजम् । ऐ० ४. १३ ॥ प्रजापतिर्वैराजम् । तां० १६. ५. १७ ॥

**वैरिणाः** वीरिणेषु भवाः १ । १६१ । ३ ॥

**वैरूपम्** विविधानि रूपाणि यस्मिँस्तत् १० । १२ । विविधानि रूपाणि यस्मात्तस्येदम् १३ । ५६ ॥ **[ वैरूपेण ]** विविधानां रूपाणां भावेन २१ । २५ ॥

वैरूपम् ( साम ) देवा वै तृतीयेनाह्ना स्वर्गं लोकमायँस्तानसुरा रक्षांस्यन्ववारयन्त ते विरूपा भवत विरूपा भवतेति भवंत आयंस्ते यद्विरूपा भवत विरूपा भवतेति भवंत आयंस्तद्वैरूपं सामाऽभवत्तद्वैरूपस्य वैरूपत्वम् । ऐ० ५. १ ॥ ( यद् द्याव इन्द्र ते शतम् ( ऋ० ८. ७०. ५ ) इत्यस्यामृच्युत्पन्नं वैरूपं साम—इति ऐ० ४.१३ भाष्ये सायणः) यद्वै रथन्तरं तद्वैरूपम् । ऐ० ४. १३ ॥ रथन्तरमेतत्परोक्षं यद्वैरूपम् । तां० १२. २. ५, ९ ॥ बृहदेतत्परोक्षं यद्वैरूपम् । तां० १२. ८. ४ ॥ वाग्वै रूपम् । तां० १६.५.१६॥ पशवो वै वैरूपम् । तां० १४. ९. ८ ॥ दिशां वा एतत्साम यद्वैरूपम् । तां० १२. ४. ७ ॥ वर्षाभिर्ऋतुनादित्याः स्तोमे सप्तदशे स्तुतं वैरूपेण विशौजसा । तै० २. ६. १९. १—२ ॥ आदित्यास्त्वा जागतेन छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्नाऽऽरोहन्तु तानन्वारोहामि स्वाराज्याय । ऐ० ८. १२ ॥

**वैलस्थानके** वैलानि विलयुक्तानि स्थानानि यस्मिँस्तस्मिन् १ । १३३ । ३ ॥

**वैलस्थानम्** विलानामिदं वैलं तदेव स्थानं वैलस्थानम् १ । १३३ । १ ॥

**वैशन्तम्** वैशन्तस्य विशतो जनस्येमम् ७ । ३३ । २ ॥ [ वैशन्ताय ] वेशन्तेषु क्षुद्रेषु जलाशयेषु भवाय १६ । ३७ ॥

**वैशन्ताभ्यः** वेशन्ता अल्पजलाशयास्ता एव ताभ्यः ३० । १६ ॥

**वैश्यः** यो यत्र तत्र विशति प्रविशति तदपत्यम् ३१ । ११ ॥ [ वैश्यम् ] विक्षु प्रजासु भवम् ३० । ५ ॥

वैश्यो वै पुष्यतीव । कौ० २५. १५ ॥ वैश्यो वै ग्रामणीः । श० ५. ३. १. ६ ॥ जगतीछन्दा वै वैश्यः । तै० १. १. ९. ७ ॥ जागतो वै वैश्यः । ऐ० १. २८ ॥ वैश्वदेवो हि वैश्यः । तै० २. ७. २. २ ॥ विड् विश्वे देवाः । श० १०. ४. १. ९ ॥ शरद्वै वैश्यस्यर्तुः । तै० १. १. २. ७ ॥ तस्माद् बहुपशुर्वैश्वदेवो हि जागतो ( वैश्यः ) वर्षा ह्यस्य ( वैश्यस्य ) ऋतुस्तस्माद् ब्राह्मणस्य च राजन्यस्य चाद्योऽधरो हि सृष्टः । तां० ६. १. १० ॥ तस्माद्वैश्यो वर्षास्वादधीत विड्ढि वर्षाः । श० २. १. ३. ५ ॥ तस्माद्वैशीपुत्रं नाभिषिञ्चति । श० १३. २. ९. ८ ॥ अथ यदि दधि, वैश्यानां स भक्षो वैश्यांस्तेन भक्षेण जिन्विष्यसि वैश्यकल्पस्ते प्रजायामाजनिष्यतेऽन्यस्य बलिकृदन्यस्याऽऽद्यो यथाकाम ज्येयो यदा वै क्षत्रियाय पापं भवति वैश्यकल्पोऽस्य प्रजायामाजायत ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा वैश्यतामभ्युपैतोः स वैश्यतया जिज्यूषितः । ऐ० ७. २९ ॥ तस्मादपि ( दीक्षितं ) राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयाद् ब्रह्मणो हि जायते यो यज्ञाज्जायते । श० ३. २. १. ४० ॥ वैश्यं च शूद्रं चानु रासभः । श० ६. ४. ४. १२ ॥ मारुतो हि वैश्यः । तै० २. ७. २. २ ॥ एतद्वै वैश्यस्य समृद्धं (=समृद्धिरितिसायणः ) यत् पशवः । तां० १८. ४. ६॥ विड् वै यवः । श० १३. २. ९. ८ ॥ ऋग्भ्यो जातं वैश्यं वर्णमाहुः । तै० ३. १२. ९. २ ॥ विट् तृतीयसवनम् । कौ० १६. ४ ॥ रायोवाजीयं (साम) वैश्याय ( कुर्यात् ) । तां० १३. ४. १८ ॥

**वैश्वकर्मणः** विश्वानि समग्राणि कर्माणि यस्य स एव १८ । ६४। विश्वान्यखिलानि कर्माणि यस्मात्स एव १८ । ६५ । [ वैश्वकर्मणाः ] विश्वकर्मदेवताकाः २४ । १७ ॥ [ वैश्वकर्मणम् ] यस्माद्विश्वानि निवृत्तानि भवन्ति तत् १३ । ५५॥

**वैश्वदेवः** विश्वेषां देवानामयं सम्बन्धी १८ । २० । विश्वदेवदेवताकः २९ । ५८ । विश्वेषां देवानां दिव्यानां जीवानां पदार्थानाम्वा यः सम्बन्धी ३६ । ५ । [ वैश्वदेवम् ] यद्विश्वेषां देवानां विदुषामिदं तत् ४ । १८ । यथा विश्वेषां देवतानामिदमन्तरिक्षमधिकरणं तथा ५ । ३० ॥

वैश्वदेवम् ( पर्व ) यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम् । तै० १. ४. १०. ५ ॥ प्रजापतिर्वै वैश्वदेवम् । कौ० ५. १ ॥ ( शस्त्रम् ) पांचजन्यं वा एतदुक्थं यद्वैश्वदेवम् । ऐ० ३. ३१ ॥ पवमानोक्थं वा एतद्यद्वैश्वदेवम् । कौ० १६. ३ ॥ पशवो वै वैश्वदेवम् । कौ० १६. ३ ॥

**वैश्वदेवाग्निमारुते** वैश्वदेवाग्निमरुद्व्याख्यायिके १५ । १४ ॥

**वैश्वदेवी** विश्वासां देवीनां विदुषीनां मध्ये इयं विदुषी १६ । ४४ ॥

**वैश्वदेव्यः** विश्वदेवदेवताकाः २४ । ५ ॥

**वैश्वव्यचसम्** प्रकाशकम् १३ । ५६ ॥

**वैश्वानरः** सर्वनियन्ता १ । ५९ । ६ । सर्वेषां जीवानां नेता १ । ६८ । १ पावकः ३ । २ । १२ । विश्वेषां नराणां प्रकाशमानः ३ । २६ । ३ । विश्वेषु नरेषु राजमानः ५ । ५१ । १३ । विश्वेषां नराणां हितकारकः ६ । ७ । ७ । विश्वस्मिन्नरे नेतव्ये प्रकाशमानः ६ । ६ । १ । विश्वस्य संसारस्य प्रकाशकः ६ । ६ । ७ । विश्वेषां नराणां मध्ये राजमानः ७ । ६ । ६ । शरीरनेता जाठराग्निः, सर्वस्य नेता परमेश्वरः ४ । १५ । विश्वे सर्वे नरा यस्मिन् स एव १२ । २९ । विद्युदग्निः १२ । ७४ । विश्वेषां नराणामयं सत्कारः १८ । २० ॥ [वैश्वानरः] सर्वेषु मनुष्येष्विमे सत्यधर्मविद्याप्रकाशकाः ११ । ६० ॥ [वैश्वानरम्] विश्वस्मिन् प्रकाशमानम् ६ । ८ । ४ । सर्वेषु नरेषु नीतेषु प्राप्तेषु पदार्थेषु व्याप्तम् ३ । ३ । ५ । विश्वेषु वस्तुनायकम् ८२ । ३ । यो विश्वान्नरानानन्दान्नयति तम् ७ । २४ ॥ [वैश्वानराय] अग्निकर्मसाधनाय २६ । ७ । परब्रह्मोपासकाय १ । ५९ । ४ ॥ [वैश्वानरस्य] विश्वेषु नरेषु जीवेषु भवस्य १ । ६८ । १ ॥ [वैश्वानर] प्रधानपुरुष ३ । ३ । १० ॥

विश्वानर एव स्यात् प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरः । मध्यम इत्याचार्याः आदित्य इति पूर्वे याजिकाः...... अथापि वैश्वानरीयो द्वादशकपालं भवति......अथापि ब्राह्मणं भवत्यसौ वा आदित्योऽग्निर्वैश्वानर इति अथापि निवित् सौर्यवैश्वानरी भवति । नि० २१. २३ ॥

विश्वान्नरान्नयति । विश्व एनं नरानयन्तीति वा अपि वा स यः स वैश्वानरः । इमे स लोका इयमेव पृथिवी विश्वमग्निर्नरोऽन्तरिक्षमेव विश्व वायुर्नरो द्यौरेव विश्वमादित्यो नरः । श० ९. ३. १. ३॥ इयं (पृथिवी) वै वैश्वानरः । श० १३. ३. ८. ३ ॥ एष वै प्रतिष्ठा वैश्वानरः (यत्पृथिवी) । श० १०. ६. १.४॥ पादौ त्वाऽएतौ वैश्वानरस्य (यत्पृथिवी) । श० १०. ६ १. ४ ॥ एष वै रयिर्वैश्वानरः (यदापः) श० १०. ६. १. ५ ॥ वस्तिस्त्वाऽएष वैश्वानरस्य (यदापः) । १०. ६. १. ५ ॥ एष वै बहुलो वैश्वानरः (यदाकाशः) । श० १०. ६. १. ६ ॥ आत्मा त्वाऽएष वैश्वानरस्य (यदाकाशः) । श० १०. ६. १. ६ ॥ एष वै पृथग्वर्त्मा वैश्वानरः (यद्वायुः) । श० १०. ६. १. ७ ॥ प्राणस्त्वाऽएष वैश्वानरस्य यद्वायुः । श० १०. ६. १. ७ ॥ असौ वै वैश्वानरो योऽसौ (आदित्यः) तपति । कौ० ४. ३ ॥ १९. २ ॥ स यः स वैश्वानरः । असौ स आदित्यः । श० ९. ३. १. २५ ॥ (=सूर्यः) वैश्वानरो रश्मिभिर्मा पुनातु । तै० १. ४. ८. ३ ॥ एष वै सुततेजा वैश्वानरः (यदादित्यः) । श० १०. ६. १. ८ ॥ चक्षुस्त्वाऽएतद्वैश्वानरस्य (यदादित्यः) । श० १०. ६. १. ८ ॥ एष वा अतिष्ठा वैश्वानरः (यद् द्यौः) । श० १०. ६. १. ९ ॥ मूर्धा त्वाऽ एष वैश्वानरस्य (यद् द्यौः) । श० १०. ६. १. ९ ॥ स एषोऽग्निर्वैश्वानरो यत्पुरुषः । श० १०. ६. १. ११ ॥ अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैतं घोषꣳशृणोति । श० १४. ८. १०. १ ॥ वैश्वानर इति वा अग्नेः प्रियं धामः । तां० १४. २. ३ ॥ वैश्वानरो वै सर्वे ऽग्नयः । श० ६. २. १. ३५ ॥ ६. ६. १. ५ ॥ संवत्सरोऽग्निर्वैश्वानरः । ऐ० ३. १४ ॥ संवत्सरो वा अग्निर्वैश्वानरः । तै० १. ७. २. ५ ॥ श० ६. ६. १. २० ॥ संवत्सरो वैश्वनरः । श०. ५. २. ५. १५ ॥ ६. २. १. ३६ ॥ ६. ६. १. ५ ॥ ७. ३. १. ३५ ॥ ९. ३. १. १ ॥ संवत्सरो वै वैश्वानरः । श० ४. २. ४. ४ ॥ ५. २॥ ५. १४ ॥

**वैश्वानरज्योतिः** विश्वेषु नरेषु प्रकाशमानं

वैश्वानरं वैश्वानरं च तज्ज्योतिश्च वैश्वानरज्योति. २० । २३ ॥

वैष्णवः विष्णुदेवताकः २४।१॥ [ वैष्णवाः ] विष्णोर्व्यापकस्य ( परमात्मनः ) इम उपासकाः ५ । २५ ॥ [ वैष्णवम् ] यद्विष्णोर्यज्ञस्येदं साधनं साधकं वा स्यात् ५। २१ । विष्णोरिदं विज्ञानम् ५ । २५ ॥ [ वैष्णवान् ] विष्णुर्यज्ञो देवता येषां तान्, विष्णोर्यज्ञस्येमान्, यज्ञानुष्ठातॄन् ५। २५ ॥

वैष्णवी विष्णोरियं प्रिया, विष्णोः समग्रविद्याव्यापकस्येयं रीतिस्ताम् ५ । २५ । विष्णुदेवताका २४ । २६ ॥ [ वैष्णवीम् ] विष्णोर्व्यापकस्येमां वाचम् ५ । २३ ॥

वैष्णव्यौ यज्ञस्येमौ व्याप्तिकर्त्तारौ पवनपावकौ तौ १ । १२ । सकलविद्यासुशिक्षाशुभगुणस्वभावव्यापिनौ १० । ६ ॥

वोच उपदिश १ । १३२ । १ । उपदिशामि ६ । ५६ । १ ॥

वोचः प्रोक्तवान् ( अत्र वचधातोर्वर्तमाने लुङडभावश्च ) १। २७ । ४ । उपदिशेः ४। ५ । १२ । उच्याः ( अत्र लिङर्थे लुङ् । छन्दस्यमाङ्योगेपीत्यडभावः ) ६ । ३३ ॥

वोचः प्रब्रूहि । नि० ८. २० ॥

वोचत् उपदिशेत् १ । ११७ । २२ । उच्यात् ४ । ५ । ३ । वक्ति ६ । १५ । १० ॥

वोचत् विवक्ष्यतीति । नि० ७. ३० ॥

वोचत वदत ( अत्राडभावः ) २ । २१ । २॥

वोचतात् उपदिशतु ५ । ६१ । १८ ॥

वोचति उच्यात् वदेत् १ । १०५। ४ । उच्याः १ । १२३ । ३ ॥ वदति ( वचेर्लेट्यट् । वच उमित्युमागमः ) १६ । ६५ ॥

वोचतु उपदिशतु ३ । ५४ । १६ ॥

वोचन् उपदिशन्ति ४ । १ । १४ ॥

वोचन्त ब्रुवन्ति, उपदिशेयुः ५ । ५२ । १६ ॥

वोचम् उपदिशेयम् ( अत्र लिङर्थे लुङडभावश्च ) १ । ३२ । १ । कथयेयम् १ । ५९ । ६ । उच्याम् १ । १२६ ।३। ( अत्राडभावः ) वच्मि २ । १५ । १ ॥

वोचाम उपदिशेम १ । १६६ । १ । वदेम ( अत्राडभावः ) २ । ३० । ७ ॥

वोचावहै परस्परमुपदिशेव ( लेट्प्रयोगोऽयम् ) १ । २५ । १७ ॥

वोचासि उच्याः २३ । ५१ ॥

वोचे वदेयमुपदिशेयं वा ४ । ५ । ११ । वदामि ७ । ३३ । १ ॥

वोचे आह्वयामि । नि० ५. ७ ॥

वोचेः ब्रूयाः १ । १३२ । ३ ॥

वोचेत् गुणकर्मस्वभावत उपदिशेत् ३२ । ६ ॥

वोचेतम् ब्रूतम् १ । १२० । ३ ॥

वोचेम [ वोचेम ] उपदिशेम १ । ४० । ६ ।

उच्याम् (अत्राशीर्लिङ्ग्यङ् वच उमित्युमागमश्च) १। ७४। १। उच्याम (अयमाशिषि लिङ्युत्तमबहुवचने प्रयोगः। लिङ्याशिष्यङित्यङि कृते छन्दस्युभयथेति सार्वधातुकमाश्रित्येयूसकारलोपौ। वच उम्। अ०। ७। ४। २०। इत्यङि पर उमागमश्च) ३। ११॥

वोचेमहि वदेम (अत्राडभावः) १। १६७। १०॥

वोचेय कथयेयम् १। १२२। ५। उपदिशेय ४। १। १६॥

वोचेयम् उपदिशेयम् १। १२६। ६॥

वोचेयम् प्रब्रवीमि। नि० १०. ४२॥

वोचेयुः सम्प्रीत्या सर्वा विद्याः सर्वान्प्रत्युपदिश्यासुः (वचेराशिषि लिङि प्रथमस्य बहुवचने। लिङ्याशिष्यङ्। अ० ३। १। ८६ अनेन विकरणस्थान्यङ्प्रत्ययः, वच उम। अ० ७। ४।२० अनेनोमागमः) १। ४। ६॥

वोढ्हवे विद्याप्रापणाय १। ४५। ६। वोढुम्, देशान्तरे वहनाय वा (अत्र तुमर्थे तवेन्प्रत्ययः) १। १३४। ३। विमानादियानानां वाहनाय ६। ६०। १२॥

वोढ्हा विवाहिता ६। ६४। ३॥ [वोढ्हुः] वाहकस्याश्वादेः १। १४४। ३॥

वोढम् वहतम् २०। ८३। वहतः २। ४१। ६॥

वोढवे वोढुम् १५। ३१। वोढुं प्राप्तुं प्रापयितुं वा ३४। १५॥

वोढा वाहकः २२। २२॥

वोढ्वम् स्वयंवरविवाहविधिं प्राप्नुत (अत्र वह प्रापण इत्यस्माल्लोटि मध्यमबहुवचने बहुलं छन्दसीति शपो लुकि कृते सहिवहोरोदवर्णस्य। अ० ६। ३। ११२ इत्यनेनोकारः) ६। १३॥

व्यक्तः विविधाभिः पुष्टिभिः प्रसिद्धः १६। ८७। [व्यक्ताः] विशेषेण प्रसिद्धाः कमनीयाः ७। ५६। १॥

व्यंसः विप्रकृष्टा अंसाः बलादयो यस्य सः ४।१८। ६। [व्यंसम्] विगता अंसाः स्कन्धवदवयवाः यस्य तम् १। ३२। ५। विगता अंसाः स्कन्धा यस्य तम् १। १०१। २॥

व्यचः शुभगुणव्याप्तिः १५। ४॥ विविधं जलादिवस्त्वञ्चन्ति ताः (अत्र व्युपपदादचेः क्विन् ततो जस्) १। ३०। ३। व्याप्तिः १। ५२। १४।

व्यचस्वती सुखव्याप्तियुक्ते ११। ३०॥ [व्यचस्वतीः] व्याप्तिमत्यः २०। ६०। गमनावकाशयुक्ताः २८। २८। शुभगुणेषु व्याप्तिमतीः २६। ३०॥ [व्यचस्वतीम्] बहु व्यचो व्यञ्चनं विद्यागमनं सत्करणं वा विद्यते यस्यास्ताम् १३। १७। प्रशस्तं व्यचो विज्ञानं सत्करणं विद्यते यस्यास्ताम् १४। १२। प्रशस्तविद्याव्यापिकाम् १५। ६४॥

व्यचस्वतीः व्यञ्चनवत्यः। नि० ८. १०॥

व्यचस्वन्ता व्याप्नुवन्तौ ६ । २५ । ६ ॥

व्यचिष्ठम् अतिशयेन व्याप्तम् २ । १० । ४ । अतिशयेन विचितारं प्रक्षेतारम् ११ । २३ ॥

व्यचिष्ठः ( यजु० ११. २३ ) व्यचिष्ठमन्नेरभसं दृशानमित्यवकाशवन्तमन्नेरन्नादं दीप्यमानमित्ये-तत् । श० ६. ३. ३. १९ ॥

व्यच्यमानम् विविधप्रकारेण पालनीयम् १३। ४६ ॥

व्यच्यमानः ( यजु० १३. ४९ ) (=उपजीव्यमानः व्यच्यमानः सरिरस्य मध्यऽइतीमे वै लोकाः सरिरमुपजीव्यमानमेषु लोकेष्वित्येतत् । श० ७. ५. २. ३४ ॥

व्यतीन् विशेषेण प्राप्तबलान् १ । १५५ । ६ ॥ [ व्यतीनाम् ] गमनकर्तॄणाम् ४ । ३२ । १७ ॥

व्यथते भयं पीडां प्राप्नोति ५ । ३७ । ४ । पीड्यते ५ । ५४ । ७ ॥

व्यथमानाम् चलन्तीम् २ । १२ । २ ॥

व्यथय पीडय ६ । २५ । २ ॥

व्यथिः पीडा ४ । ४ । ३ । या व्यथते सा ५ । ५६ । २ । व्यथकः शत्रुः १३ । ११ ॥

व्यथिः क्रोधनाम । निघ० २. १२ ॥

व्यथितात् भयात्सञ्चलनात् ५ । ६ ॥

व्यथिषत् व्यथते ६ । १८ ॥

व्यथेते स्वस्वपरिधेरितस्ततो न चलतः ३ । ५४ । ८ ॥

व्यध्वनः विरुद्धोऽध्वा यस्य सः १ । १४१ । ७ ॥

व्यन्ता विविधबलोपेतौ १ । १२२ । ४ ॥

[ व्यन्तः ] व्याप्नुवन्तः १ । १२७ । ५ । व्याप्तविद्याक्रियाः ६ । १ । ४। प्राप्नुवन्तः ७ । २७ । ५ । वेदविद्यासु व्याप्नुवन्तः ६ । ४ ॥

व्यन्ति [ व्यन्ति ] कामयन्ताम् ( वाच्छन्द-सि सर्वे विधयो भवन्तीतीयङभावे यणादेशः । लेट्प्रयोगोऽयम् ) १ । १०५ । ७ । प्राप्नुवन्ति ५ । २३ । ३ ॥

व्यन्तु [ व्यन्तु ] कामयन्ताम् ५ । ४६।८ । व्याप्नुवन्तु प्राप्नुवन्तु वा ७ । ५७ । ६ ॥

व्यन्ताम् विशिष्टतया प्राप्नुवन्तु जानन्तु वा ६ । ६ ॥

व्ययस्व व्ययं कुरु ३ । ५३। १६ । धरस्व ११। ४० ॥

व्ययामसि प्राप्ताः स्मः १७ । ४ । संवृणोमि १७ । ५ ॥

व्ययेयम् व्ययं कुर्याम् २ । २६ । ६ । प्राप्नु-याम् ३३ । ५१ ॥

व्यवसाययात् निश्चयवतः कुर्यात् ( अयं व्यवपूर्वात् षोऽन्तकर्मणीति एजन्ताद्धा-तोः प्रथमपुरुषैकवचने तिपि लेट्प्रयोगः) ३ । ५८ ॥

व्यशूविने व्यापिने वीर्य्याय २२ । ३२ ॥

व्यश्वम् विविधा विगता वा अश्वास्तुरंगा अग्न्यादयो वा यस्मिन्सैन्ये याने वा तम् १ । ११२ । १५ ॥

**व्यस्तः** विविधतया प्रक्षिप्तः १ । ३२ । ७ । भिन्नाङ्गकृतः १।३२। ४ ( ३०३ भूमिः ) ॥

**व्यस्यन्** विविधतया प्रक्षिपन् ११ । ४७ ॥

**व्याघ्रः** यो विविधान् समन्ताद् जिघ्रति १४ । ६ ॥ [ व्याघ्रम् ] यो विशेषेणाजिघ्रति तम् १६ । १० । सिंहम् २१ । ३६ ॥

क्षत्रं वा एतदारण्यानां पशूनां यद्व्याघ्रः । ऐ० ८. ६ ॥ ऊवध्यादेवास्य मन्युरस्रवत्स व्याघ्रोऽभवदारण्यानां पशूना ंराजा । श० १२. ७.१.८ ॥

**व्याघ्रलोम** व्याघ्रस्य लोम व्याघ्रलोम १६ । ६२ ॥

**व्यात्तम्** विकासितं मुखमिव (अत्र वि आङ्पूर्वाद् डुदाञ्धातोः तः ) ३१ । २२। विकाशितम् ? ( १३६ भूमिका ) ॥

**व्याधिने** रोगिणे १६ । १८ ॥

**व्यानः** शरीरस्य सर्वेषु सन्धिषु व्याप्तः पवनः १८ । २ । सर्वसन्धिषु व्याप्तश्चेष्टानिमित्तः २२ । ३३॥ [ व्यानाय ] विविधमन्यते व्याप्यते येन तस्मै सर्वेषां शुभगुणानां कर्मविद्याङ्गानां च व्याप्ति हेतवे १ । २० । विविधमानयति यस्मा इव ७ । ३ । सर्वशरीरगतवायवे ७ । २७ । विविधोत्तमव्यवहाराय १३ । १६ । व्यानिति सर्वान् शुभगुणकर्मस्वभावान् येन तस्मै १३ । २४ । विविधविद्याव्याप्तये १५ । ६४ । यो विविधेष्वङ्गेष्वनिति व्याप्नोति तस्मै २२ । २३ ॥

व्यानो ह्युपांशुसवनोऽन्तरिक्षं ह्येव व्यनन्नभिव्यनिति । श० ४. १. २. २७ ॥ ( यज्ञस्य ) व्यान उपांशुसवनः । श० ४. १. १. १ ॥ व्यानो वरुणः । श० १२. ९. १. १६ ॥ व्यानः प्रतिहर्त्ता । कौ० १७. ७ ॥ गो० उ० ५. ४ ॥ व्यानो बृहती । तां० ७. ३. ८ ॥ आपो व्यानः । जै० उ० ४. २२. ९ ॥ ( प्रजापतिः ) व्यानादमुं ( द्यु– ) लोकम् ( प्रावृहत् ) । कौ० ६. १० ॥ ( तं संज्ञप्तं पशुं ) दक्षिणा दिग्व्यानेत्यनुप्राणद्व्यानमेवास्मिँस्तदद्धात् । श० ११. ८. ३. ६ ॥ द्विर्ऋतुनेति ( यजन्ति ) उपरिष्टाद्व्यानमेव तद्यजमाने दधति । कौ० १३. ९ ॥ निक्रीडित इव ह्ययं व्यानः । ष० २. २ ॥ व्यानः शस्या ( ऋक् ) श० १४. ६. १. १२ ॥

**व्यानदाः** या व्याप्तिविज्ञानं ददति १७ । १५ ॥

**व्यानशिः** व्याप्तः ३ । ४६ । ३ ॥

**व्याहृतायाम्** उपदिष्टायां सत्याम् ८ । ५४ ॥

**व्युच्छन्ति** दुःख विवासयन्ति १ । ११३ । १८ ॥

**व्युच्छन्ती** निवासं कुर्वन्ती १ । ४८ । ६ । विविधतया वासयन्ती १ । ४६ । ४ ॥ विविधानि तमांसि विवासयन्ती १ । ११३ । ७ ॥ [ व्युच्छन्तीम् ] निद्रां विवासयन्तीम् १ । ११३ । ११ ॥

**व्युच्छान्** व्युच्छन्ति तान् १ । ११३ । १० । विवासितान् ७ । ३० । ३ ॥

**व्युतम्** विविधतयोतं विस्तृतं वस्त्रम् १ । १२२ ।२॥ [ व्युते ] विगतावरणे प्रसिद्धे ३ । ५४ । ६ ॥

व्युन्दनम् विविधानामोषध्यादीनामुन्दनं क्लेदनं येन तत् २ । २ ॥

व्युन्दन्ति विविधतया क्लेदयन्त्यार्द्रयन्ति १ । ३८ । ६ ॥

व्युप्तकेशाय विशेषतयोप्ताश्छेदिताः केशा येन तस्मै संन्यासिने १६ । १६ ॥

व्युषि सेवसे ५ । ३ । ८ ॥

व्युषि विशिष्टे निवासे ५ । ४५ । ८ । विशेषेण दाहे ६ । ६२ । १ ॥

व्युष्ट्यै प्रदीताये दाहक्रियाये २२ । ३४ ॥

[ व्युष्टौ ] विशेषेणोष्यन्ते दह्यन्ते यया कान्त्या तस्याम् १ । ४८ । ६ । विशेषेण कामयमाने समये १ । ११८ । ११ । विशिष्टे निवासे १ । १२४ । १२ । विशेषेण दाहे ३ । १५ । २ । विशिष्टप्रतापे ४ । १४ । ४ । विशेषदीप्तौ ४ । २३ । ५ । विविधरूपायां सेवायाम् ४ । ३६ । ३ । प्रभातवेलायाम् ५ । ३० । १३ ॥

[ व्युष्टिषु ] विविधा उष्टयः कामनाश्च तासु १ । ४४ । ३। विशिष्टासु कामनास्व ध्योषितासु सतीषु १ । ४४ । ४ । विशेषेण दहन्ति यासु क्रियासु तासु ३ । २० । १ ॥

व्युष्टिवैं दिवा, व्येवास्मै वासयति । तां० ८. १. १३ ॥ व्युष्टिर्वा एष द्विरात्रो व्यवास्मै ( यजमानाय ) वासयति । तां० १८. ११. ११ ॥ अहर्व्युष्टिः । तै० ३. ८. १६. ४ ॥ रात्रिर्वै व्युष्टिः । श० १३. २. १. ६ ॥

व्यूर्णुते आच्छादयति ६ । ५० । ८ ॥

व्यूर्ण्वती विविधान् पदार्थानाच्छादयन्ती १ । ९२ । ११ । विशेषेणाच्छादयन्ती ५ । ८० । ६ ॥

व्यूषुः प्रकाश करती रहीं १ । ११३ । १० । विवसन्ति ३ । ५५ । १ ॥

व्यृद्ध्यै विगता चासौ ऋद्धिश्च व्यृद्धिस्तस्यै ३० । १७ ॥

व्येनसा विनष्टपापाचरणेन ३ । ३३ । १३ ॥

व्येनी या विशिष्टमृगीवद्वेगवती ५ । ८० । ४ ॥

व्योम व्यापकमवकाशम् १ । १६४ । ३४ । अवकाशः १ । १६४ । ३५ ॥ [ व्योमनि ] व्योमवद् व्यापके सर्वरक्षादिगुणान्विते ब्रह्मणि १ । १४३ । २ । व्योमवत् प्रकाशके व्यापके परमात्मनि ५ । ६३ । १ ॥

[ व्योमन् ] अन्तरिक्षे (अत्र सुपां सुलुगिति सप्तम्या लुक्) । १ । ९२ । ७ । व्योम्नि व्यापके परमेश्वरे १ । १६४ । ३९ । व्योमवत् व्याप्तेऽक्षुब्धे १ । १६४ । ४१ । व्यापके ३ । ३२ । १० । व्योम्नि बुद्ध्यवकाशे १६ । ७ । व्योम्नि व्याप्तेऽन्तरिक्षे वर्तमानाय १३ । ४६ ॥

व्योम अन्तरिक्षनाम । निघ० १. ३ ॥ व्योमन् व्यवने । नि० ११. ४० ॥

व्योमसत् यो व्योम्नि सीदति ४ । ४० । ५ ॥

[व्योमसदम्] विमानैर्व्योम्नि गच्छन्तम् ६ । २ ॥

व्योमसद् एष ( सूर्य्यः ) वै व्योमसद् व्योम वा एतत् सद्मनां यस्मिन्नेष आसन्नस्तपति । ऐ० ४. २० ॥

व्योमा व्योमवद् विस्तृतः १४ । २३ ॥

व्योमा ( यजु० १४. २३ ) व्योमा हि संवत्सरः। श० ८. ४. १. ११ ॥ प्रजापतिर्वै व्योमा। ८. ४. १. ११ ॥

**व्रजः** यो व्रजति गच्छति सः ३ । ३० । १० ॥

[ व्रजम् ] समूहं ज्ञानं वा १ । १० । ७ । निवासस्थानम् १ । ९२ । ४ । गच्छन्ति गावो यस्मिँस्तम् १ । १३० । ३ । अधर्ममार्गम् १ । १३२ । ४ । प्राप्तं देशम् १ । १५६ । ४ । शस्त्राऽस्त्रम् ४ । २० । ८ । व्रजन्ति यस्मिन् ५ । ३३ । १० । व्रजन्ति गच्छन्ति प्राप्नुवन्त्यापो यस्माद् यस्मिन् वा तं व्रजं मेघम् १ । २५ । व्रजन्ति जानन्ति जना येन तं सत्सङ्गम्, व्रजन्ति विद्वांसो यस्मिन् सन्मार्गे तम् १ । २६ ॥

[ व्रजा ] वेगान् ५ । ६ । ७ ॥ [व्रजस्य] व्रजितुं गन्तुं योग्यस्य १ । १३१ । ३ ॥

व्रजः मेघनाम निघ० १. १० ॥ व्रजत्यन्तरिक्षे नि० ६. २ ॥

**व्रजश्रितः** व्रजान् गवादिस्थित्यर्थान् देशान् श्रियन्ति निवासयन्ति ते १० । ४ ॥

**व्रजनम्** गमनम् १५ । ६२ ॥

**व्रजन्तीः** गच्छन्तीः ३ । ५६ । ३ ॥

**व्रजा इव** व्रजन्ति यया गत्या तद्वत् ५ । ६४ । १ ॥

**व्रजिनीः** वर्जनक्रियाः ५ । ४५ । १ ॥

**व्रज्याय** व्रजिषु क्रियासु भवाय १६ । ४४ ॥

**व्रतपते** व्रतं यन्न्याय्यं कर्म तत्पतिस्तत्सम्बुद्धौ २ । २८ । व्रतानां वेदादिविद्यानां पालयितः पालननिमित्तो वा ५ । ६ । सत्यभाषणादीनां व्रतानां कर्मणां वा पालक ( व्रतमिति कर्मनाम । निघ० २ । १ ) २० । २४ ( २२६ विधिः )।

अग्निर्वै देवानां व्रतपतिः । गो० उ० १. १४ ॥

**व्रतपाः** सत्यनियमरक्षकाः १ । ८३ । ५ । सुशीलरक्षकाः ३ । ४ । ७ । यो व्रतानि कर्माणि रक्षति सः ६ । ८ । २ । यो व्रतं सत्यं धर्माचरणनियमं पाति रक्षतीति ४ । १६ । व्रतानि सत्यभाषणादीनि पाति यस्माद् यया वा व्रतानि सुशीलादीनि पाति येन यया वा ५ । ६ । यथा सत्यपालको विद्वान् तथा तत्सम्बुद्धौ ५ । ४० ॥

**व्रतम्** सत्याचरणम् १ । २५ । १ । तत्तद्धर्म्यनियमम् १।३१। २। सत्यभाषणादिशीलम् १।६३। ८। सामर्थ्यं शीलं वा १। १०१। ३। शीलं नियमं वा २ । २८। ३। क्षमां न्यायप्रकाशं वा कर्म्म ३ । ५९ । ३ । कर्म ७ । ५ । ४ । सत्यभाषणं सत्यकरणं सत्यमानञ्च १ । ५ । सत्यलक्षणम् २ । २८ । नियमपूर्वकं धर्म्यादिचरणम् ४ । ११ ।

[ व्रतानि ] ब्रह्मचर्यादीनि ५ । ६ ॥

कर्मनाम निघ० २. १ ॥ व्रतम् कर्मनाम वृणोतीति सतः । नि० २. १३ ॥

( यजु० १३. ३३ ) अन्नं वै व्रतम् । श० ७. ५. १. २५ ॥ तां० २२. ४. ५ ॥ अन्नं व्रतम् । तां० २३. २७. २ ॥ अन्नꣳहि व्रतम् । श० ६. ६. ४. ५॥ तदु हाषाढः सावयसोऽनशनमेव व्रतं मेने । श० १. १. १. ७ ॥ एतत्खलु वै व्रतस्य रूपं यत्सत्यम् । श० १२. ८. २. ४ ॥ संवत्सरो वै व्रतं तस्य वसन्त ऋतुर्मुखं ग्रीष्मश्च वर्षाश्च पक्षौ शरन्मध्यꣳहेमन्तः पुच्छम् । तां० २१. १५. २ ॥ वीर्यं वै व्रतम् ।

श० १३. ४. १. १५॥ अमानुष इव वाऽएतद्भवति यद् व्रतमुपैति । श० १. ९. ३. २३ ॥ न ह वाऽ अव्रतस्य देवा हविरश्नन्ति । ऐ० ७. ११ ॥ क.० ३. १ ॥

व्रन् [ व्रन् ] अपवृणोति ४ । ५ । ८। वृणुयुः ४ । २ । १६ । वृणवन्ति ४ । ५५ । ६ ॥

व्रन्दिनः निन्दिता व्रन्दा मनुष्यादिसमूहा विद्यन्ते येषां तान् १। ५४। ४ । निन्दिता व्रन्दा सन्ति येषां तान् दुष्टान् १।५४।५ ॥

व्रन्दी व्रन्दतेर्मृदुभावकर्मणः । नि० ५. १५ ॥

व्रयः वर्जनीयाः ( अयं बहुलमेतन्निदर्शनमिति वृधातुर्ग्राह्यः २ । २३ । १६ ॥

व्राः ये व्रजन्ति ते ( अत्र व्रजधातोर्बाहुलकादौणादिको डःप्रत्ययः । व्रा इति पदनाम । निघ० ४ । २ ) १ । १२६ । ५ । या व्रियन्ते ताः ४ । १ । १६ ॥ [ व्राम् ] वरीतुमर्हाम् ( वृञ्धातोर्बाहुलकादौणादिको डःप्रत्ययः । व्रा इति )

व्राः व्रात्याः । नि० ५. ३ ॥

व्राणाः आवृत्ताः १ । ६१ । १० ॥

व्रातपतिभ्यः मनुष्याणां पालकेभ्यः १६ । २५ ॥

व्रातंव्रातम् वर्तमानं वर्तमानम् ३ । २६ । ६ ॥

व्रातसहाः ये व्रतानि शत्रुसमूहानि सहन्ते ते ६ । ७५ । ९ । ये व्रातान् वीराणां समूहान् सहन्ते ते २९ । ४६ ॥

व्रातासः व्रतेषु सत्याचरणेषु भवाः १।१६३। ८। मनुष्याः २६।१६॥ [ व्रातम् ] व्रतानां सत्यभाषणादीनां समूहस्तत् ३ । ५५ ॥

व्राताः मनुष्यनाम । निघ० २. ३॥

विषम इव वै व्रातः (=व्रात्यसमुदायः इति सायणः) । तां० १७. १. ५, ११ ॥

व्रार्यम असंस्कृतम् ३० । ८ ॥

व्राधतः अतिप्रवृद्धान् शत्रून् १ । १०० । ६ । विरोधिनः १ । १२२ । १० ॥

व्राधत महन्नाम । निघ० ३. ३ ॥

व्राधन्त वर्धन्ते ५ । ६ । ७ ॥

व्राधन्तः वर्धमानाः ( अत्र पृषोदरादिना पूर्वस्याकारादेशो व्यत्ययेन परस्मैपदञ्च) १ । १३५ । ९ ॥ [ व्राधन्तम् ] व्याघमिव प्रजाहिंसकम् ४ । ३२ । ३ ॥

व्राधन्तमः अतिशयेन वर्धमानः १ । १५० । ३ ॥

व्रिशः प्रजाः ( अत्र वर्णव्यत्ययेन वस्यस्थाने व्रः ) १ । १४४ । ५ ॥

व्रिशः अंगुलिनाम । निघ० २. ५ ॥

व्रेशीनाम् दिव्यानामपामिव निर्मलविद्यासुशीलव्याप्तानाम् ( एता वै दैवीरापस्तद्याश्चैव दैवीरापो याश्चेमा मानुष्यस्ताभिरेवास्मिन्नेतदुभयीभी रसं दधाति।श० ११ । ४ । २ । ८ ) ८ । ४८ ॥

# श

**शंयुना** सुखमयेन १६ । २६ ॥ [ शंयोः ]

कल्याणवतः साधनात्कर्मणः सुखवतो वा, सुखात् ( अत्र कंशंभ्यां वभयुस्ति-तुतयसः । अ० ५ । २ । १३८ इति शमो युस्प्रत्ययः ) ३ । ४३ । शं लौकिकं पारमार्थिकं सुखं विद्यते यस्मिँस्तस्य १ । ४३ । ४ ॥

शंयुः शमनं च रोगाणां यावनं च भयानाम् । अथापि शंयुर्बार्हस्पत्य उच्यते । नि० ४. २१ ॥

**शंस** [ शंस ] स्तुहि ३ । ४६ । १ । प्रशंस ७ । ३१ । २ । अनुशाधि १ । ३७ । ५ ॥

**शंसः** शंसन्ति यत्र सः १ । १८ । ३ । शस्यते यः सः १ । ६४ । ८ । प्रशंसकः १। १७८। ४ । स्तुत्यः २ । २६ । १ । स्तुतिः २ । ३४ । ६ । अनुशासनं प्रशंसा वा ७ । ३५ । २ ॥

वाक् शंसः । ऐ० २. ४ ॥

**शंसत्** शंसेत् ६ । २३ । ५ ॥

**शंसत** स्तुवीत तद्गुणान् प्रकाशयत ( अत्रा-न्तर्गतो ण्यर्थः ) १ । २१ । २ । प्रशंसत ४ । ३५ ॥

**शंसन्** प्रशंसन् ४ । ५१ । ७ ॥ [ शंसन्तः ] स्तुवन्तः ३ । ४ । ७ । उपदिशन्तः ६ । २६ । ४ ॥

**शंसन्ति** [ शंसन्ति ] स्तुवन्ति ३ । ३ । ८ । प्रशंसन्ति ५ । ७७ । १ ॥

**शंसम्** शंसन्ति येन तं स्तुतिसमूहम् १ । २७ । १३ । शंसन्ति येन शास्त्रबोधेन तम् १ । ३३ । ७ । प्रशस्तम् १ । १२२ । ५ । स्तुतिम् १ । १८२ । ४ । प्रशंसनीयं विजयम् ७ । २५ । २ । प्रशंसाम् ७ । ३४ । १२ । प्रशंसकम् ७ । ५६ । १६ ॥

**शंसय** प्रशस्तान् कुरु १ । २६ । १ । प्रकृष्ट-गुणवतः कुरु १ । २६ । २ । प्रकृष्टज्ञान-वतः कुरु १ । २६ । ३ । प्रशंसायुक्तान् कुरु १ । २६ । ४ । सत्यानपराधान् सम्पादय १ । २६ । ५ । प्रशंसय १। २६ । ६ । सुखिनः सम्पादय १ । २६ । ७ ॥

**शंससि** स्तौषि २ । ४३ । २ ॥

**शंसाः** प्रशंसाः ७ । २५ । ३ ॥

**शंसाति** प्रशंसेत् ४ । ६ । ११ । शंसेत ४ । १६ । २ ॥

**शंसामः** स्तुमः १ । ६० । ५ ॥

**शंसामि** प्रशंसामि ४ । ३२ । २२ ॥

**शंसाव** प्रशंसेव ३ । ५३ । ३ ॥

**शंसि** स्तौषि २ । ४ । ८ ॥

**शंसिषः** प्रशंसेः १ । ८४ । १६ । प्रशंस ( लोड्-मध्यमैकवचनप्रयोगः ) ६ । ३७ ॥

**शंसिषम्** प्रशंसेयम् ६ । ४८ । १ ॥

**श९स्ता** प्रशंसकः २५ । २८ ॥

**शंस्यम्** शंसितुं योग्यम् १ । १० । ५ । स्तुत्यं

संसिद्धिकरम् १ । ११६ । ११ । प्रशंस नीयं कर्म्म ६ । २६ । ३ ॥

**शकः** समन्ताच्छक्नुहि ७ । २० । ६ ॥

**शकत्** शक्नोति १ । १० । ६ ॥

**शकपिण्डैः** शक्तेः संघातैः २५ । ७ ॥

**शकमर्यम्** शक्तिमयम् १ । १६४ । ४३ ॥

**शका** शकः शक्यमानः ( अत्र सुपां सुलुगित्याकारादेशः ) २४ । ३२ ॥

**शकुनः** शक्तिमान् १८ । ५३ । पक्षी ४ । २६ । ६ ॥

**शकुनिः** पक्षी २४ । ४० । [ **शकुने** ] शकुनिवच्छक्तिमन् वक्तृत्वशक्तियुक्त २ । ४३ । २ ॥

शकुनिः शक्नोत्युन्नेतुमात्मानं, शक्नोति नदितुमिति वा, शक्नोति तकितुमिति वा, सर्वतः शंकरोऽस्त्विति वा, शक्नोतेर्वा । नि० ९. ३ ॥

**शकुनिसादेन** येन शकुनीन् सादयति तेन २५ । ३ ॥

**शकुन्तकः** निर्बलः पक्षीव २३ । २३ ॥

**शकुन्तयः** शक्तिमन्तः २ । ४३ । १ ॥

**शकुन्तिका** कपिञ्जली १ । १९१ । ११ । अल्पा पक्षिणीव निर्बला २३ । २२॥

**शकुलाविव** ह्रस्वौ मत्स्याविव २३ । २८ ॥

**शकृत्** विष्ठेव १ । १६१ । १० ॥ [ **शक्ना** ] शकृता दुर्गन्धादिनिवारणसामर्थ्येन धूमादिना, ३७ । ६ ॥

**शकेम** शक्नुयाम ११ । १० ॥

**शकेयम्** यथा समर्थो भवेयम् १ । ५ ॥

**शक्मम्** समर्थम् ५ । ६८ । ३ ॥

**शक्तिः** सामर्थ्यम् १८ । १५ ॥

[ **शक्तिम्** ] तीक्ष्णाग्राम् २ । ३६ । ७ ॥

[ **शक्ती** ] आत्मसामर्थ्येन ( अत्र सुपां सुलुगिति तृतीयैकवचनस्य पूर्वसवर्णादेशः ) १ । ३१ । १८ ॥

शक्तिः कर्मनाम । निघ० २. १ ॥

**शक्तिवन्तः** प्रशस्ता बह्वी शक्तिः सामर्थ्यं विद्यते येषां ते ६ । ७५ । ६ ॥

**शक्नवाम** समर्था भवेम १ । २७ । १३ ॥

**शक्म** शक्यं कर्म्म २ । ३८ । ४ ॥

शक्म कर्मनाम निघ० २. १ ॥

**शक्रः** समर्थः शक्तिमान् १ । १० । ५ । दातुं समर्थः १ । १० । ६ ॥ [ **शक्रम्** ] आशुकर्त्तारम् २० । ५० ॥

**शक्रा** शक्तिनिमित्ता ५ । ४१ । १५ ॥

**शक्रने** शक्तिमद्वीरसैन्यप्राप्तये ५ । ५ ॥

**शक्रीः** शक्तिमत्यः १० । ४ । शक्तिनिमित्ता गाः २१ । २७ । [ **शक्रयः** ] शक्तयः १८ । २२ ॥ [ **शक्करीषु** ] शक्तिमतीषु सेनासु ७ । ३३ । ४ ॥

शक्वरी बाहुनाम । निघ० २. ४॥ गोनाम २.११॥

शक्वर्य्य ऋचः शक्नोतेः । तद्यदाभिर्वृत्रमशकद्धन्तुं तच्छक्वरीणां शक्वरीत्वमिति विज्ञायते । नि० १. ८ ॥

शक्वर्यः ( ऋचः ) यदिमाँल्लोकान्प्रजापतिः सृष्ट्वेदं

सर्वमशक्नोद्यदिदं किंच तच्छक्वर्योऽभवंस्तच्छक्वरीणां शक्वरीत्वम्। ऐ० ५. ७ ॥ इन्द्रः प्रजापतिमुपाधावद् वृत्रं हनानीति तस्मा एतच्छन्दोभ्य इन्द्रियं वीर्यं निर्माय प्रायच्छदेतेन शक्नुहीति तच्छक्वरीणां शक्वरीत्वम्। तां० १३. ४. १ ॥ एताभिर्वा इन्द्रो वृत्रमशकद्धन्तुं तद्यदाभिर्वृत्रमशकद्धन्तुं तस्माच्छक्वर्यः। कौ० २३. २ ॥ एताभिः (भुरिग्भिः शक्वरीभिः) वा इन्द्रो वृत्रमहन् क्षिप्रं वा एताभिः पाप्मानं हन्ति क्षिप्रं वसीयान् भवति। तां० १२. १३. २३ ॥ पशवः शक्वर्यः। तां० १३. १. ३ ॥ पशवो वै शक्वर्यः। तां० १३ ४. १३ ॥ १३. ५. १८ ॥ पशवो वै शक्वरीः। तै० १. ७. ५. ४ ॥ पशवः शक्वरीः। तां० १९. ७. ६ ॥ श्रीः शक्वर्यः। तां० १३. २. २ ॥ शाक्वरो वज्रः। तै० २. १. ५. ११ ॥ वज्रः शक्वर्यः। तां० १२. १३. १४ ॥ रथन्तरमेतत्परोक्षं यच्छक्वर्यः। तां० १३. २. ८ ॥ ब्रह्म शक्वर्यः। तां० १६. ५. १८ ॥ सप्तपदा वै तेषां (छन्दसां) पराध्यां शक्वरी। श० ३. ९. २. १७ ॥ सप्तपदा शक्वरी। तै० २. १. ५. ११ ॥ तां० १९. ७. ६ ॥ स (प्रजापतिः) शक्वरीरसृजत तदपाङ्‌ घोषोऽन्वसृज्यत तां० ७. ८. १२ ॥

**शग्धि** [शग्धि] सुखदानाय समर्थोऽसि (अत्र बहुलं छन्दसीति श्नोर्लुक्) १। ४२। ६। समर्थो भव ५। १७। ५। देहि ४। २१। १० ॥

शग्धि याच्ञाकर्मा। निघ० ३. १९ ॥

**शग्मः** शग्मं सुखं विद्यते यस्य सः (अर्श आदिभ्योऽच् शग्ममिति सुखनाम। निघ० ३। ६) ६। ४४। २॥ [शग्मम्] सुखम् ६। ७५। ८॥

शग्म कर्मनाम। निघ० २. १॥ शग्मम् सुखनाम। ३. ६ ॥

**शग्माम्** सुखमयीम् ५। ४३। ११ ॥

**शग्म्येन** शग्मेषु सुखेषु भवेन ३। ३१। १ ॥

**शङ्कराय** यः सर्वेषां सुखं करोति तस्मै १६। ४१ ॥

**शङ्कवः** कीलाः १। १६४। ४७।

शंकु (साम) तद् (शंकु साम) उ सीदन्तीयमित्याहुः। तां० ११. १०. १२ ॥ शंकु भवत्यह्नो धृत्यै यद्वा अधृतं शंकुना तद्दाधार। तां० ११. १०. ११ ॥

**शङ्खध्मम्** यः शंखान् धमति तम् ३०। १९ ॥

**शङ्गवे** शं सुखं गच्छति प्राप्नोति तस्मै १६। ४० ॥

**शचिष्ठः** अतिशयेन प्राज्ञः ४। २०। ९ ॥

**शचिष्ठया** अतिशयेन श्रेष्ठया वाचा प्रज्ञया कर्मणा वा ४। ३१। १। अतिशयेन शची प्रज्ञा तया वृता वर्तमानया ३६। ४ ॥

**शचीपतिः** प्रजापतिर्वाक्पतिर्वा ४। ३०। १७ ॥

**शचीभिः** प्रज्ञाभिः कर्मभिर्वा प्रजाभिः सह ६। ४४। ६। उत्तमाभिर्वाग्भिः ७। ६। ४ ॥

शची कर्मनाम। निघ० २.१॥ वाङ्नाम। १.११ ॥ प्रज्ञानाम ३. ९ ॥

**शचीवसू** शचीं प्रज्ञां वासयितारौ १। १३९। ५ ॥

**शचीवाव** बहुप्रज्ञावान् ४। २२। २ ॥ [शचीवः] शची बहुविधं कर्म बह्वी

प्रज्ञा वा विद्यते यस्य तत्सम्बुद्धौ (शचीति प्रज्ञानामसु० निघ० । ३ । ६ । कर्मनामसु च निघ० २ । १ । अत्र छन्दसीर इति मतुपो मस्य वः । मतुवसो रु० । अ० ८ । ३ । १ । इति रुत्वञ्च ) १ । २६ । २ । शची प्रशस्ता वाक् प्रज्ञा कर्म वा विद्यतेऽस्मिन् तत्सम्बुद्धौ १ । ६२ । १२ ॥

शचीवः कर्मवन् । नि० ५. ११ ॥

**शण्डः** शमान्वितः ७ । १२ ॥

**शण्डिकानाम्** शत्रूणां तस्याऽवयवभूतानां ( मध्ये वर्तमानम् ) २ । ३० । ८॥

**शत ऊतिम्** शतान्यूतयो येन तम् ६ । ६३।५॥

**शतक्रतुः** शतमसंख्याताः क्रतवः प्रज्ञा कर्माणि वा यस्य सः ३३ । ९६ ॥ [ शतक्रतो ] शतान्यसंख्याताः क्रतवः कर्माणि यस्य शूरवीरस्य सूर्यलोकस्य वा सः ( शतमिति बहुनामसु० । निघ० ३ । १ । क्रतुरिति कर्मनामसु० । निघ० २ । १ ) १ । ४ । ८ । शतेष्वसंख्यातेषु वस्तुषु क्रतुः प्रज्ञा यस्य तत्सम्बुद्धौ ( क्रतुरिति प्रज्ञानामसु० निघ० । ३। ९ ) १ । ४ । ९ । शतमसंख्यातानि क्रतवः कर्माण्यनन्ता प्रज्ञा वा यस्य तत्सम्बुद्धौ सर्वकामप्रदेश्वर ! १ । १६ । ९ । ( १०९ आर्य० ) । शतानि बहुविधानि कर्माणि वा बहुविधा प्रज्ञा वा यस्य तत्सम्बुद्धौ सभासेनाध्यक्ष १ । ३० । ६ । शतविधप्रज्ञाकर्मयुक्त सभेश राजन् १ । ३० । १५ । असंख्यातोत्तमप्रज्ञ बहूत्तमकर्मन् वा न्यायाध्यक्ष १ । १०५ । ८॥

शतक्रतुः इन्द्र आसीत्सीरपतिः शतक्रतुः । तै० २. ४. ८. ७ ॥

**शतग्विनम्** शतग्वोऽसंख्याता गावो विद्यन्ते यस्मिँस्तम् ४ । ४९ । ४ ॥

**शततमम्** अतिशयेनासंख्यातम् ४ । २६ । ३॥ [ शततमा ] अतिशयेन शतानि ७ । १९। ५ ॥

**शततेजाः** शतानि बहूनि तेजांसि यस्मिन्स सूर्यः १ । २४ ॥

**शतदायम्** असंख्यदायभागिनम् २ । ३२ । ४ ॥

**शतदाव्ने** असंख्यदाने ५ । २७ । ६ ॥

शतदायम् शतप्रदम् । नि० ११. ३१ ॥

**शतदुरेषु** शतावरणेषु मेघावयवेषु घनेषु १ । ५१ । ३ ॥

**शतद्वसुम्** शतान्यसंख्यातानि वसूनि यस्मिँस्तम् । अत्र पृषोदरादित्वात् पूर्वपदस्य तुगागमः । १ । ११९ । १ ॥

**शतधन्यम्** असंख्ये धने साधुम् ४ । १८ । ३ ॥

**शतधन्वने** धनुर्विद्याद्यसंख्यशास्त्रविद्याशिक्षकाय १६ । २९ ॥

**शतधारः** शतशो धारा वाचो यस्य सः १९ । ८७ ॥ [ शतधारम् ] शतं बहुविधमसंख्यातं विश्वं धरतीति तम् १ । ३ । शतमसंख्याता दुग्धधारा यस्मात्तम् १३ । ४९ ॥ [ शतधारेण ] बहुविद्याधारकेण परमेश्वरेण वेदेन वा १ । ३ ॥

**शतनीथः** शतानि नीथानि यस्य सः १ ।

१०० । १२ ॥ [शतनीथम्] शतैः प्राप्तव्यम् १ । १७६ । ३॥

शतपद्भिः शतैर्गमनशीलैः पादवेगैः १।११६।४। शतेनासंख्यातेन वेगेन पद्भ्यां यथा गच्छेत्तादृशैरत्यन्तवेगवद्भिः १।११६। ४॥ (१९८ भूमि०)

शतपयाः शतानि पयांसि दुग्धादीनि वस्तूनि यस्य सः १७ । ५६ ॥

शतपर्वणा शतस्यासंख्यातस्य जीवजातस्य पर्व पालनं यस्मात्तेन ३३ । ९ । ६ । शतान्यसंख्यातानि पर्वाण्यलं कर्माणि वा यस्मात्तेन १ । ८० । ६ ॥

शतपवित्राः शतैरुपायैर्ये शुद्धाः ७ । ४७ । ३ ॥

शतभुजिः शतमसंख्याता भुजयः पालनानि यस्याः सा ७ । १५। १४॥ [शतभुजिभिः] शतमसंख्यं सुखं भोक्तुं शीलं येषां तैः १ । १६६ । ८ ॥

शतम् शतं शताद्धिकानि वा २ । २७ । शतवार्षिकम् २५ । २२ । असंख्यम् ३६ । ६ ॥ एषा वाव यज्ञस्य मात्रा यच्छतम् । तां २०.१५. १२ ॥

शतमन्युः शतधा मन्युः क्रोधो यस्य सः १७। ३९॥

शतमानम् शतमसंख्यं मानं यस्य तत् १९ । ९३ ॥

शतमूतिः शतमसंख्याता ऊतयो रक्षणादिका क्रिया यस्य सः १ । १०२ । ६ । शतमसंख्याता ऊतयो रक्षा यस्मात्सः १ । १३० । ८ ॥

शतमूर्द्धन् शतेष्वसंख्यातेषु मूर्द्धा मस्तकं यस्य तत्सम्बुद्धौ १७ । ७१ ॥

शतरुद्रियाणाम् शतं रुद्राः शतरुद्राः शतरुद्रा देवता येषां तेषाम् २१ । ४३ । बहूनां मध्ये विद्वदधिष्ठातॄणाम् २१ । ४४ । शतानां रुद्राणां दुष्टसेवकानाम् २१ । ४५ ॥

शतवन् शतानि बलानि विद्यन्ते यस्य तत्सम्बुद्धौ ६ । ४७ । ९ ॥

शतवल्शः शतानि वल्शा अंकुरा यस्य सः ३ । ८ । ११ । यथा बह्वंकुरो वृक्षस्तथा ५ । ४३ ॥

शतवल्शा शतमसंख्याता वल्शा अंकुरा यस्याः सा १२ । १०० ॥

शतविचक्षणाः शतमसंख्या विचक्षणा गुणा यासु ताः १२ । ९२ ॥

शतव्रजाः शतमसंख्याता व्रजा मार्गा यासां ताः १७ । ९३ । अपरिमितगतयः ४ । ५८ । ५ ॥

शतशारदाय शतं शरदो जीवनाय ३४ । ५२ ।

शतसाः यः शतानि सनति सम्भजति ४ । ३८ । १० ॥

शतसेयाय शतादिसंख्यापरिमितधनावसानाय ३ । १८ । ३ ॥

शतस्वी शतमसंख्यं स्वं धनं विद्यते यस्य सः ७ । ५८ । ४ ॥

शतहिमा शतं हिमानि यस्या आयुषि सा २।१ । ११ ॥ [ शतहिमाः ] शतं हिमानि यासु सभासु ताः १ । ७३ । ६। यावच्छतं वर्षान् तावत् ६ । ४ । ८ ॥

शतंहिमा हेमन्तर्तवः गच्छन्ति येषु संवत्सरेषु ते शतहिमा यावत्स्युस्तावत् १६। ५५ । ४ । ( ४१ पञ्च० )

शतात्मा शतेष्वसंख्यातेषु पदार्थेष्वात्मा विज्ञानं यस्य सः १ । १४६। ३ ॥

शतानीकाय शतान्यनीकानि सैनिकानि यस्य तस्मै ३४ । ५२ ॥

शतायुषम् शतवर्षजीविनम् ६ । २ । ५ ॥

शतारित्राम् शतसंख्याकान्यरित्राणि जलपरिमाणग्रहणार्थानि स्तम्भनानि वा यस्याम् १ । ११६ । ५ शतान्यरित्राणि लोहमयानि समुद्रस्थलान्तरिक्षमध्ये स्तम्भनार्थानि गाधग्रहणार्थानि च भवन्ति यस्यां तां शतारित्राम् १। ११६। ५ । (२०२ भूमि० ) ॥

शतावयम् शतान्यवयवा यस्मिँस्तम् ५ । ६१ । ५ ॥

शताश्रिम् यः शतान्याश्रयति तम् ६ । १७ । १० ॥

शतिनः प्रशस्तैर्गुणैः सह शतधा वर्तमानस्य १५ । २१ । शतमसंख्याताः प्रशंसिता विद्याकर्माणि वा विद्यन्ते येषां ते ( अत्र प्रशंसार्थे इनिः ) १ । ३१ । १० । शतमसंख्यातं बलं येषामस्ति ते ७ । ५७ । ७ ॥ [ शतिनम् ] शतशो विद्यायुक्तम् १ । १२४ । १३ । अपरिमितसंख्यम् २ । २ । ६ । शतधा योद्धृसेनासहितम् ६ । ८ । ६ ॥

शतिनीभिः शतसंख्याताः प्रशस्ता गतयो यासु क्रियासु ताभिः सह १ । ५६ । ७ । शतानि बहवो वीरा विद्यन्ते यासु सेनासु ताभिः १ । १३५ । १ । प्रशस्तासंख्यातसेनाङ्गयुक्ताभिश्चमूभिः १। १३५ । ३ । शतं बहूनि कर्माणि विद्यन्ते यासु ताभिः २७ । २८ ॥

शतेषुधे शतमसंख्याः शस्त्रास्त्रप्रकोशा यस्य तत्सम्बुद्धौ १६ । १३ ॥

शत्रिम् दुःखविच्छेदकम् ५ । ३४ । ६ ॥

शत्रुः विरोधी १।३६।४॥ [ शत्रवः ] अमित्राः १ । ५ । ४ ॥ [ शत्रुम् ] शातयितारम् २ । २३ । ११ ॥ [ शत्रून् ] मेघावयवान् १ । ३३ । १३ । दुष्टकर्मकर्तॄन् ३। ३० । ६॥ धर्मविरोधिनः ६ । ४४ । १७। सत्यन्यायविरोधे प्रवर्तमानान् ७ । ३७ ॥

शत्रुतूर्याय शत्रूणां हिंसनाय ६ । २२ । १० ॥

शत्रूयन्तम् शत्रून् कामयमानम् ७ । २० । ३॥ [ शत्रूयताम् ] शत्रुरिवाचरताम् १ । ३३। १५ ॥

शन्तमः शं सुखमतिशयितं यस्मिन् सः १ ।

१६ । ७ । अतिशयेन आनन्दप्रदः १ । ७७। २ ॥ [शन्तमेन] अतिशयितेन सुखेन ५। ७६ । ३ ॥

शन्तमम् अतिशयितं सुखम् १ । ४३ । १ ॥ [शन्तमानि] अतिशयेन सुखकराणि ६ । २३ । ६ । अतिशयेन कल्याणकराणि ६ । ३२। १ ॥

शन्तमा अतिशयेन सुखप्रापिका १ । ७६ । १ । अतिशयेन कल्याणकारिणी ५ । ४३। ८ ॥

शन्ताती शं सुखस्य कर्त्तारौ (अत्र शिवशमरिष्टस्य करे । अ० ४ । ४ । १३३ । इति तातिल्प्रत्ययः) १ । ११२ । २० ॥

शपथ्यात् शपथे भवात् कर्मणः १२ । ६० ॥

शपन्तम् आक्रोशन्तम् १ । ४१ । ८ ॥

शपामहे शपामहे ६ । २२ । उपलम्भामहे २०। १८ ॥

शफच्युतः शफेषु गवादिखुरचिह्नेषु च्युतः पतित आसिक्तो य सः १ । ३३ । १४ ॥

शफवत् शफा विद्यन्ते यस्मिन्पदे तत् ३ । ३६ । ६ । शफेन तुल्यम् ५ । ८३ । ५ ॥

शफाः खुराः १२ । ४ ॥ [शफाविव] यथा खुरौ परस्परेण सम्बद्धौ २ । ३६ । ३ ॥ [शफात्] खुरादिव जलसेकस्थानात् १। ११६ । ७ । खुरात् शं फणति प्रापयतीति शफो वेगस्तस्माद्वा (अत्रान्येभ्योऽपि दृश्यत इति डः पृषोदरादित्वान्मलोपश्च) १ । ११७ ।६॥ [शफानाम्] शं फणन्ति तेषाम् १ । १६३ । ५ ॥

शम् सुखम् ६ । १५ । कल्याणकारकं ज्ञानम् ८ । २६ । रोगनिवारणम् १ । ११४ । २ ॥ सुखकारी, आरोग्यसुखदः, शान्तिप्रदः, ऐश्वर्यसौख्यप्रदः, विद्याख्यातिप्रदः १ । ६० । ६ । (१४ आर्य०) । कल्याणकारिणी १२ । ६२ । सुखकारिणी ३५ । ५ ॥

शम् सुखनाम । निं० ३. ६ ॥

शमम् शाम्यन्ति येन तम् १ । ३३ । १५ ॥ [शमस्य] शाम्यन्ति येन तस्य शान्तियुक्तस्य मनुष्यस्य १ । ३२ । १५ ॥

शमाये शममिवाचरामि ३ । १ । १ ॥

शमितम् उपशान्तम् १७ । ५७ ॥

शमिता उपशमादिगुणयुक्तः १७ । ५७ । यज्ञः २० । ४५ । शान्तिप्रदः २१ । २१ । यज्ञस्य कर्त्ता २३ । ३६ । यज्ञसम्बन्धी २७ । २१ ॥ [शमितारा] संगतान्नस्य निष्पादितारः १ । १६२ । १० । अध्ययनाध्यापनाख्ये यज्ञे शमादिगुणानां प्रापकाः २३ । ४० ॥

शमिता अग्निगुश्चापापश्च । उभौ देवानाँ शमितारौ । तै० ३. ६. ६. ४॥ मृत्युस्तद्भवद्धाता। शमितोग्रो विशां पतिः । तै० ३. १२. ९. ६ ॥ मृत्युः शमिता । तां० २५. १८. ४ ॥

शमी उत्तमं कर्म्म ४। २२।८॥ [शमि] कर्माणि (अत्र वर्णव्यत्ययेन ह्रस्वः । सुपां सुलुगिति सुलोपः) २ । ३१ । ६ ॥

शमी कर्मनाम । निघ० २. १॥ कर्माणि । नि० ११. १६ ॥

शमी (वृक्षः) प्रजापतिरग्निमसृजत सोऽबिभेत्प्र मा धक्ष्यतीति तँ शम्याशमयत् । तच्छम्यै

शमीत्वम् । तै० १. १. ३. ११, १२ ॥ तद्यदेतँ शम्याशमयंस्तस्माच्छमी । श० ६. २. ३. ३७ ॥ शमीमयं (शंकुं) उत्तरतः, शं मे ऽसदिति । श० १३. ८. ४. १ ॥ शं वै प्रजापतिः प्रजाभ्यः शमीपलाशैरकुरुत । श० २. ५. २. १२ ॥ यया ते सृष्टस्याग्नेः । हेतिमशमयत्प्रजापतिः । तामिमामप्रदाहाय शमीँ शान्त्यै हराम्यहम् । तै० १. २. १. ६, ७ ॥

शमीष्व दुःखनिवृत्तये सुखसम्पादनार्थं कुरुष्व (शमु उपशम इत्यस्मात् बहुलं छन्दसीति श्यनो लुक् । तुरुस्तुशम्यमः अ० ७ । ३ । ९५ इतीडागमः । महीधरेणात्र शपो लुगित्यशुद्धं व्याख्यातम्) १ । १५ ॥

शम्बरम् बलम् १ । ५१ । ६ । शं सुखं वृणोति येन तं मेघमिव शत्रुम् १ । ५४ । ४ । अधर्मसम्बन्धिनम् (अत्र शम्बधातोरौणादिकोऽरन्प्रत्ययः) १ । १०१ । २। शं सुखं वृणोति यस्मात्तं मेघम् ४ । ३० । १४ । शंकरम् ६ । २६ । ५ ॥ [शम्बराणि] शम्बरस्य मेघस्य सम्बन्धीन्यभ्राणि २ । २४ । २ ॥

शम्बरम् मेघनाम । निघ० १ । १० ॥

शम्बरहत्ये शम्बरस्य बलस्य हत्या हननं यस्मिन् युद्धादिव्यवहारे तस्मिन् १ । ११२ । १४ ॥

शम्भवाय यः शं सुखं भावयति तस्मै परमेश्वराय सेनाधीशाय वा (अत्रान्तर्भावितो ण्यर्थः) १६ । ४१ ॥ (२५४ आर्य०)

शम्भविष्ठः सुखस्य भावयितृतमः १ । १७१ । ३ । अतिशयेन कल्याणकारकः ४ । ४३ । २ ॥

शम्भु सुखसम्पादकम् १ । ६५ । ३ ॥

शम्भुः यः शं सुखं भावयति सः ७।३५। १०॥

शम्भुः सुखभूः । नि० ५ । ३ ॥

शम्भूः यः शं सुखं भावयति सः, शं कल्याणं भावयति सः वा १८ । ४५ ॥

शम्यति शाम्यति शमं प्रापयति (अत्र वाच्छन्दसीति दीर्घत्वाभावः) २३ । ३९ ॥

शम्यन्तः शान्तिं प्रापयन्तः २३ । ४१ ॥

शम्यन्तीः शमं प्राप्नुवतीः प्रापयन्त्यो वा २३ । ३७ । दुष्टस्वभावं निवारयन्त्यः २३ । ४२ ॥

शम्यन्तु शान्तियुक्त करें वा सब विद्याओं का बोध करावें ।२३ । ३३ ॥

शम्याः शम्यां कर्मणि भवाः ३ । ३३ । १३ ॥

जिह्वैव शम्या । श० १. २. १. १७ ॥

शयते शेते (अत्र बहुलं छन्दसीति शपो लुङ् न) १ । ३२ । ५ ॥

शयथाय शयनाय ६ । १८ । ८ ॥

शयथे शयनं करोति ६ । १७ । ९ ॥

शयध्यै शयितुम् २ । १७ । ६ ॥

शयनम् शयनम् १८ । ६ ॥

शयाण्डकः पक्षिविशेषः २४ । ३३ ॥

शयानम् कृतशयनम् १।३२।८ । कृतशयनमिव वर्तमानम् २ । १२ । ११ । शयानमिवाचरन्तम् ५ । ३२ । २ ॥

शयासु शेरते यासु विद्युदादयः पदार्थाः तासु ३ । ५५ । ४ ॥

**शयुः** यः प्रलये सर्वाणि भूतानि शाययति सः १।३१।२। योऽभिव्याप्य शेते ३ ।५५। ६॥ [शयवे] सुखेन शयनशीलाय १ । ११२ । १६ । शयानाय १ । ११६ । २२ ॥

**शयुत्रा** यो शयून् शयानान् त्रायतस्तौ १ । ११७ । १२ ॥

शयुत्रा शयने । नि० ३. १५ ॥

**शये** [शये] शेते ( अत्र लोपस्त आत्मनेपदेषु अ० ७ । १ । ४१ । इति लोपः ) १ । ३२ । ८। शयनं कुर्याम्।४। ३० । ११ ॥ [आ–] गर्भाशय में ठहरता है । अ० ६ । ३ । ६। ( २०४ विधिः )

शये आशेते । नि० ११. ४८ ॥

**शरणम्** आश्रयम् १ । १५८ । ३ । आश्रयितुं योग्यम् ६ । ४३ । ६ ॥ [शरणा] शरणौ शत्रूणां हिंसकौ ६ । ४७ ८ ॥ [शरणैः] दुःखादीनां हिंसनैः ३ । ६२ । ३ ॥ [शरणे] गृहे १ । १५० । १ । शरणागतपालने कर्मणि ७ । १६ । ८ ॥

शरणम् गृहनाम । निघ० ३. ४ ॥

**शरणिम्** अविद्यादिदोषहिंसिकां विद्याम् (अत्र शृधातोर्बाहुलकादौणादिकोऽणिःप्रत्ययः) १ । ३१ । १६ ॥

**शरत्** शरद् ऋतुः १० । १३ । शृणाति येन सा १३ । ५७ । अर्द्धरात्रः -३१ । १४ ॥ शरदृतूपलक्षितान् संवत्सरान् १। ८६।६॥

शरदः । शरच्छृता अस्यामोषधयो भवन्ति । शीर्णा आप इति वा । नि० ४. २५ ॥

शरद्वै बर्हिरिति हि शरद्बर्हियां इमा ओषधयो ग्रीष्महेमन्ताभ्यां नित्यक्ता भवन्ति ता वर्षा वर्द्धन्ते ताः शरदि बर्हिषो रूपं प्रस्तीर्णाः शेरे तस्माच्छरद्बर्हिः । श० १. ५. ३. १२ ॥ बर्हिर्यजति शरदमेव शरदि हि बर्हिष्ठा ओषधयो भवन्ति । कौ० ३. ४ ॥ शरदि ह खलु वै भूयिष्ठा ओषधयः पच्यन्ते । जै० उ० १. ३५. ५ ॥ तस्माच्छरदमोषधयोऽभिसंपच्यन्ते । तां० २१. १५. ३ ॥ स्वधा वै शरद् । श० १३. ८. १. ४ ॥ शरत्प्रतिहारः । ष० ३. १ ॥ (प्रजापतिः ) शरदम्प्रतिहारम् ( अकरोत् ) । जै० उ० १. १२. ७ ॥ शरद्वै वैश्यस्यर्तुः । तै० १. १. २. ७ ॥ शरद्वा अस्य ( रुद्रस्य ) अम्बिका स्वसा । तै० १. ६. १०. ४ ॥ शरदुत्तरः पक्षः ( संवत्सरस्य ) । तै० ३. ११. १० ।४॥ शरत्पुच्छम् ( संवत्सरस्य ) । तै० ३.११. १०. ३ ॥ यद्विद्योतते तच्छरदः ( रूपम् ) । श० २. २. ३. ८ ॥ षड्भिर्मैत्रावरुणैः ( पशुभिः ) शरदि ( यजते ) । श० १३. ५. ४. २८ ॥ वर्षाशरदौ सारस्वताभ्याम् ( अवरुन्धे ) । श० १२. ८. २. ३४ ॥ शरद्ब्रह्म तस्माद्यदा सस्यं पच्यते ब्रह्मण्वत्यः प्रजा इत्याहुः । श० ११. २. ७. ३२ ॥ शरदेव सर्वम् । गो० पू० ५. १५॥

**शरद्वान्** शरदो या ऋतवस्ता विद्यन्ते यस्मिन् सः १ । १८१ । ६ ॥

**शरभम्** शल्यकम् १३ । ५१ ॥

**शरव्यायै** शर्वीषु कुशलायै २४ । ४० । शराणां निर्माणाय ३० । ७ ॥ [शरव्ये] शरेषु वाणेषु साध्वी स्त्री तत्सम्बुद्धौ १७ । ४५ । ये शरान् व्याप्नुवन्ति तत्र साध्वि ६ । ७५ । १६ ॥

**शरसि** तडागे ३६ । ५ ॥

**शरसे** हिंसकाय ३८ । १५ ॥

**शरासः** वेणुदण्डसदृशा अन्तश्छिद्रास्तृणविशेषस्थाः १ । १९१ । ३ ॥ [शरस्य] हिंसकस्य सकाशात् १ । ११६ । २२ ॥

शरिरस्य अन्तरिक्षस्य १३ । ४६ ॥

शरीतोः शरीतुं दुष्टस्वभावं हिंसितुं शक्नोति ३ । ५३ । १७ ॥

शरीरम् शीर्यते हिंस्यते यत्तत् १ । ३२ । १०। [शरीराणि] देहाः १८ । ३ । आश्रयान् ३५ । ५ ॥

शरीरम् शृणातेः शम्नातेर्वा । नि० २. १६ ॥ अथ यत्सर्वमस्मिन्नश्रयन्त तस्मादु शरीरम् । श० ६. १. १. ४ ॥ अशरीरं वै रेतोऽशरीरा वपा यद्वै लोहितं यन्मांसं तच्छरीरम् । ऐ० २. १४ ॥ शरीरं हृदये (श्रितम्) । तै० ३. १०. ८. ७ ॥

शरुः दुष्टानां हिंसिका ऋष्टिः १ । १७२ । २ । हिंसकः १ । १८६ । ६ ॥ [शर्वा] शासनवज्रेण २ । १२ । १० ॥ [शरवे] हिंसनाय ६ । २७ । ६ । दुष्टानां हिंसकाय ४। ३ । ७ ॥

शर्धः बलम् १ । ३७ । १ ॥ [शर्धम्] बलयुक्तम् ५ । ५६ । ९ ॥

शर्धः बलनाम । निघ० २. ९ ॥

शर्धत् उत्सहेत् ७ । २१ । ५ ॥

शर्धनीतिः बलस्य सैन्यस्य नीतिर्नायकः ३ । ३४।३। शर्धस्य बलस्य नीतिर्नयनं प्रापणं यस्य ३३ । २६ ॥

शर्धन्तः बलयन्तः ७ ।३४ ।१८ ॥ [शर्धन्तम्] बलवन्तम् २ । ३० । ८ ॥ [शर्धते] बलाय ६ । २४। ८। यः शर्द्धं करोति तस्मै २ । १२ । १० । [शर्धताम्] बलं कुर्वताम् (बलवाचिशर्ध शब्दात् करोत्यर्थे क्विप् । ततः शतृ) १५ । ४० ॥

शर्धमानः सहमानः २० । ३८ ॥

शर्धस्तरः अतिशयेन बलवान् १ । १२२ । १० ॥

शर्ध्यम् शर्धेषु बलेषु भवम् १ । ११९ । ५ ॥

शर्म सर्वदुःखरहितं सुखम् (शृणाति हिनस्ति दुःखानि यत्तत्) १ । १७ । ८ । गृहस्वरूपं सुखकारकं वा १ । ३४ । ६ । शृणन्ति दुःखानि यस्मिन् तद् गृहम् २६ । १० ॥ [शर्मणा] विग्रहेण ७ ।५१। १। [शर्मन्] न्यायगृहे (अत्र सुपां सुलुगिति ङेर्लुक् । नङि सम्बुद्ध्योः । अ० ८ । २ । ८ इति नलोपाभावः) ७ । ३५ ॥

शर्म गृहनाम । निघ० ३. ४ ॥ शर्म शरणम् । नि० ९. १९ ॥

चर्म वाऽएतत्कृष्णस्य (मृगस्य) तन्मानुषं शर्म देवत्रा । श० ३. २. १. ८ ॥ (ऋ० ३. १३. ४) वाग्वै शर्म । ऐ० २. ४० ॥ (ऋ० ३. १३. ४) अग्निर्वै शर्माण्यन्नाद्यानि यच्छति । ऐ० २. ४१ ॥

शर्मसदः ये शर्मणि सुखे सीदन्ति ते १ । ७३। ३ ॥

शर्यणावति शर्यणोऽन्तरिक्षदेशस्तस्यादूरभवे (अत्र मध्वादिभ्यश्च अ० ४ । २ । ८६ । अनेन मतुप्) १ । ८४ । १४ ॥

शर्यहा हन्तव्यहन्ता ६ । १६ । ३९ ॥

शर्यातम् शरोहिंसकान् प्राप्तम् १ । ११२ । १७ ॥

शर्याम् वायुताडनाख्यां क्रियाम् १ । ४८ । ४ ॥ [शर्याभिः] गतिभिः ७ । १७ ॥

शर्याः अंगुलिनाम । निघ० २. ५.॥ शर्या अंगुलयो भवन्ति । शर्या इषवः शरमयः । नि० ५. ४॥

**शर्यैः** हिंसितुं ताडितुमर्हैः यन्त्रैः १ । ११६ । १० । पुनः पुनर्हननप्रेरणगुणैः (युक्तम्) १ । ११६ । १० । ( २०९ भूमि० )

**शर्वरीः** रात्रीः ५ । ५२ । ३ ॥

शर्वरी रात्रिनाम । निघ० १. ७ ॥

**शर्वा** सवदुःखहिंसकः १ । १०० । १८ ॥

**शर्वाः** हिंसकाः १६ । ५७ ॥ [शर्वा] शर्वाणि हिंसनानि ४।२८।३ ॥ [ शर्वम् ] विज्ञातारम ३९।८॥ [ शर्वाय ] दुष्टानां हिंसकाय १६ । २८ ॥ [ शर्वस्य ] सुखप्रापकस्य ३९ । ९ ॥

यच्छर्वोऽग्निस्तेन । कौ ६. ३ ॥ अग्निर्वै स देवस्तस्यैतानि नामानि, शर्व इति यथा प्राच्या आचक्षते भव इति यथा वाहीकाः, पशूनां पती रुद्रोऽग्निरिति । श० १. ७. ३. ८ ॥ आपो वै सर्वः (=शर्वः=रुद्रः) अद्भ्यो हीदँ सर्वं जायते । श० ६. १. ३. ११ ॥ एतान्यष्टौ ( रुद्रः शर्वः=सर्वः, पशुपतिः, उग्रः अशनिः, भवः, महान्देवः, ईशानः ) अग्निरूपाणि । कुमारो नवमः । श० ६. १. ३. १८॥

**शल्मलिः** वृक्षविशेषः २३ । १३ ॥

शल्मलिर्वनस्पतीनां वर्षिष्ठं वर्धते । श० १३. २. ७. ४ ॥

**शल्यकः** कण्टकपक्षयुक्तः श्वावत् २४ । ३५॥

शल्यकः तस्याः ( गायत्र्याः ) अनु विसृज्य कृशानुः सोमपालः सव्यस्य पदो नखमच्छिदत्तच्छल्यकोऽभवत्तस्मात्स नखमिव । ऐ० ३. २६ ॥

**शल्यानाम्** शस्त्राणाम् ( मुखानि ) १६ । १३ ॥

**शवः** बलमुदकं वा ३३ । ६७ । गमनम ५ । ५८ । ७ । बलहेतुम ६ । ४३ । ४ ॥ [ शवसा ] विद्यासुशिक्षाबलेन १ । ११० । ७ । परिचरणेन ( शवति परिचरणकर्मा । निघ० ३ । ५ । अस्मादसुनि कृति रूपसिद्धिः ) ५ । ११ । ५ ॥ [ शवोभिः ] सेनाद्यैः बलैः १ । १३० । ४ ॥ [ शवसः ] अनन्तबलस्य प्रमितबलस्य वा १ । ११ । २ ॥

शवः उदकनाम । निघ० १. १२ ॥ बलनाम । २. ९॥ शवसा बलेन । नि० १०. २९. शवसः महतो बलस्य । १२. २१ ॥

( यजु० १२. १०६ ॥ १८. ५१ ) बलं वै शवः । श० ७. ३. १. २९ ॥ ९. ४. ४. ३ ॥

**शवलाः** किञ्चिच्छ्वेताः २४ । १० ॥

**शवसानाय** ज्ञानबलयुक्ताय १ । ६२ । १ । ज्ञानवते १ । ६२ । २ । विज्ञानाय ३४ । १६ । ब्रह्मचर्यसुशिक्षाभ्यां शरीरात्मबलयुक्ताय ३४ । १७ ॥ [ शवसान ] बलयुक्त १ । ६२ । १३ ॥

शवसानम् अभिबलायमानम् । नि० १०. ३ ॥

**शवसावन्** बलयुक्त १ । ६२ । ११ ॥

**शवसिन्** बहुविधं शवो बलं विद्यते यस्य तत्सम्बुद्धौ ७ । २८ । २ ॥

**शविष्ठा** अतिशयेन नित्यबलसाधकौ ८ । ५९ ॥ [ शविष्ठाः ] अतिशयेन बलवन्तः १० । ४ ॥ [ शविष्ठ ] बहु शवो बलं यस्य स शवस्वान् सोऽतिशयितस्तत्सम्बुद्धौ ( अत्र शवशब्दात् भूम्न्यर्थे मतुप् । तत इष्ठन् विन्मतोर्लुक् । अ० ५ । ३ । ६५ इति मतुपो लुक् । टेः अ० ६ । १ । ५५ अनेन टिलोपः ) ६। ३७। अतिशयेन बलवत्, प्राप्तविद्य १ । १२७ । ११ ॥

**शवीरया** वेगवत्या ( शव गतावित्यस्माद्धातो

रन्प्रत्यये टापि च शर्वरीति सिद्धम् ) १ । ३ । २ । देशान्तरप्रापिकया गत्या (शु गताविस्यस्माद्धातोर्बाहुलकादौणादिक ईरन्प्रत्ययः ) १ । ३० । १७ ॥

शशः पशुविशेष इव वायुः २३ । ५६ ॥

शशमते शाम्येत् ६ । २ । ४ ॥

शशमानः स्तोतुमर्हः १ । २४ । ४। प्लवमानः १ । १५१ । ७ । प्रशंसन् ४ । २३ । ४ । वर्द्धमानः २० । ६५ ॥ [ शशमानाः ] अविद्या उल्लङ्घमानाः ५ । २६ । १२ । शत्रुवलस्योल्लङ्घकाः ४ । १६ । १५ ॥ [ शशमानम् ] अधर्ममुल्लंघमानम् २ । १२ । १४ । अन्यायमुल्लंघमानम् २ । २० । ३ ॥ [ शशमानाय ] विज्ञानवते ( शशमान इति पदनाम । निघ० ४।३ ) १।८५ । १२ । प्रशंसिताय १ । ११३ । २० । अधर्ममाप्लुत्य धर्मं प्राप्नुवते १ । १४१ । १० । सर्वेषां दुःखानामुल्लंघकाय ४ । २ । १३ ॥ [ शशमानस्य ] विज्ञातव्यस्य ( अत्र अधीगर्थ इति शेषत्वविवक्षायां षष्ठी) १। ८६। ८। दुःखमुल्लंघतः १। १४२ । २ ॥ [ शशमानेषु ] भोगाभ्यासोल्लङ्घमानेषु ३ । १८ । ४ ॥

शशमानः अर्चतिकर्मा । निघ० ३. १४ ॥

शशमे प्रशंसामि (शशमान इति अर्चतिकर्मा । निघ० ३ । १४ ) ६ । १ । ६ । शाम्यति निरुपद्रवो भवति ( अत्र एत्वाभ्यासलोपाभावश्छान्दसः ) ३३ । ८७ ॥

शशयः शेते यस्मिन्त्सः ३८ । ५ । शयान इव १ । १६४ । ४६ ॥ [ शशयम् ] खशयं मेघम् ( अत्र वर्णव्यत्ययेन खस्य शः ) ३। ५७ । २ ॥

शशयानः कृतशयनः ५ । ७८ । ६ ॥

शशयानाः शिश्यानाः । नि० ९. ६ ॥

शशाः उत्प्लवस्व १ । ८० । १ ॥

शशाधि शिक्षय ७ । १ । २० ॥

शशास शाधि २ । २६ । ५ ॥

शशासुः अनुशासतु ३ । १ । २ । शासति ४ । २ । १२ ॥

शशीयसी अतिशयेन दुःखं प्लावयन्ती ५ । ६१ । ६ ॥

शशीयांसम् धर्ममुत्प्लवमानम् ४ । ३२ । ३ ॥

शश्रमाणः भृशं श्रमं कुर्वन् ४ । १२ । २ ॥

शश्रमाणा तपोन्विता १ । १७६ । १ ॥

शश्वचै परिष्वङ्गाय ३ । ३३ । १० ॥

शश्वचै परिष्वजनाय । नि० २. २७ ॥

शश्वत् अनादिरूपम् १ । ४७ । १० । निरन्तरम् १ । ११६ । ६ । अनादिस्वरूपाज्जगत्कारणात् १ । ३० । १६ ॥ [ शश्वतः ] निरन्तरो व्याप्तः ५ । १६ । ४ । सनातनविद्यायुक्तान् १ । १३५ । ७ । अनादिस्वरूपस्य परमेश्वरस्य सम्बन्धात् १ । ७२ । १ ॥

शश्वत् बहुनाम । निघ० ३. १ ॥

शश्वतीः अनादिस्वरूपाः १ । २७ । ७ । अविनश्वराः ६ । २६ । [ शश्वतीनाम् ] प्रवाहरूपेणानादीनाम् १ । ११३ । ८ । अनादिभूतानां घटिकानाम् । १ । ११३ । १५ । सनातनीनामुषसां प्रकृतीनाम्वा १। १२४ । २ । अनादिभूतानां प्रकृतिजीवा-

ख्यानां प्रजानाम् ३ । ५६ । ३ ॥

शश्वत्तमम् अनादिस्वरूपमनुत्पन्नं कारणम् २ । ३८ । १ । अनादिभूतं शब्दार्थसम्बन्धम् ३ । १ । २३ । अतिशयेनानादिभूतम् ३ । ३५ । ६ । अतिशयितमनादिरूपं वेदबोधम् १२ । ५१ ॥

शश्वत्तमा याऽतिशयेन सनातनी १ । १२४ । ४ ॥

शश्वत्तमा शाश्वतिकतमा । नि० ४. १६ ॥

शश्वत्शश्वत् व्यापकं व्यापकं वस्तु ३ । ३६ । १ ॥

शश्वधा शश्वदेव ३ । ३३ । ७ ॥

शश्वान् शीघ्रगतिमान् ( शश प्लुतगताविति धातोः क्विबन्तान्मतुप् ) २ । ३८ । ६ ॥ [शश्वन्ता] सनातनौ १ । १६४ । ३८ ॥ [ शश्वन्तः ] अनादिभूता जीवाः ५।१४ । ३ । अनादिभूताः प्रवाहेण नित्याः पृथिव्यादयः ७ । १ । ३ । निरन्तराः ७ । १८ । १८ ॥ [ शश्वन्तम् ] अनादिभूतं वेदविद्याविषयम् ६ । ६१ । १ ॥

शष्पाणि आहृत्य संशोध्य ग्राह्याणि धान्यानि १९ । १३ । [शष्पैः] दीर्घैर्लोमभिः १९ । ८१ । हिंसनैः २१ । २९ । हिंसकैः ( अत्रौणादिको बाहुलकात् कर्त्तरि पः ) २१ । ४२ ॥

शष्पिञ्जराः षड्ढिंसकः पिंजरो वर्णो येषां ते १६ । ५८ । [ शष्पिञ्जराय ] षड्प्लुतं पिञ्जरं बन्धनं येन तस्मै १६ । १७ ॥

शष्प्याय शष्पेषु तृणादिषु साधवे १६ । ४२॥

शसनम् हिंसनं ताडनम् १ । १६३ । १२ । शंसन्ति हिंसन्ति यस्मिँस्तद्युद्धम् २९ । २३ ॥

शसा प्रशंसया ५ । ४१ । १८ ॥

शस्त ताडयत हिंस्त १ । १६२ । १८ । प्रशंसत ४ । ३७ । ८ । छिन्त २५ । ४१ ॥

शस्तम् स्तुत्यं कर्म्म ३३ । २४ । प्रशंसितम् ३ । ५३ । ३ । प्रशंसनीयम् ५ । ४७ । ७ ॥

शस्तिः प्रशंसा ४ । ३ । १५ ॥

शस्तोक्थस्य शस्तानि प्रशंसितानि उक्थानि ऋक्सूक्तानि येन तस्य ८ । १२ ॥

शस्त्राणाम् शंसन्ति यैस्तेषाम् १९ । २५ ॥

शस्त्रम् तद्यदेनच्छयति तस्माच्छस्त्रं नाम । श० ४. ३. २. ३ ॥ विट् शस्त्रम् । ष० १. ४ ॥ प्रजा शस्त्रम् । श० ४. २. २. २० ॥ वाग्वि शस्त्रम् । ऐ० ३. ४४ ॥

शस्मन् स्तोतुमर्हे १ । ११९ । २ ॥

शस्यते स्तूयते १ । ८३ । ४ । प्रशंसितो भवति १ । ११० १ । उच्चार्य्यते ३। ६२ । ७ ॥

शस्यन्ते स्तूयन्ते ७ । ५६ । २३ ॥

शस्यमानः स्तूयमानः ७ । ८ । ३ ॥ [शस्यमानम् ] प्रशंसितव्यम् ४ । ४ । १५ ॥ प्रशंसितं सत् १७ । ९० ॥

शस्यमाना स्तूयमाना ३ । ३९ । १ । स्तवनीया ६ । २४ । ७ ॥

शस्यसे स्तूयसे ६ । ५ । ६ ॥

शाकाः शक्तिमत्यः ६ । २४ । ४ ॥ [ शाकैः ] शक्तिभिः ४ । १७ । ११ ॥

शाकी [ शाकी ] प्रशस्तः शाकः शक्तिर्विद्यते यस्य सः १।५१।८। अवश्यं शक्तुं शीलः १७।८५॥ [ शाकिने ] प्रशस्ताः शाकाः शक्तियुक्ताः गुणा विद्यन्ते यस्मिँस्तस्मै १।५४।२॥

शाक्वरैवते शाक्वरं च रैवतं च ते १०।१४। शक्तिधनप्रतिपादके १३।५८॥

शाक्राय शक्तिजननाय ५।५ । शक्तिजाय २९।६०॥

शाखा वृक्षावयवाः १।८।८। याः खे अन्तरिक्षे शेरते ताः ७।४३।१॥

शाखाः अंगुलिनाम। निघ० २. ५. शाखा खशयाः शक्नोतेर्वा। नि० १. ४॥

शाचीन् व्यक्तान् २३।८॥

शाण्डः यः श्यति तनूकरोति तथाऽयम् [ अत्र शो तनूकरण इत्यस्मादौणादिकोऽडच्प्रत्ययः ] ६।६३।९॥

शातवनेये शतान्यसंख्यातानि वनयः संभक्तयो येषां ते शतवनयस्तैर्निर्वृत्ते जगति १।५९।७॥

शादम् शीयते छिनत्ति यस्मिँस्तं शादम् २५।१॥

शाधि शिक्षस्व २।२८।९॥

शान्तमया अतिशयेन सुखप्रापिका १६।२॥

शान्तमेन अत्यन्तसुखरूपेण कर्मणा १३।१९। अतिशयेन सुखकारकेण १४।१२। अतिशयसुखेन १५।६४॥

शान्तिः शान्तिकरः ३६।१७॥ [ शान्त्यै ] सुखाय ३।४३॥

शान्तिरापः। श० १. २. २. ११॥

शार्पम् शपन्त्याक्रुश्यन्ति येन तम् ७।१८।५॥

शापः नैनँ शप्तम्। नाभिचरितमागच्छति य एवं वेद। तै० ३. १२. ५. १॥

शाम्बरम् शम्बरे मेघे भवम् ६।४७। २२॥ [ शाम्बरे ] शम्बरस्यायं संग्रामस्तस्मिन् ३।४७।४॥

शारदी शरदो व्याख्यात्री १३।५७॥ [शारदीः] शरद इमाः १।१३१।४। शरदृतुसम्बन्धिनीः १।१७४।२। शरदि भवाः ६।२०।१०॥

शारदौ शरदि भवौ १४।१६॥

शारि हिंस्याः २।२८।५। हिंस्यात् ३।५३।१७॥

शारिः शुकी २४।३३॥ [ शारीः ] शराणामिमा गतीः १।११२।१६॥

शार्गः शारंगश्चातकः ( अत्र छान्दसो वर्णलोप इति ङलोपः ) २४।३३॥

शार्दूलः व्याघ्रविशेषः २४।३३॥ [शार्दूलाय] महासिंहाय २४।३०॥

शार्यातस्य यो वीरसमूहं शरितुं हिंसितुं योग्यान् समन्ताद् निरन्तरमतति व्याप्नोति तस्य मध्ये ( अत्र शॄधातोर्ण्यत्। अत धातोरच्प्रत्ययः ) १।५१। १२॥ [ शार्याते ] यः शरीरे हिंसकान् याति प्राप्नोति तस्यास्मिन् व्यवहारे ३।५१।७। शर्याभिरंगुलिभिर्निर्वृत्तानि कर्माणि शार्याणि तान्यतति व्याप्नोति स शार्यातस्तस्मिन् ( शर्या इत्यंगुलिनामसु०। निघ० २।५ ) ७।३५॥

शाबल्याम् शबलस्य कर्बुरवर्णस्य सुताम्

३०।२०॥

शाशदानः अतिशयेन शीयते शातयति छिनत्ति यः सः १।३३।१३॥

शाशदानः शाशाद्यमानः। नि० ६. १६॥

शाशदाना व्यवहारेष्वतितीक्ष्णतामाचरन्ती १२३।१०। अतीव सुन्दरी १।१२४। ६॥

शाशदुः छिन्द्युः २।२०।४॥

शाशद्रे शातयेः १।१४१।६॥

शाश्वतीभ्यः सनातनीभ्योऽनादिस्वरूपाभ्यः स्वस्वरूपेणोत्पत्तिविनाशरहिताभ्यः ४०।८। नित्याभ्यः ४०।८ (३२० भूमि०)॥

शाश्वसद्भिः अतिशयेन प्राणवद्भिश्वरैः १।३०।१६॥

शासः शिष्याः १।१३१।४॥

वज्रः शासः। श० ३. ८. १. ५॥ असिं वै शास इत्याचक्षते। श० ३. ८. १. ४॥

शासत् शासनं कुर्वन् १।५१।८ (४८ आर्य०)॥ शिष्यात् ३।३१।१॥

शासत् प्रशास्ति। नि० ३. ४॥

शासतु उपदिशन्तु २३।४०॥

शासते इच्छन्ति १।१६५।४। आशां कुर्वन्ति ३३।७८॥

शासनम् शंसन्ति हिंसन्ति यस्मिँस्तद्युद्धम २६।२३॥ [शासने] शिक्षायामाज्ञायां वा ३।७।५॥

शासनीम् शास्ति सर्वान् विद्याधर्माचरणशीलान् यया सत्यनीत्या ताम् (अत्रापि सायणाचार्येण मनोः पुत्री गृहीता तदप्यशुद्धमेव) १।३१।११॥

शासम् शास्ति येन तं न्यायम् १।५३।७। शासनम् १।६८।५। प्रशासितारम् ३।४७।५। [शासा] शासनेन ७।४८।३॥

शासुरिव यथा पूर्णविद्यस्याध्यापकस्य सकाशाच्छिष्याः १।११६।१३॥

शास्ति विशेषेणोपदिशति २३।३६॥

शास्ते इच्छति १।२४।११॥

शास्महे इच्छामः १।३०।१०॥

शास्यः शासितुं योग्यः १।१८६।७॥

शास्व शिक्ष २१।६१॥

शास्सि उपदिशसि १।३१।१४॥

शिंशपायाम् एतत्काष्ठे वृक्षविशेषे ३।५३।१६॥

शिंशुमारः शिंशून् धर्मोल्लंघिनः शत्रून् मारयति येन सः १।११६।१८॥

शिक्वसः शक्तिमन्तः ५।५४।४। प्रकाशमानस्य ६।२।६। [शिक्वभिः] कीलकबंधनादिभिः १।१४१।८। सेचनैः (अत्र शीकृधातोः क्वनिपि वाच्छन्दसीत्याद्यचो ह्रस्वत्वम्) २।३५।४॥

शिक्ष सर्वा विद्या उपदिशेः १।२७।५। उपदिश १।६२।१२। अनुशास्ति २।११।२१॥

शिक्षतम् [शिक्षतम्] सुशिक्षया विद्यां ग्राहयतम् १।३४।४॥

शिक्षति [शिक्षति] विद्यां गृह्णाति ग्राहयति वा (अत्र व्यत्ययेन परस्मैपदम्) ३।

८९ । २ ॥

शिक्षति दानकर्मा । नि० ३. २० ॥

शिक्षतु विद्यामुपाददातु १ । ८१ । ६ ॥

शिक्षते ग्राहयति १ । २८ । ३ ॥

शिक्षन् विद्यामुपादापयन् १ । १३२ । ४ । शिक्षयन् ६ । २० । १० ॥

शिक्षन्ति शिक्षां प्रददति १ । १७३ । १० ॥

शिक्षसि विद्यां ददासि १ । ८१ । २ ॥

शिक्षा विद्याग्रहणसाधिका २ । १५ । १० । शासनम् ७ । २७ । २ ॥

शिक्षाः शिक्षस्व (अत्र व्यत्ययेन परस्मैपदम्) ३ । ४३ । ५ ॥

शिक्षात् साध्वीं शिक्षां कुर्यात् १ । ६८ । ३ ॥

शिक्षानरः विद्योपादानेन नेता ४ । २० । ८ ॥

शिक्षिते कृतशिक्षे सत्यौ २८ । १५ । विद्वद्भिरुपदिष्टे २८ । १६ ॥

शिक्षितौ विज्ञापितौ २८ । १७ ॥

शिक्षेम शिक्षेम ३ । ५२ । ६ ॥

शिक्षेयम् सुशिक्षां कुर्याम् ७ । ३२ । १९ ॥

शिक्षोः शिक्षकस्य ३ । १९ । ३ ॥

शिखा शिखा १९ । ९२ ॥

शिग्रवः अव्यक्तशब्दकर्त्तारः (अत्र शिजिधातोरौणादिको रुक्प्रत्ययः) ७ । १८ । १९॥

शिङ्क्ते अव्यक्तं शब्दं करोति १ । १६४ । २९॥

शिङ्क्ते शब्दायते । नि० २. ८ ।

शिङ्गीनि ज्ञातुं प्राप्तुं योग्यानि (अत्र स्रगिधातोः पृषोदरादिनाऽभीष्टरूपसिद्धिः) ३९ । ८ ॥

शिताम् तीक्ष्णधाराम् १ । ५४ । ४ ॥

शितामतः शितस्तीक्ष्ण आमोऽपरिपक्वं यस्मिँस्तस्मात् २१। ४३। तीक्ष्णस्वभावात् २१ । ४४ । तीक्ष्णत्वेनोच्छिन्नरोगात् २१ । ४५ ॥

दोः शिताम भवति । दोः द्रवतेः । योनिः शितामेति शाकपूणिः, विषितो भवति । श्यामतो यकृत इति तैटीकिः । श्यामं श्यायतेः । यकृद् यथा कथा च कृत्यते । शितिमांसतो मेदस्त इति गालवः । शिति श्यतेः । नि० ४. ३ ।

शितिकक्षौ शिती श्वेतौ कक्षौ पार्श्वौ यस्य सः २४ । ४ ॥

शितिकण्ठाः शितयस्तीक्ष्णाः श्वेता वा कण्ठा येषां ते १६ । ५६ ॥

शितिपादः शितयः शुक्लाः पादा अंशा येषां किरणानां ते १ । ३५ । ५ ॥

शितिपृष्ठः शितिस्तनूकरणं पृष्ठं यस्य सः २४ । ७ । कृष्णपृष्ठः २९ । ५८ ॥ [शितिपृष्ठस्य] शितिः (सूक्ष्मः) पृष्ठं प्रश्नो यस्य तस्य ३। ७ । १॥ [शितिपृष्ठानाम्] शितयस्तीक्ष्णा गतयः पृष्ठे येषां तेषाम् २८ । १९ ॥

शितिबाहुः शितयो बाह्वोर्यस्य सः २४ । २ । शिती तनूकर्त्तारौ बाहू इव बलं यस्य सः २४ । ७ ॥

शितिरन्ध्रः शितिः श्वेतता रन्ध्रे यस्य सः २४ । २ ॥

शिथिरा शिथिलौ दृढौ ७ । ४५ । २ ॥

शिपिविष्टः शिपिषु पदार्थेषु प्रविष्टः ८ । ५५ ॥ [शिपिविष्टाय] शिपिषु पशुषु पालकत्वेन

विष्टाय प्रविष्टाय वैश्यप्रभृतये १६ । २६ । शिपिषु आक्रोशत्सु प्राणिषु व्याप्त्या प्रविष्टाय २२ । २० ॥

शिपयोऽत्र रश्मय उच्यन्ते । नि० ५. ८ । यत्तुपैत्सीत्तमपाराप्सीत्तच्छिपितमिव यज्ञाय भवति तस्माच्छिपिविष्टायेति । श० ११. १. ४. ४ ॥ एषा वै प्रजापतेः पशुष्टा तनूर्यच्छिपिविष्टः (एषा वै प्रजापतेः पशुष्ठास्तनूर्या शिपिविष्टवती । काठकसंहितायाम् १४. १० ॥ ) । तां० १८. ६. २६ ॥ यज्ञो वै विष्णुः शिपिविष्टः । तां० ९. ७. १० ॥

**शिप्रवान्** शिप्रे सुन्दरे हनुनासिके विद्येते यस्य ६ । १७ । २ ॥

**शिप्राः** उष्णिषः ५ । ५४ । ११ ॥

शिप्रे हनूनासिके वा । नि० ६. १७ ।

**शिप्रिणीनाम्** शिप्रे ऐहिकपारमार्थिकव्यवहारज्ञाने विद्येते यासां ता विदुष्यः स्त्रियस्तासाम् ( शिप्रे इति पदनामसु० । निघ० ४ । ३ । अनेनात्र ज्ञानार्थो गृह्यते ) १ । ३० । ११ ॥

**शिप्री** शत्रूणामाक्रोशकः १ । ८१ । ४ ॥ [शिप्रिणे] उत्तमहनुनासिकाय ६ । ४४ । १४ ॥ [ शिप्रिन् ] शिप्रे प्राप्तुमर्हे प्रशस्ते व्यावहारिकपारमार्थिके सुखे विद्येते यस्य सभापतेः तत्सम्बुद्धौ ( अत्र प्रशंसार्थ इविः । शिप्रे इति पदनामसु० । निघ० ४ । १ । ) ३ । ३६ । १० । सुमुख ७ । २५ । ३ ॥

**शिप्रे** हनुप्रभृत्यङ्गानि (शिप्रेत्युपलक्षणान्येषां च शिप्रे हनुनासिके । नि० ६ । १७ । ) ८ । ३९ । सर्वसुखप्रापिके द्यावापृथिव्यौ १ । १०१ । १० । मुखावयवाविव ३।३२ । १ । सुशोभिते ५ । ३६ । २ ॥

**शिफायाः** नद्याः ( अत्र शिञ् निशाने धातोरौणादिकः फक्प्रत्ययः ) १ । १०४ । ३ ॥

**शिमीवान्** प्रशस्तानि कर्माणि भवन्ति यस्य शकाशात् ( अत्र छन्दसीरः इति मतुपो मकारस्य वत्वम् । शिमीति कर्मनाम । निघ० २ । १ ) १ । १०० । १३ ॥

**शिम्बलम्** शल्मलीपुष्पं पत्रं वा३। ५३ । २२ ॥

**शिम्या** कर्मणा १ । १५१ । १ । सुकर्मयुक्तया १ । १५१ । ३ ॥

**शिम्युम्** आत्मनः शिमि कर्म कामयमानम् ७। १८ । ५ ॥ [ शिम्यून् ] शान्तान् प्राणिनः १ । १०० । १८ ॥

**शिरः** शिर उत्तमाङ्गवत्प्रशस्तम् १ । ११६ । ९ । यच्छ्रीयते तदुत्तमाङ्गम् १ । १६३ । ६ । शिरोवद्वर्तमानं घनम् ५ । ३० । ८ । मस्तकम् ६ । २० । ६ । शिरोवन्मुख्यं वचनम् ६ । ५६ । ६ । शृणाति हिनस्ति दुःखानि येन तत् १२ । ४ । घनाकारसुपरिभागम् १६ । ७१ । दूराच्छिर इव लक्ष्यमाणम् २६ । १७ ॥

आप वा शिर आदित्यो भवति यदनुशेते सर्वाणि भूतानि । मध्ये चैषां तिष्ठति । इदमपीतरच्छिर एतस्मादेव समाश्रितान्येतदिन्द्रियाणि भवन्ति । नि० ४. १३ ॥

यच्छ्रियँ समुदौहं स्तस्माच्छिरस्तस्मिन्नेतस्मिन्प्राणा अश्रयन्त तस्माद्वेवैतच्छिरः । श० ६. १. १. ४ ॥ शिरो वै प्राणानां योनिः । श० ७. ५. १. २२ ॥ प्राणो ऽग्निः शीर्षम् । कौ० ८. १ ॥ गायत्रीछन्दो ऽग्निर्देवता शिरः । श० १०. ३. २. १ ॥ गायत्रँ हि शिरः । श० ८. ६. २. ६ ॥ शिरस्सूक्तम् । जै० उ० ३. ४.

३ ॥ त्रिधातु हि शिर इति । तै० ३. ३. ७. ११ ॥ त्रिवृद्धि शिरः । श० ८. ४. ४. ४ ॥ ८. ६. २. ६ ॥ त्रिवृद्ध्येव शिरो लोम त्वगस्थि । तां० ५. १. ३ ॥ शिर एवास्य त्रिवृत् । तस्मात्तत्त्रिविधं भवति त्वगस्थिमस्तिष्कः । श० १२. २. ४. ९ ॥ त्रिवृतं ह्येव शिरो भवति त्वगस्थि मज्जा मस्तिष्कम् । गो० पू० ५. ३ ॥ शिरो वा अग्रे सम्भवतः सम्भवति चतुर्द्धा विहितं वै शिरः प्राणश्चक्षुः श्रोत्रं वाग् । तां० २२. ९. ४ ॥ शिरो हि प्रथमं जायमानस्य जायते । श० ८. २. ४. १८ ॥ १०. १. २. ५ ॥ शीर्षतो वाऽ अग्रे जायमानो जायते । श० ३. ४. १. १६ ॥ यस्माच्छीर्षण्येवाग्रे पलितो भवति । श० ११. ४. १. ६ ॥ द्विकपालँ हि शिरः । श० १०. ५. ४. १२ ॥ तस्मादष्टाकपालं पुरुषस्य शिरः । तै० ३. २. ७. ४ ॥ प्रादेशमात्रमिव हि शिरः । श० ७. ५. १. २३ ॥ १४. १. २. १७ ॥ मध्ये संगृहीतमिव हि शिरः । श० १४. १. २. १७ ॥ तस्माच्छिरोङ्गानि मेद्यन्ति नानुमेद्यति न कृश्यन्त्यनुकृश्यति । तां० ५. १. ६ ॥ अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः । इदं तच्छिरः । श० १४. ५. २. ५ ॥ शिर एतद्यज्ञस्य यदुखा । श० ६. ५. ३. ८ ॥ ६. ५. ४. १५ ॥ शिर एव षष्ठी चितिः । श० ८. ७. ४. २१ ॥ श्रीः (=उत्कृष्टं वस्तु) वै शिरः । श० १. ४. ५. ५ ॥ २. १ ॥

**शिरिणायाम्** हिंसितायाम् २ । १० । ३ ॥
शिरिणा रात्रिनाम । निघ० १. ७ ॥

**शिल्पः** नानावर्णः २९ । ५८ ॥
शिल्पम् कर्मनाम । निघ० २. १ ॥

**शिल्पे** मानसप्रसिद्धक्रियया सिद्धे ४ । ९ । [शिल्पाः] स्वरूपाः शिल्पकार्यसाधिकाः २४ । ५ ॥

**शिवः** मंगलस्वरूपो ज्ञानमयो विज्ञानप्रदः ३ । ६३ । मंगलमयो जीवानां मंगलकारी च १ । ३१ । १ । सुखकारी १ । १८७ । ३ ॥
शिवः सुखनाम । निघ० ३. ६ ॥
(यजु०१२.१७) शिवः शिव इति शमयत्येवैनम् (अग्निम्) एतदहिँसायै तथो हैष (अग्निः) इमाँल्लोकाञ्छान्तो न हिनस्ति (शिवः=रुद्रः=शान्तोऽग्निः) । श० ६. ७. ३. १५ ॥

**शिवतमः** अतिशयेन सुखकारी ११ । ५१ । अतिशयेन मंगलकारी १२ । ३९ ॥ [शिवतमाः] अतिशयेन शिवाः कल्याणकारकं कर्म कुर्वन्तः कारयन्तश्च १ । ५३ । ११ ॥

**शिवतमाम्** अतिशय कल्याण करने हारी स्त्री को (सन्तानोत्पत्ति के लिए) १४ । २ । ३८ ॥ (१७० विधिः)

**शिवतराय** अतिशयेन मंगलस्वरूपाय १६ । ४१ ॥

**शिवसङ्कल्पम्** शिवः कल्याणकारी धर्मविषयः संकल्प इच्छा यस्य तत् ३४ । १ । धर्मेष्टम् ३४ । २ । शिवे कल्याणकरे परमात्मनि संकल्प इच्छा अस्य तत् ३४ । ३ । शिवो मोक्षरूपसंकल्पो यस्य तत् ३४ । ४ । शिवः कल्याणकारी वेदादिसत्यशास्त्रप्रचारसंकल्पो यस्मिँस्तत् ३४ । ५ । कल्याणप्रियम् ३४ । ५ (६ भूमि०) । मंगलनियमेष्टम् ३४ । ६ ॥

**शिवा** मंगलप्रदा १ । २७ । प्रियदर्शना, सुखप्रदा, कल्याणकारिणी च १६ । ४९ ॥

**शिशाः** शिक्षय ६ । १८ । १३ ॥

शिशाति तीक्ष्णीकरोति ७। १८। ११॥

शिशातु क्षयतु (अत्र शो तनूकरण इत्यस्मात् श्यनः स्थाने बहुलं छन्दसीति श्लुः ततः श्लाविति द्वित्वम्) १। १११। ५॥

शिशाधि सम्यक्तया शिक्षय ६। १५। १६॥

शिशानः तनूकर्त्ता १७। ३३॥

शिशिराय शिशिरर्तौ व्यवहारसाधनाय २४। ११। शिशिराय २४। २०॥

शिशिरम् शृणातेः शम्नातेर्वा। नि० ९. १०॥
षड्भिरैन्द्राबार्हस्पत्यैः (पशुभिः) शिशिरे (यजते)। श० १३. ५. ४. २८॥

शिशीत [शिशीत] तीक्ष्णीकुरुत ६। १६। ४२। तीक्ष्णीकरोति ३। ३। ५॥

शिशीतम् [शिशीतम्] तीक्ष्णबुद्धियुक्तान् कुरुतम् १। १२२। ३॥ तीक्ष्णीकुर्यातम् २। ३९। ७॥

शिशीते कृशं करोति (शो तनूकरण इत्यस्माल्लटि विकरणव्यत्ययेन श्यनः स्थाने श्लुरात्मनेपदं बहुलं छन्दसीत्यभ्यासस्येत्वम्। ई हल्यघोः। अ० ६। ४। ११३ इत्यनभ्यासस्येकारादेशः) १। ३६। १६। तेजते ५। २। ६। तनूकरोति ५। ६। ५॥

शिशीते उदके १। ५५। १॥

शिशीमसि शत्रून् सूक्ष्मान् जीर्णान् कुर्म्मः (अत्र शो तनूकरण इत्यस्माल्लटि श्यनः स्थाने व्यत्ययेन श्लुः। छन्दस्युभयथेति श्लोरार्द्धधातुकत्वादाकारादेशः) १।१०२। १०॥

शिशीहि [शिशीहि] सुखेन शयनं कुरु (अत्र व्यत्ययेन परस्मैपदम्) १। ४२। ६। शिनु (अत्र बहुलं छन्दसीति श्लुरन्येषामपीति दीर्घश्च) १। ८१। ७। तीक्ष्णान् सम्पादय (अत्र वाच्छन्दसीति विकरणस्य श्लुरन्येषामपीति दीर्घश्च) ३। २४। ५। तीव्रान् सम्पादय ३। १६। ३। तीव्रोद्योगिनः कुरु ७। १६। ६। तीक्ष्णप्रज्ञान् कुरु ७। १८। २॥

शिशुः अविद्यादिदोषाणां तनूकर्त्ता १। १४५। ३॥ [शिश्वः] शासनीयाः १। १२२। १५॥ [शिशुम्] शासनीयं कुमारं बालकम् ७। १६। बालकमिव वर्त्तमानं जगत् १७। ७०। वत्सम् १। १८६। ७॥

अयं वाव शिशुर्योऽयं मध्यमः प्राणः। श० १४. ५. २. २॥

शिशुमती प्रशस्ताः शिशवो विद्यन्ते यस्याः सा २१। ३३॥

शिशुमारः बलहन्ता २४। ३०॥ [शिशुमारान्] ये स्वशिशून् मारयन्ति तान् २४। २१॥

शिश्नथत् [शिश्नथत्] हिंसति (श्नथतीति हिंसाकर्मा। निघ० २। १६) २। २०। ५। प्रलयं करोति ६। ४। ३। शिथिलीकरोति ४। ३०। १०॥

शिश्नथे श्नथति हिनस्ति (अत्र व्यत्ययेनात्मनेपदम्) ३। ३१। १३॥

शिश्नदेवाः अब्रह्मचर्या कामिनो ये शिश्नेन दीव्यन्ति क्रीडन्ति ते ७। २१। ५॥

शिश्ना अशुद्धानि सूत्राणि १। १०५। ८॥

शिश्नम् श्नथतेः। नि० ४. १९॥

शिश्नं वै शोचिष्केशँ ( ऋ० ३. २७. ४ ) शिश्नँहीदँ शिश्निनं भूयिष्ठँ शोचयति। श० १. ४. ३. ९ ॥ वृत्तमिव हि शिश्नम्। श० ७. ५. १. ३८ ॥ योनिरुलूखलम्........ शिश्नं मुसलम्। श० ७. ५. १. ३८ ॥

शिश्रथः [ शिश्रथः ] विज्ञानदानेन शिथिलानि करोतु १। २४। १४। श्रथ्नाति ४। ३२। २२। प्रयतस्व हिन्धि वा ५। ८५। ७। [वि-] शिथिलीकुरु, वियोजय ४। १२। ४॥

शिश्रथत् श्रथयेत् ( अत्राडभावः ) १। १२८। ६॥

शिश्रियाणम् विविधाश्रयम् १। ३५। २। व्याप्तम् ५। ११। ६। श्रयन्तम् १५। २८॥

शिश्रियाणाम् मेघावयवानां मध्ये स्थिताम् ( विद्युतम् ) १७। १॥

शिश्रिये समाश्रये ९। २४। श्रयति ५। ४४। १३॥

शिश्रीत श्रयेत १। १४९। २॥

शिषः शिष्टं त्यजेत् १७। ४५। [उत्-] शिष्टं त्यज ६। ७५। १६॥

शिष्टम् शिष्यते यस्तम् १। २८। ९॥

शीकायते यः शीकं सेचनं करोति तस्मै २२। २६॥

शीघ्रम् तूर्णम् २२। २६॥

शीघ्र्याय शीघ्रगतौ साधवे १६। ३१॥

शीनम् संकुचितम् २५। ९॥

शीभम् शीघ्रम् १। ३७। १४॥

शीभम् क्षिप्रनाम। निघ० २. १५॥

शीभ्याय शीभेषु क्षिप्रकारिषु भवाय १६। ३१॥

शीरम् विद्युद्रूपेण सर्वत्र शयानम् ३। ९। ८॥

शीरम् शायिनमिति वा आशिनमिति वा। नि० ४. १४।

शीर्यते हिंस्यते १। १६४। १३॥

शीर्षण्या [ शीर्षण्या ] या शीर्ष्णि साधुः १। १६२। ८। शिरसि भवा २५। ३१॥

शीर्षा शिरांसि [ अत्र अचि शीर्षः। अ० ६। १। ६२। इति शीर्षादेशः शेश्छन्दसि ब० इति शेर्लोपः ] १। ३३। ५॥ [ शीर्षे ] शिरसी प्रायणीयोदयनीये नित्यः कार्यश्च शब्दात्मानौ वा १७। ९१॥ [ शीर्ष्णा ] शिरोवत्कर्मणा १। ११६। १२॥ [शीर्ष्णे] शिरोवदुत्तमायोत्तमाय सुखाय ७। १८। २४॥ [ शीर्ष्णः ] शिर इवोत्तमसामर्थ्यात् ३१। १३। शिरोवदुत्तमसामर्थ्यात् प्रकाशमयात् ३१।१३ ( १२८ भूमि० )॥

शीलाय जितेन्द्रियत्वादिशीलिने ३०। १४॥

शुक् शोकः ( भावे क्विप् ) १३। ४७। शोचन्ति विचारयन्ति यया सा प्रदीप्तिः, सूर्यस्येव प्रदीप्तिर्वा ३८। १८॥ [शुचा] होमसाधनेन ३। ४। १॥ [ शुचे ] पवित्राय ३९। ११॥

शुकः शुद्धिकृत्पक्षिविशेषः २४। ३३॥ [ शुकेषु ] शुकवत्कृतेषु कर्मसु १। ५०। १२॥

यामं शुकं हरितमालभेत। गो० उ० २. १॥

**शुक्रबभ्रुः** शुक्रस्येव बभ्रुर्वर्णो यस्य सः २४। २॥

**शुक्ररूपाः** शुक्रस्य रूपमिव रूपं येषां ते २४। ७॥

**शुक्रः** वीर्यवान् शुद्धः १। ६९। १। तेजस्वी १। ९५। १। शोषकः २। ४१। २। आशुकारी ४। १। ७। शुद्धिकरः ६। २। ६। शुद्धः पवित्रः बलिष्ठो वा जनः ६। ४। ३। भास्वरः ११। ५४। पराक्रमः १३। ५६। य आशु पांसुवर्षातीव्रतापाभ्यामन्तरिक्षं मलिनं करोति स ज्येष्ठः १४। ६। वायुः १८। ५०। पावकः सूर्य आशुकारी बालश्च ३३। ५॥ [ शुक्रम् ] वीर्यकरमुदकम्। २१। ३४॥ [ शुक्रैः ] शुद्धैः क्रमैः किरणैर्वा १। ९५। १०। आशुकरैः गुणैः ३। ४४। ५॥ [ शुक्रस्य ] शोधकस्य योगस्य ७। १३। शुद्धस्य धर्मस्य ८। ४६॥

शुक्रम् उदकनाम। निघ० १. १२। शुक्रम् शोचतेर्ज्वलतिकर्मणः। नि० ८. ११।

( यजु० १८। ५० ) असौ वा आदित्यः शुक्रः। श० ६. ४. २. २१। तां० १५. ५. ९। एष वै शुक्रो य एष ( आदित्यः ) तपति। श० ४. ३. १. २६। ४. ३. ३. १७। एष वै शुक्रो य एष ( आदित्यः ) तपत्येष उऽएव बृहन्। श० ४. ५. ९. ६। तद्वाऽएष एव शुक्रो य एष ( आदित्यः ) तपति तद्यदेष तपति तेनैष शुक्रः। श० ४. २. १. १। तत्र ह्यादित्यः शुक्रश्चरति। गो० पू० २. ९। अस्य ( अग्नेः ) एवैतानि ( घर्मः, अर्कः, शुक्रः ज्योतिः, सूर्यः ) नामानि। श० ९. ४. २. २५। अत्ता वै शुक्रः ( ग्रहः )। श० ५. ४. ४. २०। अत्तैव शुक्र आद्यो मन्थी ( ग्रहः )। श० ४. २. १. ३। शुक्रः (=निर्मल इति सायणः) सोमः। तां० ६. ६. ९। एतौ ( शुक्रश्च शुचिश्च ) एव ग्रैष्मौ ( मासौ ) स यदेतयोर्बलिष्ठं तपति तेनो हैतौ शुक्रश्च शुचिश्च। श० ४.३.१.१५। ज्योतिः शुक्रमसौ ( आदित्यः )। ऐ० ७. १२। शुक्रं हिरण्यम्। तै० १. ७. ६. ३। ज्योतिर्वै शुक्रं हिरण्यम्। ऐ० ७. १२। शुक्रँ ह्येतच्छुक्रेण क्रीणाति यत्सोमँ हिरण्येन। श० ३. ३. ३. ६। ( यजु १. ३१ ) तेजोऽसि शुक्रमस्यमृतमसि ( आज्य ! )। श० १. ३. १. २८। शुक्रा ह्यापः। तै० १. ७. ६. ३। सत्यं वै शुक्रम्। श० ३. ९. ३. २५॥

**शुक्रज्योतिः** शुक्रं शुद्धाचरणं ज्योतिः प्रकाशो यस्य सः १। ४३। ५। शुक्रं शुद्धं ज्योतिर्यस्य सः १७। ८०॥

**शुक्रदुघस्य** आशुः पूर्त्तिकर्त्र्याः ६। ३५। ५॥

**शुक्रपाः** शुक्रं योगवीर्यं योगबलं वा पान्ति ते ७। १२॥ [ शुक्रपेभ्यः ] शुक्रं वीर्यं रक्षन्ति तेभ्यः ६। २७॥

**शुक्रपिशम्** शुक्रं भास्वरं पिशं तद्विपरीतं कृष्णं च २९। ३१॥

शुक्रपिशम् शुक्रपेशसं श्रियम्। शुक्रं शोचतेर्ज्वलतिकर्मणः। पेश इति रूपनाम। पिंशतेर्विपिशितं भवति। नि० ८. ११।

**शुक्रवर्चाः** शुक्रस्य सूर्यस्य प्रकाश इव वर्चो

न्यायाचरणं यस्य सः १२ । १०७ ॥
शुक्रवर्णम् शुद्धस्वरूपम् १ । १४० । १ ॥
शुक्रवर्णाम् शुद्धस्वरूपाम् १ । १४३ । ७ ॥
शुक्रवासाः शुक्राणि शुद्धानि वासांसि यस्याः सा शुद्धवीर्या वा १ । ११३ । ७ ॥
शुक्रशोचिः शुद्धतेजस्कः ७ । १५ । १० ॥
[ शुक्रशोचिषम् ] शुक्रमाशुकरं शोचिस्तेजो यस्मिँस्तम् २ । २ । ३ ॥
[ शुक्रशोचिषा ] शुक्रस्य शोधकस्य सूर्यस्य शोचिर्दीपनं तेनैव ७ । १३ ॥
[ शुक्रशोचिषे ] शुक्रेण वीर्येण शोचिर्दीप्तिर्यस्य तस्मै ७ । १४ । १॥
शुक्रसद्मनाम् शुद्धस्थानानाम् ६ । ४७ । ५ ॥
शुक्रा शुद्धिकरी १ । १२३ । ९ । शुद्धान्तःकरणा आशुकारिणी ७ । ३४ । १ ॥
[ शुक्राः ] शुद्धाः १ । १३५ । ३ । प्रदीप्ताः ४ । ५१ । ९ ॥
शुक्रम् शुद्धम् ३० । १ ॥
शुक्रम् तद्यच्छुक्रं तद्वाचो रूपमृचोऽग्नेर्मृत्योः । जै० उ० १. २५. ८ ॥
शुचयन्तः ये शुचीनात्मन इच्छन्ति ते १ । १४७ । १ ॥ [ शुचयद्भिः ] पवित्रयद्भिः ४ । ५६ । १ । शुचिमाचक्षाणैः ४ । ५६ । २ ॥
शुचि [ शुचि ] पवित्रं, शुद्धिकारकम् १ । १२१ । ५ । पवित्रं कर्म ४ । १ । १९ ॥
शुचिः पवित्रकारक आषाढः १४ । ६ । पवित्रः पवित्रकारको वा १ । ९१ । ३ ॥
[ शुचीनाम् ] पवित्राचाराणाम् ७ । ५६ । १२ ॥ [ शुचे ] विद्याविनयाभ्यां प्रकाशित ६ । ४८ । ४३ ॥
शुचिः शोचतेर्ज्वलतिकर्मणः । अयमपीतरः शुचिरेतस्मादेव । निष्षिक्तमस्मात् पापकमिति नैरुक्ताः । नि० ६. १ ॥
एतौ ( शुक्रश्च शुचिश्च ) एव ग्रैष्मौ ( मासौ ) स यदेतयोर्बलिष्ठं तपति तेनो हैतौ शुक्रश्च शुचिश्च । श० ४. ३. १. १५ ॥ यत् (अग्नेः) शुचि ( रूपम् ) तद्दिवि ( न्यधत्त ) । श० २. २. १. १४ ॥ वीर्यं वै शुचि यद्वाऽ अस्य ( अग्नेः ) एतदुज्ज्वलत्येतदस्य वीर्यँ शुचि । श० २. २. १. ८ ॥
शुचिजन्मानः पवित्रजन्मवन्तः ७ । ५६ । १२ ॥ [ शुचिजन्मनः ] शुचेः पवित्राज्जन्म यस्य तस्य १ । १४१ । ७ । शुचे रवेर्जन्म यस्यास्तस्याः ६ । ३९ । ३ ॥
शुचिजिह्वः शुचिः पवित्रा जिह्वा यस्मात्सः २ । ९ । १ । शुचिः पवित्रा सत्यभाषणेन जिह्वा वाग् यस्य सः ११ । ३६ ॥
शुचिदन् शुचयः पवित्रा दन्ता यस्य सः ५ । ७ । ७ ॥
शुचिपाः शुचं पवित्रतां पालयतीति शुचिपाः पवित्रपालकः ७ । ७ ॥
शुचिपेशसम् पवित्ररूपाम् १ । १४४ । १ ॥
शुचिप्रतीकम् पवित्रप्रतीतिकराम् १ । १४३ । ६ ॥
शुचिभ्राजाः शुचयः पवित्रा भ्राजाः प्रकाशा यासां ताः १ । ७९ । ११ ॥

शुचिर्वर्णम् पवित्रस्वरूपमतिसुन्दरम्वा ५ । २ । ३ ॥

शुचिव्रतः पवित्रधर्माचरणशीलः २१ । १३ ॥

शुचिषत् यः शुचिषु पवित्रेषु पदार्थेषु सीदति सः १० । २४ । शुचिषु पवित्रेषु व्यवहारेषु वर्तमानः १२ । १४ । यः पवित्रेषु विद्वत्सु सीदति सः १९ । ७४ । यः शुचिषु पवित्रेषु सीदति ४ । ४० । ५ ॥

शुचिष्मः दीप्तिमन् ६ । ६ । ४ ॥

शुण्ठाकर्णाः शुण्ठौ शुष्कौ कर्णौ यस्य सः २४ । ४ ॥

शुतुद्री शु शीघ्रं तुदति व्यथयति सा ३ । ३३ । १ ॥
शुतुद्रीः शुद्राविणी क्षिप्रद्राविण्याशुतुन्नेव द्रवतीति वा । नि० ९. २६ ॥

शुद्धम् अविद्यादिदोषरहितत्वात्सदा पवित्रम् ४० । ८ । निर्दोषम् ( ३२० भूमि० ) ॥

शुद्धवालः शुद्धा वाला यस्य सः २४ । ३ ॥

शुद्धाः सत्कर्मानुष्ठानपूताः ६ । १३ ॥ निर्मलाः ६ । २८ । ७ ॥

शुद्धयतु शुद्धयतु ६ । १५ ॥

शुनःशेपः शुनो विज्ञानवत इव शेपो विद्यास्पर्शो यस्य सः ( शेपः शपतेः स्पृशतिकर्मणः । नि० ३ । २१ ) १ । २४ । १२ ॥ [शुनःशेपम् ] सुखस्य प्रापकामिन्द्रियारामम् ५ । २ । ७ ॥
शुनः वायुः शु एत्यन्तरिक्षे । नि० ९. ३९ ॥

शुनम् सुखम् १ । ११७ । १८ । ज्ञानवृद्धम् ३ । ३० । २२ ॥
शुनम् सुखनाम । निघ० ३. ६ ॥

यद्वै रू.मृद्धं तच्छुनम् । श० ७. २. २. ९ ॥ या वै देवानाँ श्रीरासीत् साकमेधैरीजानानां तच्छुनम् । श० २. ६. ३. २ ॥

शुनहोत्रेषु शुनं सुखं जुह्वति ददति तेषु २ । १८ । ६ । शुनानां विज्ञानवृद्धानां होत्रेषु दानेषु २ । ४१ । १४ । प्राप्तयोगजविद्याद्येषु २ । ४१ । १७ ॥

शुनासीरीयाः शुनासीरदेवताकाः २४ । १९ ॥

शुनासीरौ क्षेत्रपतिभृत्यौ ४ । ५७ । ५ ॥ [शुनासीरा] सुखदस्वामिभृत्यौ कृषीवलौ ४ । ५७ । ८ । यथा वायुसूर्यौ १२ । ६९ ।
अथ यस्माच्छुनासीर्येण यजेत । या वै देवानाँ श्रीरासीत् साकमेधैरीजानानां त्रिजिग्यानानां तच्छुनमथ यः संवत्सरस्य प्रजितस्य रस आसीत्तत्सीरम् । श० २. ६. ३. २ ॥ संवत्सरो वै शुनासीरः । गो० उ० १. २६॥ शान्तिर्वै भेषजं शुनासीरौ । कौ०५.८॥ शुनासीर्यो द्वादशकपालः पुरोडाशो भवति । श० २. ६. ३. ५ ॥

शुन्धध्वम् [ शुन्धध्वम् ] शुन्धन्ति शोधयत वा ( अत्र व्यत्यय आत्मनेपदञ्च ) १ । १३ । पवित्रीकुरुत १९ । ३६ ॥

शुन्धन्ताम् पवित्रीकुरुताम् ५ । २६ ॥

शुन्धन्तु पवित्रयन्तु २० । २० ॥

शुन्धयन्तु वाह्यदेशं पवित्रं कुर्वन्तु ४ । २ ॥

शुन्धस्व शोधय ५ । १० ॥

शुन्धामि निर्मलीकरोमि पवित्रीकरोमि वा ६ । १४ ॥

शुन्ध्यूः शुद्धः ५ । ३२ ॥ [शुन्ध्युवः] पवित्रहेतवो रश्मयोऽश्वाः ( अत्र तन्वादीनां

छन्दसि बहुलमुपसंख्यानम । अ० ६।४। ७७ अनेन वार्त्तिकेनोवङादेशः ) १ । ५० । ९ । आदित्यकिरणाः १ । १२४ । ४ । शोधिकाः ५ । ५२ । ६ ॥

शुप्तौ शयने कृते सति ( अत्र वर्णव्यत्ययेन शः ) १ । ५१ । ५ ॥

शुभः शुम्भमानाः ५ । ५४ । ११ । यत्कल्याण-कारकं मनुष्याणां कर्म तस्य (अत्र संपदा-दित्वात्क्विप् ) १। ३४ । ६। कल्याणकरस्य-कर्मणः शुभगुणसमूहस्य वा १ । ४७ । ५ । कल्याणकरव्यवहारस्य ५ । ७५ । ८ ॥ [ शुभा ] शुभगुणकर्मणा १ । १६५। १ । शोभनेन ७ । ५६ । ६ ॥ [ शुभे ] शुभ्यते यस्तस्मै शुभाये विजयाय ( अत्र कर्मणि क्विप् ) १ । ८७ । ३ ॥

शुभम् कल्याणयुक्तं सुखम् १ । २३ । ११ । कल्याणम् ४ । ५१ । ६। धर्म्यं व्यवहारम् ५।५५।१ । कल्याणं संग्रामं वा ५ । ५७।२। उदकम् ६। ६२ । ४॥

शुभम् उदकनाम । निघ० १. १२ ॥

शुभंयावा यः शुभं जलं याति ५ । ६१ । १३॥

[ शुभंयावानः ] शुभस्य प्रापकाः ( अत्र तत्पुरुषे कृति बहुलमिति बहुलवच-नाद् द्वितीयाया अलुक् ) १ । ८९ । ७ । ये शुभं कल्याणं यान्ति प्राप्नुवन्ति ते २५ । २० ॥

शुभंये यः शुभं याति प्राप्नोति तस्मै ४ । ३ । ६ ॥

शुभयद्भिः शुभमाचरद्भिः ५ । ६० । ८ ॥

शुभयन्त शुभ इवाचरन्ति ७ । ५६ । १६ ॥

शुभयन्ते शुभमाऽऽचरन्ते १ । ८५ । ३ ॥

शुभस्पती शुभस्य शिल्पकार्यप्रकाशस्य पालकौ ( शुभः शुभ दीप्तौ । एतस्य रूपमिदम् ) १ । ३ । १ ॥

शुभानैः मंगलमयैर्वचनैः सह ३३ । २७ ।

शुभ्रः शुद्धः २ । ११ । ४ । शुद्धः प्रशंसनीयः ७ । ५६ । ८॥ [ शुभ्राः ] स्वगुणैः शोभ-मानाः १ । १६ । ५ । शुद्धधर्माः १ । ८५ । ३ । स्वच्छाः १ । १६७। ४ । विद्युतः २ । ११ । ३ । भास्वराः ४।५१।६ । श्वेताः ५ । ४१ । १२ । शुद्धस्वरूपाचाराः ५ । ४२ । १२ ॥ [ शुभ्रे ] शोभायमाने सुखे १ । ५७ । ३ । शोभायमाने ३ । ३३ । २ ॥ [ शुभ्र ] शुद्धाचरण ५ । ५ । ४ ॥

शुभ्रयामा शुभ्राश्शुद्धा यामा दिवसा यया सा ३ । ५८ । १ ॥

शुभ्रा श्वेतवर्णा ५ । ८० । ५ ॥

शुभ्रे शोभने । नि० ९.३९। शुभ्राः शोभमानाः । नि० १२. ४३ ॥

शुभ्रिषु शोभनसुखप्रदेषु १ । २९ । १ । शोभनेषु विमानादियानेषु तत्साधकत-मेषु वा १ । २९ । २ । शुभ्राः प्रशस्ता गुणा विद्यन्ते येषु तेषु १ । २९ । ३ । शुद्धभावेन धर्मव्यवहारेण गृहीतेषु १ । २९ । ५ । शुद्धेषु व्यवहारेषु १ । २९ । ६ । शुभगुणेषु ५ । ३४ । ८ ॥

शुभ्वा सुशोभमानः ४ । ३८ । ६ ॥

शुम्भत सर्वत्र यानादिकृत्येषु प्रदीपयत १ । २१ । २॥

शुम्भति शोभयति १ । २२ । ८ ॥

शुम्भते सुशोभते ( अत्र व्यत्ययेनात्मनेपदम् ) १ । १४० । ६ ॥

शुम्भन्तः प्राप्तशोभाः १ । १३० । ६ ॥

शुम्भन्ति [ शुम्भन्ति ] पवित्रयन्ति ५ । २२ । ४ । शुभाचरणयन्ति ५ । ३६ । ५ । विराजन्ते ५ । १० । ४ ॥

शुम्भन्ते शोभन्ते १ । ८५ । १ ॥

शुम्भमाना प्रकाशयन्ती १ । ९२ । १० । सुशोभायुक्ता ६ । ६४ । २ ॥

शुम्भमानाः शोभायुक्ताः १ । ३३ । ८ । शुभगुणाढ्याः संपादयन्तः १ । १६५ । ५ ॥

शुम्भमानाः शुशोभिषमाणाः । नि० ८. १० ॥

शुम्भस्व शोभायुक्तान् कुरु ५ । १० ॥

शुरुधः प्राप्तव्यानि सुखानि १ । ७२ । ७ । ये शुरून् हिंसकान् सूर्यकिरणान् दधति धरन्ति ते १ । १६९ । ८ । याः शु शीघ्रं रुन्धन्ति ताः ३ । ३८ । ५ । याः शु सद्यो रुन्धन्ति ताः स्वसेनाः ( शुरुध इति पदनाम । निघ० ४ । ३ ) ४ । २३ । ८ । यः शुरुमन्धकारहिंसकं तेजो दधाति स सूर्यः ६ । ३।३ । सद्यो रोधकाः ६ । ४९ । ८ । याः शुरुधो दुःखानि रुन्धन्ति ताः १४ । ४२ ॥

शुरुधः आपो भवन्ति । शुचं संरुन्धन्ति । नि० ६. १६ ॥

शुशुक्कनम् अतिशयेन प्रदीप्तम् १ । १३२ । ३ ॥

शुशुक्कान् शोचकः १ । ६९ । १ । विद्याविनयाभ्यां प्रकाशितः १ । १८९ । ४ । [ शुशुक्कांसः ] शोकयुक्ताः ५ । ८७ । ६ ॥

शुशुग्धि शोधय प्रकाशय ( अत्र विकरणव्यत्ययेन श्लुः ) १ । ९७ । १ ॥

शुशुचानः प्रकाशयन् १ । १४९ । ४ ॥ [शुशुचानाः ] शुद्धा रोधका वा २ । ३४ । १ ॥ [ शुशुचानम् ] शुद्धगुणकर्मस्वभावम् ४ । १ । १९ ॥

शुशुचीत शुन्धत २ । २ । १० ॥

शुशोच [ शुशोच ] शोचति ७ । ४ । ३ । शोचते प्रकाशते ७ । ८ । ४ । शोच १ । १३३ । ६ ॥

शुश्रव शृणोमि १ । १०९ । ५ ॥

शुश्रवत् श्रुत्वा श्रावयेत् १ । ८४ । ८ ॥

शुश्रवत् श्रोष्यति । नि० ५. १७ ॥

शुश्राव श्रुतवान् १ । १०५ । १७ । श्रावयति ५ । ५३ । २ ॥

शुश्रुम शृणुमः ४० । १० । श्रुतवन्तः ४० । १३ ॥

शुश्रुयातम् प्राप्नुयातम् ५ । ७४ । १० ॥

शुश्रूषमाणः सेवमानः ४ । ३८ । ७ । श्रोतुमिच्छमानो विद्याश्रवणाय सेवां कुर्वाणः ७ । १९ । २ ॥

शुषन्तम् द्वेषेण प्रतापेन क्षीणम् १ । ६१ । १० ॥

शुष्ककण्ठेन शुष्केन कण्ठेन २५ । २ ॥

शुष्कम् अनार्द्रम् १३ । १२ । अस्नेहम् २ ।

१३। ६॥ [ शुष्कात् ] धर्मानुष्ठानतपसो नीरसात्काष्ठादेः १। ६८। २॥

शुष्कयाय शुष्केषु नीरसेषु भवाय १६। ४५॥

शुष्णम् शोषणकर्त्तारम् १। ३३। १२। बलवन्तम् १। ५६। ३। शोषकं बलम् १। १२१। ६। शोककरं दुःखम् ३। ३१। ८। शुष्कं नीरसम् ४। १६। १२। शोषयति धार्मिकाञ्जनान् तं दुष्टस्वभावं प्राणिनम् (अत्र शुष शोषणे इत्यस्मात् तृषिशुषि०। उ० ३। १२ अनेन नः प्रत्ययः १। ११। ७॥ [ शुष्णाय ] परेषां हृदयस्य शोषकाय १।१७५।४॥ [शुष्णस्य] शोषकस्य शत्रोः १। १२१। १०॥

शुष्णम् बलनाम। निघ० २. ९। शुष्णस्य आदित्यस्य। नि० ५. १६॥

शुष्णो दानवः प्रत्यङ् पतित्वा मनुष्याणामक्षीणि प्रविवेश स एष कनीनकः कुमारक इव परिभासते। श० ३. १. ३. ११॥

शुष्णहत्येषु शुष्णानां बलानां हत्या हननं येषु संग्रामेषु (शुष्णमिति बलनाम। निघ० २। ९) १। ५१। ६॥

शुष्मः प्रशस्तानि शुष्माणि बलानि विद्यन्तेऽस्मिन् १। १००। २। बलवान् १। १६५। ४। बलम् ४।२३। १०। उत्तमबलः ६। १९। ९। बलयुक्तः सेनेशः ६। ६८। ७। बलयुक्तो देहः ७। ५६। ८। बलकरः ३३। ७८॥

शुष्मम् बलनाम। निघ० २. ९॥ शुष्ममिति बलनाम शोषयतीति सतः। नि० २.२४॥

शुष्माः बलवत्यः शोषणकारिण्यो वा १। ५२। ४॥

शुष्मिणी बहु शुष्म बलं यस्यामस्ति सा १९। ७॥

शुष्मिन्तमः प्रशंसितं बलं विद्यते यस्य स शुष्मी सोऽतिशयितः, अतिशयेन बलवान्वा १। १२७। ९। बहुविधं बलं विद्यते यस्य स शुष्मी सोऽतिशयितः १। १३३। ६॥

शुष्मी महाबलिष्ठः ४। २२। १। शुष्मं बलिष्ठं सैन्यं विद्यते यस्य सः ५। ४०। ४॥ [शुष्मिणे] शुष्यति बलयति येन व्यवहारेण स बहुर्विद्यते यस्मिँस्तस्मै (अत्र भूम्न्यर्थे इनिः) १। ३७। ४॥ [शुष्मिणः] बहु शुष्मं बलं भवति यस्मात्तस्य ११। ८३॥

शूकरः सूकरः २४। ४०॥ [ शूकराय ] क्षिप्रकारिणे २२। ८॥

शूकृताय क्षिप्रकारिणे २२। ८॥ [शूकृतस्य] शीघ्रं शिक्षितस्य (शूविति क्षिप्रनाम। निघ० २। १५) २५। ४०। शीघ्रं निष्पादितस्य १। १६२। १७॥

शूषाय बलाय सैन्याय २२। ३०॥

शूघनासः क्षिप्रगमनाः १७। ८५॥

शूद्रः मूर्खकुलोत्पन्नः २३।३१। मूर्खत्वादि गुणवाला ३१। ११ (८९ सत्यार्थ०) [शूद्रम्] प्रीत्या सेवकं शुद्धिकरम् ३०। ५॥

स पत्त एव प्रतिष्ठाया एकविँशमसृजत तमनुष्टुप् छन्दोऽन्वसृज्यत न काचन देवता शूद्रो मनुष्यस्तस्माच्छूद्र उत बहुपशुरयज्ञियो विदेवो हि नहि तं काचन देवतान्वसृज्यत तस्मात्पादा-

वनेऽज्यन्नातिवर्द्धते पत्तो हि सृष्टः । तां० ६. १. ११ ॥ अयज्ञियान्वाऽ एतद्यज्ञेन प्रसजति शूद्रां-स्त्वद्यांस्त्वत् । श० ५. ३. २. ४ ॥ अथ यद्यपः शूद्राणां स भक्षः शूद्रांस्तेन भक्षेण जिन्विष्यसि शूद्रकल्पस्ते प्रजायामाजनिष्यतेऽन्यस्य प्रेष्यः कामोत्थाप्यो यथाकामवध्यो, यदा वै क्षत्रियाय पापं भवति शूद्रकल्पोऽस्य प्रजायामाजायत ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा शूद्रता-मभ्युपैतोः स शूद्रतया जिज्यूषितः । ऐ० ७. २९ ॥ असतो वा एष सम्भूतः यच्छूद्रः । तै० ३. २. ३. ६॥ अनृतँ स्त्री शूद्रः श्वा कृष्णः शकुनिस्तानि न प्रेक्षेत । श० १४. १. १. ३१ ॥ असुर्य्यः शूद्रः । तै० १. २. ६. ७ ॥ तपो वै शूद्रः । श० १३. ६. २. १० ॥ वैश्यं च शूद्रं चानु रासभः । श० ६. ४. ४. १२ ॥ तस्मात्पुरस्तात्प्रत्यञ्चः शूद्रा अवस्यन्ति । तै० ३. ३. ११. २ ॥ स शौद्रं वर्णमसृजत पूषणमियँ (पृथिवी) वै पूषा । श० १४. ४. २. २५ ॥

**शूद्रा** शूद्रस्य स्त्री २३ । ३० ॥

**शूद्रार्यौ** शूद्रश्चार्यो द्विजश्च तौ १४ । ३० ॥

**शूने** वर्धने (अत्र नपुंसके भावे क्तः) १।१०५। ३ । शूः सद्यः करणं विद्यते यस्मिँस्त-स्मिन् सैन्ये ( अत्र शू इति क्षिप्रनाम । निघ० २ । १५ तस्मात् पामादित्वान्मत्व-र्थीयो नः प्रत्ययः ) ७ । १ । ११ ॥

**शूरः** शूरवीरः १ । ७०। ६। निर्भयः १। १०३ । ६ । शत्रूणां हिंसकः १ । १२२ । १० । विक्रान्तः १ । १५८ । ३ ॥ [ शूर ] पापा-चाराणां हिंसक ७ । ३२ । २२ । दुष्टदोष-विनाशक ६ । १५ । ११ । धार्मिक दुष्टनि-वारक विद्याबलपराक्रमावन् सभाध्यक्ष १ । ११ । ६ ॥

शूरः शवतेर्गतिकर्मणः । निं० ३. १३ ॥

**शूरणासः** हिंसका कलायन्त्रताडनेन प्रका-शमानाः १ । १६३ । १० । सद्यो रणो युद्धविजयो येभ्यस्ते २६ । २१ ॥

**शूरपत्नीः** शूराणां स्त्रियः १ । १७४ । ३ ॥

**शूरसाता** शूराणां सातिः संभजनं यस्मिँस्त-स्मिन् संग्रामे ( शूरसाताविति संग्राम-नामसु० । निघ० २। १७। अत्र सुपां सुलु-गिति ङेः स्थाने डादेशः ) १ । ३१ । ६ । शूरैः संभजनीये संग्रामे १ । १५७ । २ ॥

शूरसातौ संग्रामनाम । निघ० २. १७ ॥

**शूर्ताः** विमर्दिताः १ । १७४ । ६ ॥

शूर्ताः क्षिप्रनाम । निघ० २. १५ ॥

**शूलम्** शूलमिव पीडाकरं शत्रुम् १ । १६२ । ११ । शु शीघ्रं लाति बोधं गृह्णाति येन तद् वचः (पृषोदरादित्वात्सिद्धम् ) २५ । ३४ ॥

**शूशवाम** वर्धेमहि १ । १६६ । १४ ॥

**शूशुचन्** भृशं शोकं कुर्य्युः ३५ । ८ ॥

**शूशवत** यो ज्ञापयति वर्द्धयति वा ( अयं एयन्तस्य श्विधातोर्लुङि प्रयोगेऽडभा-वश्च ) १ । ५४ । ७ । विजानाति ( अत्रा-डभावो लडर्थे लुङ् च ) २ । २५। १॥

**शूशुवांसः** वर्धमानाः १ । १६७ । ६ ॥ [ शूशु-वांसम् ] सर्वसुखज्ञापकं प्रापकम्वा १ । ६४ । १५ । बलेन वृद्धम् ४ । १६ । १३ । व्याप्नुवन्तम् ६ । १९ । २ । शुभगुण-व्यापिनम् ६ । १९ । ७ ॥

शूशुवानः भृशं वर्द्धमानः ७ । २० । २ ॥

शूशुवे उपगच्छति ७ । ३२ । ६ ॥

शूषम् बलं सुखं वा २१ । ५४ ॥ [ शूषाय ] बलाय सैन्याय २२ । ३० ॥ [ शूषस्य ] बलवतः १ । १३१ । २ ॥
शूषम् बलनाम । निघ० २.९॥ सुखनाम । निघ० ३. ६ ॥

शूष्यम् शूषे बले साधु यत्तत् १ । ५४ । ३ । शूषे बले भवम् ५ । ८६ । ६ ॥

शृङ्गम् उपरिभागम ५ । ५९ । ३ ॥ [ शृङ्गा इव ] शृंगवत् सम्बन्धिनौ हिंसकौ २ । ३९ । ३ ॥ [ शृंगाणि ] शृंग इवोच्छ्रितानि कर्माणि १ । १६३ । ११ । शृंगाणीवोच्छ्रितानि सेनाङ्गानि २९ । २२ ॥ [ शृंगा ] शृंगाणि १ । १४० । ६ । शृंगाणीव चत्वारो वेदा नामाख्यातोपसर्गनिपाता वा १७ । ९१ ॥
शृंगाणि ज्वलतो नामधेयम् । निघ० १. १७ ॥ शृंगम् श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणायोद्गतमिति वा शिरसो निर्गतमिति वा । नि० २. ७ ॥

शृङ्गिणः शृंगयुक्तस्य गवादेः पशुसमूहस्य १ । ३२ । १५ ॥ [ शृङ्गिणम् ] शृंगवदुन्नतविद्युद्गर्जनाकारणघनीभूतं मेघम् १ । ३३ । १२ ॥

शृणवः शृणुयाः ६ । ४० । ४ । शृणु ७ । २९ । २ ॥

श्रृणवत् शृणुयात् १ । १४१ । १२ । शृणोति ७ । २६ । १ ॥

शृण्वद् 'श्रवद्ध इन्द्रः शृण्वद्धोऽग्निः' ( यजु० २८. ६ ) शृणोतु व इन्द्रः शृणोत्वग्निरित्याशिषमेव तद्वदते । कौ० २८. ६ ॥

शृणवन् शृण्वन्तु ३ । ५४ । १० ॥

शृणवाम शृणवाम ३ । ३३ । १० ॥

शृणीहि हिन्धि ३ । ३० । १७ ॥

शृणुत शृणुत ७ । ३४ ॥

श्रृणुतम् श्रवणं कुरुतम् १ । ८६ । ४ ॥

श्रृणुधी शृणुहि (अत्र हेर्घ्यादेशोऽन्येषामपीति दीर्घः ) १३ । ५२ ॥

श्रृणुयाम शृणुयाम ३६ । २४ ॥

शृणुष्व शृणुष्व १ । १३१ । ७ ॥

श्रृणुहि शृणु १ । १०४ । ९ ॥

शृणोत सुनिये ३ । ३३ । ९ ॥

शृणोति शब्दविद्यां गृह्णाति १ । ३७ । १३ ॥

शृणोतु शृणोतु ३४ । ५३ ॥

शृणोमि शृणोमि ५ । ३२ । १२ ॥

शृण्वन् शृण्वन् २ । २३ । १ ॥

शृण्वन्ति शृण्वन्ति २ । २४ । १३ ॥

शृण्वन्तु शृण्वन्तु ३ । २० । १ ॥

शृण्विरे श्रूयन्ते ( अत्र श्रुधातोः छन्दसि लुङ्लङ्लिट इति लडर्थे लिट् । छन्दस्युभयथेति सार्वधातुकत्वेन श्नुविकरण आर्धधातुकत्वाद्यगभावः । विकरणव्यवहितत्वाद् द्वित्वं च न भवति ) १ । १५ । ८ । शृण्वन्ति ४ । ८ । ६ ॥

शृण्विषे शृणोषि ४ । ४२ । ७ ॥

शृण्वे शृणोमि ( अत्र व्यत्ययेनात्मनेपदम् ) १ । ३७ । ३ ॥

शृतपाकम् शृतश्चासौ पाकश्च तम् ( पुनरुक्तमतिसंस्कारद्योतनार्थम् ) १ । १६२ । १० शृतः पक्वः पाको यस्य तत् २५ । ३३ ॥

शृतपाम् यः शृतं परिपक्वं पयसं पिबति तम् ७ । १८ । १६ ॥

शृतेन परिपक्वेन १९ । ८९ ॥

शृध्याम् शब्दकुत्साम् २ । १२ । १० ॥

शेक् सद्योगामिनो भवत ५ । ६१ । २ ॥

शेपः उपस्थेन्द्रियम् १९ । ८८ ॥

शेपः वैतस इति पुंस्प्रजननस्य । शपतेः स्पृशतिकर्मणः । नि० ३. २१ ॥

शेपे कञ्चित् साधुजनमाक्रुष्टवान् १ । २३ । २२ । आक्रुश्यामि ६ । १७ ॥

शेरते सोते हैं १३ । ७ ॥

शेवः सुखकारी १ । ६९ । २ । सुखस्वरूपः १ । ७३ । २ ॥

शेवः सुखनाम । निघ० ३. ६ । शेवः सुखनाम । शिष्यतेर्वकारो नामकरणोऽन्तस्थान्तरोपलिङ्गी । नि० १०. १७ ॥

शेवधिपाः यः शेवधिं निधिं पाति रक्षति धर्मादिकार्य्ये करे च न व्येति स शेवधिपाः ( निधिः शेवधिरिति यास्कः । नि० २।४) ३३ । ८२ ॥

शेवधिम् शेवं सुखं धीयते यस्मिँस्तं निधिम् १८ । ५९ ॥ [ शेवधिभ्यः ] सुख के आधारभूत अनेक कक्षाओं से सुशोभित । अथर्व० १४ । ३ । १५ ( २०३ विधिः )

शेवृधासः शेवृन् सुखानि दधति येभ्यस्ते ३ । १६ । २ ॥ [ शेवृधम् ] सुखम् १ । ५४ । ११ ॥ [ शेवृधः ] सुखवर्धकान् ५ । ८७ । ४ ॥

शेवृधम् सुखनाम । निघ० ३. ६ ॥

शेव्यः सुखयितुं योग्यः १ । १५६ । १ ॥

शेषः अवशिष्टो भागः १ । ९३ । ४ । यः शिष्यते सः ५ । १२ । ६ ॥ [ शेषसा ] अपत्यैः सह ५ । ७० । ४ ॥

शेषः अपत्यनाम । निघ० २. २ ॥

शेषन् शयेरन् ( अत्र लेटि व्यत्ययेन परस्मैपदम् ) १ । १७४ । ४ ॥

शेषे स्वपिषि १२ । ३९ ॥

शैलूषम् गायनम् ३० । ६ ॥

शैशिरौ शिशिरर्त्तौ भवौ, शिशिरऋतुसम्पादकौ १५ । ५७ ॥ [ शैशिरेण ] शिशिरेण २१ । २८ ॥

शोकः परितापः ४० । ७ ( २६२ विधिः ) । मरणम् २ । ३८ । ५ ॥ [ शोकाः ] विलापाः १ । १२५ । ७ । प्रकाशाः ४ । ६ । ५ ॥ [ शोकात् ] शोषकात् १३ । ४५ ॥

शोचतु शोचतु ६ । ५२ । २ ॥

शोचन् पवित्रीकुर्वन् ७ । ५० । २ ॥ [शोचतः] पवित्रस्य ७ । १५ । ५ ॥

शोचन्ति शोचन्ति ५ । १७ । ३ ॥

शोचमानाय विचारप्रकाशाय ३९ । ११ ॥

शोचय शोकं प्रापय ६ । २२ ।-८ ॥

शोचस्व [ शोचस्व ] प्रकाशितो भव (शुचि दीप्तावित्यस्माल्लोट् ) । १ । ३६ । ९ । पवित्रो भव ११ । ३७ । विचारय ४ । २। २० ॥

शोचा [ शोचा ] विचारय ३ । १३ । ६ । पवित्रीकुरु ७। २ । १। शोचति प्रकाशते ( अत्र व्यत्ययेन लडर्थे लोट् । द्व्यचो-तस्तिङ इति दीर्घश्च ) ३ । ३ ॥

शोचिः सूर्यज्योतिः १ । ३९ । १ । पवित्रः १ । १४३ । २ । प्रकाशम् ३ । १ । ५ । विद्युद्रूपां दीप्तिम् ५ । २८ । १ । उत्तमा नीतिः ६ । ६४ । २ । दीप्तिमन्तम् ७ । ३ । ५ ॥ [ शोचिषा ] पवित्रेण विज्ञानेन १ । ४५ । ४ । न्यायसेनाप्रकाशेन १ । १२७ । ४ । तेजसा ३ ।१८।४॥ [ शोचिषे ] पवित्रकराय ५ । ५ । १ । शोधिते दोष-निवारके ३ । २ ॥

शोचिः ज्वलतो नामधेयम् । निघ० १. १७ ॥

( यजु० २७. ११ ) (=अर्चींषि) ऊर्ध्वा शुक्रा शोचीँष्यग्नेरित्यूर्ध्वानि ह्येतस्य ( अग्नेः ) शुक्राणि शोचीँष्यर्चीँषि भवन्ति । श० ६. २. १. ३२ ॥

शोचिष्केशः शोचींषि तेजांसि केशा इव ज्वाला इव यस्य सः ३ । १४ । १ । शोचींषि तेजांसि इव केशा यस्य सः ३ । १७ । १ । प्रदीप्तविज्ञानः ५ । ४१ । १० ॥ [ शोचिष्केशम् ] शोचिषः शुद्धा-चाराः केशा प्रकाशका यस्य तम् १ । ४५। ६ । शोचींषि केशा दीप्तयो रश्मयो यस्य तं सूर्यलोकम् १ । ५० । ८ । शोचींषि न्यायव्यवहारप्रकाशा केशा इव यस्य तम् ५ । ८ । २ । शोचिषः केशा सूर्यस्य रश्मय इव तेजांसि यस्य १५ । ३१ ॥

( ऋ० ३. २७. ४ ) शिश्नं वै शोचिष्केशँ शिश्नँ हीदँ शिश्निनं भूयिष्ठँ शोचयति । श० १. ४. ३. ९ ॥

शोचिष्ठ पवित्रतम ३ । २६ । अतिशयेन तेज-स्विन् १५ । ४८ । सद्गुणैः प्रकाशमान २५ । ४८ । अतिशयेन शोधक ५ । २४ । ४ ॥

शोचिष्मान् बहूनि शोचींषि विद्यन्ते यस्मि-न्त्सः २ । ४ । ७ ॥

शोचीः शोकं कुर्याः ११ । ४५ । [ अभि- ) शोकयुक्तां कुर्याः १२ । १५ ॥

शोणा वर्णप्रकाशकौ गमनहेतू च १ । ६ । २ । रक्तगुणविशिष्टौ ३ । ३५ । ३ ॥ [ शोणाः ] रक्तगुणविशिष्टा अश्वाः १ । १२६ । ४ ॥

शोभमानम् शोभमानम् ५ । २ । ४ ॥

शोभसे [शोभसे] शोभितुम् १ । ८४ । १० ॥ शोभां प्राप्नुयाः ५ । ४४ । ५ ॥

शोभिष्ठाः अतिशयेन शोभायुक्ताः ७ । ५६ । ६ ॥

शोभे प्रदीप्तो भवेयम् १ । १२० । ५॥

शोभेते शोभते ४ । ३२ । २३ ॥

शोशुचत् दूरीकुर्यात्, शोशुच्यात् वा १ । ९७ । १ भृशं शोषयतु ३५ । ६ भृशं शोधयतु ३५ । २१ ॥

शोशुचत् भृशं पवित्रयन् ६ । ४८ । ३ ॥

[ शोशुचता ] अत्यन्तं प्रकाशमानेन १। १२३। ७॥

शोशुचन् शोधयन्ति ६। ६६। २॥

शोशुचन्त शोधयन्ति ७। १। ४॥

शोशुचानः भृशं पवित्रः सन् ३। १५। १। भृशं प्रकाशमानः ४। १। ४ पवित्रं विज्ञानम् ७। ५। ३। शुद्धः संशोधकः ७। १०। १। शोधयन् ७। १३। २। भृशं पवित्राचरणः १३। १०॥

(यजु० ११. ४९) त्रिपाजसा पृथुना शोशुचान इति। विपाजसा पृथुना दीप्यमान इत्येतत्। श० ६. ४. ४. २१॥

शोषाय दुःखानां शत्रूणां वा निवारणाय २। ३२॥

शौचद्रथे पवित्रे रथे ५। ७६। २॥

शौष्कलम् यः शुष्कलैर्मत्स्यैर्जीवति तम् ३०। १६॥

श्चुम्नन्तु हिंसन्तु ( श्चमुधातुर्हिंसार्थः ) १। १०४। २॥

श्चोतन्ति रक्षन्तु संचलन्तु १। ८७। २। स्रवन्ते ३। १। ८। सिञ्चन्ति ३। २१। ५॥

श्नथत् हिनस्ति ६। ६०। १॥

श्नथनः दुष्टानां हिंसकः ( अत्र वर्णव्यत्ययेन रस्य नः ) २। २१। ४॥

श्नथयन् हिंसयन् १। ५१। ९॥

श्नथयन्त श्नथयन्ति हता भवन्ति ( अत्राडभावः ) ३३। ६७॥

श्नथितम् शिथिलीकृतं नौकादिकम् १। ११६। २४॥

श्नथिता हिंसिता १। ५७। २॥

श्नथिहि हिंसय ७। २५। २॥

श्नप्त्रे शुद्धे इव ( अत्र ष्णा शौच इत्यस्य वर्णव्यत्ययेन सस्य शः ) ५। २१॥

श्मश्रूणि मुखकेशाः २०। ५॥ [ श्मश्रुषु ] चिबुकादिषु २। ११। १७॥

श्मश्रु लोमः, श्मनि श्रितं भवतिः। नि० ३. ५॥ श्यामः श्यायतेः। नि० ४. ३॥

श्मसि कामयेमहि २। ३१। ६॥

श्यत् तनूकरोति १। १३०। ४॥

श्यामः कृष्णवर्णः २४। १॥

द्वे वै श्यामस्य ( पशोः ) रूपे शुक्लं चैव लोम कृष्णं च। श० ५. १. ३. ९॥ ५. २. ५. ८॥ स पौष्णो यच्छ्यामः ( पशुः )। श० ५. २. ५. ८॥ अहर्वै शबलो रात्रिः श्यामः। कौ० २. ९॥

श्यामम् श्याममणिः १८। १३॥

श्यामाकाः श्यामाकाः ( समा इति भाषायाम् ) १८। १२॥

लोमभ्य एवास्य चित्तमस्रवत्। ते श्यामाका अभवन्। श० १२. ७. १. ९॥ तासां ( ओषधीनां ) एष उद्धारो यच्छ्यामाकः। गो० उ० १. १७॥ सौम्यं श्यामाकं चरुं निर्वपति। तै० १. ६. १. ११॥ अथ सोमाय वनस्पतये श्यामाकं चरुं निर्वपति। श० ५. ३. ३. ४॥ स ( सोमः ) एतँ सोमाय मृगशीर्षाय श्यामाकं चरुं पयसि निरवपत्। ततो वै स ओषधीनाँ राज्यमभ्यजयत्। तै० ३. १. ४. ३॥ एते वै सोमस्यौषधीनां प्रत्यक्षतमां यच्छ्यामाकाः। श० ५. ३. ३. ४॥

श्यावा उपरिष्टाच्छ्यामवर्णा ज्वाला १। १००। १६ ॥ [ श्यावासु ] कृष्णासु ६। ४८। ६ ॥

श्यावा प्राप्तिसाधकौ धारणाकर्षणाख्यावश्विनौ २. १०. २ ॥ [ श्यावाः ] श्यायन्ते प्राप्नुवन्ति ते ( श्यावाः सवितुरित्यादिष्टोपयोजननामसु० । निघ० १।१५) १। ३५। ५ सवितुः किरणाः १।१२६। ३॥ [ श्यावाय ] ज्ञानिने ( श्यैङ् धातोरौणादिको वन् ) १। ११७। ८। श्यावर्णयुक्तायाश्वाय ५। ६१। ६ ॥

श्यावाश्व श्यावा कृष्णशिखाऽग्नयोऽश्वा यस्य तत्सम्बुद्धौ ५। ५२। १ ॥

( साम ) श्यावाश्वमार्चनानसँ सत्रमासीनं धन्वोदवहन् स एतत्सामापश्यत्तेन वृष्टिमसृजत ततो वै स प्रत्यतिष्ठत्तो गातुमविन्दत गातुविद्वा एतत्साम । तां० ८. ५. ९ ॥

श्यावाश्वस्तुताय श्यावैरश्वैः प्रशंसिताय ५। ६१। ५ ॥

श्यावी अन्धकाररूपा ३। ५५। ११ ॥ [ श्यावीम् ] अल्पकृष्णवर्णाम् १। ७१। १ ॥

श्यावी रात्रिनाम । निघ० १. ७ ॥

श्याव्याभ्यः श्यावीषु रात्रिषु भवाभ्यः क्रियाभ्यः ( श्यावीति रात्रिनाम । निघ० १। ७ ) ६। १५। १७ ॥

श्येतः प्राप्तः १। ७१। ४ ॥ [ श्येतासः ] श्वेतवर्णा अश्वाः ५। ३३। ८॥ [ श्येतम् ] श्वेतं शुभ्रम् ७। ४। ३ ॥

श्येताक्षः श्येते अक्षिणी यस्य सः २४। ३ ॥

श्येनः वेगवान् पक्षी १। ३२। १४। वेगवानश्व इव वर्तमानः १। ६३। ६। श्येन इव शीघ्रगन्ता ४। १८। १३। हिंस्रो वेगवान् पक्षी ४। २६। ५। प्रवृद्धवेगः ४। २६। ६। प्रशंसनीयगतिरश्वः ५। ४४। ११। श्येन इव पराक्रमी १८। ५३॥ श्यायति विज्ञापयतीति श्येनो विद्वान् २१। ३५ ॥ [ श्येनाः ] श्येनवत् पुरुषार्थिनः ४। ३५। ८ ॥ [ श्येनम् ] यः शीघ्रं धावित्वाऽन्यान् पक्षिणो हन्ति तं पक्षिविशेषम् १९। १० ॥ [ श्येनाय ] श्येन इव पाखण्डहिंसकाय ७। १५। ४ ॥

श्येनासः अश्वनाम । निघ० १. १४ ॥ श्येनः शंसनीयं गच्छति । नि० ४. २४ ॥

यदाह श्येनोऽसीति सोमं वा एतदाहैष वा अग्निर्भूत्वाऽस्मिंल्लोके संश्यायति । तद्यत्संश्यायति तस्माच्छ्येनस्तच्छ्येनस्य श्येनत्वम् । गो० पू० ५. १२ ॥ उरस एवास्य ( इन्द्रस्य ) हृदयाद्विषिरस्रवत्स श्येनोऽपाष्ठिहाभवद्वयसाँ राजा । श० १२. ७. १. ६ ॥ स ( श्येनः ) हि वयसामाशिष्ठः । तां० १३. १०. १४ ॥ श्येनो वै वयसां क्षेपिष्ठः । ष० ३. ८ ॥ एतद्वै वयसामोजिष्ठं बलिष्ठं यच्छ्येनः । श० ३. ३. ४. १५ ॥

श्येनपत्वा श्येन इव पतति ( अत्र पत् धातोरन्येभ्यो ऽपि दृश्यन्त इति वनिप् ) १। ११८। १ ॥

श्येनाभृतः यः श्येन इव विज्ञानादिगुणैः

समन्ताद् भ्रियते सः १ । ८० । २ ॥

**श्येनी** श्येनस्य स्त्री १ । १४० । ६ ॥

**श्रत्** सत्यम् १ । ५५ । ५ । श्रद्धां सत्याचरणम्वा १ । १०४ । ७ ॥

**श्रथय** शिथिलीकुरु (अत्र छन्दसि शायजपि । अ० ३ । १ । ८४ । अनेन शायजादेशः) १ । २४ । १५ । हिन्धि २ । २८ । ५ ॥

**श्रथयन्त** हिंसन्ति ५ । ५४ । १० । हिंसत ५ । ८५ । ४ ॥

**श्रथयन्ते** शिथिलीकुर्वन्ति ५ । ५६ । १ ॥

**श्रथाय** विमोचय १२ । १२ ॥

**श्रद्धा** श्रत् सत्यं दधाति यया सा १८ । ५ । सत्ये प्रीतिः ७ । ३२ । १४ ॥ [ श्रद्धाम् ] दृढं विश्वासम् १६।३०( भूमि० १०० )। सत्यधारिकां क्रियाम् २०।२४। श्रत् सत्यं दधाति ययेच्छया ताम् १६ । ३० ॥

श्रत् सत्यनाम । निघ० ३. १० ॥ श्रद्धा श्रद्धानात् । नि० ९. ३० ॥

श्रद्धा पत्नी सत्यं यजमानः। ऐ०७.१० ॥ श्रद्धां कामस्य मातरं हविषा वर्द्धयामसि । तै० २. ८. ८. ८ ॥ एतद्दीक्षायै ( रूपं ; यच्छ्रद्धा । श० १२. ८. २. ४ ॥ तेज एव श्रद्धा । श० ११. ३. १. १ ॥ श्रद्धैव सकृदिष्टस्याक्षितिः स यः श्रद्दधानो यजते तस्येष्टं न क्षीयते । कौ० ७. ४ ॥ श्रद्धा वा आपः । तै० ३. २. ४. १ ॥ श्रद्धा वै सूर्यस्य दुहिता ( यजु० १९. ४. ) श० १२. ७. ३. ११ ॥

**श्रद्धानः** सत्कर्मसु प्रीतियुक्तः १ । १०३ । ३ ॥

**श्रद्धामनाः** श्रद्धा मनसि यस्य सः २ । २६ । ३ ॥

**श्रद्धितम्** श्रद्धा संजाताऽस्येति तम् १ । १०४ । ६ ॥

**श्रपयतु** श्रपयति पाचयति ( अत्र लडर्थे लोट् ) १ । २२ ॥

**श्रपयन्तु** पाचयन्तु ११ । ६१ ॥

**श्रपयान्** श्रपयन्तु परिपाचयन्तु ११ । ५६ ॥

**श्रमत्** श्रास्याच्छ्रमं प्रापयेत् ( अत्र द्वाभ्यां विकरणव्यत्ययेन शप् ) २ । ३० । ७ ॥

**श्रमयुवः** श्रमेण युक्तः ( अत्र क्विब्वचिप्रच्छि० । उ० २ । ५४ इति क्विप् १ । ७२ । २ ॥

**श्रमिष्म** श्रमं कुर्याम ( अत्राडभावः ) २ । २६ । ४ ॥

**श्रयतात्** [उत्-] उच्छ्रितं कुर्यात् २३ । २७ ॥

**श्रयताम्** श्रयताम् १५ । १४ । सेवताम् ३६ । ४ ॥

**श्रयतु** सेवताम् १५ । १० ॥

**श्रयध्वम्** सेवध्वम् ५ । ५ । ५ ॥

**श्रयन्ताम्** सेवन्ताम् १ । १३ । ६ ॥

**श्रयमाणः** सेवमानः ३ । ८ । २ ॥

**श्रयस्व** सेवस्व, सेवते वा ४ । १० ॥

**श्रयेताम्** सेवेयाताम् ७ । २ । ६ ॥

**श्रवः** प्रशंसनीयम् २६ । १६ । शृण्वन्त्यनेका

विद्याः स्वर्णादि च धनं यस्मिँस्तत् ( श्रव इति धननामसु० । निघ० २।१० ) १ । ९ । ७ । शृण्वन्ति सर्वा विद्याः येनान्नेन तत् १ । ४० । ४ । विद्याश्रवणमन्नं वा १ । ४३ । ७ । सामर्थ्यमन्नं वा १ । १०२ । २ । कीर्तनं श्रवणं धनं वा १ । १०२ । २ । श्रूयमाणं यशः १ । १२६ । २ । ये शृण्वन्ति ते ६ । ३७ । ३ ॥ [श्रवोभिः] श्रवणमनननिदिध्यासनैः १ । १५६ । २॥ [ श्रवसे ] श्रोतुमर्हाय ( भवते ) १ । ३१ । ७ ॥

श्रवः धननाम। निघ० २. १०। श्रवः श्रवणीयं यशः । नि० ११.९ । श्रवः प्रशंसाम् । नि० ४. २४। श्रवः इत्यन्नाम, श्रूयत इति सतः । नि० १०. ३ ॥

श्रवत् [श्रवत्] शृणुयात् ( अत्र श्रुधातोर्लेट् , बहुलं छन्दसीति श्नोर्लुक् ) १ । ३० । ८॥ शृणोति ४ । ४३ । १॥

श्रवद्ध इन्द्रः शृण्वद्भोग्निरिति ( यजु० २८. ६ ) शृणोतु वै इन्द्रः शृणोत्वग्निरित्याशिषमेव तद्वदते । कौ० २८. ६ ॥

श्रवथः शृणुथः ५ । ७४ । १ ॥

श्रवथत्पतिम् श्रावयन् पतिर्यस्य तम् ५ । २५ । ५ ॥

श्रवय श्रावय ६ । ३१ । ५ ॥

श्रवयतम् श्रावयतम् ( वृद्ध्यभावश्छान्दसः ) २१ । ६ ॥

श्रवयन् श्रवणं कारयन् २ । १३ । १२ ॥

श्रवस्यः अन्नेषु साधुः २ । १० । १ । श्रोतुमर्हः ६ । १ ।११॥ [ श्रवस्याः ] श्रवस्सु श्रवणेषु साधवः २ । १३ । १३ ॥ [ श्रवस्यात् ] य आत्मनः श्रव इच्छति तस्मात् ५ । ३७ । ३ ॥

श्रवस्यन् आत्मनः श्रवोऽन्नमिच्छन् १। १७७। १ ॥ [ श्रवस्यते ] श्रोष्यमाणाय १। १२८। १ ॥ [ श्रवस्यताम् ] आत्मनः श्रवो धनमिच्छताम् १ । १३८ । ४ ॥

श्रवस्यम् श्रवस्यन्ने पृथिव्यादौ भवम् १ । ११७ ।९॥ [ श्रवस्यानि ] श्रवःसु धनेषु साधूनि वीरसैन्यानि १ । १०० । ५ ॥ [ श्रवस्या ] श्रवसि श्रवणे भवानि १ । १४९ । ५ । श्रोतुं योग्यानि २ । १९ । ७ । श्रवस्यन्ने साधूनि ७ । १८ । ११ । श्रवःस्वन्नेषु भवानि ७ । २३ । १ ॥

श्रवस्यानि यशांसि । नि० ५. २५ ॥

श्रवस्या आत्मनः श्रवः श्रवणमिच्छया १ । १८४ । ४ ॥

श्रवस्यया आत्मनः श्रव इच्छया १ । १२८ । ६ ॥

श्रवस्यात् आत्मनः श्रवणमिच्छेत् ४ । ४० । २ ॥

श्रवस्युः आत्मनः श्रवोऽन्नमिच्छुः १ । ५५ । ६ ॥ [ श्रवस्यवः ] आत्मनः श्रवणमिच्छवः १ । ४८ । ३ । स्वयं श्रोतुमिच्छवः १ । १२५ । ४ ॥

श्रवाय्य श्रोत्रे श्रवणहेतवे वा १६ । ३४ ॥

श्रवाय्यः श्रोतुमर्हः (अत्र सुदक्षिस्यहि० । उ. ३ । ९४ अनेनाय्यप्रत्ययः ) १ । २७ । ८ । श्रोतुं श्रावयितुं योग्यः १ । ३१ । ५ ॥ [ श्रवाय्या ] प्रशसनीयौ ५ । ८६ । २ ॥

श्रापय नय २३ । २६ ॥

श्रान्तम् खिद्यन्तम् १।१७९ । ३॥ [श्रान्तस्य] तपसा हतकिल्बिषस्य ४ । ३३ । ११॥

श्राम्यन्ति स्थिरा भवन्ति २ । २८ । ४ ॥

श्रायन्त इव समाश्रयन्त इव ( अत्र गुणे प्राप्ते व्यत्ययेन वृद्धिः ) ३३ । ४१ ॥

श्रायन्तः समाश्रिताः । नि० ६. ८ ॥

श्रायाः ये शृण्वन्ति श्रावयन्ति वा ते ५। ५३। ४ ॥

श्रावय विद्योपदेशान्कुरु १९ । २४ ॥

श्रितः आश्रितः १ । ७५ । ३ । सेवितः २ । ३ । ११ । संयुक्तः ३ । ९ । ३ ॥ [श्रितम्] सेवमानम् ३ । ९ । ४ । स्थितम् ४ । ५८। ११॥ [श्रिता] चलने हारे सदा बने रहो अथर्व० १२ । ५ । १ (१७५ विधिः)

श्रियसे श्रयितुम् १ । ८७ । ६ । श्रयितुमा- श्रयितुम्, सेवितुं वा ५ । ५९ । ३२ ।

श्रीः धनं शोभा वा ५ । ५७ । ६ । [श्रियः] चक्रवर्त्यादिराज्यलक्ष्मीः १ । ८५ । २ । शोभा धनानि वा ३ । १ । ५ । शोभाः सम्पत्तयः ३ । ४४ । २ ॥ [ श्रियम् ] राज्यलक्ष्मीम् २० । ७२ । शोभायुक्तम् ३३। २१। लक्ष्मीम्, विद्याम्, भोगान् , धनं वा १ । ४३। ७। विद्याराज- लक्ष्मीम् १ । ४६ । १४ । विद्याराज्यैश्वर्यशोभाम् १ । ७२ । १० । [ श्रिया ] शुभलक्षणया लक्ष्म्या १ । ११६ । १७। लक्ष्म्या शोभया विद्यया सेवया वा १ । ११७ । १३ । शोभायुक्तया राजलक्ष्म्या देदीप्यमानया राज्ञ्या वा ९ । ८ । [ श्रियै ] शोभायै १२ । २५ । विद्याशिक्षाराज्यधनप्राप्तये १ । ८८ । ३ । विद्याराज्यलक्ष्मीप्राप्तये १ । ९२ । ६ । लक्ष्मीप्राप्तये ४ । १० । ५ । सेवायै धनाय वा ४ । २३ । ६ ॥

अथ यत्प्राणा अश्रयन्त तस्मादु प्राणाः श्रियः । श० ६. १. १. ४ ॥ इयं ( पृथिवी ) वै श्रीः । ऐ० ८. ५ ॥ तस्याः ( श्रियः ) अग्निरन्नाद्य- मादत्त । सोमो राज्यं वरुणः साम्राज्यं मित्रः क्षत्रमिन्द्रो बलं बृहस्पतिर्ब्रह्मवर्चसँ सविता राष्ट्रं पूषा भगँ सरस्वती पुष्टिं त्वष्टा रूपाणि । श० ११. ४. ३. ३ ॥ श्रीर्वा एकशफम् ( अश्वाश्वतरगर्दभरूपम् ) । तै० ३. ९. ८. २॥ श्रीर्वै पशवः श्रीः शक्वर्यः । तां० १३. २. २ ॥ श्रीर्वै श्रायन्तीयम् ( साम ) । तां० १२. ४. ५ ॥ श्रीः पृष्ठ्यानि । कौ० २१. ५ ॥ श्रियै वाऽएतद्रूपं यद्वीणा । श० १३. १. ५. १ ॥ यदा वै पुरुषः श्रियं गच्छति वीणास्मै वाद्यते । श० १३. १. ५. १ ॥ श्रीर्वै स्वरः । श० ११. ४. २. १० ॥ रात्रिरेव श्रीः श्रियाँ हैतद्रात्र्याँ सर्वाणि भूतानि संवसन्ति । श० १०. २. ६. १६ ॥ श्रीर्वै राष्ट्रम् । श० ६. ७.३.७॥ श्रीर्वै राष्ट्रस्य भारः । श० १३. २. ९. ३ ॥ श्रीर्वै राष्ट्रस्याग्रम् । श० १३. २. ९. ७ ॥ श्रीर्वै पिलिप्पिला । श० १३. २. ६. १६ ॥ तै० ३. ९. ५. ३ ॥ श्रीर्वै वरुणः । कौ० १८. ९ ॥ ( सविता ) श्रिया स्त्रियम् ( समदधात् ) ।

गो० पू० १. ३४ ॥ श्रीर्देवाः । श० २. १. ४. ९ ॥ श्रियै पाप्मा ( निवर्तते ) । श० १०. २. ६. १६ ॥ बहिर्धेव वै श्रीः । जै० उ० १. ४. ६ ॥ एकस्था वै श्रीः । कौ० १८. ९ ॥ २६. ५ ॥ एकस्ता ( ? एकस्था ) वै श्रीः । गो० उ० ६. १३ ॥

श्रीणन् परिपक्कं कुर्वन् १ । ६८ । १ ॥

श्रीणन्ति पचन्ति १ । ८४ । ११ ॥

श्रीणातु परिपचतु ६ । १८ ॥

श्रीणानः आश्रयं कुर्वाणः ३३ । ८५ ॥

श्रीणीषे पचसि ५ । ६ । ९ ॥

श्रीमनाः श्रियि मनो यस्य सः १७ । ५६॥

श्रीयस्व सेवस्व ( अत्र विकरणव्यत्ययेन श्यन् ) ३७ । १३ ॥

श्रुतः यः श्रूयते सः १ । ५३ । ९ । प्रख्यातः २ । २० । ६ । सकलशास्त्रश्रवणेन कीर्तिमान् ४ । ३० । २ ॥ [ श्रुतम् ] सर्वशास्त्रश्रवणकथनम् १ । ६ । ६ । श्रवणम् १५ । ७ । पठितम् १ । ११६ । १३ ॥ [ श्रुतस्य ] प्रसिद्धस्य ३। ४६।१ ॥

श्रुतम् शृणुतम् ७ । ९ । शृणु ५ । ७८ । ५ ॥

श्रुतरथाय श्रुता रथा यस्य ५ । ३६ । ६ ॥ [ श्रुतरथे ] श्रुते रमणीये रथे १ । १२२ । ७ ॥

श्रुतर्यम् श्रुतानि अर्याणि विज्ञानशास्त्राणि येन तम् ( अत्र शकन्ध्वादिना ह्यकार-लोपः ) १ । ११२ । ९ ॥

श्रुतवित् यः श्रुतं वेत्ति ५ । ४४ । १२ ॥

श्रुतसेनाय श्रुता प्रख्याता सेना यस्य तस्मै १६ । ३५ ॥

श्रुता श्रावयन्ति ( अत्र व्यत्ययो लडर्थे लोडन्तर्गतो ण्यर्थः । बहुलं छन्दसीति शपो लुग् द्व्यचो० इति दीर्घश्च ) १ । २३। ८ । शृणु २ । ४१ । १५ ॥

श्रुताम् श्रुताम् ५ । ६२ । ५ ॥ [ श्रुतासु ] विद्यासु ५ । ६० । २ ॥

श्रुतिः शृण्वन्ति सकला विद्या यया सा वेदाख्या १८ । १ ॥

श्रुत्कर्णः श्रुतौ कर्णौ यस्य सः ७ । ३२। ५ ॥ [ श्रुत्कर्णम् ] यः सकला विद्याः शृणोति तम् १ । ४५ । ७ । श्रुतौ श्रवण-साधकौ कर्णौ यस्य बहुश्रुतस्य तम् १२। १११॥ [ श्रुत्कर्ण ] अर्थिवचः श्रोतारौ कर्णौ यस्य तत्सम्बुद्धौ ३३ । १५ ॥

श्रुत्यम् श्रोतुं योग्यम् १ । ११७ । २३ । श्रुतिषु साधु १ । १६५ । ११ । श्रुतिषु श्रवणेषु भवम् २ । ३० । ११ । श्रुतिषु श्रवणेषु साधुम् ६ । ७२ । ५ ॥

श्रुत्वा श्रुत्वा ६ । ५० । ५ ॥

श्रुधी [ श्रुधी ] शृणु (अत्र द्व्यचो० इति दीर्घः बहुलं छन्दसीति श्नोर्लुक् । श्रु शृणु इति हेर्ध्यादेशश्च ) ३ । २६ । शृणु श्रावय वा ( अत्रैकपक्षेऽन्तर्गतो ण्यर्थो बहुलं छन्दसि श्नोर्लुक् श्रुशृणुपॄकृवृभ्य इति हेर्ध्यादेशश्च ) १ । २६ । ५ ॥

श्रुधी शृणु । नि० १०.२ ॥

श्रुधीयतः आत्मनः श्रुधिमन्नमिच्छतः ६ । ६७ । ३ ॥

श्रुवत् यः शृणोति सः १ । १२७ । ३ ॥

श्रुवन्तु शृण्वन्तु ( अत्र विकरणव्यत्ययेन शः ( २७८ भूमि० ) १९ । ५७ ॥

श्रुष्टिः श्रोतव्या विद्या १ । १७८ । १। शीघ्रम् १।२।६८॥[ श्रुष्टिम् ] क्षिप्रकारिणम् १।६७। १ । प्राप्तव्यं वस्तु १ । १६६ ।१३। [श्रुष्टये] शीघ्रत्वाय २ । ३८ । २ । [श्रुष्टौ] प्राप्तव्ये सुखे २ । १३ । ९ ॥

श्रुष्टिमन्तम् शीघ्रं बहुसुखहेतुम् १ । ९३ । १२ । श्रुष्टि प्रशस्तं क्षिप्रकरं यस्मिँस्तम् ५ । ५४ । १४ ॥

श्रुष्टी शीघ्रम् २ । ३ । ९ ॥

श्रुष्टी क्षिप्रनाम आशु अष्टीति । नि० ६.१३॥

श्रुष्टीवानः ये श्रुष्टी शीघ्रं वनन्ति सम्भजन्ति ते ( श्रुष्टी इति पदनाम । निघ० ५ । ३ ) १ । ४५ । २ । शीघ्रक्रियायुक्ताः १ । १२७ । ९॥ [ श्रुष्टीवानम् ] श्रुष्टीः क्षिप्रगतीर्वनति भाजयति यस्तम् ( वनधातोर्ण्यन्तादच् ) १ । ११९ । १ । आशुगन्तारं गमयितारं वा ३ । २७ । २ ॥

श्रूयाः शृणुयाः २ । १० । २ ॥

श्रेणिशः पंक्तिवद्वर्तमानाः १ । १६३ । १० । कृतश्रेणयो विहितपंक्तयः ३ । ८ । ९ ॥

श्रेणीः पंक्तीः ५ । ५९ । ७ ॥

श्रेणिः श्रयतेः समाश्रिता भवन्ति । नि० ४.१३॥

श्रेत् आश्रयेत् १ । १७४ । ७ ॥

श्रेयः मुक्तिसुखम् १८ । ८ ॥ [ श्रेयसः ] अतिशयेन प्रशस्तान् ३ । ५८ ॥ [ श्रेयसे] धर्मार्थकामप्राप्तये ३० । ११ ॥

श्रेयस्कर कल्याणकर्तः १० । २८ ॥

श्रेयान् अतिशयेन प्रशस्ता ३ । ८ । ४ । अतिशयेन श्रेयः ६ ।४१ । ४ ॥ [श्रेयांसः] अतिशयेन श्रेय इच्छन्तः ५ । ६० । ४ ॥

श्रेषाम सेवेम ४ । ४३ । १ ॥

श्रेष्ठः अत्युत्तमः १ । ४३ । ५ । अतिशयेन प्रशंसितः २ । ३३ । ३ । धर्म्यगुणकर्मस्वभावातिशययुक्तः ६ । १६ । २६ ॥ [ श्रेष्ठम् ] अतिशयेन श्रेयस्करम् २। ७। १ । प्रशस्तम् १ । ११३ । १ । उत्तमम् १। १६४ । २६ । अतिशयेन प्रशस्यम् ४ । ३६ । ७ । अत्युत्तमम् ४ । ५४ । १ ।

श्रेष्ठतमा अतिशयेन प्रशंसिता १। ११३। १२॥ [ श्रेष्ठतमाः ] अतिशयेन श्रेयस्कराः ५ । ६१ । १ ॥

श्रेष्ठया अत्युत्तमया ५ । २५ । ३ ॥

श्रेष्ठवर्चसा श्रेष्ठं वर्चोऽध्ययनं ययोस्तौ ५। ६५। २॥

श्रोणः श्रोता २। १५। ७॥ [श्रोणम्] वधिरवद्वर्तमानं पुरुषम् १। ११२। ८। वधिरम् २। १३। १२। खञ्जम् ४। ३०। १६॥

श्रोणाम् श्रोतव्याम् १। १६१। १०॥

श्रोणी कटिप्रदेशौ २०। ८ (२३१ भूमि०)॥ [श्रोणितः] कटिप्रदेशात् २१। ४३॥

श्रोणिः श्रोणतेर्गतिचलाकर्मणः। श्रोणिश्चलतीव गच्छतः। नि० ४. ३॥

जगती छन्द आदित्यो देवता श्रोणी। श० १०. ३. २. ६॥ श्रोणी द्वियजुः (इष्टका)। श० ७. ५. १. ३५॥

श्रोता शृणुत (अत्र तस्य स्थाने तप्तनप्तनथनाश्च। अ० ७। १। ४५ अनेन तवादेशः। द्व्यचो० इति दीर्घः बहुलं छन्दसीति श्नुलोपश्च) ६। २६॥

श्रोता शृणुत। नि० १२. ४३.

श्रोता विवादानां वचनानां श्रवणकर्त्ता ६। २४। २॥

श्रोतु शृणोतु ५। ४६। ६॥

श्रोतुरातिः श्रोतुः श्रवणं रातिर्दानं यस्य १। १२२। ६॥

श्रोत्रम् शृणोति शब्दान् येन तच्छब्दग्राहकमिन्द्रियम् ४। १५। ज्ञानेन्द्रियाणामुपलक्षणम् २२। ३३॥ शब्द प्रमाण और उसकी सामग्री। अथर्व० १२। ५। ६। (१७६ विधिः) [श्रोत्राय] शब्दज्ञानाय ७। २७॥ [श्रोत्रात्] अवकाशमयात् ३१। १३। श्रोत्रावकाशरूपसामर्थ्यात् ३१। १२॥

श्रोत्रं हृदये (श्रितम्)। तै० ३. १०. ८. ६॥ श्रोत्रं वै ब्रह्म श्रोत्रेण हि ब्रह्म शृणोति श्रोत्रे ब्रह्म प्रतिष्ठितम्। ऐ० २. ४०॥ श्रोत्रं वै सम्राट् परमं ब्रह्म। श० १४. ६. १०. १२.॥ श्रोत्रं वा अपाँ सधिः (यजु० १३. ५३)। श० ७. ५. २. ४५॥ श्रोत्रं वै परँ रजो दिशो वै श्रोत्रं दिशः परँ रजः। श० ७. ५. २. २०.॥ यत्तच्छ्रोत्रं दिशा एव तत्। श० १०. ३. ३. ७॥ तद्यत्तच्छ्रोत्रं दिशस्ताः। जै० उ० १. २८. ९॥ श्रोत्रं वै विश्वामित्र ऋषिर्यदेनेन सर्वतः शृणोत्यथो यदस्मै सर्वतो मित्रं भवति तस्मात्छ्रोत्रं विश्वामित्र ऋषिः (यजु० १३. ५७)। श० ८. १. २. ६॥ श्रोत्रं विश्वे देवाः। श० ३. २. २. १३॥ विश्वँ हि श्रोत्रम्। श० ७. ५. २. १२॥ यच्छ्रोत्रं स विष्णुः। गो० उ० ४. ११॥ वागिति श्रोत्रम्। जै० उ० ४. २२. ११॥ श्रोत्रं पङ्क्तिः। श० १०. ३. १. १॥ श्रोत्रं वै सम्पच्छ्रोत्रे हीमे सर्वे वेदा अभिसम्पन्नाः श० १४. ९. २. ४॥

श्रोत्री श्रोत्रस्येयं सम्बन्धिनी १३। ५७॥

श्रोमतम् श्रोतव्यं विज्ञानमन्त्रादिकं वा ७। २४। ५॥ [श्रोमतेभिः] श्रावणीयैर्वचनैः ६। १६। १०॥ [श्रोमताय] प्रशस्तकीर्तियुक्ताय व्यवहाराय १। १८२। ७॥

श्रोषन् शृण्वन्तु १। ६८। ५॥

श्रोषन्तु शृण्वन्तु (अत्र विकरणव्यत्ययेन शप् लेटि सिप्) १। ८६। ५॥

श्रोषमाणाः शृणवन्तः ( अत्र वाच्छन्दसीति द्वित्वाभावः ) ३।८।१०॥

श्रोषि शृणोषि (अत्र विकरणस्य लुक्) ३३। १३॥

श्रौषट् हविर्दात्रीम १।१३९।१॥

श्लोकः सत्यवाक्संयुक्तः ११। ५। प्रशंसिता शिक्षिता वाक् १८।१॥ [श्लोकाय] तत्त्वसंघातसत्काव्यगद्यपद्यछन्दोनिर्माणादिविज्ञानाय १०।५

श्लोकः। वाङ्नाम निघ० १।११॥ श्लोकः शृणोतेः। नि० ९।९॥

श्लोक्य शास्त्रश्रवणाय सम्बन्धय १४। ८॥

श्लोक्याय श्लोके वेदवाण्यां साधवे १६। ३३॥

श्वः आगामिदिने १।१२३।८॥

श्वः उपाशंसनीयः कालः। नि० १. ६॥

न श्वः श्वमुपासीत को हि मनुष्यस्य श्वो वेद। श० २. १. ३. ९॥

श्वघ्नीव यथा वृकी शुनः श्वादीन् मृगान् कृन्तन्ती १।९२।१०। या शुनो हन्ति तद्वत् २।१२।४। वृकीव ४।२०।३॥

श्वनिनम् बहुश्वपालम् ३०। ७॥ [श्वनिभ्यः] ये शुनो नयन्ति शिक्षयन्ति तेभ्यः १६।२७॥

श्वपतिभ्यः शुनो पालकेभ्यः १६।२८॥

श्वभ्रा इव गर्तमिव २।२७।५॥

श्वसनस्य श्वसन्ति येन प्राणेन तस्य १। ५४।५॥

श्वसन्तम् प्राणयन्तम् १।१६६।४॥

श्वसिति योऽग्निना प्राणऽपानचेष्टां करोति १।६५।५॥

श्वसिति वधकर्मा। निघ० २. १९॥

श्वसीवान् प्राणवान् १।१४०।१०॥

श्वा कुक्कुरः २२।५॥ [श्वाना इव] यथा चौरादिभ्यो रक्षकौ कुक्कुरौ २।३८।४॥ [श्वानम्] प्रेरकम् १।१६१।१३॥

अनृतं स्त्री शूद्रः श्वा कृष्णः शकुनिस्तानि न प्रेक्षेत। श० १४. १. १. ३१॥

श्वात्रः ज्ञानवान् ( श्वात्रतीति गतिकर्मसु० निघ० २।१४ ) ५।३१॥ [श्वात्राः] श्वात्रं प्रशस्तं विज्ञानं धनं वा विद्यते यासां ताः (अत्र अर्शआदिभ्योऽच्। अ०५। २।१२७। इति प्रशंसार्थेऽच्। श्वात्रमिति पदनामसु०। निघ० ४।२ धननामसु च। निघ० २।१०) ४।१२। श्वात्रं शीघ्रं कर्म विज्ञानं वर्तते यासां ताः ( अर्श आदित्वादच्। श्वात्रमिति क्षिप्रनामसु०। निघ० ५।३ ) ६।३४॥ [श्वात्रासः] श्वात्रं प्रवृद्धं धनं येभ्यस्ते ( श्वात्रमिति धननाम। निघ० २।१० ) ३३।१॥ [श्वात्रेण] धनेन विज्ञानेन वा १।३१।४॥

( यजु० ६. ३४) शिवा ह्यापस्तस्मादाह ( हे आपो यूयं ) श्वात्रा स्थेति ( श्वात्राः = शिवाः )। श० ३. ९. ४. १६॥

श्वान्तम् श्रान्तं परिपक्वज्ञानम् ( अत्र वर्णव्यत्ययेन रेफस्य स्थाने वः ) १।१४५।४॥

श्वावित् पशुविशेषः ( सेहीति भाषायाम् ) २३ । ५६ ॥

श्वासय प्राणय २६ । ५५ ॥

श्वितानः शुभ्रवर्णः ६ । ६।२ ॥

श्वितीचयः ये श्वितिं श्वेतवर्णं चिन्वन्ति ते ३३ । १ ॥

श्वितीची या श्वितिं श्वेतवर्णमञ्चति सा १ । १२३ । ६ ॥

श्वित्न्येभिः श्वेतवर्णयुक्तैस्तेजस्विभिः १ । १०० । १८ ॥

श्वित्यञ्चः ये श्वितिं वृद्धमञ्चन्ति प्राप्नुवन्ति ते ७ । ३३ । १॥ [ श्वितीचे ] यः श्वितिमावरणमञ्चति तस्मै २। ३३ । ८॥

श्वित्रः विचित्रः पशुविशेषः २४। ३९ ॥

श्वित्र्यम् श्वित्रायां भूम् रावरणे साधु १ । ३३ । १५ ॥

श्वेतः श्वेतवर्णः २४ । १ । गन्ता वर्धको वा २७ । २३ । भास्वरस्वरूपत्वाच्छुद्धः १ । ६६ । ३ ॥ [ श्वेतम् ] प्रवृद्धम् १ । ११६ । ६ । सततं गन्तुं प्रवृद्धम् १ । ११६।१० । अग्निगुणविद्युन्मयं शुद्धधातुनिर्मितम् १ । ११६ । १० ( २०६ भूमिः ) ॥

श्वेतनायै प्रकाशाय १ । १२२ । ४ ॥

श्वेत्या शुभ्रस्वरूपा १ । ११३ । २ ॥

श्वैतरीम् अतिशयेन शुद्धाम् ४ । ३३ । १ ॥

श्वैत्रेयः श्वित्राया वर्णकर्त्र्या भूमेरपत्यं श्वैत्रेयः १ । ३३ । १४ ॥ [ श्वैत्रेयस्य ] श्वित्रास्वन्तरिक्षस्थासु दिक्षु भवस्य जलस्य ५ । १९ । ३ ॥

## ष

षट् वसन्तादीन् ऋतून् १ । २३ । १५ । पञ्चतत्त्वानि महत्तत्त्वञ्च ३ । ५६ । २ । षड्विधाः ६ । ४७ । ३ । षट् ७ । १८ । १४ ॥

षट्त्रिंशः षड्त्रिंशत्प्रकारः १४ । २३ ॥

षट्त्रिंशत् षडुत्तरा त्रिंशत् १८ । २५ ( १५० भूमि० ) ॥

षट्पदाः षट् पदानि यासु ताः २३ । ३४॥

षडक्षरेण दैव्या त्रिष्टुभा ९ । ३२ ॥

षळरे षट् ऋतवो ऽरा यस्मिन् तस्मिन् १ । १६४ । १२ ॥

षळश्वैः षडश्वा आशुगमकाः कलायन्त्रस्थितिप्रदेशा येषु तैः १ । ११६ । ४ ॥

षष्टिः षष्टिः १ । १२६ । ३ ॥

षष्ठी षण्णां पूरणा २५।४॥

षाद सहनशीलः (-वाच्छन्दसीति केवला-

दपि ण्विः ) १ । ६३ । ३ ॥

**षोडश** सोलह १८ । २५ [ षोडशम् ] प्रमाणादिपदार्थसमूहम् ६ । ३४ ॥

षोडशः ( स्तोमः ) हीना वा एते हीयन्ते ये व्रात्यां प्रवसन्ति न हि ब्रह्मचर्यंचरन्ति न कृषिन्न वाणिज्यार्ँ षोडशो वा एतत्स्तोमः समाप्तुमर्हति । तां० १७. १. २ ॥ मरुत्स्तोमो वा एषः ( षोडशः स्तोमः ) । तां० १७. १. २ ॥

**षोडशाक्षरेण** साम्यानुष्टुभा ९ । ३४ ॥

**षोडशी** प्रशस्ताः षोडश कला विद्यन्ते यस्मिँन्त्सः ( इच्छा प्राणः श्रद्धा पृथिव्यापोऽग्निर्वायुराकाशमिन्द्रियाणि मनोऽन्नं मन्त्रा लोको नाम चैताः कलाः प्रश्नोपनिषदि प्रतिपादिताः ) ८ । ३६ ॥

षोडशी ( शस्त्रम्, स्तोत्रम्, ग्रहः ) अथो षोडशं वा एतत्स्तोत्रं षोडशं शस्त्रं तस्मात्षोडशीत्याख्यायते । कौ० १७. १ ॥ षोळश स्तोत्राणां षोडश शस्त्राणां षोळशभिरक्षरैरादत्ते षोळशभिः प्रणौति षोळशपदान्निविदं दधाति तत्षोळशिनः षोळशित्वम् । ऐ० ४. १ ॥ किं षोडशिनः षोडशित्वं षोडश स्तोत्राणि षोडश शस्त्राणि षोडशभिरक्षरैरादत्ते । गो० उ० ४. १९ ॥ वृषण्वद्वै षोळशिनो रूपम् । ऐ० ४. ४ ॥ सर्वेभ्यो वा एष सवनेभ्यः सान्निर्मितो यत्षोळशी । ऐ० ४. ४ ॥ सर्वेभ्यो वा एष छन्दोभ्यः सन्निर्मितो यत्षोळशी । ऐ० ४.३,४॥ सर्वेभ्यो वा एष लोकेभ्यः सन्निर्मितो यत् षोळशी । ऐ० ४. ४ ॥ त्रिवृद्वै षोडशी । कौ० १७. ३ ॥ आनुष्टुभो वै षोडशी । कौ० १७. २, ३ ॥ आनुष्टुभो वा एष वज्रो यत्षोडशी । कौ० १७. १ ॥ वज्रो वा एष यत्षोळशी । ऐ० ४. १ ॥ वज्रः षोडशी । तां० १६. ६. ३ ॥ वज्रो वै षोडशी । तां० १२. १३. १४ ॥ गो० उ० २. १३ ॥ वज्रः षोडशी । ष० ३. ११ ॥ इन्द्रियं वीर्यंर्ँ षोडशी । तां० २१. ५. ६ ॥ वीर्यर्ँ षोडशी । श० १२. २. २. ७ ॥ अतिरिक्तो वै षोडशी । तां० ६. १. ५ ॥ अपछदिव वा एतद्यज्ञकाण्डं यत् षोडशी (साम) तां० १८. ६. २३ ॥ एकविंशायतनो वा एष यत् षोडशी सप्त हि प्रातःसवने होत्रा वषट् कुर्वन्ति सप्त माध्यन्दिने सवने सप्त तृतीये सवने तां० १२. १३. ८ ॥

**षोळ्हा** षट् प्रकाराः ३ । ५५ । १८ ॥

**संयती** संयमे गच्छन्त्यौ द्यावापृथिव्यौ २ । १२ । ८ । सम्मिलिते ५ । ३७ । ५ ॥

**संयद्वीरम्** संयता संयमयुक्ता वीरा यस्मिँस्तम् २ । ४ । ८ ॥

**स९ँरराणः** सम्यग् दातृशीलः ( अत्र व्यत्ययेनात्मनेपदम् । बहुलं छन्दसीति शपः स्थाने श्लुः ) ८ । ३६ । सम्यक् सुखानि राति ददाति सः १६। ५१। सत्यविद्यायाः सम्यग् दानकर्त्ता (२७६ भूमि०)। सम्यग् रममाणः ३२ । ५ ॥

**संरिहाणे** सम्यगास्वादकर्त्र्यौ ३ । ३३।३ ॥
**संवत्सरे** वर्षे १ । ११० । ४ ॥

संवत्सरः संवसन्तेऽस्मिन् भूतानि । नि० ४.२७। षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्राः इति च ब्राह्मणं समासेन । ४. २७ ॥
स ऐक्षत प्रजापतिः । सर्वं वाऽ अत्सारिषं य इमा देवता असृक्षीति स सर्वत्सरोऽभवत् सर्वत्सरो ह वै नामैतद्यत्संवत्सर इति । श० ११. १. ६. १२ ॥ यः स भूतानां पतिः संवत्सरः सः । श० ६. १. ३. ८॥ संवत्सरो वै प्रजापतिः । श० २. ३. ३. १८ ॥ ३. २. २. ४ ॥ ५. १. २. ९ ॥ संवत्सरो वै प्रजापतिरेकशतविधः । श० १०. २. ६. १ ॥ संवत्सरः प्रजापतिः । ऐ० १. १, १३, २८ ॥ २. १७ ॥ तां० १६. ४. १२ ॥ गो० उ० ३. ८ ॥ तै० १. ४. १०. १० ॥ स (संवत्सरः) एव प्रजापतिस्तस्य मासा एव सहदीक्षिणः । तां० १०. ३. ६ ॥ स वै संवत्सर एव प्रजापतिः । श० १. ६. ३. ३५ ॥ प्रजापतिः संवत्सरः । ऐ० ४. २५ ॥ स एष प्रजापतिरेव संवत्सरः । कौ० ६. १५ ॥ संवत्सरो यज्ञः प्रजापतिः । श० १. २. ५. १२ ॥ २. २. २. ४ ॥ संवत्सरो वै यज्ञः प्रजापतिः । तस्यैत (द्) द्वारं यदमावास्या चन्द्रमा एव द्वारपिधानः । श० ११. १. १. १ ॥ संवत्सरो यज्ञः श० ११. २. ७. १ ॥ संवत्सरसंमितो वै यज्ञः पञ्च वाऽ ऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च जुहोति । श० ३. १. ४. ५ ॥ संवत्सरो वै पञ्चहोता । तै० २. २. ३. ६ ॥ संवत्सरो वाव होता । गो० उ० ६. ६ ॥ संवत्सरो वै होता । कौ० २९. ८ ॥ संवत्सरो वै धाता । तै० १. ७. २. १ ॥ पुरुषो वै संवत्सरः । श० १२. २. ४. १ ॥ पुरुषो वाव संवत्सरः । गो० पू० ५. ३, ४ ॥ प्राणो वै संवत्सरः । तां० ५. १०. ३ ॥ वाक् संवत्सरः । तां० १०. १२. ७ ॥ बृहती हि संवत्सरः । श० ६. ४. २. १० ॥ तदाहुस्संवत्सर एव सामेति । जै० उ० १. ३५. १ ॥ संवत्सरः स्वर्गाकारः । तै० २. १. ५. २ ॥ अग्निः संवत्सरः । तां० १७. १३. १७ ॥ अग्निर्वाव संवत्सरः । तै० १. ४. १०. १ ॥ संवत्सरोऽग्निः । श० ६. ३. १. २५ ॥ ६. ३. २. १० ॥ ६. ६. १. १४ ॥ तां० १०.१२.७॥ संवत्सर एवाग्निः । श० १०. ४. ५. २ ॥ संवत्सर एषोऽग्निः श० ६. ७. १. १८ ॥ संवत्सरो वा अग्निर्वैश्वानरः । तै० १. ७. २. ५ ॥ श० ६. ६. १. २० ॥ संवत्सरोऽग्निर्वैश्वानरः । ऐ० ३. ४१ ॥ संवत्सरो वैश्वानरः । श० ५. २. ५. १५ ॥ ६. २. १; ३६ ॥ ६. ६. १. ५ ॥ ७. ३. १. ३४ ॥ ९. ३. १. १ ॥ संवत्सरो वै वैश्वानरः । श० ४. २. ४. ४ ॥ ५. २. ४. १४ ॥ संवत्सरो वै पिता वैश्वानरः प्रजापतिः । श० १.५. १. १६॥ संवत्सरो वै सोमो राजा ( ऋ० ४. ५३. ७ ) । कौ० ७. १० ॥ संवत्सरो वै सोमः पितृमान् । तै० १. ६. ८. २ ॥ १. ६. ९. ५ ॥ संवत्सरो वा इन्द्राशुनासीरः । तै० १. ७. १.१॥ इन्द्राय शुनासीराय (=संवत्सराय) पुरोडाशं द्वादशकपालं निर्वपति । तै० १. ७. १. १ ॥ संवत्सरो वै शुनासीरः । गो० उ० १. २६ ॥ स यः स संवत्सरो ऽसौ स आदित्यः । श० १०. २. ४. ३ ॥ एष वै संवत्सरो य एष ( आदित्यः )

तपति । श० १४. १. १. २७ ॥ एष वै मृत्युर्यत्संवत्सरः । एष हि मर्त्यानामहोरात्राभ्यामायुः क्षिणोत्यथ म्रियन्ते । श० १०. ४. ३. १ ॥ संवत्सरो विश्वकर्मा । ऐ० ४. २२ ॥ संवत्सरो वरुणः । श० ४. ४. ५. १८ ॥ संवत्सरो हि वरुणः । श० ४. १. ४. १० ॥ व्योमा ( यजु० १४. २३ ) हि संवत्सरः । श० ८. ४. १. ११ ॥ सुमेकः संवत्सरः स्त्रैको ह वै नामैतद्यत्सुमेक इति । श० १. ७. २. २६ ॥ संवत्सरो वै समस्तः सहस्रवांस्तोकवान्पुष्टिमान् । ऐ० २. ४१ ॥ संवत्सरो वै परिक्षित्, संवत्सरो हीमाः प्रजाः परिक्षेति, संवत्सरं हीमाः प्रजाः परिक्षियन्ति । ऐ०६.३२॥ संवत्सरो वै परिक्षित् संवत्सरो हीदं सर्वं परिक्षियतीति । गो०उ० ६. १२॥ संवत्सरो वै प्रवतः शश्वीरपः । तां०४.७.६॥ संवत्सरो वज्रः । श० ३. ६. ४.१९॥ संवत्सरो हि वज्रः । श० ३. ४. ४. १५ ॥ संवत्सरो यजमानः । श० ११. २. ७. ३२ ॥ अभ्रातृव्या ( प्रजापतेस्तनूविशेषः ) तत्संवत्सरः । ऐ० ५ २५ ॥ कौ० २७. ५ ॥ अग्निष्टोम उक्थ्योऽग्निर्ऋतुः प्रजापतिः संवत्सर इति । एते ऽनुवाका यज्ञक्रतूनाञ्चर्तूनाञ्च संवत्सरस्य च नामधेयानि तै० ३. १०. ४ ॥ संवत्सरो वै देवानां जन्म । श० ८. ७. ३. २१ ॥ संवत्सरः खलु वै देवानां पूः । तै० १. ७. ७. ५ ॥ तस्य ( संवत्सरस्य ) वसन्त एव द्वारँ हेमन्तो द्वारं तं वाऽएतँ संवत्सरँ स्वर्गं लोकं प्रपद्यते । श० १. ६. १. १९ ॥ संवत्सरः सुवर्गो लोकः । तै० २. २. ३. ६ ॥ ३. ९. २. २ ॥ श० ८. ४. १. २४ ॥ ८. ६. १. ४ ॥ तां० १८. २. ४ ॥ मध्ये ह संवत्सरस्य स्वर्गो लोकः । श० ६. ७.४. ११ ॥ संवत्सरो वाव नाकः षट्त्रिँशस्तस्य चतुर्विँशतिरर्धमासा द्वादश मासास्तद्यत्तमाह नाक इति न हि तत्र गताय कस्मैचनाकं भवति । श० ८. ४. १. २४ ॥ संवत्सरो वै देवानां गृहपतिः । तां० १०. ३. ६ ॥ एकं वा एतद्देवानामहः । यत्संवत्सरः । तै० ३. ९. २२. १ ॥ सद्यो वै देवानाँ संवत्सरः । तां० १६. ६. ११ ॥ इमऽ उ लोकाः संवत्सरः । श० ८. २. ". १७ ॥ सर्वं वै संवत्सरः । श० १. ६. १. १९ ॥ १. ७. २. २४ ॥ ४. २. २. ७ ॥ १०. २. ५. १६ ॥ ११. १. २. १२ ॥ संवत्सर इदँ सर्वम् । श० ८. ७. १. १ ॥ संवत्सरो वाऽ ऋतव्याः ( इष्टकाः ) । श० ८. ६. १. ४ ॥ ८. ७. १. १ ॥ ऋतवः संवत्सरः । तै० ३. ९. ६. १ ॥ ऋषभो वा एष ऋतूनाम् । यत्संवत्सरः । तस्य त्रयोदशो मासो विष्टपम् । तै० ३. ८. ३. ३ ॥ त्रयो वाऽ ऋतवः संवत्सरस्य । श० ३. ४. ४. १७ ॥ ११. ५. ४. ११ ॥ त्रेधा विहितो वै संवत्सरः । कै० १९. ३ ॥ पञ्चऽर्तवः संवत्सरस्य । श० १. ५. २. १६ ॥ ३. १. ४. २० ॥ षड्वाऽऋतवः संवत्सरस्य । श० १. २. ५. १२ ॥ सप्तऽर्तवः संवत्सरः । श० ६. ६. १. १४ ॥ ७. ३. ३. ९ ॥ ९. १.१. २६॥ द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः । श० २. ९. ३. २७ ॥ श० ५. ४. ५. २३ ॥ संवत्सरस्य प्रतिमा वै द्वादश रात्रयः । तै० १. १. ६. ७ ॥ १. १. ९. १० ॥ त्रयोदश वै मासा संवत्सरस्य । श० ३. ६. ४. २४ ॥ एतावान्वै संवत्सरो यदेष त्रयोदशो मासस्तदत्रैव सर्वः संवत्सर आप्तो भवति । कौ० १९. २ ॥ एतावान्वै संवत्सरो यदेष त्रयोदशो मासस्तदत्रैव सर्वः संवत्सर आप्तो भवति । कौ० ५. ८ ॥ स एष संवत्सरः प्रजापतिः षोडशकलः । श० १४. ४. ३. २२॥ संवत्सरः सप्तदशः । तां० ६. २. २ ॥ सप्तदशो वै संवत्सरो द्वादश मासाः पञ्चर्तवः । श० ६. २. २. ८ ॥ संवत्सर एव सप्तदशस्यायतनं

द्वादश मासाः पञ्चर्तव एतदेव सप्तदशस्यायतनम् तां० १०. १. ७ ॥ द्वादश वै मासाः संवत्सरस्य पञ्चर्तव एष एव प्रजापतिः सप्तदशः । श० १. ३. ५. १० ॥ सप्तदशो वै प्रजापतिर्द्वादश मासाः पंचर्तवो हेमन्तशिशिरयोः समासेन तावान्त्संवत्सरः, संवत्सरः प्रजापतिः । ऐ० १. १ ॥ संवत्सरो वाव प्रतूर्तिरष्टादशः ( यजु० १४. २३ ) तस्य द्वादश मासाः पंचऽर्तवः संवत्सर एव प्रतूर्तिरष्टादशस्तद्यत्तमाह प्रतूर्तिरिति संवत्सरो हि सर्वाणि भूतानि प्रतिरति । श० ८. ४. १. १३ ॥ संवत्सरो वाव तपो नवदशः ( यजु० १४. २३ ) तस्य द्वादश मासाः षड् ऋतवः संवत्सर एव तपो नवदशस्तद्यत्तमाह तप इति संवत्सरो हि सर्वाणि भूतानि तपति । श० ८. ४. १. १४ ॥ संवत्सरो वाव वर्चो द्वाविँ शः ( यजु० १४. २३ ) तस्य द्वादश मासाः सप्तऽर्तवो द्वेऽअहोरात्रे संवत्सर एव वर्चो द्वाविँ शस्तद्यत्तमाह वर्च इति संवत्सरो हि सर्वेषां भूतानां वर्चस्वितमः । श० ८. ४. १. १६ ॥ संवत्सरो वाव सम्भरणस्त्रयोविँ शः ( यजु० १४. २३ ) तस्य त्रयोदश मासाः सप्तऽर्तवो द्वेऽअहोरात्रे संवत्सर एव सम्भरणस्त्रयोविँ शस्तद्यत्तमाह सम्भरण इति संवत्सरो हि सर्वाणि भूतानि सम्भृ ः श० ८. ४. १. १७ ॥ चतुर्विँ शो वै संवत्सरः । तां० ४. १०. ५ ॥ चतुर्विंशत्यर्धमासो वै संवत्सरः । ऐ० ८. ४ ॥ संवत्सरो वाव गर्भाः पंचविँ शस्तस्य चतुर्विँ शतिरर्धमासाः संवत्सर एव गर्भाः पंचविँ शः । श० ८. ४. १. १९ ॥ संवत्सरो वाव 'प्रतिष्ठा त्रयस्त्रिँ शः' ( यजु० १४. २३) तस्य चतुर्विँ शतिरर्धमासाः षड् ऋतवो द्वेऽअहोरात्रे संवत्सर एव प्रतिष्ठा त्रयस्त्रिँ शस्तद्यत्तमाह प्रतिष्ठेति संवत्सरो हि सर्वेषां भूतानां प्रतिष्ठा । श० ८. ४. १. २२ ॥ संवत्सरो वाव ब्रध्नस्य विष्टपं चतुस्त्रिँ शस्तस्य चतुर्विँ शतिरर्धमासाः सप्तऽर्तवो द्वे अहोरात्रे संवत्सर एव ब्रध्नस्य विष्टपं चतुस्त्रिँ शः ( यजु० १४. २३) श० ८. ४. १. २३ ॥ संवत्सरो वाव विवर्तोऽष्टाचत्वारिँ शः ( यजु० १४. २३ ) षड्विँ शतिरर्धमासास्त्रयोदश मासाः सप्तऽर्तवो द्वे अहोरात्रे तद्यत्तमाह विवर्त्त इति संवत्सराद्धि सर्वाणि भूतानि विवर्तन्ते । श० ८. ४. १. २५ ॥ त्रीणि वै षष्टि शतानि संवत्सरस्याह्नाम् । कौ० ११. ७ ॥ त्रीणि च ह वै शतानि षष्टिश्च संवत्सरस्याहोरात्राणि । गो० पू० ५. ५ ॥ एतावान्वै संवत्सरो यदहोरात्रे । कौ० १७. ५ ॥ विरूपः ( =नानारूपः ) संवत्सरः । तां० १४. ९. ८ ॥ यस्मादेषा समाना सती षडहविभक्तिर्नानारूपा तस्माद्विरूपः संवत्सरः । तां० १०. ६. ७ ॥ षडहो वा उ सर्वः संवत्सरः । कौ० १९. १० ॥ नवाहो वै संवत्सरस्य प्रतिमा ष० ३. १२ ॥ संवत्सरस्य प्रतिमां यां ( एकाष्टकारूपां ) त्वा रात्रि यजामहे । मं० २. २. १८ ॥ संवत्सरस्य या पत्नी ( एकाष्टकारूपा ) सा नो अस्तु सुमङ्गली ( अथर्व० ३. १०. २) मं० २. २. १६ ॥ एषा वै संवत्सरस्य पत्नी यदेकाष्टका । तां० ५. ९. २ ॥ मुखं वा एतत्संवत्सरस्य यत्फाल्गुनी पौर्णमासी । कौ० ४. ४ ॥ ५. १ ॥ तां० ५. ९. ८ ॥ गो० उ० १. १९ ॥ मुखं ( संवत्सरस्य ) उत्तरे फल्गुन्यौ पुच्छं पूर्वे । गो० उ० १. १९ ॥ एषा ह संवत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी । श० ६. २. २. १८ ॥ एषा वै प्रथमा रात्रिः संवत्सरस्य यदुत्तरे फल्गुनी । तै० १. १. २. ९ ॥ एषा वै जघन्या रात्रिः संवत्सरस्य यत्पूर्वे फल्गुनी । तै० १ १. २. ९ ॥ किं नु ते मयि ( संवत्सरे ) इति । अयम्म आत्मा । स ( आत्मा ) मे त्वयि ( संवत्सरे ) । जै० उ०

३. २४. ८ ॥ आत्मा वा एष संवत्सरस्य यद्विषुवान् । तां० ४. ७. १ ॥ आत्मा वै संवत्सरस्य विषुवानङ्गानि पक्षौ ( =दक्षिणः पक्ष उत्तरः पक्षश्च ) । गो० पू० ४. १८ ॥ आत्मा वै संवत्सरस्य विषुवानङ्गानि मासाः । श० १२. २. ३. ६ ॥ अथ ह वाऽएष महासुपर्ण एव यत्संवत्सरः । तस्य यान्पुरस्ताद्विषुवतः षण्मासानुपयन्ति सोऽन्यतरः पक्षोऽथ यान्षडुपरिष्टात्सोऽन्यतर आत्मा विषुवान् । श० १२. २. ३. ७ ॥ संवत्सरो वै व्रतं तस्य वसन्त ऋतुर्मुखं ग्रीष्मश्च वर्षाश्च पक्षौ शरन्मध्यꣳ हेमन्तः पुच्छम् । तां० २१. १५. २ ॥ तस्य ( संवत्सरस्य ) वसन्तः शिरः । तै० ३. ११. १०. २ ॥ वर्षा उत्तरः ( पक्षः संवत्सरस्य ) । तै० ३. ११. १०. ३ ॥ वर्षा पुच्छम् ( संवत्सरस्य ) । तै० ३. ११. १०. ४ ॥ संवत्सरे संवत्सरे वै रेतः सिक्तं जायते । ऐ० ४. १४ ॥ संवत्सरे संवत्सरे वै रेतःसिक्तिर्जायते । कौ० १९. ९ ॥ संवत्सरो वै प्रजननम् । गो० पू० २. १५ ॥ संवत्सरं हि प्रजा पशवो ऽनुप्रजायन्ते । तां० १०. १. ९ ॥ तस्मादु संवत्सरऽ एव स्त्री वा गौर्वा वडवा वा विजायते । श० ११. १. ६. २ ॥ संवत्सरऽएव कुमारो व्याजिहीर्षति । श० ११. १. ६. ३ ॥ तस्मात्संवत्सरवेलायां प्रजाः ( =शिशवः ) वाचं प्रवदन्ति । श० ७. ४. २. ३८ ॥ चक्षुर्वा एतत्संवत्सरस्य यच्चित्रापूर्णमासः । तां० ५. ९. ११ ॥ प्रजापतेर्ह वै प्रजाः संसृजानस्य पर्वाणि विसस्रꣳसुः । स वै संवत्सरऽ एव प्रजापतिस्तस्यैतानि पर्वाण्यहोरात्रयोः सन्धी पौर्णमासी चामावास्या चर्त्तुमुखानि । श० १. ६. ३. ३५ ॥ संवत्सरो ऽसि नक्षत्रेषु श्रितः । ऋतूनां प्रतिष्ठा । तै० ३. ११. १. १४ ॥ ( नक्षत्राणि) संवत्सरस्य प्रतिष्ठा । तै० ३. ११. १. १३ ॥ तस्मादाहुः संवत्सरः सर्वे कामा इति । श० १०. २. ४. १ ॥ संवत्सरो वै सर्वस्य शान्तिः तां० ६. ८. १३ ॥

सं॒वय॑न्ती निर्मिमाणा २ । ३ । ६ ॥

सं॒वि॒दा॒ने कृतप्रतिज्ञ इव ३ । ५४ । ६ । प्रतिज्ञापालके इव ६ । ७५ । ४ ॥

सं॒श॒राय सम्यग्विसनाय ( प्रवृत्तम् ) ३० । १७ ॥

स॒ꣳशाय सम्यक् सूक्ष्मबलान् कृत्वा १८ । ७१ ॥

स॒ꣳशि॑तः सम्यक् सूक्ष्मीकृतः, स्तुतो वा २३ । १४ ॥ [ स॒ꣳशितम् ] प्रशंसनीयम् ११ । ८१ । तीक्ष्णबुद्धिस्वभावम् २७ । ८ ॥

स॒ꣳस॒दः सम्यक् सीदन्ति यासु ताः २६ । १॥

स॒ꣳसानिष्यदत् अतिशयेन प्रस्रवन् ( अत्र स्यन्दूधातोर्यङ्लुक् । शतृप्रत्ययेऽभ्यासस्य निक् निपात्यते ) ९ । १४ ॥

स॒ꣳस॒न्नः सम्यग्गच्छन् प्राप्नुवन् ३९ । ५ ॥

स॒ꣳस॒म् एकीभावे ( अत्र प्रसमुपोदः पादपूरणे । अ० ८ । १ । ६ । इति समित्यस्य द्वित्वम् ) ६ । २० । सम्यक् १५ । ३० ॥

स॒ꣳसपर्या॑य यः सम्यक् सर्पति गच्छति तस्मै २२ । ३० ॥

स॒ꣳसर्पे॑ण सम्यक् प्रापणेन १५ । ७ ॥

स॒ꣳसृज्य॑ संसर्गीभूत्वा ११ । ५३ । उत्पाद्य ११ । ५४ ॥

संसृष्टजित् य संसृष्टान् मिलिताञ्छत्रून् जयति सः १७ । ३५ ॥

सꣳसृष्टान् सम्यग्गुणयुक्तान् २४ । १६ ॥

सꣳसृष्टाम् सम्यक् सुशिक्षया निष्पादिताम् ११ । ५५ ॥

संस्कृतत्रम् यः संस्कृतं त्रायते रक्षति तम् ६ । २८ । ४ ॥

संस्कृतम् [ संस्कृतम् ] कृतसंस्कारम् ५ । ७६ । २ । शिल्पविद्यासंस्कारयुक्तं सर्वर्तुकम् ४ । ३४ ॥

संस्कृतिः विद्यासुशिक्षाजनिता नीतिः ७ । १४ ॥

सꣳस्तुप् सम्यक् स्तुभ्नाति शब्दार्थसम्बन्धान् यया सा वाक् १५ । ५ ॥

सꣳस्थाम् सम्यक् तिष्ठन्ति यस्यां ताम् १९ । २९ ॥

यास्सप्त संस्था या एवैतास्सप्त होत्राः प्राचीर्वषट्कुर्वन्ति ता एव ताः । जै० उ० १. २१. ४ ॥

सꣳस्पृशः सम्यक् स्पर्शात् ३७ । ११ । यः संस्पृशति तस्मात् ३७ । १३ ॥

सꣳस्रवभागाः सम्यक् स्रूयन्ते ये ते संस्रवाः, भज्यन्ते ये ते भागाः, संस्रवाः भागाः येषां ते २ । १८ ॥

संस्रवभागाः वसवो वै रुद्रा आदित्या सꣳस्रावभागाः ( 'सꣳस्रवभागाः'=यजु० २. १८ ॥ विलीनमाज्यं संस्रव इति महीधरः ) । तै० ३. ३. ९. ७ ॥

सꣳस्रष्टा श्रेष्ठानां मनुष्याणां शस्त्रास्त्राणाम्वा संसर्गस्य कर्त्ता १७ । ३५ ॥

सꣳहानाय संहन्यन्ते यस्मिँस्तस्मै २२ । ७ ॥

सꣳहितः दृढाङ्गः २९ । ५८ ॥

( यजु० १८. ३९ ) असौ वा आदित्यः सꣳहित एष ह्यहोरात्रे संदधाति । श० ७.४.१.८ ॥ संहिताम् (साम) ॥ तद्देवाः संहितेन समदधुर्यत्समदधुस्तस्मात्संहितम् । तां ८.४.९॥ सꣳहितं भवति ह्यक्षरणिधनं प्रतिष्ठायै प्रतिष्ठायैव सत्रमासते । तां० ११. ५. ४ ॥ संहितं भवति ह्यक्षरणिधनं प्रतिष्ठायै । तां० १५. ११. ३ ॥

सꣳहिता सर्वपदार्थैः सह वर्तमाना विद्युत् सर्वव्यापक ईश्वरो वा ३ । २२ ॥

परः सन्निकर्षः संहिता । पदप्रकृतिः संहिता । नि० १. १७ ॥

सका सा १ । १९१ । ११ ॥

सकामान् समानस्तुल्यः कामो येषां तान् २६ । १ ॥

सकृत् एकवारम् १ । १०५ । १८ ॥

सकृत्स्वम् या सकृदेकवारं सूते ताम् ३३ । २८ ॥

सकेताः समानं केतः प्रज्ञा येषां ते ६ । ६ । ५ ॥

सक्तवः सक्तवः ( सत्तू इति भाषायाम् ) १९ । २१ ॥

सक्तुः सचतेर्दुर्धावो भवति । कसतेर्वा स्याद्विपरीतस्य । विकसितो भवति । नि० ४. ९॥ देवानां वाऽएतद्रूपं यत्सक्तवः । श० १३. २. १. ३ ॥ प्रजापतेर्वा एतद्रूपम् यत्सक्तवः । तै० ३. ८. १४. ५ ॥

सक्तुश्रीः यः सक्तूनि समवेतानि द्रव्याणि

श्रयति ८ । ५७ ॥

सक्थ्ना शरीरावयवेन २३।२६ ॥ [सक्थ्योः] पादावयवयोः २४ । १ ॥

सक्थि सचतेरासक्तो ऽस्मिन् कायः । नि० ९. २० ॥

सकर्मन् यः सचति तत्सम्बुद्धौ १ । ३१ । ६ ॥

सक्म्यम् सचति संयुनक्ति यस्मिन् तत्र भवम् ३ । ३८ । ७ ॥

सक्रतू समानक्रियौ १। ९३ ५॥ [ सक्रतवः ] समाना क्रतुः प्रज्ञा येषां ते २ । २७ । २ ॥

सक्षणः सोढा ५ । ४१ । ४ ॥

सक्षणिः समवेता ( अत्र सचधातोरनिः प्रत्ययः ) २ । ३१ । ४ ॥ [सक्षणिम्] सोढारम् १ । १११ । ३ ॥

सक्षत् संबध्नीयात् १ । १२९ । १० । समवैति ५ । ३० । ६ ॥

सक्षन्तः सहन्तः ( अत्र सहधातोः पृषोदरादिवत्सकारागमः ) १ । १३१ । ३ ॥

सक्षि संवध्नासि ५ । ३३ । २ ॥

सक्षितः समाननिवासाः ६ । ४४ । ६ ॥

सक्षीमहि प्राप्नुयाम ७ । ३९ । ६ । संवध्नीयाम ७ । ५१ । १ ॥

सक्ष्व सक्तो भव १ । ४२ । १ ॥

सखा सौहार्देन सुखप्रदः १ । ४ । १० । सर्वस्य मित्रं सर्वसुखसम्पादकत्वात् १ । २२ । १९ । सर्वदुःखविनाशनेन सहायकारी १ । ३१ । १ ॥

सखायः समानख्यानाः । नि० ७. ३० ॥

सखायः सप्तपदा अभूम । तै० ३. ७. ७. ११॥

सखित्वनाय सख्युर्भावाय ६ । ५१ । १४ ॥

सखित्वम् सख्युर्भावम् ३ । १ । १५ । [ सखित्वे ] सखीनां सुखायानुकूलं वर्तमानानां कर्मणां भावस्तस्मिन् १ । १० । ६ ॥

सखिवान् वहवो मरुतः सखायो विद्यन्ते यस्य सः १ । १५६ । ४ ॥

सखिविदम् सखीन्सुहृदो विन्दति येन तम् ११ । ८ ॥

सखीयते सखेवाचरति १ । १२८ । १ ॥

सखीयन् आत्मनः सखायमिच्छन् ३ । ३१ । ७ । सखेवाचरन् ५ । ४६ । १ ॥

सख्यम् सख्युर्भावः कर्म वा ४८ । मित्रत्वम् २२ । २१ ॥ [ सख्येषु ] सखीनां कर्मसु भावेषु पुत्रस्त्रीभृत्यवर्गादिषु वा १ । १० । ५ ॥

सगणः गणैर्विद्यार्थिनां समूहैः सह वर्तमानः १।१०१ । ९ । गणेन सह वर्तमानः ३ । ३२ । ३ । गणेन वीरसमूहेन सहितः ३ । ४७ । ४। गणेन स्वजनसेनापरिकरेण सहितः ७ । ३७ ॥

सगराः [ सगराः ] सगरोऽन्तरिक्षं विद्योपदेशावकाशो येषां ते ५ । ३४ । सगरोन्तरिक्षमवकाशो येषां ते ( अर्श आदित्वादच् ) ५। ३४ ॥ [ सगरेण ] अन्तरिक्षेण सह ५ । ३४ ॥

सगरः अन्तरिक्षनाम । निघ० १. ३.

सगरा रात्रिः ( सगरः = ऋतुविशेषः । तैत्तिरीय-संहितायाम् ४. ४. ७. २ ॥ ५. ३. ११. ३ ॥ सायणभाष्येऽपि श० १. ७. २. २६ ॥

**सर्गभ्यः** समानश्चासौ गर्भः सगर्भः तस्मिन् भवः ( अत्र सगर्भसयूथसनुताद्यत् । अ०४। ४। ११५। इति सूत्रेण भवार्थे यत्प्रत्ययः ) ४। २० ॥

**सग्धिः** समानभोजनम् १८ ।९ ॥ [सग्धिम्] समानं भोजनम् २८। १६ ॥

सग्धिम् सहजग्धिम् । नि० ९. ४३ ॥

**सग्मे** गच्छतीति ग्मा पृथिवी तया सह वर्तते तस्मिन्यज्ञे ( ग्मेति पृथिवीनामसु पठितम् । निघ० १। १। ) ४। २६ ॥

**सघत्** हिंसन् ( अत्र बहुलं छन्दसीति श्नोर्लुक् ) १। ५७। ४ ॥

**सङ्काः** संग्रामस्थान् (संका इति संग्रामनाम निघ० २। १७) ६ । ७५ ।५। समवेता विकीर्णा वा २९। ४२ ॥

सङ्काः संग्रामनाम । निघ २. १७ ॥ सङ्काः सचतेः संपूर्वाद्वा, किरतेः । नि० ९. १४॥

**सङ्क्रन्दनः** सम्यक् शत्रूणां रोदयिता १७। ३३ ॥

**सङ्क्रमः** सम्यक् क्रमन्ते यस्मिँस्तस्य (विज्ञापकः) १५।६ ॥ [सङ्क्रमाय] पदार्थज्ञानाय १५ ।६ ॥

**सङ्क्रोशैः** सम्यगाह्वानैः २५। २ ॥

**सङ्गच्छमाने** सहगामिन्यौ २५। २ ॥

**सङ्गतेभ्यः** योग्येभ्यः २१। ६१ ॥

**सङ्गत्य** एकीभूय १२। ६४ ॥

**सङ्गथे** संग्रामे १२। ११२ ॥

संगथे संग्रामनाम । निघ० २. १७ ॥

**सङ्गमनः** सम्यग्गन्ता १२। ६६ ॥

**सङ्गमे** संग्रामे समागमे वा ३३। ८६ ॥

संगमे संग्रामनाम । निघ० २. १७ ॥ संगमे सङ्गमने । नि० १०. ३१ ॥

**सङ्गे** सह २०। ४८ ॥

**संग्रहीतृभ्यः** ये युद्धार्था सामग्रीः सम्यग् गृह्णन्ति तेभ्यः १६। २६ ॥

**सङ्घातसङ्घातम्** सम्यग्घ्नन्यन्ते जना यस्मिँस्तं संग्रामम् ( संघात इति संग्रामनामसु पठितम् । निघ० २। १७। अत्र वीप्सायां द्विरुक्तिः ) १। १६ ॥

**सङ्घाते** सम्बन्धे २८। १३ ॥

**सचत** प्राप्नुत ४। ५। ६ ॥

सचता आसेवध्वम् । नि० ९. २६ ॥

**सचताम्** समवैतु १३। ३० ।

**सचते** समवैति १। ९१। १४ । प्राप्नोति १ १४०। ६। सम्बध्नाति १। १८० ।५ ॥

सचते द्विश उत्तरनाम । निघ० ३. २९॥

**सचथाय** प्राप्तसम्बन्धाय १। १५६। ५ ॥

**सचथ्यैः** सचथेषु समवायेषु भवैः ५। ५०। २ ॥

**सचध्यै** सवितु संयोक्तुम् १। १६७। ५ ॥

**सचनः** सर्वैः सेनाङ्गैः स्वाङ्गैश्च समवेतः १। ११६। १८॥ [सचनाः] समवैतुं योग्याः १। १२७। ११ ॥

**सचन्त** [सचन्त] सेवन्ताम् १ । ७३ ।

४। प्राप्नुत १। १५६। ४। लभन्ते १। १। १६४। ५०। संगमयन्ति २। ५। ५। समवयन्ति ३। १। १४। सम्बध्नन्ति ५। १७। ५॥

सचन्ताम् समवेता प्राप्ता भवन्तु २। १०। समवयन्ति १३। १। संयुञ्जन्तु १७। ४४॥

सचन्ताम् संसेव्यन्ताम्। नि० ९. ३३॥

सचन्ते समवयन्ति १। ६०। २। सेवन्ते १। १००। १३। संवध्नन्ति ३। ४०। ७॥

सचन्ते सेवन्ते। नि० ७. २३॥

सचमाना सम्बद्धौ ५।३६। ६॥ [सचमानाः] संवध्नन्तः ५। ४२। ८॥

सचसे समवैषि १३। १५। युनक्षि १५। २३। सम्बध्नासि ४। ११। ६॥

सचस्व समवेहि प्राप्नुहि १। १२९। ९॥

सचस्वा सेवस्व। नि० ३. २१॥

सचा सत्यसमवेतौ १०। ३३। विद्यासमवेतौ २०। २९। समवेताः २०। ७६। सत्यसमवायेन ३४। ५६। ये समवेताः पदार्थाः सन्ति (सचा इति पदनामसु पठितम्। निघ० ४।२।) १।५।२। समवेतयोः १। ७। २। सचन्ति ये ते सचास्तान् सचानस्मान् विदुषः (अत्र शसः स्थाने सुपां सुलुगित्याकारादेशः। सचेति पदनामसु पठितम्। निघ० ४।२। अनेन ज्ञानप्राप्त्यर्थो गृह्यते) १।६। ३। ज्ञानेन सत्कर्मसु समवायेन वा १।१०।४ समवेतेन विज्ञानेन १। ४०। १। विज्ञानप्रापकेण गुणसमूहेन १। ५१। ११। शिष्टसमवायेन सह १। ६३। ३। संगत्या १। ७१। ४। सुखसमवेतेन युक्ताय १। ८१। ८। यज्ञविज्ञानयुक्तान् १। ९३। ११। समवेतम् १। १३९। ७। सम्बन्धेन १। १६७। ७। संयोगेन १। १७४। ६। सत्यसंयोगेन ४। १। ३। प्रसंगेन ४। ३। ९। सत्याचारेण ४। ३२। ४॥

सचानः समवेतः ६। २०। २॥

सचाभुवा यौ सचा समवायं भावयतस्तौ (अत्रान्तर्गतो ण्यर्थः) १। ३४। ११। सहकारिणौ १। १५७। ४। सचेन गुणसमवायेन सह भवन्तौ २। ३१। १। यौ सत्येन पुरुषार्थेन सह भवतस्तौ ३४। ४७॥ [सचाभुवः] ये सचा परस्परं संग्यनुषङ्गिनो भवन्ति ते ३। ४७॥ [सचाभुवम्] सत्यं भावुकम् १। १३१। ३। सचा विज्ञानादिना भावयन्तीम् १। १११। १॥

सचाभुवा सहभुवौ। नि० ५. ५॥

सचावहै सम्बध्नीयाव ६। ५५। १॥

सचेत सम्बध्नीत ५। ५२। १५॥

सचेताः समानं चेतो विज्ञानं संज्ञापनं वा यस्य सः १। ६१। १०। चेतसा प्रज्ञया सहितः ४। १६। ७॥

सचेताम् प्राप्नुताम् १। १८१। ६॥

सचेते [सचेते] सम्बध्नीतः २। ४१। ६॥ समवेतः १। १३६। ३। सम्बध्नीतः ३। ३९। ३॥

सचेथे संगच्छेथाम् १। ११६। १७। संग-

च्छेथे १ । १५२ । १ । सेवेथे १ । १८० । १ । संयुङ्क्थः १ । १८३ । २ । संवध्नीथः २ । ३६ । २ ॥

सचेमहि व्याप्नुयाम १ । १३६ । ६ । संगता भवेम २ । ८ । ६ । समवेयाम ३ । ५५ ।

सच्छन्दाः समानानि छन्दांसि यासु ताः २३ । ३४ ॥

सर्जन्या समानैर्जन्यैः सह वर्तमानानि ४ । ५० । ६ ॥

सजातः सहैव जातः ५ । २३ ॥ [सजाताः] समानदेशे जाता उत्पन्नाः १७ । ३८ ॥ [सजातान्] एक गर्भाशय से उत्पन्न हुए सब सन्तानों को ११।५८॥ [सजातानाम्] जातैः सह वर्तमानानाम् १० । २६ ॥

प्राणा वै सजाताः प्राणैर्हि सह जायते । श० १. ६. १. १५ ॥ (='ज्ञातयः' इति सायणः ॥ यजु० १. १७.) भूमा वै सजाताः । श० १. २. १. ७ ॥

सजातवनि जातं जातं वनति स जातवनिः समानश्चासौ जातवनिस्तम् समानस्य छन्दस्यमूर्धप्रभुत्युदर्केषु । अ० ६ । ३ । ८४ । अनेन समानस्य सकारादेशः ) १ । १७ । समानान् जातान् वेदान् चत्र-धर्मान् मूर्तान् जगत्स्थान् पदार्थान्वा वनयति प्रकाशयति तम् १ । १८ ॥

सजात्यम् समानासु जातिषु भवम् २ । १ । ५ ॥ [ सजात्यानाम् ] अस्मद्विधानाम् ३३ । ४७ ॥

सजामि संयुनज्मि १ । १६१ । १० ॥

सजित्वरीः शरीरैः सह संयुक्तान् रोगान् जेतुं शीलाः १२ । ७७ ॥

सजित्वाना जयशीलैर्वीरैः सह वर्तमानौ ३ । १२ । ४ ॥ [सजित्वानम्] समानानां शत्रूणां विजयकारकम् ( अत्राऽन्येभ्यो-ऽपि दृश्यते । अ० ३ । २ । ७५ अनेन जीधातोः क्वनिप्प्रत्ययः ) १ । ८ । १ ॥

सजूः समानं सेवनं यस्य सः ( इदं जुषिः इत्यस्य क्विबन्तं रूपं समानस्य छन्दस्य० इति समानस्य सकारादेशश्च ) १ । २३ । ७ । यः समानान् जुषते ( अत्र जुषधातोः क्विप् समानस्येति सादेशश्च ) १ । ४४ । २ । संयुक्तः ५ । ५१ । ८ ॥

सजूः सहजोषण । नि० ९. १३ ॥

सजूः ( यजु० १४. ७ ) अथैवैतद्यजमान एताभिर्देवताभिः ( ऋत्वादिभिः ) सयुग्भूत्वैताः प्रजाः प्रजनयति तस्मादु सर्वास्वेव सजूः सजू-रित्यनुवर्तते । श० ८. २. २. ७ ॥

सजोषः समानप्रीतिसेविनः ६ । २ । ३ ॥

सजोषाः समानप्रीतिसेवी १ । ९० । १ । समानप्रेमा १ । ११८ । ११ । समान-प्रीताः १ । १५३ । १ । समानसुख-दुःखप्रीतयः २ । ३१ । ४ । समान-सेवनप्रीतिः ३ । ४ । ८ । आत्मसमान-प्रीतिं सेवमानः सन् ३ । ३२ । २ । सहैव सेवमानः ५ । ४१ । ४ । समानप्रीतिसेविका ६ । ४६ । ७ । स्वात्मवदन्येषां प्रीत्या सेवकः ६ । ६८ । १ । समानसेवी ७ । ३ । १ । व्याप्तः सन् प्रीतः प्रसन्नः ७ । ५ । ६ ।

समानप्रीत्या सेवनीयः ७ । ६० । ४। सह वर्तमानाः २० । ३६ । समानैः सेविताः २६ । ४ । ८। [ सजोषसः ] समानो जोषः प्रीतिः सेवनं वा येषां ते १ । ४३।३। समानं धर्मं सेवमानाः १ । १३६ । ४ । [ सजोषोभ्याम् ] यौ जोषसा सेवनेन सह वर्तमानौ ताभ्याम् ७ । ८ ॥

सजोषाः सहजोषणः । नि० ८. ८॥

सञ्चरन्तम् सञ्चरन्तम् १३ । ५ ॥

सञ्चरन्ती सम्यग्गच्छन्ती १ । १४६ । ३ । सम्यग्गच्छन्त्यौ जानन्त्यौ ३ । ३३ । ३ ॥

सञ्चराः ये सम्यक् चरन्ति ते २४ । १५ । सञ्चरन्ति येषु ते मार्गाः २४ । १७ ॥

सञ्जग्मानः संगतवान् ७ । १३ । वीरतादिशुभगुणेष्वासक्तः ७ । १८ ॥

सञ्जानाने अच्छे प्रकार प्रकट करते हुए २० । ६१ ॥

सञ्ज्ञातरूपः सम्यग्ज्ञातं रूपं येन सः १।६९। ५ ॥

सञ्ज्ञानम् सम्यग्विज्ञानम् १२। ४६॥ [सञ्ज्ञानाय ] सम्यग् ज्ञानं कामप्रबोधं तस्मै (प्रवृत्ताम्) ३० ।६॥

सत् विद्यमानम् १ । १६४ । ४६ । नित्यम् ६ । १८ । ४ । यथार्थम् ९ । २७ । २ ॥ [ सतः ] अनादिवर्तमानस्य विनाशरहितस्य कारणस्य १ । ९६ । ७ । सत्पुरुषस्य ४ । ६ । ६ ॥

सत् उदकनाम । निघ० १. १२ ॥ सतः द्विश उत्तरनाम । निघ० ३. २६ ॥

तयोः ( सदसतोः ) यत् सत् तत्साम तन्मनस्स प्राणः । जै० उ० १. ५३. २ ॥ सदमृतम् । श० १४. ४. १. ३१ ॥

सतःवीराः सत्त्वबलोपेताः ६ । ७५ । ९ ॥

सती वर्तमाना २ । १७ । ७ । पतिव्रता ४ । ३ । ९ । सद्गुणयुक्ता ६ । ३५ । विद्यासुशिक्षादिशुभगुणसहिताः १ १ । १६४ । १६ । विद्यमानाः प्रकृतीः ३ । ३१ । ५ ॥

सतीनकङ्कतः सतीनमिव चञ्चलः (सतीनमित्युदकनामसु पठितम् । निघ १। १२) १ । १९१ । १ ॥

सतीनसत्वा यः सतीनं जलं सादयति सः ( सतीनमित्युदकनाम । निघ० १। १२ ) १ । १०० । १ ॥

सतेन विभक्तेन कर्मणा १९ । २७ । उत्तमावयवैर्विभक्तेन शिरसा ( सत् इत्युत्तरनाम । निघ० ३ । २९ ) १९ । ८८ ॥

सतोवीराः सतो विद्यमानस्य सैन्यस्य मध्ये वीराः प्राप्तयुद्धविद्याशिक्षाः २९ । ४६ ॥

सतोबृहती उत्तम बड़ी १४ । ९ ॥

सत्तः अविद्यादिदोषान् हिंसित्वा विज्ञानप्रदः ( अत्र बाहुलकात् षद्लृधातोरौणादिकः क्तः प्रत्ययः ) १ । १०५ । १३ । विज्ञानवान् दुःखहन्ता १ । १०५ । १४ । प्रतिष्ठितः २ । ३६ । ६ । निषण्णः ३ । ४१ । २॥

सत्ता स्थित ३ । १७ । ५ ॥

सत्पतिः सतां पालयिता १ । ५४ । ७ । सतोऽविनाशिनः कारणस्य विद्यमानस्य

कार्यस्य सत्यपथ्यकारिणां वा पालकः १ । ९१ । ५ । सतां वेदानां सत्पुरुषाणां वा पालकः १ । १७४ । १ । सतां पुरुषाणामाचाराणां च पालकः २ । १ । ४ । सदुदकस्य पालकः (सदित्युदकनाम निघ० १ । १२) ६ । १३ । ३ ॥ [सत्पतिम्] सदीश्वरस्य वेदस्य धर्मस्य जनस्य वा पालकम् १२ । ५६ । सतां व्यवहाराणां विदुषां वा पालकम् १५ । ६१ । सदविनाशि चासौ पतिः पालकश्च यद्वा सतामविनाशिनां कारणानां जीवानां च पालकस्तम् १७ । ६१ । सत्यस्य प्रचारेण पालकम् २७ । ३७ ॥

सत्यः सन्तीति सन्तः, सद्भयो हितस्तत्र साधुर्वा १ । १ । ५ । सत्सु साधुर्जीवस्वरूपेणानादिस्वरूपो वा १ । ६३ । ३ । अव्यभिचारि १ । १५२ । २ । सतां वेदानां सत्पुरुषाणां वा पालकः १ । १७४ । १ । त्रैकालाबाध्यः २ । ११ । १५ । नाशरहितः २ । १२ । १ । सत्सु व्यवहारेषु विद्वत्सु वा साधुः ३३ । ८३ । सत्सु पदार्थेषु साधुरीश्वरः ३६ । ५ ॥ [सत्याः] सिद्धाः २ । १० ॥ [सत्यम्] यद्वेदविद्यया प्रत्यक्षादिभिः प्रमाणैः सृष्टिक्रमेण विदुषां संगेन सुविचारेणात्मशुद्धया वा निर्भ्रमं सर्वहितं तत्वनिष्ठं सत्प्रभवं सम्यक् परीक्ष्य निश्चीयते तत् १ । ५ । सत्यं कस्मात् ? सत्सु तायते सत्प्रभवं भवतीति वा । नि० ३ । १३ । सत्सु पुरुषेषु साधु सत्यं मानं भाषणं कर्म च ११।४७ । धर्मं राज्यव्यवहारञ्च १९।७५। (३२६ भूमि०) वर्तमाने साधु १९। ७६ । सतीषु ओषधीषु भवम् १९ । ७६ । यथार्थम् १९ । ८५ । सत्सु पदार्थेषु सुखस्य विस्मारकं सत्प्रभवं सद्भिर्गुणैरुत्पन्नम् १ ।१। ६ । अविनाशि गमनागमनाख्यं कर्म १ । ३८ । ७ । अव्यभिचारि सुपरीक्षितं वेदचतुष्टयजन्यम् १ । ५२ । १३ । व्रतम् १ । ६८।३। जलम् १ । १०५ । १२। सत्य बोलना और बुलवाना १२। ५। १० (१७६ विधिः) नित्य कारण २०।१२ । [सत्याय] सति वर्तमाने भवाय स्थूलाय पदार्थसमूहाय १५ । ६ ॥

सत्यम् उदकनाम । निघ० १. १२ ॥ सत्यं कस्मात् ? सत्सु तायते सत्प्रभवं भवतीति वा नि० ३. १३ ॥

सत्यम् तदेतत्त्र्यक्षरँ सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतम् । श० १४. ८. ६. २ ॥ तद्यत्तत्सत्यम् । त्रयी सा विद्या । श० ९. ५. १. १८ ॥ सत्यं वा ऋतम् । श० ७. ३. १. २३ ॥ १४. ३. १. १८ ॥ तै० ३. ८. ३. ४ ॥ ऋतमिति (यजु० १२. १४) सत्यमित्येतत् । श० ६. ७. ३.११ ॥ यो वै स

धर्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तꣳ सत्यं वदतीति । श० १४. ४. २. २६ ॥ सत्यं वै सुकृतस्य लोकः । तै० ३. ३. ६. ११ ॥ एतत्खलु वै व्रतस्य रूपं यत्सत्यम् । श० १२. ८. २. ४ ॥ एकꣳ ह वै देवा व्रतं चरन्ति सत्यमेव । श० ३. ४. २. ८ ॥ एकꣳ ह वै देवा व्रतं चरन्ति यत्सत्यं तस्मादु सत्यमेव वदेत् । श० १४. १. १. ३३॥ सत्यसंहिता वै देवाः । ऐ० १.६॥ सत्यमया उ देवाः । कौ० २. ८॥ सत्यमेव देवा अनृतं मनुष्याः । श० १. १.१.४॥ ३. ३. २.२॥३.९. ४.१। सत्यं देवा अनृतं मनुष्याः ।श० १.१.२.१७॥ एकꣳ ह वाऽ अस्य जितमनपजय्यमेवं यशो भवति य एवं विद्वान्त्सत्यं वदति । श० ३. ४. २.८॥ स यः सत्यं वदति यथाग्निꣳ समिद्धं त घृतेनाभिषिञ्चेदेवꣳ हैनꣳ स उद्दीपयति तस्य भूयो भूय एव तेजो भवति श्वः श्वः श्रेयान्भवत्यथ योऽनृतं वदति यथाग्निꣳ समिद्धं तमुदकेनाभिषिञ्चेदेवꣳ हैनꣳ स जासयति तस्य कनीयः कनीय एव तेजो भवति श्वः श्वः पापीयान्भवति तस्मादु सत्यमेव वदेत् । श० २. २. २. १९ ॥ तस्मादु हैतद्य आसक्ति सत्यं वदत्यैषावीरतर-इवैव भवत्यनाढ्यतर-इव स ह त्वेवान्ततो भवति देवा ह्येवान्ततो भवन् । श० ९. ५. १. १६ ॥ (उद्दालकः) तस्मै (प्राचीनयोग्याय ) हैताꣳ श्लोकतरां व्याहृतिमुवाच यत्सत्यं तस्मादु सत्यमेव वदेत । श०११.५.३. १३ ॥ स यः सत्यं वदति स दीक्षितः । कौ० ७. ३ ॥ सत्ये ह्येव दीक्षा प्रतिष्ठिता भवति । श० १४. ६. ९. २४ ॥ तस्यै वाचः सत्यमेव ब्रह्म । श० २. १. ४. १० ॥ सत्यं ब्रह्म । श० १४. ८. ५. १ ॥ सत्यं ब्रह्मणि (प्रतिष्ठितम् )। ऐ० ३. ६ । गो० उ० ३. २ ॥ आपः सत्येन (प्रतिष्ठिताः) । ऐ० ३. ६ ॥ गो० उ० ३. २ ॥ तद्यत्तत्सत्यम् आप एव तदापो हि वै सत्यम् । श० ७. ४. १. ६ ॥ सत्यं वा एतत् । यद्वर्षति तै० १. ७. ५. ३ ॥ असावादित्यः सत्यम् । तै० २. १. ११. १ ॥ तद्यत्तत्सत्यम् । असौ स आदित्यः । श० ६. ७. १. २ ॥ तद्यत्तत्सत्यम् । असौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषः श० १४. ८. ६. ३ ॥ सत्यमेष य एष (आदित्यः) तपति । श० १४. १. २. २२ ॥ (यजु० ११. ४७) अयं वाऽ अग्निर्ऋतमसावादित्यः सत्यं यदि वासो (आदित्यः) ऋतमयꣳ (अग्निः) सत्यमुभयम्वेतदयमग्निः । श०६. ४. ४. १० ॥ सत्यं वै शुक्रम् । श० ३. ९. ३. २५ ॥ सत्यं वै हिरण्यम् । गो० उ० ३. १७ ॥ प्राणा वै सत्यम् । श० १४. ५. १. २३ ॥ चक्षुर्वै सत्यम् । तै० ३. ३. ५. २ ॥ एतद्ध मनुष्येषु सत्यं यच्चक्षुः । गो० उ० २. २३ ॥ इयं (पृथिवी) एव सत्यमियꣳ ह्येवैषां लोकानामद्धातमाम् । श० ७. ४. १. ८ ॥ नामरूपे सत्यम् । श० १४. ४. ४. ३ ॥ श्रद्धा पत्नी सत्यं यजमानः । ऐ० ७. १० ॥ सत्यंꣳ ह होतैषामासीत् यद्विश्वसृज आसत । तै० ३. १२ ९. ३ ॥

सत्यगिर्वाहसम् सत्याया गिरः प्रापकम् १। १२७। ८॥

सत्यजित् सत्यं कारणं धर्मं चोन्नयति १७। ८०॥

सत्यज्योतिः सत्यमविनाशि ज्योतिः प्रकाशो यस्य सः १७। ८०॥

सत्यतरः अतिशयेन सत्यः ३। ४ १०॥

सत्यताते सत्याचरक ४। ४। १४॥

सत्यधर्मा सत्यो धर्मो यस्य सः १२। ६६॥ [सत्यधर्माणम्] सत्यो नाशरहितो धर्मो यस्य तम् १। १२। ७॥

सत्यप्रसवः सत्येन कर्मणा प्रसव ऐश्वर्य यस्य सः १०। २८॥ [सत्यप्रसवसः] सत्यः प्रसव ऐश्वर्यं जगतः कारणं कार्य यस्य तस्य, सत्यन्याययुक्तस्य ९। १०। सत्यानि प्रसवांसि जगत्स्थानि कारणरूपेण नित्यानि यस्य तस्य ९। १३। सत्योऽविनाशी प्रसवः प्रकटो बोधो यस्मात्तस्य ९। १०॥

सत्यमन्त्राः सत्यो यथार्थो मन्त्रो विचारो येषां ते १। २०४॥

सत्यमन्मा यः सत्यं मन्यते विजानाति विज्ञापयति सः १। ७३। १॥

सत्ययजम् यः सत्यमेव यजति संगच्छते तम् ४। ३। १॥

सत्ययोनिः सत्यमविनाशि योनिः कारणं गृहं वा यस्य ४। १९। २॥

सत्यराजन् सत्यप्रकाशक २०। ४॥

सत्यराधाः न्यायोपार्जितसत्यधनः ४। २४। २। सत्याचरणेन सत्यं वा राधो धनं यस्य ५। ४० ७॥ [सत्यराधसम] सत्यं राध्नोति यया ताम् २२। ११॥ [सत्यराधः] सत्सु साधूनि राधांसि धनानि यस्य तत्सम्बुद्धौ ३४। ३०। सत्यं राधः प्रकृत्याख्यं धनं यस्य तत्सम्बुद्धौ ७। ४१। ३। सत्यानि राधांसि विद्याधनानि यस्य तत्सम्बुद्धौ १। १०१। ८॥

सत्यवाचः सत्या यथार्था वाग् येषां ते ३। ५४। ४॥

सत्यशवसम् सत्यं शवो बलं यस्य ५। ५२ ८॥ [सत्यशवसः] नित्यदृढबलस्य १। ८६। ८॥

सत्यशुष्मः सत्यबलः ३। ३०। २१॥ [सत्यशुष्माय] सत्यमविनश्वरं शुष्मं बलं यस्य तस्मै १। ५१। १५॥

सत्यश्रवसि सत्यानां श्रवणे सत्येऽन्ने वा ५। ७९। १॥

सत्यश्रुतः ये सत्यं श्रुतवन्तः शृण्वन्ति वा ५। ५७। ८॥

सत्यसत्वन् सत्यानि सत्वान्यन्तःकरणादीनि यस्य तत्सम्बुद्धौ ६ । ३१ । ५ ॥

सत्यसवम् सत्योऽविनाशी सवः सामर्थ्ययोगो यस्य तम् ५ । ८२ । ७ । सत्यं सव ऐश्वर्यं जगद्वा यस्मिन् यस्य वा तम् ४ । १८ ॥ [ सत्यसवसः ] सत्यं सव ऐश्वर्य्यं जगत्कारणं वा तस्य परमात्मनः ४ । १८ ॥

सत्या सत्सु पदार्थेषु साध्वी ६ । ६५ । ५ । यथार्थोक्ता ९ । १२ ॥ [सत्याः ] सत्सु साधव्यः ३'१ । २० । सत्सु गुणकर्मस्वभावेषु भवाः १ । ७९ । १ ॥ [सत्याभिः] सत्याचरणान्विताभिः १ । १२९ । ७॥

सत्यानृते सत्यं चानृतं च ते १६ । ७७॥

सत्यानृते वाचो वा एतौ स्तनौ , सत्यानृते वाव ते ( द्वे अक्षरे ) । गो० उ० ४ । १९ ॥

सत्यौजाः सत्यमोजो बलं यस्य सः १०।२८॥

सत्रम् सत्रा सत्यं विद्यते यस्मिन् विज्ञाने तत् १५ । ४६ ॥ [ सत्रा ] सत्यम् २७। ३८ । सत्येन ३३ । ४० । सत्यकारणरूपेणाऽविनाशि सत्रेति सत्यनाम निघ० ३।१०)१।५७।६। सत्यान्गुणकर्मस्वभावान् १ । ७१ । ६ । नित्यानि सत्यार्थप्रतिपादकानि १ । ७२ । १ । सत्याचारस्य ४ । ३० । २ । [सत्रस्य] संगतस्य राजव्यवहाररूपस्य यज्ञस्य ८ । ५२ ॥ [सत्रे] दीर्घे यज्ञे ७ । ३३ । १३ ॥

सत्रा सत्यनाम । निघं ३ । १० ।

आत्मदक्षिणं वै सत्रम् । कौ० १५ । १ ॥

आत्मदक्षिणं वा एतद्यत्सत्रम् । तां० ४ । ९ । १६ ॥ सर्व्वान् लोकानहीनेन । अथो सत्रेण (अभिजयति) । तै० ३ । १२ । ५। ७ ॥

सत्रराट् यः सत्रेषु यज्ञेषु राजते सः ५ । २४ ॥

सत्रसदौ सतां जीवात्मनां त्राणं सत्रं तत्र सीदतस्तौ ३४ । ५५ ॥

सत्राकरः सत्रा सत्यं करोतीति १ । १७८।४॥

सत्राचीम् या सत्रा सत्यमञ्चति प्रापयति ताम् ७ । ५६ । १८ ॥

सत्राजितम् सत्रा सत्यं जयत्युत्कर्षति येन तम् ११ । ८ ॥ [सत्राजिते] यः सत्येनोत्कर्षति तस्मै २ । २१ । १ ॥

सत्रादावन् सत्यं ददातीति तत्सम्बुद्धौ १ । ७ । ६ ॥

सत्राषाट् यः सत्राणि बहून् यज्ञान् कर्त्तुं सहते ७ । २० । ३ ॥

सत्रासाहः यः सत्यं सहते २ । २१। ३ ॥ [सत्रासाहे] यः सत्रा सत्येन सहते तस्मै २ । २१ । २ ॥

सत्राहणम् यः सत्येनासत्यं हन्ति ४ । १७।८॥

सत्राहम् सत्यधर्माचरणदिनम् ५ । ३५ । ४ ॥

[सत्राहा] सत्यदिनानि ६ । ४६ । ३॥

सत्वा बलिष्ठः १ । १७३ । ५ । गन्ता ४ । १३ । २ । प्रापकः ४ ।४० । २ । सर्वत्र स्थितः ६ । २२ । १ । यः सीदति सः पुरुषार्थी ६ । २९ । ६ । सत्वगुणोपेतः ६ । ३७ । ५ ॥ [ सत्वानः ] बलपराक्रम-प्राणिभूतगणाः १ । ६४ । २॥ [सत्वभिः] विज्ञानवद्भिः पदार्थैर्वा १ । १३३ । ६ । प्राणिभिः १ । १४०।९ । शत्रून् सीदयद्भि-र्वीरैः सह ३ । ४९ । २ ॥ [सत्वनैः]रथा-दिद्रव्यैः ५। ३७। ४॥ [सत्वने] शुद्धान्तः-करणाय ६ । ४५ । २२। [सत्वनाम्] सेनायां सीदतां प्राणिनाम् १७ । ४२ ॥

सत्सि दोषान् हिनस्ति १ । १२ । ४ । आसन्नोसि २ । ६।८ । निषीदसि ३ । १४।२ । समवैषि ६ । १६ । १० ॥

सद स्थिरो भव २ । ३६ । ४ । सीद ७ । ११ । १ ॥

सदः सीद १३ । ३७ । स्थिरो भव ३३ । ४ ।

सदः [सदः] स्थिरम् १ । ८५ । २ । स्थानम् १ । ८५ । ६ । सुखस्थानम् १ । ८५ । ७। छेद्यं वस्तु ५।६१।२। सीदन्ति प्राप्नुवन्ति सुखानि यस्मिँस्तद् गृहम्, सीदन्ति घ्नन्ति दुःखानि येन तदौषधसेवनं पथ्याचरणञ्च, वस्तु, सीदति जानाति येन तद् ज्ञानं वा २ । ६ । स्थापनम् ४ । ३० । सीदन्ति यस्मिँन्त्सः ५।३३॥ [ सदांसि ] सभाः ३ । ३८ । ६ । सीदन्ति येषु तान्यधि-करणानि ३४ । ३२ । रहने के लिये उत्तम घर ९ । ३ । १९ (२०४ विधिः) यज्ञशाला ८ । ६ । ७ ( २५५ विधिः )

यदस्मिन्विश्वे देवा अक्षीदंस्तस्मात्सदो नाम तऽउऽएवास्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्ति । श० ३. ५. ३. ५॥ ३. ६. १. १ ॥ उदरं वै सदः । कौ० ११. ८ ॥ उदरमेवास्य ( यज्ञस्य ) सदः । श० ३. ५. ३. ५॥ ( पुरुषस्य ) उदरं सदः । कौ० १७. ७॥ प्रजापतेर्वा एतदुदरं यत्सदः । तां० ६. ४. ११॥ तस्मात्सदस्यृक्सामाभ्यां कुर्वन्त्यैन्द्रँ हि सदः । श० ४. ६. ७. ३ ॥ ऐन्द्रँ हि सदः । ३. ६. १. २२ ॥ तस्मादुदीचीनवँशँ सदो भवति । श० ३. ६. १. २३ ॥ तस्य पृथिवी सदः । तै० २. १. ५. १ ॥

सदत् [ सदत् ] सीदति १ । १२८ । १ । प्राप्नुयात् ३ । १३ । १ । उपविशत ७ । ५९ । ६ ॥

सदत आसीदत ७ । ५७ । २ ॥

सदतन सीदत २९ । २४ । जाओ २ । ३६ । ३ ॥

सदतम् तिष्ठतम् ४ । १६ । १० । सीदतम् ५ । ७२ । १ ॥

सदताम् निषीदतम् ५ । ७२ । ३ । आसीदेत्

७ । ४२ । ५ । गच्छतः २६ । ३१ ॥

सदथः प्राप्त होते हो ५ । ६७ । २ ॥

सदन् परिषीदन्ति ४ । ३ । ११ ॥

सदनम् उत्पत्तिस्थितिभङ्गस्य निमित्तकारणम् १ । ९६ । ७ । अवस्थितिम् १ । १०४ । ५ । अधिकरणम् १ । ११७ । १० । सीदन्ति यस्मिँस्तत् १ । १३६ । २ । स्थानम् २ । ४० । ४ । गृहम् ३ । ५४ । २१ । गर्भस्थानम् १२ । ३६ । सीदन्ति गच्छन्ति यत्र तत् १७ । ८७ ॥ [सदनानि] स्थानान्युदकानि वा १।५५।६ भुवनानि १. १८ । १. ५. [ सदनाय ] स्थितिमते ५ । ४७ । ७ । [ सदने ] उत्तमे स्थले ७ । २४ । १ । सदसि सभायाम् १ । १२२ । ६ । सीदन्ति यस्मिन्नाकारो तस्मिन् १ । १४८ । ३ । मण्डले ३ । ३४ । ७ । अध्ययनस्थाने १२ । १६ । स्थातव्ये, गन्तव्ये, प्राप्तव्ये वा १३ । ५३ । सर्वस्थित्यर्थे जगति ४ । ४२ । ४ । सीदन्ति यस्मिँस्तस्मिन् राज्ये ४ । १० । ८ ॥

सदनम् उदकनाम । निघ० १. १२ ॥

सदनी दुःखविनाशनेन सुखप्रदा १ । १८६ । ११ ॥

सदन्तः निवासयन्तः ४ । २१ । ६ ॥

सदन्तु प्राप्नुवन्तु १ । १८६ । ८ । तिष्ठन्तु ३ । ४ । ८ । आसीदन्तु ७ । ४३ । ३ । अवस्थापयन्ति २ । ५ । प्रापयन्तु २६ । ३३ ॥

सदन्तु आसीदन्तु । नि० ८. १३ ॥

सदन्यम् सदनं गृहमर्हति १ । ९१ । २० ॥

सदम् सीदन्ति सुखानि यस्मिँस्तं शिल्पव्यवहारं देहादिकम्वा १ । २७ । ३ । विज्ञानं गृहम्वा १ । ८९ । १ । सदैव १ । १०६ । ५ । स्थिरं वर्तमानं ज्ञानमाप्तम् १ । ११४ । ८ । सीदन्ति यस्मिन् याने तत् १ । ११६ । ६ । शत्रुहिंसकसैन्यम् १ । १२२ । १० । प्राप्तव्यम् २ । १४ । १ । अवस्थितम् ३ । २ । १५ । गृहमिव स्थितिपदम् ४ । १ । १ । प्राप्तं वस्तु ४ । ३ । १२ । प्राप्तं दुःखम् ५ । ७७ । ४ । सीदन्ति विद्वांसो यस्मिँस्तत् सत्यं वचः ६ । ६७ । ८ । यः सीदति तम् ७ । ११ । २ । सद्यते विज्ञायते प्राप्यते यस्तम् ९ । ४ । यो न्याये सीदति तम् १६ । १६ । सीदन्ति प्राप्नुवन्ति यस्यां ताम् २५ । १४ ॥

सदम् संवत्सरम् । नि० १२. ३७ ॥

सदश्वः सन्तः समीचीना अश्वा यस्य ५ । ५८ । ४ ॥

सदःसदः सीदन्ति यस्मिन् यस्मिन् तत्तद् गृहम् १६ । ५९ ॥

दसी द्यावापृथिव्योर्नाम । निघ० ३. ३० ॥

सदस्पती सीदन्ति गुणा येषु द्रव्येषु तानि सदांसि तेषां यौ पालयितारौ तौ १। २१। ५॥

सदस्या सदसि सभायां भवा ३८। १८॥

सदस्यैः सदसि भवः सभ्यैः जनैः सह ७। ४५॥

( पुरुषस्य ) प्रजातिः सदस्यः। कौ० १७. ७॥

( पुरुषस्य ) प्रजापतिः (?प्रजातिः) सदस्यः। गो० उ० ५. ४॥ सदस्या ऋतवोऽभवन्। तै० ३. १२. ९. ४॥

सदा सर्वस्मिन् काले ६। ५॥

सदानः दानेन सह वर्तमानः ७। ३३। १२॥

सदापृणः यः सदा पृणाति तर्पयति सः ५। ४४। १२॥

सदाम सीदेम ७। १। ११। प्राप्नुयाम ७। ४६॥

सदावृधः सर्वदा वर्धमानः ४। ३१। ११ यः सदा वर्धते तस्य २७। ३६। [सदावृध] सदैव वर्धक ५। ३६। ३॥

सदासहम् सर्वदा दुष्टानां शत्रूणां हानिकारकं, दुःखानाञ्च सहनहेतुम् १। ८। १॥

सदासाः दासैः सेवकैः सह वर्तमानाः ४। १६। २१ [ सदासाम् ] सदा संसेवनीयम् ७। ३९। ६॥

सदासातमम् सदाऽतिशयेन विभजनीयम् ४। ३७। ५

सदिवः द्यावा सह वर्तमानम् २। १६। ६॥

सदृक्षासः पक्षपातं विहाय समानदृष्टयः १७। ८४॥

सदृङ् समानं पश्यति सः १७। ८१

सदृशीः सदृश्यो रात्र्य उषसश्च १। १२३। ८। समाना गतीः ३। ३५। ३। समानस्वरूपाः सेनाः ३। ५२। ८। समानस्वरूपाः ६। ४७। २१॥

सदेम सीदेम ६। १। ६। प्राप्नुयाम ६। ७५। ८॥

सद्म सीदन्ति यस्मिन्गृहे तत् १। ३८। १०। गृहवद्वर्तमानं शरीरं वा १। ७३। १। सद्मान्युत्तमानि कर्माणि स्थानानि वा ४। १। ८॥ [सद्मानि] प्राप्तव्यानि १। १३६। १०।

सद्म द्यावापृथिव्योर्नाम। निघ० ३.३०॥

सद्मबर्हिषः सद्म स्थानं बर्हिरुत्तमं यासां ताः १। ५२। ४॥

सद्ममखसम् सीदन्ति यस्मिन् तत् सद्म जगत् तन्मखः प्राप्तं यस्मिन्निति १। १८। ६॥

सद्यः शीघ्रम् १। ५। ६। शीघ्रमेव (सद्यः परु-

त्परार्यैष्वमः। अ० ५। ३। २२। समानेऽहनि इति सद्य इति भाष्यवचनात् समानेऽहन्येतस्मिन्नर्थे सद्य इति शब्दो निपातितः) १।८।६॥

सद्यऊतयः चिप्राणि रक्षणादीनि येषां ते ५। ५४। १५॥

सद्योअर्थम् शीघ्रगामि पृथिव्यादिद्रव्यम् १। ६०। १॥

सद्योवृधम् यं सद्यो वर्धयति तम् ३। ३१। १३॥

सधनित्वम् धनीनां भवेन सह वर्तमानं राज्यम् ४। १। ६॥

सधन्यः समानं धनं विद्यते येषां ते (अत्र मत्वर्थीय ईप्) ३। ४। १४। धन्यैः सह वर्तमानः ६। ५१। ३॥

सधमाः समानस्थाने मन्यमानः ७। १८। ७॥ [सधमात्] समानस्थानात् २०। ४७॥

सधमात् समानस्थानात् यस्सह माद्यति ४। २१। १। [सधमादः] महानन्दिताः। १। १२१। १५। समानस्थानाः ३। ४३। ६ [सधमादम्] सह मादयितारम् १। १८७। ११। सहाऽऽनन्दम ४। २३। २। यत्र सह माद्यन्त्यानन्दन्ति तम् ७। ३२। १। [सधमादेषु] सुखेन सह वर्तमानेषु स्थानेषु १। ५१। ८। सहस्थानेषु १६। ४४॥

सधमाद्यानि सहस्थानेषु साधूनि ४। ३। ४॥

सधमादम् सहमदनम्। नि० ७। ३१॥

(यजु० १०। ७) अनतिमानिन्य इत्येवैतदाह सधमाद इति। श० ५। ३। ५। १९॥

सधवीर समानस्थाने वर्तमान वीरपुरुष ६। २६। ७॥

सधस्तुति सहप्रशंसितम् ५। १८। ५॥ [सधस्तुतिम्] स्तुत्या सह वर्तते ताम् (अत्र वर्णव्यत्ययेन हकारस्य धकारः) १। १७। ९। सहकीर्तिम् ४। ४४। ६॥

सधस्थाः सहस्थानाः १८।६०। [सधस्थम्] यत्सह तिष्ठति तत्कारणम् ५। १८। सहस्थानम् १०। ७। तत्त्वावयवैः सह स्थानम् १। १५४। ३॥ [सधस्थात्] सहस्थानात्तलात् ११। ६। [सधस्थे] समानस्थाने मेघमण्डले ६।५२।१५। अन्तरिक्षे १३।५३। [सधस्थ] समानस्थान १८। ५६॥

सधस्थे सहस्थाने। नि० ३। १५॥

(यजु० १८। ५९) स्वर्गो वै लोकः सधस्थः। श० ९। ५। १। ४६॥

सधिः षोढा (अत्र वर्णव्यत्ययेन हस्य धः इश्च प्रत्ययः) १२। ३६। [सधिषि] समानान् शब्दान् शृणोति येन तस्मिन् श्रोत्रे १३। ५३॥

सध्री समानस्थानाः २ । १३ । २ ॥

[सध्रेः] सहस्थानस्य ५ । ४४ । १० ॥

सध्रीचीः [सध्रीचीः] सह वर्तमानाः ३७ । १७ । सह गच्छन्तीः १ । १६४ । ३१ ॥

सध्रीचीना सहाञ्चन्ती ३ । ५५ । १५ । सहाञ्चतः संगतौ भवतस्तौ १ । १०८ ३॥[सध्रीचीनाः] सह वर्तमानाः १। १०५।१०।सहाञ्चन्तः१।१३४।२।[सध्रीचीनेन] सहाञ्चति गच्छति तत्सध्र्यङ्, सध्र्यङ् एव सध्रीचीनं तेन (सहस्य सध्रिः अ० । ६ । ३ । ९५ । अनेन सध्र्यादेशः । विभाषांचेरदिक् स्त्रियाम् ) ६ । ३ । १३८ । इति दीर्घत्वम) १ । ३३ । ११ । संज्ञापकेनानुष्ठापकेन वा ४ । २४ । ६ ॥

सध्र्यक् सह सेवमानम् १ । ५१। ७ । सहाञ्चतीति १ । १०८। ३ । यः सध्रि समानं स्थानं प्राप्नोति सः २ । १७ । ३ ॥ [सध्र्यञ्चा] सह प्रशंसनीयौ १।१०८ । ३ ॥

सन् [सन्] प्रकट होते हुए १ । ९४ । ७ । भवन् १ । १०० । ४ । वर्तमानः १ । ७१ । १० । [सन्तः] सत्पुरुषाः ६ । ६६ । ४ ॥

सनकाः सनन्ति सेवन्ते परपदार्थान् ये ते । (अत्र कुन् शिल्पिसंज्ञयोरपूर्वस्यापि उ० २ । ३२ ) १ । ३३ । ४ । [सनकात्] सनातनात्कारणात् ३ । २९ । १४ ॥

सनजा [सनजा] या सनेति सनातनाज्जायते सा १ । ६२ । ७। सनेन विभागेन जाता ३ । ३९ । २ ॥

सनत् सम्भजेत् (लेट्प्रयोगोऽयम्) १ । १०० । ६ ॥

सनत् सदा, यथावन्निरन्तरं वा १ । १०० । १८ ॥

सनन्तः सेवमानाः ७ । ५२ । १ ॥

सनता नतेन सह वर्तमानानि २ । ३ । ६ । सनतानि सनातनानि ३ । ३ । १ ॥

सनयः उत्तमाः सेवाः १ । १०० । १३ । सनातनाः ३ । २० । ४ । संभक्तयः ३ । ३० । २१ । विभक्तयः ४ । ५१ । ४ ॥ [सनिम्] पापपुण्यानां विभागेन फलप्रदातारम् १ । १८ । ६ । सनन्ति संभजन्ति सुखानि यस्मिन्व्यवहारे तम् (अत्र सनधातोः खनिकृष्यज्यसिवसिवनिसनि० उ० । ४ । १४५ इति अधिकरण इः प्रत्ययः ) १ । २७ । ४ ।

विभक्ताम् २ । ३४ । ७ । सेवनीयां सत्यासत्ययोर्विभाजिकां वाणीम् ५ । २७ । ४ । सत्यासत्यविभाजिकां धियम् ६ । ६१ । ६ । संविभागम् ६ । ७० । ६ । [सन्या] समानान् पदार्थान्नयति यया तया ५ । ७ । सर्वासां विद्यानां संविभागकर्त्र्या १२ । ७ । [सनये] सुखानां सम्भोगाय १ । ३० । १६ । संविभागाय १ । ३१ । ८ । सुखसेवनाय १ । ११६ । १८ । राज्यसेवनाय १ । ११६ । २१ । [सन्याम्] सत्यं नीयते यया तस्याम् ८ । ५४ ॥

सनयं पुराणम् । नि० ४ । १९ ॥

सनरस्य संभज्यमानस्य ( अत्र सनधातोर्बाहुलकादौणादिकोऽरन्प्रत्ययः) १ । ९६ । ८ ॥

सनर्वथ सेवध्वम् १२ । ७९ ॥

सनवित्तः यः सनातनेन वेगेन वित्तः लब्धः ७ । ४२ । २ ॥

सनश्रुतम् यः सनातनानि शास्त्राणि शृणोति तम् ३ । ११ । ४ । [सनश्रुत] सत्यासत्यविवेकिनां सकाशाच्छ्रुतं येन यद्वा सनं सत्यासत्यविभाजकं वचनं श्रुतं येन तत्सम्बुद्धौ ३ । ५२ । ४ ॥

सना सनातनानि १ । १३९ । ८ । सनानि प्रसिद्धानि शौर्याणि १ । १७४ । ८ । संसेविनौ ४ । ३३ । ३ । सदा ५ । ७५ । २ । [सनानि] संविभागयुक्तानि वस्तूनि १ । ९५ । १० । कर्मभिः संभक्तानि ३ । १ । २० । [सनात्] संभजनात् १ । ५१ । ६ ॥

सनाः भोक्तव्यः ३ । १ । ६ ॥

सनाजुरा सदा जरावस्थास्थौ ४ । ३६ । ३ ॥

सनाजुवः सनातनी जूर्वेगो यासां ताः १ । १४१ । ५ ॥

सनात् नित्यम् ३४ । ५४ । निरन्तरम् २ । १६ १ । सर्वदा १ । ५५ । २ ॥

सनात् चिरम् । नि० १२. ३६ ।

सनाभिः समाना नाभिर्बन्धनं यस्य सः १ । १६४ । १३ ॥

सनाभयः अंगुलिनाम । निघ० २. ५. नाभिः सन्नहनान्नाभ्या सन्नद्धा गर्भा जायन्ता इत्याहुरेतस्मादेव ज्ञातीन्त्सनाभय इत्याचक्षते सबन्धव इति च । नि० ४. २१ ॥

सनायते सना सनातन इवाचरति १ । ६२ । १३ ॥

सनायुवः सनातनस्य कर्मणः कर्त्तार इवाचरन्तः १ । ६२ । ११ ॥

सनिता [ सनिता ] ज्ञानस्य सुखस्य विभक्ता १ । २७ । ६ । सभक्ता सेवकः १ । ३६ । १३ । संभक्तानि ( अत्र वनसनसंभक्ताविति धातोर्बाहुलकात्तन्प्रत्ययः १ । १०० । ६ । संविभाजकः १ । १२६ । २ । सत्यासत्ययोः संविभाजकः ४ । ३७ । ६ । [ सनितुः ] [ शफानां ] रक्षणायायसो निर्मितस्य [क्षुरत्रस्य] २६ । १६ ॥

सनितुः हस्तग्राहस्य । नि० ३. ६ ॥

सनितौ भोगसंविभागलाभे १ । ८ । ६ ॥

सनिषन्त विभजन्ते ५ । १२ । ४ ॥

सनिषासहे संभज्य प्राप्नुयाम ३ । ११ । ६ ॥

सनिष्णत संभजेयुः, संभजन्तु वा १ । १३१ । ५ ॥

सनिष्यति संभजेत् ५ । ३१ । ११ ॥

सनिष्यद् संभक्ष्यमाणः ३ । २ । ३ । [सनिष्यन्तः ] संविभागं करिष्यन्तः ३ । २ । ४ । सेवनं करिष्यमाणाः ३ । १३ । २ ॥

सनिष्यन्तीनाम् संभजन्तीनाम १२ । ८२ ॥

सनिष्यवः आत्मनः सनिं संविभागमिच्छवः ( सनिशब्दात् क्यचि लालसायां सुक् तत उः ) ६ । १७ । संविभागमिच्छवः १ । ५६ । २ । संभजमानाः १।३१। २। विभागं करिष्यमाणाः ४। ५५ । ६ ॥

सनिष्यसि संभजिष्यसि ४ । २०।३ ॥

सनीळाः समाना नीडा बन्धनाधारा गृहविशेषा अग्न्यागारविशेषा वा येषु ते १ । ३४ । ६ । समीपे वर्तमानाः १ । ६२ । १० । समानस्थानाः १ । ६६।३ । एकेश्वराधिकरणसमानस्थानाः १ । ७१ । १ । समीपस्थाः १ । १६५ । १ । समानं नीडं प्रशंसनीयं गृहं येषां ते ७ । ५६ । १

[ सनोळे ] समीपे १ । ६२ । ७

सनुतः सततम् १ । ६२ । ११ । सदा ५ । ४५ । ५ । सनातनात् ५ । २ । ४ ॥

सनुतः निर्णीतान्तर्हितनाम । निघ० ३. २५ ॥

सनुतरः सनातनविद्यः ४ । ३८ । ४ ॥

सनुत्यः सनुतेषु नम्रादिगुणेषु सह वर्तमानेषु भवः २ । ३० । ६ । निर्णीतान्तर्हितेषु सिद्धान्तेषु भवः साधुर्वा ( सनुतरिति निर्णीतान्तर्हितनाम )। ३ । २५ । [ सनुत्येन ] सम्प्रेरणीयेन ६ । ६२ । १० ॥

सनुत्री विभाजिका १ । १२३ । २ ॥

सनुयाम दध्याम संभजेम वा १ । १०० । १९ । याचेम ७ । २५ । ५ ॥

सनेत् सम्यक् सेवयेत् १ । ५६ ॥

सनेम सुखानि भजेम १ । १७ । ६ । सेवयेम १ । ७३ । ५ । विभजेम ५ । ६२ । ७ ॥

सनेमि सनातनम् ६ । १६ । सनातनेन

नेमिना धर्मेण सह वर्तमानं राज्यमण्डलम् ६ । २५ । समानो नेमिर्यस्मिँस्तत् १ । १६४ । १४ ॥

सनेमि क्षिप्रम् । निघ० १२. ४४. पुराणनाम निघ० ३ . २९ ॥

सनेयम् संभजेयम १८ । ३५ ॥

सनोति [ सनोति ] विभजति ३ । २५ । २ सम्पन्नं करोति ४ । १७ । ९ । ददाति ३ । २५ । २ । प्राप्नोति ६ । ६०।१ ॥

सनोतु ददातु ६ । ५४ । ५ ॥

सन्तरन्तः दुःखस्यान्तं प्राप्नुवन्तः ४ । १ ॥

सन्तराम् अतितराम २७ । ८ ॥

सन्ताय्यमाने विस्तार्यमाणे पाल्यमाने वा ३९ । ५ ॥

सन्तारणः यः सम्यगध्वनस्तारयति पारं करोति सः ३५ । १३ ॥

सन्ति भवन्ति १ । ११ । ८ । भवन्तु (अत्र लोडर्थो लट् वा ) १ । ८ । ६ ।

सन्तु भवन्तु २ । १० ॥

सन्त्य सन्तौ सनने क्रियासंविभागे भवः स सन्त्योऽग्निः ( अत्र सनधातोर्बाहुलकादौणादिकस्तिः प्रत्ययः ततो भवे छन्दसीति यत् ) १ । १५ । १२ । सन्तौ दाने साधुस्तत्सम्बुद्धौ ( इत्यत्र पण दान इत्यस्माद्बाहुलकादौणादिकस्तिः प्रत्ययस्ततः साध्वर्थे यच्च ) १ । ३६ । २ । सनन्ति सम्भजन्ति सुखानि याभिः क्रियाभिस्तासु साधो ! १ । ४५ । ५ । सनन्ति सम्भजन्ति ये ते सन्तस्तेषु साधो ! १ । ४५ । ६ । सन्तिषु सत्यासत्यविभाजकेषु साधो ! ३ । २१ । ३ । सन्तौ वर्तमाने साधोः ५ । ५१ । ३ ॥

सन्ददी याभ्यां सम्यक् ददतस्तौ २ । ३९ । ७ ॥

सन्दानम् पादादिबन्धनादीनि २५ । ३१ । शिरोबन्धनादि २५ । ३९ ॥

सन्दिताय यः सम्यग्दीयते खण्ड्यते तस्मै २२ । ७ ॥

सन्दृक् यः सम्यक् पश्यति १७ । २६ ॥ [ सन्दृशि ] समीचीनं दिग्दर्शनं यस्मि न्व्यवहारे तस्मिन् ४ । २३ । सम्यग्दर्शने, समानदर्शनविषये वा ३६ । १९ ॥

०संदृक् संद्रष्टा । नि० १०. २६ ॥

सन्धिना सन्धानेन १५ । ३६ । [ सन्धये ] परस्त्रीसमागमनाय । [ प्रवर्त्तमानम ] ३० । ९ ॥

सन्धिः ( स्तोत्रम् ) एषा । वा उक्थस्य सम्मा यद्वात्रिः (=सन्धिस्तोत्रम् ) त्रीण्युक्थानि, ( अग्निरुषा अश्विनाविति ) त्रिदेवत्यः सन्धिः तां० ६ । १ । २५-२६ ॥

सन्नः अवस्थापितः ( सन्न इति पदं महो

धरेण भ्रान्त्या पूर्वस्य मन्त्रस्यान्ते स्वीकृतम् ) ८ । ५६ ॥

सन्नते अनुकूले २६ । १ ॥

सन्नद्धः तत्परः, सम्बद्धो वा २६ । ५२ ॥

सन्नद्धा सम्यक् बद्धा २९ । ४८ ॥

सन्नशे सम्यक् नश्येत् २३ । १५ ॥

सन्न्यसे सनां विभजतां मध्ये प्रयत्नाय ३। ३१ । १९ ॥

सन्वन्तु सम्भजन्तु १ । १२२ १२ ॥

सपत्नक्षित् सपत्नान् शत्रून् क्षयति येन सः ( अत्र कृतो बहुलमिति वार्त्तिकेन करणाकारके क्विप् । क्षि क्षये इत्यस्य रूपम् । एतदुव्वटमहीधराभ्यां क्षिणु हिंसायामित्यस्य भ्रान्त्या व्याख्यातम् ) सपत्नान् क्षयति यया सा इति वा १।२६॥

सपत्नदम्भनम् यः सपत्नान् दम्भयतीति तम् ३ । १८ ॥

सपत्नसाही यया सपत्नान् शत्रून् सहन्ते सा, यया सपत्नान् दोषान् सहन्ते मृष्यन्ति दूरीकुर्वन्ति सा, यया सपत्नान् दुष्टानि शीलानि सहन्ते सा वा ५ ।१०॥

सपत्नहा यः सपत्नान् शत्रून् मेघावयवान् वा हन्ति सः ५ । २४ । यः सपत्नानरीन् हन्ति सः १२ । ५॥ शत्रुदोषहन्ता २७।३॥

सपत्नाः शत्रवः १७ । २२ ॥ [सपत्नान्] सपत्नीव वर्तमानान् शत्रून् विरोधे वर्तमानान् सम्बन्धिनः वा १५ । २ ॥

सपत्नो वाऽभिमातिः ( यजुः ९ । ३७ ॥ ३८ । ८ ॥ ) श० ३ । ६ । ४ । ९ ॥ ५ । २ । ४ । १६ ॥ १४ । २ । २ । ८ ॥ इमं देवाः असपत्नँ सुवध्वमितीमं देवा अभ्रातृव्यँ सुवध्वमित्येवतदाह । श० ५ । ४ । २ । ३ । पाप्मा वै सपत्नः । श० ८ । ५ । १ । ६ ॥

सपत्नी समाना पत्नी यस्याः सा ३ । १ । १० । सपत्नी इव वर्तमाने ३ । ६ । ४ । [ सपत्नीरिव ] यथा अनेकाः पत्न्यः समानमेकपतिं दुःखयन्ति तद्वत् १ । १०५ । ८ ॥

सपन्त आक्रोशन्ति ५ । ३ । ४ ॥

सपन्तः समवयन्तः १ । ६७ । ४ । दुष्टानाक्रोशन्तः २ । ११ । १२ ॥

सपन्ते आक्रुश्यन्ति ७ । ३८ । ५ ॥

सपर्यत परिचरत ४ । ३५ ॥

सपर्यतः सेवेते ६ । ४४ । ५ ॥

सपर्यति सेवते १ । १२ । ८ ॥

सपर्यति परिचरणकर्मा । निघ० ३.५। सपर्यतः परिचरतः । नि० ११. ६ ॥

सपर्यन् [सपर्यन्] सेवमानः १ । १५३ । ३ ॥ परिचरन्ति १ । ७० । ५ ॥

सपर्यन्ति सेवन्ते १ । ८४ । १२ ॥

सपर्यात् सेवेत १ । ६३ । ८ ॥

सपर्यान् परिचरेयुः, सेवेरन् १ । ७२ । ३ ॥

सपर्यामि परिचरामि १ । ५८ । ७ ॥

सपर्यू सेवकौ ३ । ५० । २ । [सपर्यवः] आत्मनः सपर्यामिच्छवः २ । ६ । ३ । सत्यं सेवमानाः ७ । २ । ४ ॥

सपर्येण्यः सेवितुमर्हः ६ । १ । ६ ॥

सपर्येम सेवेमहि २ । ६ । ३ ॥

सपामि आक्रुशामि ५ । १२ । २ ॥

सपित्वम् समानं च तत् पित्वं प्रापणं वा विज्ञानं च तत् (अत्र पि गतावित्यस्माद्धातारौणादिकस्त्वन्प्रत्ययः) १ । १०९ । ७ ॥

सपीतिः समाना पीतिः पानं यस्यां सा १८ । ९ ॥ [सपीतिम्] पानेन सह वर्तमानम् ८८ । १६ ॥

सपेम सम्बन्धं कुर्याम ३७ । २० । आक्रुश्याम निन्द्येम ४ । ४ । ६ । शपथैर्नियमयेम ५ । ४३ । १२ । आक्रुश्येम ६ । १५ । १० ॥

सप्त पृथिवजलाग्निवायुविराट्परमाणुप्रकृत्याख्यैः सप्तभिः पदार्थैः १ । २२ । १६ । सप्तसंख्याकान् १ । ३५ । ८ । सप्तविधा किरणाः १ । ५० । ८ । [सप्तभिः] नागकूर्मकृकलदेवदत्तधनञ्जयेच्छाप्रयत्नः १४ । २८ ॥

सप्त सृप्ता संख्या, सृप्तादित्यरश्मय इति वदन्ति नि० । ४. २६.

सप्तऋषयः पञ्च मुख्यप्राणा महत्तत्वमहङ्कारश्चेति १४ । २८ । [सप्तऋषीन्] सप्त प्राणादीन्, प्राणादयः पञ्च सूत्रात्मा धनञ्जयश्चेति १७ । २६ ॥

सप्त ऋषयः रश्मिनाम । निघ० १. ५. सप्तऋषीणानि ज्योतींषि ।....सप्तऋषीणानीन्द्रियाणि । नि० १०. २६ ॥

सप्तचक्रम् सप्त चक्राणि यस्मिँस्तम् १ । १६४ । ३ । [सप्तचक्रे] सप्त विधानि चक्राणि भ्रमणपरिधयो यस्मिँस्तस्मिन् १ । १६४ । १२ ॥

सप्तजिह्वाः काल्यादयः सप्त जिह्वा इव ज्वाला येषां ते ३ । ६ । २ ॥

सप्तत्या सत्तर पदार्थों से युक्त २ । १८ । ५ ॥

सप्तथम् सप्तमम् १ । १६४ । १५ ॥

सप्तथी सप्तमी ( अत्र वाच्छन्दसीति मस्य स्थाने थः ) ७ । ३६ । ६ ॥

सप्तदश सप्ताधिका दश १८ । २४ । [ सप्तदशभिः ] दश पाद्या अंगुलयश्चत्वार्यूर्वष्ठीवानि द्वे प्रतिष्ठे यदर्वाङ्नाभेस्तत्सप्तदशं तैः १४ । २९ ॥

सप्तदशः पञ्च कर्मेन्द्रियाणि, पञ्च विषयाः, पञ्च महाभूतानि कार्यं चेति सप्तदशानां पूरकः १० । १२ । सप्तदशानां पूरकः १३।५८। सप्तदशविधः १४ । २३ ॥ [ सप्तदशम् ] चत्वारो वर्णाश्चत्वार आश्रमाः श्रवणमनननिदिध्यासनानि च कर्माणि । अलब्धस्य लिप्सा लब्धस्य प्रयत्नेन रक्षणं रक्षितस्य वृद्धिः वृद्धस्य सन्मार्गे सर्वोपकारके सत्कर्मणि व्ययकरणमेव चतुर्विधः पुरुषार्थः । मोक्षानुष्ठानं चेति सप्तदशम् ९ । ३४ ॥ [सप्तदशात् ] सत्रह तत्वों के विज्ञान से १३ ५६ ॥

सप्तदशः ( स्तोमः ) ॥ प्रजापतिर्वै सप्तदशः । गो० उ० २. १३ ॥ ५. ८ ॥ तै० १. ५. १० ६ ॥ तां० २. १०. ५ ॥ १७. ९. ४ ॥ सप्तदशः प्रजापतिः । तै० १. ३. ३. २ ॥ सप्तदशो वै प्रजापतिः । ऐ० १. १६ ॥ ४. २६ ॥ कौ० ८. २ ॥ १० . ६ ॥ १६. ४ ॥ श० १. ५. २. १७ ॥ ५. १. २. ११ ॥ गो० उ० १. १९ ॥ सप्तदशो वै प्रजापतिर्द्वादश मासाः पंचर्तवो हेमन्तशिशिरयोः समासेन तावान्त्संवत्सरः संवत्सरः प्रजापतिः । ऐ० १. १ ॥ द्वादश वै मासाः संवत्सरस्य पञ्चर्तव एष एव प्रजापतिः सप्तदशः । श० १. ३. ५. १०॥ संवत्सर एव सप्तदशस्यायतनं द्वादश मासा पञ्चर्त्तव एतदेव सप्तदशस्यायतनम् । तां० १०. १. ७ ॥ सप्तदशो वै संवत्सरो द्वादश मासाः पञ्चर्तवः श० ६. २. २. ८ ॥ संवत्सरः सप्तदशः । तां० ६. २. २ ॥ तस्माऽएतस्मै सप्तदशाय प्रजापतये एतत्सप्तदशमन्नँ समस्कुर्वन्य एष सौम्योध्वरोऽथ या अस्य ताः षोडश कला एते ते षोडशर्त्विजः । श० १०. ४. १. १९ ॥ तद्वै लोमेति द्वेऽअक्षरे । त्वगिति द्वेऽअसृगिति द्वे मेद इति द्वे माँसमिति द्वे स्नावेति द्वे ऽस्थीति द्वे मज्जेति द्वे ताः षोडश कला अथ य एतदन्तरेण प्राणः सञ्चरति स एव सप्तदशः प्रजापतिः । श० १०. ४.१.१७॥ अन्नं वै सप्तदशः । तां० २. ७. ७ ॥ १७. ६. २. ॥ १९. ११. ४ ॥ २०. १०. १ ॥ २५. ६. ३ ॥ सप्तदशँ ह्यन्नम् । श० ८. ४. ४. ७ ॥ प्रजापतिः सप्तदशः । ऐ० ८. ४ ॥ तं ( सप्तदशस्तोमं ) उ प्रजापतिरित्याहुः । तां० १०. १. ९ ॥ सप्तदश एव स्तोमो भवति प्रतिष्ठायै प्रजात्यै । तां० १२. ६. १३ ॥ विट् सप्तदशः । तां० १८. १०. ९ ॥ विड् वै सप्तदशः । तां० २. ७. ५ ॥ २. १०. ४ ॥ विशः सप्तदशः । ऐ० ८. ४ ॥ पशवो वै सप्तदशः । तां० १९. १०. ७ ॥ तान् ( पशून् ) त्रिशे देवाः सप्तदशेन स्तोमेन नाप्नुवन् । तै० २. ७. १४. २ ॥ सप्तदशो वै पुरुषो दश प्राणाश्चत्वार्यङ्गान्यात्मा पञ्चदशो ग्रीवाः षोडश्यः शिरः सप्तदशम् । श० ६. २. २. ९ ॥ उरः सप्तदशः । अष्टावन्ये जत्रवोऽष्टावन्यऽउरः सप्तदशम् । श० १२. २. ४. ११ ॥ वर्षाभिर्ऋतुनादित्याः स्तोमे सप्तदशे स्तुतं वैरूपेण विशौजसा । तै० २. ६. १९. १-२ ॥ गायत्रः सप्तदशस्तोमः । तां० ५. १. १५ ॥ उदरं वा एषः स्तोमानां

यत्सप्तदशः तां० ४. ५. १५॥ राष्ट्रँ सप्तदशः। तै० १. ८. ८. ५ ॥ सप्तदशः (स्तोमः) एव यशः। गो० पू० ५. १५ ॥ यत सप्तदशो यदेवास्य (यजमानस्य) मध्यतोऽपूतं तत्तेनापहन्ति। तां० १७. ५. ६ ॥ सर्वः सप्तदशो भवति। तां० १७. ५. ६ ॥

**सप्तदशाक्षरेण** निचृदाख्यया गायत्र्या ६। ३४ ॥

**सप्तधा** सप्तभिः प्रकारैः १७। ७६ ॥

**सप्तधातु** सुवर्णादयो सप्त धातवो यस्मिन् तत् ४५। ६ ॥

**सप्तधातुः** सप्त प्राणादयो धारका यस्याः सा ६। ६१। १२ ॥

**सप्तनामा** सप्त नामानि यस्य १। १६४। २ ॥

**सप्तपुत्रम्** सप्तविधैस्तत्वैर्जातम १। १६४। १ ॥

**सप्तमातृभिः** सप्तार्थात् पृथिव्यग्निसूर्यवायुविद्युदुदकावकाशा मातरो जनका यासां ताभिः १। ३४। ८ ॥

**सप्तमी** सप्तानां पूरणा २५। ४ ॥

**सप्तमे** सप्तमे ३९। ६ ॥

**सप्तरश्मिः** सप्तविधा रश्मयो यस्य सः २। १२। १२। [सप्तरश्मिमः] सप्तसु छन्दःसु लोकेषु वा रश्मयो यस्य तम् १। १४६। १ ॥

सप्तरश्मिः स एष (आदित्यः) सप्तरश्मिर्वृषभस्तुविष्मान्। जै० उ० १. २८. २। (ऋ० २. १२. १२.) यस्सप्तरश्मिरिति। सप्त ह्येत आदित्यस्य रश्मयः (सप्तरश्मिः=इन्द्रः–आदित्यः)। जै० उ० १. २६. ८ ॥

**सप्तवध्रिम्** हतसप्तेन्द्रियम ५। ७८। ५। [सप्तवध्रये] पञ्चज्ञानेन्द्रियाणि मनो बुद्धिश्च सप्त हता यस्य तस्मै ५। ७८। ६ ॥

**सप्तविंशतिः** सप्ताधिका विंशतिः १८। २४॥

**सप्तशिवासु** सप्तविधासु कल्याणकारिणीषु १। १४१। २ ॥

**सप्तशीर्षाणम्** सप्त विधानि शिरांसि किरणा यस्मिंस्तम् ३। ५। ५ ॥

**सप्तस्वसा** सप्त पञ्चप्राणा मनो बुद्धिश्च स्वसेव यस्या साः ६। ६१। १० ॥

सप्तस्वसृ सप्तस्वसारम्। नि० १०.५॥

**सप्तहोता** सप्त प्राणा होतार आदातारो यस्य ३। २६। १४ ॥

सप्तहोता। सप्त स्वैरश्मयो रसानभिसन्नामयन्ति, सप्तैनमृषयः स्तुन्वतीति वा। नि० ११. २३. तस्मै (ब्रह्मणे) सप्तहँहूतः प्रत्यश्रृणोत्। स सप्तहूतोऽभवत्। सप्तहूतो ह वै नामैषः। तं वा एतँ सप्तहूतँ सन्तं। सप्तहोतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः। तै० २.३. ११. २। इन्द्रियं वै सप्तहोता। तै० २. २. ८. २। इन्द्रः सप्तहोता। तै० २. ३. १. १। इन्द्रः सप्तहोत्रा। तै० २. २. ८. ५। सौम्यो ऽध्वरः सप्तहोतुः (निदानम्)। तै० २. २. ११. ६। अर्यमा सप्तहोतॄणाँ होता। तै० २. ३. ५. ६॥

**सप्ताक्षरेण** सप्तवरेण देव्या जगत्या ६। ३२ ॥

**सप्ताश्वः** सप्त विधा अश्वा आशुगामिनः किरणा यस्य सः ५। ४५। ९ ॥

**सप्तास्यः** सप्त किरणा आस्यानि यस्य सः ४.५०.४ ॥ [**सप्तास्ये**] सप्त प्राणा आस्ये यस्य तस्मिन् ४.५१.४ ॥

**सप्तिमिव** यथा वेगवानश्वः १.६१.५ ॥

**सप्ती** सद्यः सर्पन्तौ (अत्र वा छन्दसीति गुणे कृते रेफलोपः) ३.३५.२ ॥ [**सप्तयः**] वाष्पादयो ऽश्वा येषां ते १.४७.८। संयुक्ताः शीघ्रं गमयितारो ऽग्निवायुजलादयो ऽश्वाः १.८५.६ ॥ [**सप्तिम्**] अश्वम् १२.४७ ॥ [**सप्ते**] अश्व इव वेगकारक २६.२। अश्व इव पुरुषार्थिन् २६.३ ॥

सप्ति (हे ऽश्व त्वं) सप्तिरसि। तां० १।७।१ ॥
,, आशुः सप्तिरित्याह। अश्व एव जवं दधाति। तस्मात्पुराशुरश्वो ऽजायत। तै० ३।८।१३।२ ॥
,, वायुः सप्तिः। तै० १।३।६।४ ॥
सप्तिः सरणस्य। नि० ६।३ ॥
,, अश्व नाम। निघ० १।१४ ॥

**सप्रथः** यत्प्रथोभिर्विस्तृतैः पदार्थैः सह वर्तते तत्। १.२२.१५। सप्रसिद्धिः, प्रथसा विस्तारेण युक्तं वा १.१२६.३। प्रख्यातगुणैः सह वर्तमानम् १.१४२.५। समानप्रख्यातिः, विस्तृतविज्ञानेन सहितो वा ६.१५.३। सत्कीर्त्या प्रख्यातः ६.६८.६ ॥

सप्रथाः सर्वतः पृथुः नि० ६।७ ॥

**सप्रथस्तमः** अतिशयेन विस्तृतसुखकारकः १२.११४ ॥ [**सप्रथस्तमम्**] यः प्रथोभिर्विस्तृतैराकाशादिभिस्महाभिव्याप्तो वर्तते सो ऽतिशयितस्तम् १.१८.६। यः प्रथसा विद्याविस्तरेण सह वर्तते सो ऽतिशयितस्तम् १.४५.७। अतिशयेन विस्तारव्यवहारम् १.७५.१॥ [**सप्रथस्तमे**] अतिशयितैः प्रथोभिः सुविस्तृतैः श्रेष्ठैः गुणकर्मस्वभावैः सह वर्तमाने १.६४.१३। अतिविस्तारयुक्ते ५.६५.५ ॥

**सप्रथाः** प्रथसा प्रख्यया सह वर्तमानः १८.५४। विस्तीर्णेन प्रशंसनेन सह वर्तमानाः ३५.२१। विस्तारेण सह वर्तमानाः ३६.१३। स्वकीर्तिप्रख्यातियुक्तः ३८.१७। विस्तीर्णसुखः ३८.२०। प्रथसा विस्तृतेन जगता सह वर्तमानः ३.५६.७। प्रसिद्धकीर्तिः ५.१३.४ ॥

**सप्सरासः** गन्तारः १.१६८.६ ॥

**सबर्दुघा** सर्वान् कामान् पूरयन्ती १.१३४.४ ॥ [**सबर्दुघे**] सबः पालकस्य दुग्धादेरिव रसस्य प्रपूरिके ३.५५.१२॥ [**सबर्दुघाम्**] बर्बति येन ज्ञानेन तद्बः। समानं बर्दोग्धि प्रपूरयति या ताम् (अत्र बर्ब गतावित्यस्माद्धातोः क्वौ बहुलमिति करणे क्विप्। छान्दसो बकारलोपः। समानस्य छन्द० अनेन समानस्य सकारादेशः। ततः। दुहः कप् घश्च। अ० ३.२.७० इति दुहः कप् प्रत्ययो हस्य स्थाने घादेशश्च) १.२०.३॥ [**सबर्दुघायाः**] समानं सुखं बिभर्ति येन दुग्धेन तत्सबस्तद्दोग्धि या तस्याः (अत्र समानोपपदाद् भृञ्धातोः विच्। वर्णव्यत्ययेन भस्य बः) १.१२१.५॥

**सबन्धुः** यथा समाना बन्धवो यस्य मित्रस्य सः ५.२३ ॥

**सबाधः** सहैव बाधन्ते ते १.६४.८। दुर्व्यसनानां बाधेन सह ये वर्तन्ते ते ३.२७.६। बाधेन सह वर्तमानः ३.५१.४॥
सबाधः—ऋत्विङ्नाम निघ० ३।१८॥

**सब्वम्** समवेतम् (अत्र 'सप समवाये' धातोरौणादिको वः प्रत्ययः) १६.८४॥

**सभराः** समानधारणपोषणाः १२.६८। समानं बिभ्रतीति सभराः १७.८१॥ [सभरसः] समानपालनपोषणाः ५.५४.१०। स्वसमानपोषकाः १७.८४॥

**सभाचरम्** यः सभायां चरति तम् ३०.६॥

**सभापतिभ्यः** सभानां पालकेभ्यो राजभ्यः १६.२४॥

**सभाभ्यः** या न्यायादिप्रकाशेन सह वर्तन्ते ताभ्यः सभाभ्यः स्त्रीभ्यः १६.२४॥ [सभायाम्] विद्वत्समूहशोभितायाम् ३.४५॥

**सभावती** सभासंबन्धिनी १.१६७.३॥

**सभावान्** प्रशस्ता सभा विद्यते यस्य ४.२.५१॥

**सभास्थाणुम्** सभायां स्थितम् ३०.१८॥

**सभृतयः** समाना भर्तारो यासां ताः ६.६७.७॥

**सभेयः** सभायां साधुः २२.२२॥
सभेयो युवा (यजु० २२।२२) एष वै सभेयो युवा यः प्रथमवयसी तस्मात्प्रथमवयसी स्त्रीणां प्रियो भावुकः। श० १३।१।६।८॥
„ यो वै पूर्ववयसी। स सभेयो युवा। तस्माद्युवा पुमान् प्रियो भावुकः। तै० ३।८।१३।३॥

**सम्** अच्छा १४.२.३७ (१७० विधि)॥
समित्येकीभावम्। नि० १।३॥

**समकृण्वन्** सम्यक् शिक्षितान् कुर्युः १७.२८॥

**समक्तः** सम्यक् प्रकटयन् २६.१०॥
[समक्तम्] संहतम् २.३.१०॥

**समगच्छन्त** सम्यक् प्राप्नुवन्ति १७.३०॥

**समग्मत** प्राप्नुत १२.८०॥

**समञ्जन्** सम्यक् प्रकाशयन् १२.६। व्यक्तीकुर्वन् २०.३७। संपृचानः २०.४५। सम्यक् मिश्रीकुर्वन् २६.३५॥

**समजाति** संजानीयात् १.१००.११॥

**समजासि** सम्यक् प्राप्नुयाः ७.३२.७॥

**समत्वा** सम्यगत्ति स्वादु भुङ्क्ते सः ६.१८.२। यो मदेन सह वर्तमानान्वनति संभजति सः ७.२०.३॥

**समदः** मदेन सह वर्तमानाः ४.२६.३६॥
[समदः] संग्रामान् ६.७५.२॥
समत्सु-संग्रामनाम। निघ० २।१७। समदो वात्तेः, सम्मदो वा मदतेः नि० ६।१७॥

**समदनस्य** मदनं हर्षणं यस्मिन्नस्ति तेन सहितस्य १.१००.६॥

**समधत्त** सम्यग् धरतः १.१६५.६॥

**समनगाः** यः समनं संग्रामं गच्छति सः ७.६.४॥ [समनगा इव] समनमवधारितं स्थानं गच्छन्तीव १.१२४.८॥

**समनम्** समनं समीचीनं संग्रामम् १.४८.६॥
समनम्-संग्रामनाम। निघ० २।१७। संमननाद्वा, सम्माननाद्वा। नि० ७।१७॥

**समनसः** समानं मनो येषां ते १.१८६.८। समानं सहकारि साधनं मनो येषां ते

६.६.५। सञ्ज्ञानाः समानमनसः ७.४३.२। समानं मनो विज्ञानं येषान्ते १६.४५। समाने धर्मे मनो येषां ते १६.४६ ॥ [समनसः] समानं मनः स्वान्तं यासां ताः ७.२५। समानविज्ञानाः १३.२५। मनसा सह वर्तमानाः १४.६। समानमनोनिमित्ताः १५.५७ ॥

**समना** संग्रामे (अत्र सुपां स्वित्याकारादेशः) १.१२४.३। तुल्ये १.१६८.१। संग्रामान् २.११.७। सदृशी ४.५.७। समनस्कौ ४.४३.७। समानाः (अत्र सुपां सुलुगिति जसो लुक्) ४.५१.८।४.५१.६। संग्रामे (अत्र विभक्तेराकारादेशः) ६.४.१ ॥ [समनेव] समानमनस्का पतिव्रतेव ४.५८.८। समानमना इव (अत्र छान्दसो वर्णलोपो वेति सलोपः) ६.७५.४। सम्यक् प्राणइव प्रिया २६.४१। यथा युद्धे प्रवृत्ता सेना तथा १.१०३.१ ॥

समना-समानया। नि० १०।५ ॥
समना समनसौ। नि० ६।४० ॥

**समन्तम्** सर्वतो दृढाङ्गम् ५.१.११ ॥

समन्तम् (साम)—समन्तेन पशुकामः स्तुवीत, पुरोधाकामः समन्तेन स्तुवीत। तां० १५।४।७ ॥

**समन्तशितिबाहुः** समन्ताच्छितयो बाह्वोर्भुजस्थानयोर्यस्य सः २४.२ ॥

**समन्तशितिरन्ध्रः** समन्ततो रन्ध्राणीव शितयः श्वेतचिह्नानि यस्य सः २४.२ ॥

**समन्ते** [समन्ते] सम्यगन्तो ययोस्ते १.१८५.५ ॥

**समन्यवः** मन्युना सह वर्तमानाः २.३४.३। सक्रोधाः २.३४.५। समानो मन्युः क्रोधो येषां ते ५.८७.८ ॥

**समपश्यन्त** सम्यक् पश्यन्ति १७.२६ ॥

**समम्** सर्वम् १.१७६.४। [समस्मात्] अधर्मेण तुल्यगुणकर्मस्वभावात् २५.४८। [समस्य] तुल्यस्य ६.२७.३ ॥

समस्य सर्वस्य। नि० ५।२३ ॥

**समर्या** यथासमयम् १.५६.६। सामीप्ये १.७३.६। काले १.११३.१० ॥

**समयोधयः** सम्यग्योधयसि १.८०.१३ ॥

**समरणम्** सम्यक् प्रापकम् १.१५५.२ ॥ [समरणे] संग्रामे १.१७०.२ ॥

समरणं संग्रामनाम। निघ० २।१७ ॥ समरणेषु संग्रामेषु। नि० ६।२० ॥

**समरन्त** सम्यग्गच्छन्ति ७.२५.१ ॥

**समराणः** सम्यक् प्राप्नुवन् १.१६५.३। सम्यग्गच्छन् ३३.२७ ॥

**समरे** संग्रामे १२.६६ ॥

**समर्यः** संग्राममिच्छुः ५.३३.१॥ [समर्ये] संग्रामे १.६३.६। सम्यगर्थे वणिजि १.१७८.४ ॥

समर्यं संग्रामनाम। निघ० २।१७ ॥

**समर्यजित्** यः समर्यान् संग्रामान् जयति सः ['समर्य' इति संग्रामनाम निघं० २.१७] १.१११.५॥

**समर्यता** समरेच्छा ५.४४.७ ॥

**समवृक्त** सम्यग्वृङ्क्ते ७.३.४॥

**समशीत** सम्यक् व्याप्नुयात् [अत्र बहुलं छन्दसीति श्नोर्लुक्] १.५७.२ ॥

**समसुस्रोत्** सम्यक् प्राप्नुयात् १८.५८ ॥

**समह** यो महेन सत्कारेण सह वर्तते तत्सम्बुद्धौ १.१२०.११ ॥

**समाः** संवत्सराश्च क्षणादयः १८.१८ ॥ [ **समाम्** ] वेलाम् ३८.२८ । शुद्धाम् ४.५७.७॥ [ **समाभ्यः** ] प्रजाभ्यः ४०.८॥

समानां संवत्सराणां नि० ११५ ॥

**समाचक्रे** समाकरोति ३.३६.५ ॥

**समानः** सदृशः ५.२३ । समानयति रसं येन सः २४.३३ । तुल्यः १.११३.३ । एकः ३.५५.४ । पक्षपातरहितः ७.२६.३ ॥ [ **समानम्** ] सर्वत्रैव स्वव्याप्त्यैकरसम् १.१३१.२॥

सम्मानमात्रं भवति नि० ४।२५ ॥
तं ( संज्ञसं पशुं ) ऊर्ध्वा दिक्समानेत्यनुप्राणत्समानमेवास्मिँस्तददधात् । श० ११।८।३।६ ॥
दिशः समानः । जै० उ० ४।२२।६॥
निरुक्तानिरुक्त इव ह्ययं समानः । ष० १।२॥

**समानजे** व्यक्तीकरोति १.१८८.६ ॥

**समानदक्षाः** समानं दक्षो बलं विद्या चातुर्य्यं येषां ते ७.२६.२ ॥

**समानबन्धू** यथा सह वर्तमानौ मित्रौ भ्रातरौ वा १.११३.२ ॥

समानबन्धुः समानबन्धने नि० ३।२० ॥

**समानयोजनः** समानं तुल्यं योजनं संयोगकरणं यस्मिन्त्सः १.३०.१८ ॥

**समानवर्चसा** समानं तुल्यं वर्चो दीप्तिर्ययोस्तौ १.६.७ ॥

**समान्या** समं वर्तमानया १.१३२.४ । तुल्यया क्रियया १.१६५.१ । समानस्वभावे ३.५४.७ । तुल्यया ५.४८.२ ॥

**समारत** सम्यक् प्राप्नुत १.१४५.४ ॥

**समाराणे** सम्यक् समन्तात् राणं दानं ययोस्ते ३.३३.२ ॥

**समावृतम्** सम्यग्वृत्तम् १.११२.१८ ॥

**समाववर्ति** सम्यगावर्तते २०.२३ ॥

**समाशिराम्** सम्यगभितः श्रियन्ते सेव्यन्ते सद्गुणैर्ये तेषाम् (अत्र श्रयतेः स्वाङ्गे शिरः किच्च । उ० ४.२०० । अनेनासुन्-प्रत्ययः शिर आदेशश्चासुनि ) १.३०.६१॥

**समासते** सम्यग् उपविशन्ति ३.६.७ । सम्यक् प्राप्नुवन्ति ७.१.४॥

**समाहितम्** सम्यक् सर्वतो धृतम् ६.३ ॥

**समिङ्गयति** सम्यक् चालयति ५.७८.७ ॥

**समित्** प्रदीप्ता ५.६.४ । सम्यगिध्यतेऽनयाऽनेन वा सः । अग्निप्रदीपकं काष्ठादिकं वसन्तर्तुर्वा २.५ । सम्यगिध्यते दीप्यतेऽनया सा विद्या काष्ठादिर्वा २.१४ । यथा सम्यगिध्यते तथा ५.३५ । सम्यग्दीप्तः ८.२७ । अग्नेरिन्धनमिव मनुष्याणामात्मनां प्रकाशकः २०.२३ ॥ [ **समिधः** ] शब्दार्थसम्बन्धैः सम्यक् दीपिताः १७.६६ । सम्यक् प्रदीपिकाः २७.११ । सामग्रीभूताः ३१.१५ ॥ [ **समिधम्** ] समिध्यते प्रकाश्यतेऽर्थतत्वमनया क्रियया ताम् ८.२४ । समिधमिव ध्यानम् २०.२४ ।

काष्ठमिव शत्रुम् ५.४.४ ॥ [ समिधा ] सम्यगग्निसंस्कृतेनान्नादिना १२.३० । ज्ञानप्रकाशेन २८.१ । सम्यक् प्रदीप्तेन स्वभावेन १.६५.११ । सम्यक् प्रदीप्तया नीत्या सह ४.४.१५ । इन्धनादिकाष्ठेन ३.५.६ । प्रदीपनेन ३.५.१० ॥

समिधः (यजु० १७।७६) प्राणा वै समिधः, प्राणा ह्येतꣳ समिन्धते । श० ६ । २ । ३ । ४४ ॥ प्राणा वै समिधः । ऐ० २ । ४ ॥ श० १ । ५ । ४ । १ ॥ यदेनꣳ समयच्छन् तत्समिधः समित्त्वम् । तै० २ । १ । ३ । ८ ॥ समिधो यजति वसन्तमेव वसन्ते वा इदं सर्वं समिध्यते । कौ० ३ । ४ ॥ वसन्तो वै समित् । श० १ । ५ । ३ । ६ ॥ गर्भः समित् । श० ६ । ६ । २ । १५ ॥ अस्थीनि वै समिधः । श० ६ । २ । ३ । ४६ ॥

**समितिः** विज्ञानमर्यादा १.६५.५॥ [ समितौ ] संग्रामे १२.८० ॥

समिति संग्रामनाम । निघ० २।१७ ॥

**समित्समित्** प्रतिसमिधम् ३.४.१ ॥

**समिथानि** सम्यग् यन्ति यानि विज्ञानानि तानि १.५५.५ ॥ [ समिथे ] संग्रामे २.२४.१३ ॥

समिथे संग्रामनाम । निघ० २।१७ ॥

**समिद्धः** सुप्रकाशितः १.६४.१४ । विद्याप्रदीप्तोऽध्यापकः १.१४२.१ । अग्निरिव प्रदीप्तः १.१८८.१ । सम्यक् प्रदीप्तः २.३.१ । ज्ञानादिप्रकाशकः समिद्रूपः (अत्र छान्दसो वर्णागमः तेन धस्य द्वित्वं सम्पन्नम् ) २३. ५७ । सम्यक् प्रकाशितः २६.२५॥ [ समिद्धे ] प्रसिद्धे ४.२५.१ ॥

**समिद्धाग्निः** प्रदीप्तः पावकः ५.३७.२ ॥

**समिष्टयजुषां** सम्यगिष्टं येन भवति तेन १६. २६ ॥

**समीके** समीपे ३.३०.११ । सम्यक् प्राप्ते संग्रामे ४.२४.३ ॥

**समीची** या सम्यगञ्चति प्राप्नोति सा भूमिः १. ६६.१ ॥ [ समीची ] प्राप्तसङ्गती १. ६६.५ । या दीप्तिं सम्यगञ्चति सा २.२७. १५ । ये एकीभावमिच्छतस्ते १७.७० ॥ [ समीचीः ] याः समानं सत्यमञ्चन्ति ताः ३.३१.१३ । याः सम्यगञ्चन्ति शिक्षाः प्राप्नुवन्ति ताः सेनाः ४.१७.६ ॥

**समीजमानः** सम्यग् संगच्छमानः ६.२६.५ ॥

**समीधे** प्रदीपयेय ३.५.१० ॥

**समीहसे** सम्यक् चेष्टसे ३६.२२ ॥

**समुक्षितम्** सम्यक् सिक्तम् ३.६०.५ ॥ [ समुक्षितानाम् ] सम्यक् सेक्तॄणाम् ५.५६.५॥

**समुद्रः** सम्यगापो द्रवन्ति यस्मिंस्तदन्तरिक्षं मेघो वा ६.६६.६ । समुद्द्रवन्त्यापो यस्मिन् स सागरः ७.३५.१३ । समुद्द्रवन्ति कामुका यस्मिन् व्यवहारे सः १३.१६ । सागर इव गाम्भीर्यम् १५.४ । समुद्द्रवन्ति भूतानि यस्मात्सः ५.३३ ॥ [ समुद्र इव ] समुद्द्रवन्त्यापो यस्मिंस्तद्वत् १.८.७ ॥ [ समुद्राः ] शब्दार्णवाः १.१६४.४२ ॥ [ समुद्रान् ] समुद्द्रवन्ति पदार्था येषु तान् भूतभविष्यद्वर्तमानान् समयान् १३. ३१ ॥ [ समुद्राय ] अन्तरिक्षे गमनाय

३८.७ ॥ [ **समुद्रे** ] सम्यक् द्रवीभूते व्यवहारे ८.२५ । आकाशमिव व्याप्तस्वरूपे १७.६६ ॥

समुद्रः-अन्तरिक्षनाम । निघ० १।३ ॥ समुदितारम् । नि० १०।३२ ॥

समुद्रः ( यजु० ३८।७ ) अयं वै समुद्रो योऽयं ( वायुः ) पवतऽ एतस्माद्वै समुद्रात्सर्वे देवाः सर्वाणि भूतानि समुद्रवन्ति । श० १४।२।२।२ ॥ य एवायं ( वायुः ) पवत एष एव स समुद्र एतं हि संद्रवन्तं सर्वाणि भूतान्यनु संद्रवन्ति । जै० उ० १ । २५ । ४ ॥ तद्यत् ( आपः ) समद्रवन्त तस्मात्समुद्र उच्यते । गो० पू० १ । ७ ॥ तद्धस्तिमभिनत् । स समुद्रोऽभवत् । तस्मात्समुद्रस्य ( जलं ) न पिबन्ति । प्रजननमिव हि मन्यन्ते । तै० २ । २ । ६ । २-३ ॥ आपो वै समुद्रः । श० ३ । ८ । ४ । ११ ॥ ३ । ६ । ३ । २७ ॥ १२ । ६ । २ । ५ ॥ समुद्रो वाऽ अपां योनिः । श० ७ । ५ । २ । ५८ ॥ समुद्रो वाऽ अवभृथः । तै० २ । १ । ५ । २ ॥ ( यजु० १३।५३ ) मनो वै समुद्रः । श० ७ । ५ । २ । ५२ ॥ वाग्वै समुद्रो मनः समुद्रस्य चक्षुः । तां० ६ । ४ । ७ ॥ ( ऋ० ४ । ५८ । १ ) वाग्वै समुद्रो न वै वाक् क्षीयते न समुद्रः क्षीयते । ऐ० ५ । १६ ॥ वाग्वै समुद्रः । तां० ७ । ७ । ६ ॥ पुरुषो वै समुद्रः । जै० उ० ३ । ३५ । ५ ॥ ( यजु० १३ । १६ ) रुक्मो वै समुद्रः । श० ७ । ४ । २ । ५ ॥ एष वाव स समुद्रः यच्चात्वालः । तै० १।५।१०।१ ॥ तेजोऽसि तपसि श्रितम् । समुद्रस्य प्रतिष्ठा । तै० ३ । ११ । १ । ३ ॥ समुद्रो ऽसि तेजसि श्रितः । अपां प्रतिष्ठा । तै० ३ । ११ । १ । ४ ॥ समुद्र एवास्य ( अश्वस्य मेध्यस्य ) बन्धुः समुद्रो योनिः ( इन्द्राश्वस्योच्चैःश्रवसः क्षीरसागरादुत्पत्तिः—महाभारत आदिपर्वणि, १८ । ३७ ॥ ) श० १० । ६ । ४ । १ ॥ तस्मादिमं लोकं (=पृथिवीं) दक्षिणावृत्समुद्रः पर्येति । श० ७ । १ । १ । १३ ॥ तस्मादिमांल्लोकान्दक्षिणावृत्समुद्रः पर्येति । श० ६ । १ । २ । ३ ॥ तस्मादिमं लोकं (=पृथिवीं) सर्वतः समुद्रः पर्येति । श० ७ । १ । १ । १३ ॥ तस्मादिमांल्लोकान्त्सर्वतः समुद्रः पर्येति । श० ६ । १ । २ । ३ ॥

**समुद्रज्येष्ठाः** समुद्रः ज्येष्ठो यासां ताः ७.४९.१ ॥

**समुद्रव्यचसम्** समुद्रस्य व्यचसो व्याप्तय इव यस्मिँस्तम् १२.५६ । समुद्रस्यान्तरिक्षस्य व्यचः व्याप्तिरिव व्याप्तिर्यस्य तम् १७.६१। समुद्रेऽन्तरिक्षे व्यचा व्याप्तिर्यस्य तं सर्वव्यापिनमीश्वरं समुद्रे नौकादिविजयगुणसाधनव्यापिनं शूरवीरं वा १.११.१ ॥

**समुद्रसमम्** समुद्रतुल्यम् २३.४७ ॥

**समुद्रार्थाः** समुद्रायेमाः ७.४९.२ ॥

**समुद्रियः** समुद्रेऽन्तरिक्षे जलमये वा भवः ( अत्र समुद्राद् घः अ० ४।४।११८ इति समुद्रशब्दात् घः प्रत्ययः ) १.२५.७ । समुद्रे भवो नौसमूहः १.५५.२ ॥

**समुद्रियम्** समुद्रे भवम् ११.४६ ॥ [ **समुद्रियाणि** ] समुद्रार्हाणि ४.१६.७ ॥

**समुब्धम्** समत्वेन गूढम् ५.२.१॥

**समूढम्** यत्सम्यक् ऊह्यते तर्क्यते तर्केण विज्ञायते तत् १.२२.१७ ॥

**समूहसि** सम्यक् चेतयसि १.१३१.३ ॥

**समृतः** सम्यक् सत्यस्वरूपः ४.१३.५ ॥ [ **समृता** ] सम्यक् ऋतं सत्यं येषु तानि ( अत्र शेः स्थाने डादेशः ) १.३१.६ ॥ [ **समृते** ] सम्यक् सत्ये व्यवहारे ३.३८.३ । सम्यक् सत्यन्यायप्रकाशकचित्रेषु १७.४३ ॥

**समृतिः** युद्धम् ४.१६.१७ । सम्यक् सत्क्रिया-

वान् ७.६०.१० ॥ [ समृतौ ] सम्यक् ऋतिः प्राप्तिर्यया तस्याम् १.१२७.३ । सम्यक् यथार्थबोधयुक्तायां प्रज्ञायाम् ५.७.२ ॥

समृधः सम्यक् ऋद्धिमन्तः ६.२.१० ॥

समेति सम्यग्गेति ७.१.१४ ॥

समेद्धारम् सम्यक् प्रकाशकम् ६.४८.८ । यः सम्यगिन्धयति प्रदीपयति तम् ७.१.१५॥

समोकाः सम्यगोकांसि निवासस्थानानि यस्मिन्तसः १.१००.१ । एकस्थानः ६.१८.७ ॥ [ समोकसा ] समानगृहेण सह वर्तमानौ १.१४४.४ । समीचीनमोको निवसनं ययोस्तौ १.१५६.४ ॥

समोहम् सम्यग्गूढम् ४.१७.१३ ॥ [ समोहे ] संग्रामे १.८.६ ॥

समोहे संग्रामनाम । निघ० २।१७ ॥

सम्पत् सम्यक् प्राप्यते या सा १५.८॥ [सम्पदे] ऐश्वर्याय १५.८ ॥

सम्पद् श्रोत्रं वै सम्पच्छ्रोत्रे हीमे सर्वे वेदा अभिसम्पन्नाः । श० १४।६।२।४ ॥

सम्पतन्ति सम्यक् पतन्ति १७.४८ ॥

सम्पश्यन् सम्यक् प्रेक्षमाणः १७.५८ ॥

सम्पश्यमानाः सम्यक् प्रेक्षमाणाः ३.३१.१०॥

सम्पारणम् सम्यक् दुःखस्य पारं गच्छन्ति येन तत् ३.४५.४ ॥

सम्पिणक् संचूर्णय ४.३०.१३ ॥

संपिणक् सम्पिण्ढि । नि० ६।१ ॥

सम्पिष्टात् संचूर्णितात् ४.३०.१० ॥

सम्पृचौ राजगृहाश्रमव्यवहाराणां सम्यक् पृङ्क्तारौ राजप्रजाजनौ ६.४॥ [सम्पृचः] ये सम्पृचन्ति ते १६.११ । संयुक्तात् २.३५.६ ॥

सम्पृचानः संपर्कं कुर्वन् कारयन् वा १.६५.८॥

सम्प्रच्यवध्वम् सम्यक् गच्छत १५.५३ ॥

सम्प्रयात सम्यक् प्राप्नुत १५.५३ ॥

सम्प्रश्नम् सम्यक् पृच्छन्ति यस्मिँस्तम् १७.२७॥

सम्प्रसारयाव विस्तारयावः २३.२० ॥

सम्प्रियौ परस्परं सम्यक् प्रीतियुक्तौ १२.५७ ॥

सम्बभूव प्रसिद्ध है, प्रत्यक्ष है २३.२ । सम्भव हुआ, होता है और होगा २३.४ ॥

सम्बाधात् सम्बन्ध से २.१६.८ ॥

सम्भरः यः संभरति सः ४.१७.११ ॥

सम्भरणः सम्यग्धारकः १४.२३ ॥ [ सम्भरणम् ] सम्यग्धारणं पोषणं वा ७.२५.२ ॥

सम्भरन्ति सम्यग् धारयन्ति पोषयन्ति वा १.१६२.६ ॥

सम्भवात् संयोगजन्यात्कार्यात् ४०.१० ॥

सम्भुजम् संभोक्तुम् २.१.४ ॥

सम्भूतिम् सम्भवन्ति यस्यां तां कार्याख्यां सृष्टिम् ४०.११ ॥ [ सम्भूत्या ] शरीरेन्द्रियान्तःकरणरूपयोत्पन्नया कार्यरूपया धर्म्ये प्रवर्तयित्र्या सृष्ट्या ४०.११ ॥

सम्भूतिः (=प्राणः) प्राणं वा अनु प्रजाः पशवस्सम्भवन्ति। जै० उ० ३।४।५॥ प्राणा उ ह वाव राजन् मनुष्यस्य सम्भूतिरेवेति। जै० उ० ४।७।४॥

**सम्भृतः** सम्यग् धृतः १६.३३। सम्मक् पुष्टः ३१.१७॥ [सम्भृतम्] सम्यक् सिद्धं जातम् ३१.६॥

**सम्भृतक्रतो** संभृता धारिताः क्रतवः क्रियाः प्रज्ञा वा येन तत्सम्बुद्धौ १.५२.८॥

**सम्भ्रियमाणः** सम्यक् पोषितः ८.५७। सम्यक् पोष्यमाणो भ्रियमाणो वा ३६.५॥

**सम्मार्य** सम्यङ्मानं कृत्वा १.६७.५॥

**साम्मितः** सम्यक् मानं प्राप्तः १७.८१॥ [सम्मितासः] तुलावत्सत्यविवेचकाः १७.८४॥

**सम्मिश्लः** पदार्थेषु सम्यक् मिश्रो मिलितः सन् (संज्ञाच्छन्दसोर्वा कपिलकादीनामिति वक्तव्यम् अ. ८.२.१८। अनेन रेफस्य लत्वादेशः) १.७.२॥ [सम्मिश्लाः] सम्यक् मित्रत्वेन मिश्रिताः ७.५६.६॥ [सम्मिश्लासः] अग्न्यादितत्त्वैः सम्यक् मिश्राः १.६४.१०॥

**सम्मील्य** सम्यक् निमेषणं कृत्वा १.१६१.१२॥

**सम्यक्** साधुरीत्या ४.५८.६। यः समीचीनमञ्चति ५.६६.२॥ [सम्यञ्चम्] समीचीनम् ५.७.१.॥

**सम्राट्** यः सूर्यः सम्यग्राजते तद्वत् वर्तमानश्चक्रवर्ती राजा ७.५८.४। यः चक्रवर्तीव विद्यासु सम्यग्राजते सः १.१८८.५। यः सम्यग्राजते प्रकाशते सः ३.३८। सम्यग्राजते सः चक्रवर्ती ८.३७। यो राजधर्मे सम्यग्राजते सः ६.२४। सम्यक् प्रकाशकः १२.११७। सम्यक् सुखे भूगोले राजमाना १४.१३॥

सम्राट्-स यदाह सम्राडसीति सोमं वा एतदाहैष ह वै वायुर्भूत्वान्तरिक्षलोके सम्राजति तद्यत्सम्राजति तस्मात्सम्राट् तत्सम्राजः सम्राट्त्वम्। गो० पू० ५।१३॥ तस्य यो रसो व्यक्षरत्तं पाणिभिः सममृजुस्तस्मात्सम्राट्। श० १४।१।१।११॥ सम्राड् वाजपेयेन (इष्ट्वा भवति) श० ५।१।१।१३॥ ६।३।४।८॥ स वाजपेयेनेष्ट्वा सम्राडिति नामाधत्त। गो० पू० ५।८॥ यो वै वाजपेयः स सम्राट्सवः। तै० २।७।६।१॥ रथन्तरं वै सम्राट्। तै० १।४।४।६॥

**सङ्क्रोशमानाः** आक्रोशं कुर्वाणाः ४.१८.६॥

**सङ्गतिम्** संगतिम् ४.४४.१॥

**सङ्गथे** संग्रामे २.३८.१०॥

**सङ्गमनः** यः सम्यग्गमयति १.६६.६॥

**सङ्गमे** संग्रामे १.१०२.३॥

**सङ्गवे** संगच्छन्ति गावो यस्मिन् सायंसमये तस्मिन् ५.७६.३॥

**सङ्गृभीता** सम्यग्गृहीतानि सेनाङ्गानि (अत्र ग्रहधातोर्हस्य भत्वम्। अत्र सायणाचार्येण सुबन्तं तिङन्तं साधितमतोऽशुद्धमेव निघाताभावात्) १.१००.६॥

**सङ्गृभ्णाः** संगृह्णीयाः ३.३०.५॥

**सङ्गृभ्य** सम्यग्गृहीत्वा १.५३.३॥

**सङ्गे** सह ४.२०.१॥

**सश्चकानः** सम्यक् कामयमानः ५.३०.७ ॥

**सश्चद्याणः** सम्यक् कामयन्नुपदिशन् वा ६.५८.२ ॥

**सश्चद्भि** समचे ६.१४.४ ॥

**सश्चद्वै** सम्यगाख्यानाय १.१२७.११ । सम्यक् प्रख्यातुम् ७.१८.२० ॥

**सश्चद्य** सम्यगध्याप्योपदिश्य वा १.१६५.१२॥

**सश्चरणीः** याः सम्यक् चरन्ति ता भूमयः ६.२४.४ ॥

**सश्चरणे** संगमने १.५६.२ । सम्यग्गमने ४.५५.६ ॥

**सश्चरन्ती** सम्यग्गच्छन्त्यौ जानन्त्यौ ३.३३.३॥

**सश्चरेण्यम्** सम्यक् चरितुं ज्ञातुं योग्यम् १.१७०.१ ॥

**सश्चिकित्वान्** सम्यक्चिकीर्षकः ४.७.८ ॥

**सञ्जग्मानः** सम्यक् संगतः १.६.७ ॥

**सञ्जग्मानासु** संगच्छन्तीषु १.७४.२ ॥

**सञ्जनयन्ति** उत्तम प्रकार उत्पन्न करते हैं ५.७.२ ॥

**सञ्जर्भुराणः** सम्यक् पालयन् धरन् ५.४४.५ ॥

**सञ्जानानाः** सम्यक् जानन्तः ( अत्र व्यत्ययेनात्मनेपदम् ) १.७२.५ ॥

**सञ्जिगीवान्** सम्यग् विजेता सन् ३.१५.४ ॥

**सञ्जितः** सम्यग् जेता ५.४२.५ ॥

**सञ्जिहानम्** अधिकरणं त्यजन्तम् ७.३३.१० ॥

**सन्तनिः** सम्यग् विस्तारकः ५.७३.७ ॥

**सन्तरुत्रम्** दुःखात् सम्यक् तारकम् ३.१.१९ ।

**सन्तरेयुः** पार हों ३.३३.११ ॥

**सन्तवीत्वत्** बहुबलः सन् ४.४०.४ ॥

**सन्ददस्वान्** सम्यग् दाता २.२.६ ॥

**सन्दधुः** संदधति १.१०१.६ । संदध्युः ३.३.३ । संधिताः कुर्युः ३.२०.३ ॥

**सन्दानम्** सम्यग्दीयते यत्तत् १.१६२.८ । समीचीनं दानं यस्मात्तम् १.१६२.१६ ॥

**सन्दायि** संप्रदीयते १.१३६.१ ॥

**सन्दितम्** सम्यग् बलावखंडितम् १.२५.३ ॥

**सन्दिहः** संदिहत्यसौ सन्दिहः १.५१.६ ॥

**सन्दृक्** सम्यक् दर्शयिता १.६६.१ । यः सम्यक् पश्यति सः ४.१.६ । समानदृष्टिः ४.६.६॥

[ **सन्दृशम्** ] सम्यग्दर्शनम् ६.१६.८॥

[ **सन्दृशे** ] सम्यग्द्रष्टुम् २.१२.५ ॥

[ **सन्दृशि** ] सम्यग्द्रष्टव्ये २.१.१२ । सादृश्ये ५.७४.६ ॥

**सन्दृष्टिः** सम्यक्प्रेक्षणम् २.४.४ । सम्यक् पश्यन्ति यया सा ६.१६.२५ ॥

**सन्नद्धः** सम्यग् बद्धः १.१६४.३७ । सम्यक् सज्जः ६.४७.२६ ॥

**सन्नद्धा** सम्यग् बद्धा ६.७५.११ ॥

**सन्नयः** सम्यग् नयो नीतिर्यस्य सः २.२४.६ ॥

**संयत्** संयमः १५.५ । संगतिः १५.१८ ॥

[ **संयता** ] संयमयुक्तेन १.१५१.८ ।

संयच्छन्ति येन तेन ६.१६.२१ ॥

संयतः सम्यङ् नियमितः २.२.२ । संयमयुक्ताः ६.३४.६ ॥

संयद्वसुः यज्ञस्य संगतिकरणः १५.१८ ॥

संयन्ति उत्तम प्रकार प्राप्त होते हैं ५.६.५ ॥

संयासाय सम्यग्गमनाय ३६.११ ॥

संरराणे ये सम्यक् सुखं रातो दत्तस्ते ६.७०.६॥

संवतः संसेवमानः ५.१५.३ । संविभक्तान् ११.७१ ॥

संवत्सम् संगतं वत्समिव, एकीभूतं वात्सल्येन पालितं सन्तानं ४.३३.४ ॥

संवत्सरः वर्षम् १४.२६ । संवत्सर इव नियमेन वर्तमानः २७.४५ ॥

संवत्सरीणम् यः संवत्सरं धृतस्तम् ( संपरिपूर्वात् ख च अ. ५.१.६२ । इति भूतार्थे खः ) १७.१३ ॥

संवयन्ती तापयन्त्यौ ( अत्र...सुपां सुलुगिति पूर्वसवर्णदीर्घः ) २०.४१ ॥

संवरणात् आच्छादनात् १५.६२ । सम्यक् स्वीकरणात् ७.३.२ ॥ [ संवरणेषु ] आच्छादकेषु व्यवहारेषु ४.२१.६ ॥

संवर्तयन्तः सम्यग्वर्तमानाः ५.४८.३ ॥

संववृत्वत् संवरणशीलम् ५.३१.३ ॥

संवसानौ सम्यक् सुवस्त्रालङ्कारैराच्छादितौ १२.५७ ॥ [ संवसानाः ] सम्यगाच्छादकाः ४.६.८ ॥

संवाक् राजनीतिनिष्ठा सम्यग्वाणी ६.१२ ॥

संवित् प्रतिज्ञा १८.७ ॥

संविदानः सम्यग् विज्ञानं कुर्वन् ७.४४.४ । सम्यग् ज्ञापयन् १२.६१ ॥

संविदाना सम्यक् कृतप्रतिज्ञा १२.६३ । संवादं कुर्वन्त्यौ १२.८८ ॥ [ संविदानाः ] समाननिश्चयाः १५.१० । सम्यग् विचारशीलाः १५.११ । सम्यग् लब्धज्ञानाः १५.१२ । सम्यक् कृतप्रतिज्ञाः १५.१३ ॥

संविव्यानः सम्यक् प्राप्नुवन् १.१३०.४ ॥

संवृक् यः सम्यग् वर्जयति सः २.१२.३ ॥

संवेशपतये सम्यग् विशन्ति ये ते पृथिव्यादयः पदार्थास्तेषां पतिः पालकस्तस्मै २.२० ॥

संसत् सम्राट्सभा ४.१.८ ॥

संसहस्रम् सम्यक् सहस्रम् ७.८.६ ॥

संस्तिरः सम्यगाच्छादकः १.१४०.७ ॥

संस्थे सम्यक् तिष्ठन्ति यस्मिन् तस्मिन् जगति १.५.४ ॥

संस्मयमाना सम्यङ् मन्दहासयुक्ता १.१२३.१० ॥

संहतः एकीभूतः ३.१.७ ॥

संहाय सम्यक् त्यक्त्वा २.३८.४ ॥

संहितम् कृतसाधनम् १.१६८.६ ॥

सयावरी या सहैव याति सा ७.३१.८ ॥ [सयावरीः ] याः समानं यान्ति ताः १.८४.१० ॥

**सयावानम्** सेनादिना सह गच्छन्तम् ५.३५.७ ॥ [ **सयावभिः** ] ये सह यान्ति तैः ३३.१५ । ये समानं यान्ति ते सयावानस्तैः १.४४।३ ॥

**सयुजा** यौ समानसम्बन्धौ व्याप्यव्यापकभावेन सहैव युक्तौ वा तौ १.१६४.२० ॥ [ **सयुजः** ] ये समानं युञ्जते ते ३.३०.११ ॥

**सयूथ्यः** समानश्चासौ यूथः समूहस्तस्मिन् भवः ४.२० । ससैन्यः ६.६ ॥

**सयोनिः** समानस्थानः १.१६४.३०॥ [**सयोनी**] समाना योनिर्विद्या निमित्तं वा ययोस्तौ १.१५६.४ ॥

**सरः** सरन्ति जलानि यस्मिँस्तडागे तत् २३.४७ ॥ [ **सरांसि** ] मेघमण्डलभूम्यन्तरिक्षस्थानि ५.२६.८ ॥

**सरड्भ्यः** युद्धे विजयकर्तृसेनाजनादिभ्यः १.११२.२१ ॥

**सरण्यन्** प्राप्नुवन् ३.१.१६ ॥

**सरण्यान्** सरणं प्राप्तान् ४.२१.६ ॥

**सरण्युभिः** सर्वेषु शास्त्रेषु विज्ञानगतिभिः (अत्र सृयुवचि० इति सूत्रेणान्युच् प्रत्ययः) १.६२.४। आत्मनः सरणं गमनमिच्छुभिः ३.३२.५ ॥

**सरत्** सरति ४.३०.१० ॥

**सरथम्** रथै रमणीयैः कर्मभिर्गुणैः यानैर्वा सह वर्तमानस्तम् १.७१.६ । रथैः सह वर्तमानं सैन्यमुत्तमां सामग्रीं वा १.१०८.१ । रथेन सह वर्तमानम् ३.४.११ । रथादिभिः सहितं सैन्यम् ४.१६.११ । समानं यानम् ४.५७.३ । रमणीयेन स्वरूपेण सह वर्तमानम् ७.११.१ ॥ [ **सरथा** ] रथादिभिः सह वर्त्तमानौ ५।४३।८ ॥

**सरथिना** रथिभिः सह वर्तमानौ २६.७ ॥

**सरन्** गच्छन्ति ४.१७.३ ॥

**सरअपसः** सराणि सृतान्यपांसि पापानि येन तस्य २.१३.१२ ॥

**सरम्** प्राप्तव्यम् २२.२ ॥

**सरमा** समानं रमा रमणमस्याः सा ३३.५६ । यथा सरान् विद्याधर्मबोधान् मिमीते तथा (आतोऽनुपसर्गे क इति कः प्रत्ययः) १.६२.३ । या सरान् बोधान् मिमीते सा १.७२.८ । या सरान् गतिमतः पदार्थान् मिनोति सा ३.३१.६ । या सरति सा सरला नीतिः ४.१६.८ । समानरमणा ५.४५.७ । या सरान् प्राप्तान् मानयति ५.४५.८ ॥

**सरयन्ते** सरयन्ति गमयन्ति ४.१७.२ ॥

**सरया** स्नेहनेन २५.१२ ॥

**सरयुः** यः सरति सः ५.५३.६ ॥ [ **सरयोः** ] गच्छतोः ४.३०.१८ ॥

**सरश्मिः** रश्मिभिः प्रकाशैः सह वर्तमानः १.१३५.३ ॥

**सरस्याय** सरसि तडागे भवाय १६.३७ ॥

**सरस्वतिकृतस्य** विदुष्या स्त्रियाः कृतस्य ( अत्र स्वार्थेऽण् संज्ञाछन्दसोर्बहुलमिति पूर्वपदस्य ह्रस्व ) २०.३५ ॥

**सरस्वती** विद्यासुशिक्षिता वागिव पत्नी १०.३४। प्रशस्तबोधः शिक्षायुक्ता वाणी वा १८.१६। सरः प्रशस्तायुर्वेदबोधो विद्यते यस्याः सा १६.१२। विदुषी स्त्री १६.१८, ३४। २०.६८। २१.४४। प्रशस्तविज्ञानयुक्ता स्त्री १६.८०।१६.६०। प्रशस्तज्ञानयुक्ता पत्नी १६.८२। प्रशस्तं सरो विज्ञानं विद्यते यस्याः सा १६.८३।२१.३३। वाणीव ज्ञानवती स्त्री १६.८८। योगिनी स्त्री १६.६३। विद्यायुक्ता १६.६४। २१.३६। शास्त्रविज्ञानयुक्ता वाक् २०.५५। सरो बहु विज्ञानं विद्यते ययोस्तौ २०.५६। प्रशस्तविद्यायुक्ता वाणी २०.५७। प्रशस्तज्ञानवती स्त्री २०.५८। प्रशंसिता गृहिणी तथा पुरुषः २०.५६। प्रशस्तविज्ञानयुक्ता २०.६०। सुशिक्षिता वाणी २०.६३.५.४६.२। विदुषी शिक्षिता माता २०.६४। प्रशस्तशिक्षायुक्ता वाणी २०.६५.२०.६७। सत्यविज्ञानयुक्ता २०.६६। सुशिक्षिता विदुषी स्त्री २०.७३। विज्ञानवती २०.७४। पूर्णविद्यायुक्ता २०.७५। सुशिक्षिता स्त्री २०.७७। विद्यावती २०.८०। सुसंस्कृता वाक् २०.८४। प्रशस्तविज्ञानयुक्ता २०.८५। वाणी २०.८६। २१.१३.१६। १.३.११। विद्यासम्बन्धिनी वाक् २१.३१। विज्ञानवती वाक् २१.३४। ५.४२.१२। वैद्यकशास्त्रवित् प्रशस्तज्ञानवित् स्त्री २१.३६। परमविदुषी स्त्री २१.३७। प्रशस्तविज्ञानवती २१.३६। २७.१६। प्रशस्तविद्यायुक्ता स्त्री २१.४२। प्रशस्तगुणयुक्ता २१.४८। विज्ञानवती स्त्री २१.४६। विज्ञाननिमित्ता स्त्री २१.५०। विशेषज्ञानवती २१.५२। प्रशस्तविद्यासुशिक्षायुक्ता वाङ्मती २१.५३, ५४। प्रशस्ता वाक् २१.६०। सर्वविद्यायुक्ता २५.१६। बहुविज्ञानयुक्ता २८.८। विज्ञानयुक्ता वाक् २८.१८। ५.४३.११। प्रशस्तविज्ञानवती वाक् २६.८। विज्ञानवती प्रज्ञा २६.३३। प्रशस्तज्ञानयुक्ता स्त्री ३३.४८। वाणी ३४.११। सरसः प्रशंसिता ज्ञानादयो गुणा विद्यन्ते यस्यां सा सर्वविद्याप्रापिका वाक् ( सर्वधातुभ्यो ऽसुन् उ० ४.१८२। अनेन गत्यर्थात् सृधातोरसुन् प्रत्ययः। सरन्ति प्राप्नुवन्ति सर्वा विद्या येन तत्सरः अस्मात्प्रशंसायां मतुप्। सरस्वतीति वाङ् नाम० निघं० १।११ ) १.३.१०। १.३.११। सरो बहुविधं विज्ञानं विद्यते यस्याः सा ( अत्र भूम्न्यर्थे मतुप् ) १.१३.६। विद्यासुशिक्षया युक्ता वागिव विदुषी स्त्री १.८६.३। प्रशस्तविज्ञानसम्बन्धिनी १.१४२.६। प्रशस्तविज्ञानयुक्तेव २.१.११। प्रशस्तविज्ञानकारिका वागिव स्त्री २.३.८। विद्यासुशिक्षामहितया वाचा युक्ता २.३२.८। प्रशस्तज्ञानयुक्ता ३.४.८। सकलविद्यायुक्ता वाणी ३.५४.१३। विज्ञानाढ्या ६.४६.७। बहुविज्ञानयुक्तौ ६.५०.१२। प्रशस्तं सरो वेगो यस्याः सा नदी ६.५२.६। विज्ञानयुक्तया वाचाढ्या ६.६१.४।

विज्ञानयुक्ता वाणी ६.६१.७। सरो बह्वन्तरिक्षं सम्बद्धं विद्यते यस्याः सा ६.६१.१०। विद्यासुशिक्षिता वाक् ६.६१.११। सरो विज्ञानं विद्यते यस्यां सा ६.६१.१३। विद्यासुशिक्षायुक्ता वाक् ७.३५.११। उत्तमा वाणी ७.३६.६। विद्यायुक्ता वाणी ७.३६.५। शुद्धा वाणी ७.४०.३॥ [सरस्वतीम्] विद्यासुशिक्षायुक्तां वाचम् ७.६.५। बहुविधं सरो वेदादिशास्त्रविज्ञानं विद्यते यस्यास्तां विज्ञानयुक्तामध्यापिकां स्त्रियम् ६.२७। प्रशस्तविद्यायुक्तां स्त्रियम् १६.३३। सुशिक्षितां वाचम् २१.२६। बहुज्ञानवतीं वाचम् २१.३०। बहुविज्ञान युक्तां वाचम् २१.३८। विज्ञानवतीं वाचम् २१.४१, ४२। वाचम् २१.४४। प्रशस्तवाचम् २१.५८। प्रशस्तविज्ञानवतीं वाचम् ३४.११। [सरस्वत्या] प्रशस्तविज्ञानक्रियायुक्तया १०.३०। प्रशस्तविद्याविज्ञानयुक्तया पत्न्या १६.१५। सत्यया वाचा १६.२६। विदुष्या स्त्रिया १६.६५। प्रशस्तसुशिक्षितया वाचा २०.६१। सुशिक्षाज्ञानयुक्तया वाचा २०.६६। सुसंस्कृतया वाचा २०.६०। विज्ञानयुक्तया वाचा २१.३५। सुशिक्षितया वाचा २१.५५। गतिमत्या नीत्या २१.५६। उत्तमवाण्या २१.५७॥ [सरस्वत्यै] सरन्ति जानन्ति येन तत्सरो ज्ञानं तत्प्रशस्तं विद्यते यस्यां वाचि तस्यै २.२०। विद्यासुशिक्षासहितायै वाचे ४.७। विज्ञानसुशिक्षायुक्तायाः (अत्र षष्ठ्यर्थे चतुर्थी) ६.३०। वेदार्थसुशिक्षाविज्ञापिकायै वाचे १०.५। सुशिक्षितायै वाचे १०.३१। विद्यायुक्तवाचे १०.३२। सरो विज्ञानं विद्यते यस्यास्तस्याः १८.३७। विद्यासुशिक्षितवाणीयुक्तायै स्त्रियै १६.१। कृषिकर्मप्रचारिकायै वाचे १६.६। सुशिक्षितायै वाचे २०.३, ३३। ३८.४। विज्ञानयुक्तायै वाचे २१.४०। २१.५६। वाचे २१.६०। विद्यायुक्तायै वाचे २२.२०। नद्यै २४.३३। प्रशस्तविज्ञानवत्यै वाचे २५.१॥ [सरस्वत्याः] नद्याः २१.४६। वाण्याः २१.४७॥ [सरस्वत्याम्] विज्ञानवत्यां वाचि ३.२३.४॥

**सरस्वति** [सरस्वति] वागिव वर्तमाने १.१६४.४६। प्रशस्तं सरो विज्ञानं गमनं वा विद्यते यस्यां तत्सम्बुद्धौ १.१८८.८। विज्ञानवती २.३०.८। बहुविज्ञानवती २.४१.१६। विद्यायुक्ते स्त्रि ६.६१.३। बहुविद्यायुक्ते ६.६१.१४। प्रशस्तं सरो विज्ञानं विद्यते यस्यास्तत्सम्बुद्धौ ८.४३। बहुविद्यायुक्तमातः २०.६२। प्रशस्तविज्ञानयुक्ते ३८.२। बहुविज्ञानयुक्ते ३८.५। परमविदुषि २.४१.१७। बहुविज्ञानयुक्ते २.४१.१८। विदुषि ६.६१.१। विज्ञानयुक्ते ६.६१.५। विज्ञानयुक्ता वाणी ६.६१.७॥

सरस्वती—सर इत्युदकनाम सर्त्तेस्तद्वति। नि० ६।२६॥ नदीनाम। निघ० १।१२॥ वाङ्नाम। निघ० १।११॥

सरस्वती—वाक् सरस्वती। श० ७।५।१।३१॥ ११।२।४।६॥ १२।६।१।१३॥ वाग्वै सरस्वती। कौ० ५।२॥ १२।८ १४।४॥ तां० ६।७।७॥ १६।५।१६॥ श० २।५।४।६॥ ३।६।१।७॥ तै० १।३।४।५॥ ३।८।११।२॥ गो० उ० १।१२०॥ वाग्वै सर-

स्वती पावीरवी । ऐ० ३ । ३७ ॥ वागेव सरस्वती । ऐ० २ । २४ ॥ ६ । ७ ॥ वाग्घि सरस्वती । ऐ० ३ । २ ॥ वाक्तु सरस्वती । ऐ० ३ । १ ॥ सरस्वती वाचमदधात् । तै० १ । ६ । २ । २ ॥ अथ यत्स्फूर्जयन्वाचमिव वदन्दहति तदस्य ( अग्नेः ) सारस्वतं रूपम् । ऐ० ३ । ४ ॥ सा ( वाक ) ऊर्ध्वोदातनोद्यथापां धारा संततैवम् ( सरस्वती [नदी] = वाक् ) । तां० २० । १४ । २ ॥ जिह्वा सरस्वती । श० १२ । ६ । १ । १४ ॥ ( यजु० ३८ । २ ) सरस्वती हि गौः । श० १४ । २ । १ । ७ ॥ अमावस्या वै सरस्वती । गो० उ० १ । १२ ॥ सारस्वतमेषम् ( आलभते ) । तै० १ । ८ । ५ । ६ ॥ अविर्मल्हा (="गलस्तनयुता" इति सायणः ) सारस्वती । श० ५ । ५ । ४ । १ ॥ वर्षाशरदौ सारस्वताभ्याम् ( अवरुन्धे ) श० १२ । ८ । २ । ३४ ॥ योषा वै सरस्वती वृषा पूषा । श० २ । ५ । १ । ११ ॥ सरस्वती, (श्रियः) पुष्टिम् ( आदत्त ) श० ११ । ४ । ३ । ३ ॥ सरस्वती पुष्टिः पुष्टिपत्नी । तै० २ । ५ । ७ । ४ ॥ सरस्वती पुष्टिं (ष्टिः) पुष्टिपतिः । श० ११ । ४ । ३ । १६ ॥ सर्वे ( प्रैषाः ) सारस्वता अन्नाद्यस्यैवावरुद्धयै । श० १२ । ८ । २ । १६ ॥ एषा वा अपां पृष्ठं यत्सरस्वती । तै० १ । ७ । ५ । ५ ॥ ऋक्सामे वै सारस्वतावुत्सौ । तै० १ । ४ । ४ । ६ ॥ सरस्वत्यै दधि । श० ४ । २ । ५ । २२ ॥ अन्तरिक्षं सारस्वतेन ( अवरुन्धे ) श० १२ । ८ । २ । ३२ ॥ सरस्वतीति तद् द्वितीयं वज्ररूपम् । कौ० १२ । २ ॥ अथ यत् ( अक्ष्णः ) कृष्णं तत्सारस्वतम् । श० १२ । ६ । १ । १२ ॥

**सरस्वन्तम्** सरांस्युदकानि बहूनि विद्यन्ते यस्मिँस्तम् १.१६४.५२ ॥ [ **सरस्वते** ] समुद्राय २४.३३ ॥

सरस्वान्—मनो वै सरस्वान् । श० ७ । ५ । १ । ३१ ॥ ११ । २ । ४ । ६ ॥ स्वर्गो लोकः सरस्वान् । तां० १६ । ५ । १५ ॥ पौर्णमासः सरस्वान् । गो० उ० १ । १२ ॥

**सरातयः** समाना रातयो दानानि येषां ते ३३.६४ ॥

**सरित्** या सरति गच्छति सा ३४.११ ॥ [ **सरितः** ] नद्यः ४.५८.६ ॥

सरित् नदीनाम । निघ० १ । १३ ॥

**सरिरम्** जलमिव सरलता कोमलता १५.४ ॥ [ **सरिराय** ] कमनीयाय २२.२५ । उदकशोधनाय ३८.७ ॥ [ **सरिरस्य** ] सलिलस्योदकस्य ( कपिलकादित्वात् रेफः ) १३.४२ । अन्तरिक्षस्य १३.४६ । १५.५२ । वहोः ( सारिरमिति बहुनाम निघ० ३.१ ) १७.८७ ॥ [ **सरिरे** ] वाचि १३.५४ ॥

सरिरम्-( यजु० १३।४२ ) आपो वै सरिरम् । श० ७ । ५ । २ । १८ ॥ ( यजु० १३ । ४६ ॥ १५ । ५२ ) इमे वै लोकाः सरिरम् । श० ७ । ५ । २ । ३४ ॥ ८ । ६ । ३ । २१ ॥ ( यजु० १३ । ५३ ) वाग्वै सरिरम् । श० ७ । ५ । २ । ५३ ॥ ( यजु० १५ । ४ ) वाग्वै सरिरं छन्दः । श० ८ । ५ । २ । ४ ॥

**सरिष्यन्** गमिष्यन् २.११.७ ॥ [ **सरिष्यन्तः** ] प्राप्स्यन्तः ६.६ ॥ [ **सरिष्यन्तम्** ] सर्वान् पदार्थानन्तरिक्षं गमयिष्यन्तम् २.७ ॥

**सरी** सरति जानाति यः सः सरः प्रशस्तो विद्यते यस्य सः १.१३८.३ ॥

**सरीमणि** गमनाख्ये व्यवहारे ३.२६.११ ॥

**सरीसृपेभ्यः** सर्पादिभ्यः २२.२६ ॥

**सरूपा** समानं रूपं यस्याः सा ४.१६.१० ॥

**सर्गः** सृष्टिः १.१६०.२ । उत्पत्तिः २.३०.१ ॥ [ **सर्गाः** ] स्रष्टुं योग्याः १.१५२.१ । उत्पद्यमानाः ४.५१.८ ॥ सृष्टयः ४.२३३ । ४. ५२. ५ ॥ [ **सर्गम्** ] उदकम् ७.१८.११ ॥ [ **सर्गेण** ] संसर्जनीयेन ६.३२.५ ॥ [ **सर्गे** ] संस्रष्टुमर्हे ६.४६.१३ ॥ [ **सर्गेषु** ] सृष्टेषु कार्य्येषु ४.

४.१२ ॥ [ सर्गैः ] संसृष्टैः १.१६६.७ ॥

सर्ग—उदकनाम निघ० १ । १२ ॥

**सर्गतक्तः** यः सर्ग उत्पत्तौ तक्तो हसितः ( अत्र वाच्छन्दसीतीडभावः )३.३३.४ । जलस्य संकोचकः ( सर्ग इत्युदकनाम निघं १. १२ ) ३.३३.११ ॥

**सर्गप्रतक्तः** यः सर्गमुदकं प्रतनक्ति संकोचयति सः १.६५.३ ॥

**सर्तवे** सर्तुं गन्तुम् ( अत्र तुमर्थे से० इति तुमर्थे तवेन् प्रत्ययः ) १.३२.१२ ॥

**सर्तवै** सर्तुं ज्ञातुं गन्तुं वा १.५५.६ । सर्तव्ये गन्तव्ये ३.३२.६ ॥

**सर्पत** गच्छत १२.४५ ॥

**सर्पति** गच्छति २३.५६ ॥

सर्पति—गतिकर्मा निघ० २ । १४ ॥

**सर्पदेवजनेभ्यः** सर्पाश्च देवजनाश्च तेभ्यो हितम् ३०.८ ॥

**सर्पाः** ये सर्पन्ति ते हयाः १५.१७ ॥ [ सर्पेभ्यः ] प्राणिभ्यः, ये सर्पन्ति गच्छन्ति ते लोकास्तेभ्यो वा १३.६ ॥ [ सर्पाणाम् ] सर्पाणाम् २४.३६ ॥

सर्पाः-इमे वै लोकाः सर्पास्ते हानेन सर्वेण सर्पन्ति यदिदं किं च । श० ७ । ४ । १।२५ ॥ देवा वै सर्पाः । तेषामियं॰( पृथिवी ) राज्ञी । तै० २।२। २ । ६ ॥ रज्जुरिव हि सर्पाः कूपा इव हि सर्पाणामायतनानि, अस्ति वै मनुष्याणां च सर्पाणां च विभ्रातृव्यम् । श० ४ । ४ । ५ । ३ ॥

**सर्पामि** चलामि १०.३० ॥

**सर्पिरासुतिः** सर्पिषो घृतादेरासुतिः सवनं यस्य सः ११.७० ॥ [ सर्पिरासुते ] सर्पिषा समन्तात् प्रदीपिते ५.२१.२ ॥

**सर्पिषः** गन्तुं प्राप्तुमर्हतः १.१२७.१ । घृतादेः ५.६.६ ॥

सर्पिः—उदकनाम निघ० १ । १२ ॥

**सर्माय** गच्छते १.८०.५ ॥

**सर्वः** समस्तो जनः १.४१.२ । सम्पूर्णः ७. ४१.५ ॥ [ सर्वम् ] सर्वम् ११.७३ ॥

सर्वम्—उदकनाम । निघ० १ । १२ ॥

सर्वः—( =शर्वः=रुद्रः ) आपो वै सर्वोऽद्भ्यो हीद॰ सर्वं जायते । श० ६ । १ । ३ । ११ ॥ तान्येतान्यष्टौ ( रुद्रः, सर्वः=शर्वः, पशुपतिः, उग्रः, अशनिः, भवः, महान्देवः, ईशानः ) अग्निरूपाणि कुमारो नवमः । श० ६ । १ । ३ । १८ ॥

सर्वम् यद्वै विश्व॰ सर्वं तत् । श० ३।१। २ । ११॥ सर्वं वै तद्यत्सहस्रम् । कौ० ११ । ७ ॥ २५ । १४ ॥ सर्वं वै सहस्रम् । श० ४ । ६ । १ । १५ ॥ ६ । ४ । २ । ७ ॥ षोडशकलं वाऽ इद॰ सर्वम् । श० १३। २ । २ । १३ ॥ कौ० ८ । १ ॥ १६ । ४ ॥ १७ । १ ॥ २२ । ६ ॥ प्रजापतिरेव सर्वम् । कौ० ६ । १५ ॥ २५ । १२ ॥ ब्रह्मैव सर्वम् । गो० पू० ५ । १५ ॥ चन्द्रमा एव सर्वम् । गो० पू० ५ । १५ ॥ मन एव सर्वम् । गो० पू० ५ । १५ ॥ विश्वे देवा एव सर्वम् । गो० पू० ५ । १५ ॥ सर्वं वै विश्वे देवाः । श० १ । ७ । ४ । २२ ॥ ३ । ६ । १ । १३ ॥ ४ । २ । २ । २ ॥ ५ । ५ । २ । १० ॥ सर्वमिदं विश्वे देवाः । श० ३ । ६ । १ । १४ ॥ ४ । ४ । १ । ६, १८ ॥ ब्रह्मवेद ( =अथर्ववेदः ) एव सर्वम् । गो० पू० ५ । १५ ॥ आप एव सर्वम् । गो० पू० ५ । १५ ॥ आपो वाऽ अस्य सर्वस्य प्रतिष्ठा । श० ४ । ५ । २ । १४ ॥ ६ । ८ । २ । २ ॥ १२ । ५ । २ । १४ ॥ शरदेव सर्वम् । गो० पू० ५ । १५ ॥ दक्षिणैव ( दिक् ) सर्वम् । गो० पू० ५ । १५ ॥ एकविंश एव ( स्तोमः ) सर्वम् । गो० पू० ५ । १५ ॥ अनुष्टुबेव सर्वम् । गो० पू० ५ । १५ ॥ एतावद्वाऽ इद॰ सर्वं यावद्रूपं चैव नाम च । श० ११ । २ । ३ । ६ ॥ एतावद्वाऽ इद॰ सर्वं यावदिमे च दिशश्च । श० ६ । ५ । २ । २२ ॥ चतुष्टयं वा इदं

सर्वम्। कौ० २।१॥३।२॥३।७॥१६।४॥ २८।७॥ एतावद्वाऽ इद२ सर्वं यावद्ब्रह्म क्षत्रं विट्। श० ४।२।२।१४॥ सर्वं वाऽ अनिरुक्तम्। श० १।३।५।१०॥१।४।१।२१॥ २।२।१।३॥७।२।२१४॥१०।१।३।११॥ १२।४।२।१॥ सर्वं वाऽ अक्षय्यम्। श० १।६।१।१६॥११।१।२।१२॥

**सर्वगणम्** सर्वे गणाः गण्याः प्रशंसनीयाः पदार्था यस्मात् तम् १६.४८। सर्वे गणा समूहा यस्मिन् ५.५१.१२॥

सर्वगणम्—सर्वनामानम्। नि० ६।३६॥

**सर्वतः** सर्वाभ्यो दिग्भ्यः सर्वेभ्यो देशेभ्यो वा २०.८। सर्वस्माद्देशात् ३१.१॥

**सर्वतातिम्** सर्वमेव ३.५४.११॥ [सर्वतातये] सर्वस्यै सुखाय १.१०६.२। सम्पूर्णसुखसाधकाय यज्ञाय, सर्वसुखकराय वा ६.५६.६॥ [सर्वताता] सर्वतातौ सर्वस्मिन्व्यवहारे (अत्र सर्वदेवतात्तातिल् अ. ४।४।१४२ इति सूत्रेण सर्वशब्दात् स्वार्थे तातिल् प्रत्ययः। सुपां सुलगिति सप्तम्या डादेशः) १.६४.१५। सर्वतातौ सर्वस्मिन्नेव संगतव्ये जगति ४.२६.३। सर्वसुखकरे शिल्पमये यज्ञे ६.१५.१८। राजपालनाख्ये यज्ञे ७.१८.१६॥

सर्वतातौ—सर्वासु कर्मततिषु। नि० ११।२४॥

**सर्वताता इव** सर्वेषां वर्द्धको यज्ञ इव ६.१२.२॥

**सर्वतोमुखः** सर्वतो मुखाद्यवयवा यस्य सः ३२.४॥

**सर्वधातमम्** यः सर्वं दधाति सोऽतिशयितस्तम् ५.८२.१॥

**सर्वभूतेषु** सर्वेषु प्रकृत्यादिषु ४०.६॥

**सर्वरथा** सर्वे रथा यानानि यस्य सः ५.३५.५॥

**सर्वराट्** यः सर्वस्मिन् राजते सः ५.२४॥

सर्वराट्—स सर्वमेधेनेष्ट्वा सर्वराडिति नामाधत्त। गो० पू० ५।८॥

**सर्ववीरः** शरीरात्मबलसुभूषिताः सर्वे वीरा यस्मात् ८.२२॥ [सर्ववीराः] सर्वे च वीराश्च १.१०५.६॥ [सर्ववीरम्] सर्वे वीरा प्राप्यन्ते यस्मात्तम् १६.५६॥

**सर्ववीराः** सर्वे वीरा भवन्ति यासु सतीषु ताः १.११३.१८॥ [सर्ववीरया] सर्वैः वीरैर्युक्तया १.१११.२॥

**सर्ववेदसम्** सर्वैर्वेदैरुक्तं कर्म १५.५५। सर्वे वेदसो वेदा विज्ञायन्ते यस्मिँस्तम् १८.६२॥

**सर्वलोकम्** सर्वेषां दर्शनम् ३१.२२॥

**सर्वशासैः** ये सर्वं राज्यं शासति तैः ५.४४.४॥

**सर्वशुद्धवालः** सर्वे शुद्धा वाला यस्य सः २४.

**सर्वसेनः** सर्वाःसेना यस्य सः १.३३.३॥

**सर्वहुतः** सर्वैः हूयत आदीयते तस्मात् ३१.६। सर्वे जुह्वति सर्वं समर्पयन्ति वा यस्मिन् ३१.७॥

**सर्वाः** अखिलाः १२.११॥

**सर्वायुः** सम्पूर्णजीवनम् ३८.२०॥

**सर्सृते** भृशं सरति गच्छति २.२५.१॥ [सर्स्रीते] प्रसरतः, प्राप्नुतः ३.७.१॥

सर्सृते—गतिकर्मा। नि० २।१४॥

**सर्स्रे** प्राप्नोति ६.१८.७॥

**सलक्ष्म** समानं लक्ष्म यस्य तत् (अन्येषाम-

पीति दीर्घः ) ६.२० ॥

**सललूकम्** सम्यक् लुब्धम् ३.३०.१७॥

सललूकम्—संलुब्धं भवति पापकमिति नैरुक्ताः। नि० ६। ३॥

**सलिलः** शुद्धं जलं विद्यते यस्मिन्सः ( अर्श-आदित्वादच् ) ८.५६ ॥ [ सलिलस्य ] अन्तरिक्षस्य ७.४६.१ ॥

सलिलम्—उदकनाम। निघ० १।१२॥ बहुनाम। निघ० ३। १॥

सलिलम्—आपो ह वाऽ इदमग्रे सलिमेवास। श० ११। १। ६। १॥ वेदिर्वै सलिलम्। श० ३। ६। २। ५॥

**सवनम्** सुवन्ति ऐश्वर्य्यं प्राप्नुवन्ति येन तत् क्रियाकाण्डम् १.१६.५। सर्वसुखसाधनम् १.१६.८ । सुन्वन्ति विष्पादयन्ति परार्थान् येन तत् १.२१.४। भोजनं होमादिकं वा ३.३२.१। ऐश्वर्यम् ३.३२.५ । सुखैश्वर्यम् ४.३४.४ । कार्यसिद्धयर्थं कर्म ४.३५.४। सकलसंस्काररसोपेतम् ४.३५.७ । सकलैश्वर्यप्रापकम् ४.३५.६। सवति प्रसूयतेऽनेन तत् ८.३। यज्ञक्रियाप्रेरणम् १६.२६ ॥ [ सवना ] ऐश्वर्ययुक्तानि वस्तूनि ( षु प्रसवैश्वर्ययोः इत्यस्माद्धातोर्ल्युट् प्रत्ययः अ. ३।३।११४ शेश्छन्दसि बहुलमिति शेर्लुक् ) १.४.२। सुन्वन्ति यैस्तानि १.४७८। सुन्वन्ति येषु तानि ३.३६.८। सवनानि प्रेरणानि ६.४७.१४। सवनानि यज्ञसाधककर्माण्यैश्वर्याणि, कर्माणि प्रेरणानि वा ७.२२.६। ओषधिनिर्माणानि प्रेरणानि वा ७.२२.७। प्रातःसवनादीनि कर्माणि ३४.१६॥ [ सवनस्य ] शिल्पविद्याजनितस्य कार्यस्य ४.३६.२॥ [ सवने ] सुन्वन्ति निष्पादयन्ति येन कर्मणा तस्मिन् ७.२६.२। भोजनसमये ५.४०.४। सत्कर्मणि ४.३३.११। सायंकाले कर्तव्ये कर्मणि ३.५२.६। ऐश्वर्ययुक्ते राज्ये ३.५२.६। उत्पत्त्यधिकरणे जगति २७.२८॥

सवन—यज्ञनाम। निघ० ३।१७॥ स्थानानि। निघ० ५। २५॥

**सवयसा** समानं वयो ययोस्तौ १.१४४.३॥

**सवातरौ** वायुना सह वर्तमानौ २८.६॥

**सवात्यान्** समानवाते भवान् २४.१६॥

**सवासः** उत्पन्नाः पदार्थाः ४.५४.६। [ सवम् ] ऐश्वर्यम् १.१६४.२६। प्रसूतं जगत् ७.३८.४॥ [ सवान् ] ऐश्वर्ययोग्यान् १.१२६.१॥ [ सवाय ] उत्पादनाय २.३८.१॥ [ सवे ] विद्याप्रचारैश्वर्ये प्रेरणे वा ६.१०॥

**सविंशः** विंशत्या सह वर्तमानः १४.२३॥

**सविता** सकलैश्वर्ययुक्तः १.२२.८। सूर्यलोकः १.३४.१३। सर्वेषां प्रसविता, प्रकाशवृष्टिरसानां च प्रसविता १.३५.२। ऐश्वर्यवान् राजा सूर्यलोको वायुर्वा ( सवितेति पदनामसु० निघ० ५।४ अनेन प्राप्तिहेतोर्वायोरपि ग्रहणम् ) १.३५.४। वृष्ट्युत्पादकः १.३५.८। सूर्यः १.७३.२। सूर्यो धर्मकृत्येषु प्रेरको वा १.१०७.३। ऐश्वर्यप्रदो विद्वान् १.११०.३। ऐश्वर्यकारकः १.१५७.

१। सूर्य इव स्वप्रकाशमान ईश्वरः १. १८६.१। ऐश्वर्यं प्रति प्रेरकः २.१.७। सकलजगदुत्पादकः २.३८.१। परमात्मा २.३८.८। प्रेरकः ३. ५५.१६। प्रेरकोऽन्तर्यामी ३.५६.७। सूर्यमण्डलम् ४.१३.२। सकलैश्वर्ययोक्ता प्रभावैश्वर्यदाननिमित्तो वा ४.५३.२। सकलैश्वर्योत्पादकः ४.५३.५। सकलैश्वर्यः ४.५३.६। सकलजगज्जनकः ४.५३.७। सर्वैश्वर्यप्रदः ४.५४.१। विद्यैश्वर्यकारकः ५.४२.३। सत्यप्रेरकः ५.४८.५। सकलैश्वर्यविधाता ५.८१.३। प्रसवकर्ता ५.८२.३। सत्कर्मसु प्रेरकः ५.८२.८। सूर्य इव ६.५०.८। प्रसवकर्ता सूर्यः ६.५०.१३। प्रेरकः सूर्यो वा ७.१५.१२। सर्वोत्पादकः ७.३८.३। ऐश्वर्यवान् सूर्यवत्प्रकाशमानः ७.४५.३। सर्वेषां वसूनां अग्निपृथिव्यादीनां त्रयस्त्रिंशद्देवानां प्रसविता ( सविता वै देवानां प्रसविता श० १.१.२.१७) १.३। वृष्टिप्रकाशद्वारा दिव्यगुणानां प्रसवहेतुः १.१५। सर्वजगदुत्पादकः सकलैश्वर्यदातेश्वरः सूर्यलोको वा १.२०। अन्तःप्रेरको वृष्टिहेतुर्वा १.२२। सर्वस्य जगतो दिव्यस्य प्रसवितोत्पादकः ४.४। सर्वस्य जगत उत्पादकः प्रेरको वा ४.१६। सर्वस्य विश्वस्य जनिता ६.२। ऐश्वर्यवान् ६.२६। सूर्य इव ६.३२। ऐश्वर्यस्य प्रसविता ६.३६। ऐश्वर्योत्पादकः १०.२८। ऐश्वर्यमिच्छुः ११.१। सर्वस्य जगतो निर्माता ११.३। भास्करः ११.४२। सूर्य ऐश्वर्यप्रदः ११.६३। सकलजगत्प्रसविता जगदीश्वरः सूर्यो वा १२.३। ऐश्वर्ययुक्तः १८.१६। सकलैश्वर्ययुक्त ईश्वरः १८.३२। विद्याव्यवहारेषु प्रेरकः १६.८०। राजनियमैः प्रेरकः ३३.२०। सूर्य इव भासमानः ३३.३४। उत्पत्तिकर्ता पिता ३५.५। धर्मयुक्त मार्ग में प्रेरक मैं। अथर्व० १४.१.५१। (१४७ विधि) सकल जगदुत्पादयिता परमात्म। अथर्व० १४.१.५३ ( १४८ विधि )। सब जगत् की उत्पत्ति और सम्पूर्ण ऐश्वर्य को देने हारा परमात्मा। अथर्व० १४.२.७५ (१७२ विधि)॥ [ सविताइव ] यथा सूर्य आकर्षणेन भूगोलान् धरति तथा १.६५.७। यथा सूर्यः १.१६०.३॥ [ सवितराम् ] सर्वजगदन्तर्यामिनमीश्वरम् १.२२.५। सकलैश्वर्यप्रदम् १.२२.६। उत्पादकमैश्वर्यहेतुं वा १.२२.७। सूर्यलोकम् १.३५.१। सूर्यप्रकाशम् १.४४.८। सकलजगदुत्पादकम् २.३८.६। सूर्यम् ३.२०.५। परमात्मानम् ५.४६.३। ऐश्वर्यवन्तम् ५.४६.१। मेघोत्पादकम् ५.४६.२। सकलपदार्थनिर्मातारम् ५.८२.७। सूर्यमण्डलम् ६.२१.६। सत्कर्मसु प्रेरकं राजानम् ६.५०.१। देवानामग्न्यादीनां रसानां वा प्रसवितारम् ४.२५। सर्वेषामुत्पादकम् ६.२१। वेदविद्यैश्वर्योत्पादकम् ६.२७। ऐश्वर्यकारकम् २१.४०। सकलैश्वर्यप्रापकम् २२.१०। जनयितारम् ३०.१। ऐश्वर्यकारकं राजानम् ३३.४६॥ [सवित्रा] सूर्येण सह २.३८.५। विद्युद्रूपेण ४.३४.८। सर्वान्तर्यामिना जगदीश्वरेण उत्पादितया सृष्ट्या सह। सर्वस्य जगतः उत्पादकेनेश्वरेण उत्पादितया वा ३.१०। प्रेर-

केण वायुना १०.३० । प्रसवहेतुना ३७.१४। प्रेरकेण ऐश्वर्यकारकेण वा ३७.१५ ॥ [ सवित्रे ] सन्तानोत्पादकाय ८.७। सूर्यविज्ञानाय १०.५ । सूर्याय २२.६ । ऐश्वर्योत्पादकाय २६.६० । सवितृविद्याविदे ३८.८। सकलरसोत्पादकाय सूर्याय २.३०.१। जगदुत्पादकाय ६.१५.१६॥ [ सवितुः ] सविता वै देवानां प्रसविता ( शत. १।१।२।१७) तस्य सर्वजगदुत्पादकस्य सकलैश्वर्यप्रदातुः १.१०। जगदुत्पादकस्येश्वरस्य- १.१२ । सवति सकलैश्वर्यं जनयति तस्य १.२१ । प्रेरकस्येश्वरस्य सूर्यस्य वा १.२४। परमेश्वरस्य सूर्यलोकस्य वा १.३१ । सूर्यलोकस्य २.५ । सर्वस्य जगतः प्रसवितुरीश्वरस्य २.११ । सकलोत्पादकस्येश्वरस्य ५.२६ । सर्वविश्वोत्पादकस्य ६.१ । सकलैश्वर्यवतः ६.६ । सकलैश्वर्यस्य प्रसवितुर्जगदीश्वरस्य ६.३० । परमेश्वरस्य, सकलैश्वर्यप्रसवितुः समग्रविद्याबोधप्रसवितुः शत्रुविजयप्रसवितुर्वा ६.१०। सकलैश्वर्यप्रदस्य ६.१३। ऐश्वर्योत्पादकस्य सेनेश्वरस्य ६.३८। अखिलजगदुत्पादकस्येश्वरस्य ११.४ । सर्वेषामैश्वर्यव्यवस्थां प्रति प्रेरकस्य ११.६। जनकस्य १४.२६। योगैश्वर्यसंप्रदस्येश्वरस्य १७.७४। सकलैश्वर्यप्रापकस्य १८.३७। सकलैश्वर्याधिष्ठातुः २०.३ । प्रेरकस्य २१.४६,४७ । सकलैश्वर्यप्रदस्येश्वरस्य ३६.३ । सर्वान्तर्यामिनः ३७.२। सवितृमण्डलस्य ३७.१२। सूर्यलोकस्य १.३५.५,६। ऐश्वर्ययुक्तस्य १.११०.२ । सूर्यस्य सम्बन्धेन १.११३.१ । जगदीश्वरस्य २.३८.३। सकलैश्वर्यसंपन्नस्य सकाशात् ३.५६.७। सकलजगदुत्पादकस्य समग्रैश्वर्ययुक्तस्य ईश्वरस्य ३.६२.१०। प्रेरकस्यान्तर्यामिनः ३.६२.११ । वृष्ट्यादीनां प्रसवकर्तुः ४.५३.१ । अन्तर्यामिनो जगदीश्वरस्य ५.८२.१,२। सकलैश्वर्यसम्पन्नस्य ५.८२.६॥ [ सवितः ] राज्यैश्वर्यप्रद १.२५ । सर्वोत्पादक व्यवहारोत्पत्तिहेतो वा १.२६ । सकलैश्वर्यविधातर्जगदीश्वर २.१२। ऐश्वर्यवन् ! ४.३६ । सर्वैश्वर्यस्य प्रसवितरीश्वर ८.६ । सकलैश्वर्यसंयुक्त सम्राट् ६.१ । सर्वसिद्ध्युत्पादक ११.७। अन्तर्यामिरूपेण प्रेरक ११.८। सत्कर्मसु प्रेरकेश्वर ! १६.४३ । विद्यैश्वर्ययुक्त २७.८। सकलैश्वर्ययुक्त जगदुत्पादक ३०.१। उत्तमगुणकर्मस्वभावेषु प्रेरक परमेश्वर ३७.३। सकलजगदुत्पादक ३३.५४। अनेकपदार्थोत्पादक तेजस्विन् विद्वन् राजन् ३३.६६ । सकलैश्वर्ययुक्त ३३.८४। सवितृवदैश्वर्यप्रद ३४.२७। पृथिव्याद्युत्पादक ! १.२४.३ । परमात्मन् २.३८.११ । ऐश्वर्यप्रद ३.५६.६ । सकल जगदुत्पादक जगदीश्वर ४.५४.२ । ऐश्वर्यप्रद राजन् ६.७१.६। परमैश्वर्यप्रद ३.५५.११ । जगदीश्वर ३.५४.११ । सत्यव्यवहारे प्रेरक ५.८१.५। सर्वैश्वर्यप्रदेश्वर ५.८२.४। सत्कर्मसु प्रेरक राजन् ६.७१.३ । ७.३७.८ । अन्तर्यामिन् ७.३८.२ ।

सविता—सविता वै देवानां प्रसविता। श० १।१।२।१७॥ सविता वै प्रसविता। कौ० ६।१४॥ सविता वै प्रसवानामीशे। ऐ० १।३०॥ ७।१६॥२॥ आदित्य एव सविता। गो० पू०

१ । ३३ ॥ ॥ अग्निरेव सविता । जै० उ० ४ । २७ । १ ॥ प्रजापतिर्वै सविता । तां० १६ । ५ । १७ ॥ वरुण एव सविता । जै० उ० ४ । २७ । ३ ॥ विद्युदव सविता । जै० उ० ४ । ३३ ॥ स्तनयित्नुरेव सविता । जै० उ० ४।२७ । ६ ॥ वायुरेव सविता । गो० पू० १ । ३३ ॥ चन्द्रमा एव सविता । गो० पू० १। ३३ ॥ यज्ञ एव सविता । गो० पू० १ । ३३ ॥ इयं ( पृथिवी ) वै सविता । श० १३।१।४ । २ ॥ अभ्रमेव सविता । गो० पू० १ । ३३ । वेदा एव सविता। गो० पू० १।३३ ॥ अहरेव सविता । गो० पू० १।३३ ॥ पुरुष एव सविता । जै० उ०४ । २७। १७ ॥ पशवो वै सविता । श० ३ । २ । ३ । ११ ॥ प्राणो वै सविता ऐ० १ । १६ ॥ मनो वै सविता । श० ६ । ३ । १ । १३, १५ ॥ यक्कृत्सविता । श० १२ । ६ । १ । १५ ॥ सविता राष्ट्रं राष्ट्रपतिः । तै० २ । ५ । ७ । ४ ॥ उष्णमेव सविता । गो० पू० १ । ३३ ॥ ( सविता ) रश्मिभिर्वर्षं ( समदधात् ) । गो० पू० १ । २६ ॥ तद्वै सुपूतं यं देवः सविता पुनात् श० ३ । १ । ३ । २२ ॥

**सवींमनि** महैश्वर्ये ४.५३.३ । उत्पादिते जगति ६.७१.२ । आज्ञायाम् ३३.१७ ॥

सवीमनि—प्रसवे । नि० ६ । ७ ॥

**सवीर्य्यः** बलोपेतः २८.३ ॥

**सव्रत्** यः समानेन धर्मेण सह वर्तते तस्य बोधकः १५.६ ॥ [ **सव्रते** ] साधर्म्यपदार्थज्ञानाय १५.६ ॥

**सवृधे** यः समानैः सह वर्धते तस्मै १६.३० ॥

**सवेदसा** समानेन हुतद्रव्येण युक्तौ १.६३.६ ॥

**सव्यः** द्वितीयो वामपार्श्वस्थः १.८२.५ ॥ [ **सव्येन** ] वामपार्श्वेन ५.३६.४ । सेनाया दक्षिणभागेन १.१००.६ ॥

**सव्यतः** दक्षिणतः २.११.१८ ॥

**सव्या** उत्तरा २.२७.११ ॥

**सव्रता** समानकर्माणि ६.७०.३ । समान गुण-कर्म स्वभाव वाले ३.३०.३ । ( १७३ सं. विधि ) [ **सव्रताः** ] व्रतैः सत्यैर्व्यवहारैः सह वर्तमानाः १३.२५ । सत्यैः नियमैः सह वर्तमानाः १४.६ । समानानि व्रतानि नियमा येषां ते १४.१५ ॥

**सश्चत्** संयोजयति २.२०.१ । सश्चति समवयति २.२२.२ ॥

**सश्चत** विजानीत, प्राप्नुत वा १.६४.१२ । समवयन्तु ७.१८.२५ । सेवन्तां संबध्नन्तु ७.२६.४ । भजतु ( षच सेवने लोडर्थे लङ् । सुमागमोऽडभावश्च छान्दसः ) २०.७० । प्राप्नुवन्ति ( अत्र व्यत्ययः ) २७.२४ ॥

**सश्चतः** विज्ञानवतो विद्याधर्मप्राप्तान् १.४२.७। समवेताः ३.६.४ ॥ [ **सश्चते** ] संबन्धाय २.१६.४ ॥

**सश्चति** प्राप्नोति १.१०१.३ ॥

सश्चति—गतिकर्मा । निघ० २ । १४ ॥

**सश्चसि** जानासि प्रापयसि वा ३.३४ । प्राप्नोषि ( सश्चतीति गतिकर्मसु निघ० २।१४ ) ८.२ ॥

**सश्चिम** दूरे प्राप्नुयाम, गमयेम वा ३८.२० ॥

**सश्चिरे** [ **सश्चिरे** ] सज्जन्ति प्राप्नुवन्ति प्रापयन्ति वा १.११०.६ । गच्छन्ति १.८४.१२ । समवयन्ति २.१.१३ ॥

**सश्चुः** प्राप्नुयुः ( सश्चतीति गतिकर्मा निघं० २ । १४ ) ६.३६.३ ॥

**सश्चे** सम्बध्नामि ५.३३.८ ॥

ससतः स्वपतः प्राणिनः १.१२४.४ ॥ अवि-द्यामुल्लंघमानान् १.१३५.७ ॥
ससतः—स्वपतः । नि० ४ । १६ ॥

संसतीमिव यथा सुप्ताम् १.१३४.३ ॥

ससत्थ सीद ३.३०.६ ॥

ससन्तः शयानाः ४.३३.७॥ [ ससन्तम् ] स्व-पन्तं चिन्तारहितं वा १.१०३.७ । शया-नम् ४.५१.५ ॥

ससन्तु स्वपन्तु १.१२४.१० । शयीरन् ७.५५.५॥

ससर्ज सृजति १.१०३.२ ॥
प्रससर्ज—प्रसृजति । नि० १० । ४ ॥

ससर्परीः भृशं सर्पणशीला ३.५३.१५ । सुख-स्य प्रापिका ३.५३.१६ ॥

ससवान् ददत् १२.४७ । संभाजकः ३.२२.१ । प्रशस्तानि ससानि अन्नानि विद्यन्ते यस्य सः ( ससमित्यन्ननाम निघं. २।७ ) ६.४४.७ ॥ [ ससवांसः ] संविभक्ताः ७.१० । सुश-यानाः ४.४२.१० ॥ [ ससवांसम् ] पाप-पुण्ययोर्विभक्तारम् ३.३४.८ ॥

ससस्य शयानस्य ३.५.६ । स्वपतः ४.५.७ । स्वप्नस्य ४.७.७ । कार्य्यस्य ५.२१.४ ॥

ससहत् भृशं सहेत ( अत्र तुजादीनामित्य-भ्यासदैर्घ्यम् ) ५.२३.१ । भृशं सहते ६. ३३.१ ॥

ससहानः सहमानः १.१३१.४ ॥

ससहिः अतिशयेन सहनशीलः ( सहिवहिचलि पतिभ्यो यङन्तेभ्यः किकिणौ वक्तव्यौ अ. ३।२।१७२ वा. इति यङन्तात् सहधातोः किः प्रत्ययः ) १.१००.३ । भृशं सोढा १. १७१.६ ॥ [ ससहिम् ] अति सोढारम् १.१०२.१ ॥

ससहीष्ठाः भृशं सहेथाः ६.४५.१८ ॥

ससह्यात् निरन्तर सहें ( अत्राभ्यासदीर्घः ) ५.७.१० ॥

ससह्याम पुनः पुनः सहेमहि ( अत्र व्यत्ययेन परस्मैपदं लिङर्थे लोट् च ) १.८.४ ॥

ससह्वान् तिरस्कर्ता ( अत्र सह अभिभवे इत्य-स्मात्क्सुः । तुजादीनां दीर्घोऽभ्यासस्येति दीर्घः ) १.१००.५ ॥

ससाद [ ससाद, ससाद ] अवसादयति १. ६७.४ । निवसेत् ७.४.५ । तिष्ठति ( अत्र लडर्थे लिट् । सदेः परस्य लिटि अ. ८।३। ११८ अनेन परसकारस्य मूर्द्धन्यादेशनि-षेधः ) १.२५.१० । निषीदेत् ( अत्र संहि-तायामिति दीर्घः ) ५.१.५ । निषीदति ६.१.६ । सीदतु १०.२७ । सीद २०.२ ॥

ससान [ ससान ] सनति विभजति ३.३१. ७ । विभजेत् ३.३४.८ ॥

ससार समन्तात् गच्छति ४.३०.११ ॥

ससाह सहते ( अत्र लडर्थे लिट् । तुजादीना-मित्यभ्यासदीर्घः ) ५.२५.६ ॥

ससूव जनयति ४.१८.१० ॥

ससृजानः स्रष्टा सन् ७.८.२ ॥

ससृज सृजति ७.१८.४ ॥

**ससृज्महे** निष्पादयेम १.८१.८ ॥

**ससृज्यात्** पुनः पुनर्निष्पद्येत् निष्पादयेद्वा ( अत्र वा च्छन्दसि सर्वे विधयो भवन्तीति नियमात् रुग्रिकौ च लुकि अ. ७।४।६१ इति अभ्यासस्य रुग्रिगागमौ न भवतः, दीर्घोऽकितः ७.४८.३ इति दीर्घादेशश्च न भवति ) १.२४.१३ ॥

**ससृमाणम्** भृशं गच्छन्तम् ४.१७.१४ ॥

**ससृवांसः** प्राप्तवन्तः ६.१६ ॥ [ ससृवांसम् ] सर्वं ज्ञातवन्तं शिल्पविद्यागुणप्राप्तिमन्तं वा २.१४ ॥

**ससेन** हे सेनासे सहित सेनाध्यक्ष १.५१.३ ॥

**सस्तः** शयानः ६.२०.१३ ॥

**सस्ताम्** शयाताम् १.२६.३ ॥

**सस्तु** शेताम् ७.५५.५ ॥

**सस्निः** शेते यस्मिन्त्सः २.१८.१ । शुद्धः ३.१५.५ ॥ [ सस्निम् ] ब्रह्मचर्यव्रतविद्याग्रहणाभ्यां पवित्रम् ५.३५.१ ॥

**सस्नितमम्** अतिशयेन शुद्धं शुद्धिकारकञ्च तथा शुद्धिहेतुं भौतिकं वा अथवा स्वव्याप्त्या सर्वजगद्वेष्टितारमीश्वरम्, शिल्पविद्याहेतुं व्यापनशीलं भौतिकं वा ( ष्णा शौचे अथवा ष्णौ वेष्टन इत्यस्य रूपम् ) १.८ ॥

सस्नि—संस्नातं मेधम् । नि० ५ । १ ॥

**सस्मिन्** सर्वस्मिन् ( अत्र छान्दसो वर्णलोपो वेति रेफवकारयोर्लोपः ) १.५२.१५ । स्वस्मिन् ( अत्र छान्दसो० इति वलोपः ) १.१५२.६ । अन्तरिक्षे ७.३६.३ ॥

**सस्राणः** सर्वगुणदोषान् प्राप्नुवन् १.१४६.२ ॥

**सस्राथे** प्रापयतः १.१५८.१ ॥

**सस्रुः** गच्छन्ति १.५२.५ । स्रवन्ति १.७३.६ । प्राप्नुवन्ति ५.५३.२ ॥

**सस्रुतः** या समानं सत्यं मार्गं स्रुवन्ति गच्छन्ति ताः १.१४१.१ । गमनशीलान् ४.२८.१ ॥

सस्रुत—नदीनाम । निघ० २ । १३ ॥

**सस्रुषीः** प्राप्तव्याः १.८६.५ ॥

**सस्रे** सरति, गच्छति ७.३६.१ ॥

**सस्रोतसः** समानं मनोरूपं स्रोतः प्रवाहो यासां ताः ३४.११ ॥

**सस्वः** उपदिशति ( स्वृधातोः लङि प्रथमैकवचने बहुलं छन्दसीति शपः स्थाने श्लुः । हल्ङ्याब्भ्य इति तलोपः ) १.८८.५ । गुप्तम् ५.३०.२ ॥

**सस्वजाते** स्वजेते आश्रयतः ( अत्र व्यत्ययेनात्मनेपदम् ) १.१६४.२० ॥

**सस्वर्ता** उपतापकेन शब्देन ७.५८.५ ॥

**सह** परस्परम् ३.१३ । सङ्गार्थे १.२३.२४ । संगी हों । अ० १२.५.७ । ( १७६ विधि )

**सहः** उत्तमं बलम् ३.३८ । उदकं बलं वा ३.३६ । बलवान् १०.१५ । बलकारी मार्गशीर्षः १४.२७ । सहनम् १६.६ । यः सहते ६.१.१ । परिभावुकः १.३६.१८ ॥ [ सहसा ] सामर्थ्येनाकर्षणेन वा १.५१.१० । उत्साहेन ६.६६.६ । बलेनोत्साहेन वा ६.६६.६ ।

[ सहसः ] विद्याबलवतः १.१४१.१। सहते इति सहो वायुस्तस्य बलस्वरूपस्य १.२६.१०। ब्रह्मचर्यबलयुक्तस्य ५.३.६। बलात् ५.३१.३। बलस्य ६.५.१। सहनशीलस्य ६.२१.१। बलवतः पितुः ११.७०॥

सहः—बलं वै सहः। श० ६।३।२।१४॥ एतौ (सहश्च सहस्यश्च) एव हैमन्तिकौ (मासौ)। श० ४।३।१।१८॥

सहस—उदकनाम। निघ० १।२॥ बलनाम। निघ० २।६॥

**सहच्छन्दसः** सह छन्दांसि वेदाध्ययनं स्वातन्त्र्यसुखभोगो वा येषां ते ३४.४६॥

**सहजन्या** सहोत्पन्ना १५.१६॥

सहजन्या—(यजु० ५।१६) (वायोः) मेनका च सहजन्या चाप्सरसाविति दिक् चोपदिशा चेति ह स्माह माहित्थिरिमे तु ते द्यावापृथिवी। श० ८।६।१।२७॥

**सहजानुषाणि** जनुर्भिर्जन्मभिर्निर्वृतानि जानुषाणि कर्माणि तैः सह वर्तमानानि १.१०४.८॥

**सहते** सहते ५.२.६॥

**सहदानुम्** दानेन सह वर्तमानम् ३.३०.८। यः सहैव ददाति तम् १८.६६॥

**सहदेवः** देवैः सह वर्तते सः १.१००.१७॥

**सहध्यै** सोढुम् ६.१.१॥

**सहध्वम्** सहध्वम् १७.३४॥

**सहन्** सहन् ६.७३.२॥ [ सहन्तः ] सोढारः ५.८७.५॥

**सहन्तमः** अतिशयेन सहा इति सहन्तमः १.१२७.६॥

**सहन्ती** सहनं कुर्वती ७.५६.५॥

**सहन्ते** सहन्ते ६.६६.६॥

**सहन्त्य** सहनशील विद्वन् १.२७.८। सहन्तेषु शान्तेषु भव ६.१६.३३॥

**सहपत्न्या** स्वामिना सह ३७.२०॥

**सहप्रमाः** सहैव प्रमा यथार्थं प्रज्ञानं येषां ते ३४.४६॥

**सहमानः** यः सुखदुःखादिकं सहते सः १७.३७॥ [ सहमानम् ] शत्रूणां वेगस्य सोढारम् ६.१८.१॥ [ सहमानाय ] बलप्रयुक्ताय १६.२०॥

**सहमाना** बलनिमित्ता १२.६६। पत्यादीन् सोढुमर्हा १३.२६॥

**सहमूलम्** मूलेन सह वर्तमानम् ३.३०.१७॥

**सहवत्सा** वत्सेन सह वर्तमाना १.३२.६॥

**सहवसुम्** वसुभिः सह वर्तमानम् २.१३.८॥

**सहवीरम्** वीरैः सह वर्तमानम् ३.५४.१३॥

**सहवीराम्** वीरैः सह वर्तमानां सेनाम् २७.६॥

**सहसानः** सहमानः २.१०.६॥ [ सहसानम् ] यः सर्वं सहते तम् ५.२५.६। यज्ञ के साधक को ७.७.१॥

**सहसावन्** [ सहसावन् ] अत्यन्तबलवन्, सहसेत्यव्ययम्, भूमार्थे मतुप् १.६१.२३। बहु सहो बलं सहनं वा विद्यते यस्य तत्सम्बुद्धौ १.१८६.५। बलेन तुल्य! ५.२०.४॥

**सहसिन्** बहुबलयुक्त ४.११.१ ॥

**सहसूक्तवाकः** ऋग्यजुरादिलक्षणैर्युक्तैः सूक्तैः वाकैः सह वर्तमानः ८.२२ ॥

**सहसोमाः** सोमेन श्रेष्ठगुणसमूहेन सह वर्तमाना इव ८.११ ॥

**सहस्कृतः** सहसा बलेन निष्पन्नः ३६.८३ ॥ [**सहस्कृत**] सहो बलं कृतं येन तत्सम्बुद्धौ १.४५.६। यः सहसा करोति तत्सम्बुद्धौ ६.१६.३७॥ [**सहस्कृतम्**] यः सहः सहनं करोति कारयति वा तम् ३.१८ ॥

**सहस्तमा** अतिशयेन सौढारौ ६.६०.१ ॥

**सहस्तोमाः** स्तोमैः श्लाघाभिः सह वर्तमाना यद्वा सहस्तोमा शास्त्रस्तुतयो येषां ते ३४.४६ ॥

**सहस्त्रियम्** सहप्राप्तां भार्याम् १२.४७॥

**सहस्यः** सहसि बले भवः पौषः १४.२७ ॥ [**सहस्य**] सहसि भव १.१४७.५। सहसि बले साधो ! २.२.११। सहसा बलेन युक्त ७.१६.८। य आत्मनः सहो बलमिच्छति तत्सम्बुद्धौ ११.२६ ॥

सहस्यः—( मासः )—एतौ ( सहश्च सहस्यश्च ) एव हैमन्तिकौ ( मासौ ) स यद्धेमन्त इमाः प्रजाः सहसेव स्वं वशमुपनयते तेनो हैतौ सहश्च सहस्यश्च। श० ४।३।१।१८॥

**सहस्रकेतुम्** असंख्यातध्वजम् १.११६.१ ॥

**सहस्रचक्षाः** सहस्रं चक्षांसि दर्शनानि यस्मायस्य वा ७.३४.१० ॥

**सहस्रचेताः** असंख्यातविज्ञानविज्ञापनः १.१००.१२॥

**सहस्रजित्** असहायः सन् सहस्रं योद्धृन् जेतुंशीलः ६.२८ ॥

**सहस्रणीथः** सहस्रैरसंख्यैर्धार्मिकैर्नीथः प्राप्तः ३.६०.७ ॥

**सहस्रदाः** सहस्रमसंख्यं सुखं ददातीति १३.४० ॥

**सहस्रदातमम्** अतिशयेनासंख्यदातारम् ६.४५.३३ ॥

**सहस्रदानः** असंख्यप्रदः ७.३३.१२ ॥

**सहस्रदाना** असंख्यप्रदाना ३.३०.७ ॥

**सहस्रदाव्नाम्** सहस्रस्यासंख्यातस्य धनस्य दातॄणां मध्ये ( अत्र आतो मनिन्० अ० ३.२.७४ अनेन वनिप्प्रत्ययः ) १.१७.५ ॥

**सहस्रधारम्** बहुविधं ब्रह्मांडं धरतीति तं यज्ञम् ( सहस्रमिति बहुनामसु पठितम्। निघ० ३।१ ) य० १.३ ॥

**सहस्रधारा** सहस्राण्यसङ्ख्या धाराः प्रवाहा यस्या वाचः सा ४.४१.५॥ [**सहस्रधाराम्**] सहस्रं धारा हिरण्यादयो यस्यास्तां यद्वा या सहस्रमसङ्ख्यातं प्राणिजातं धरति ताम् ३३.२८ ॥

**सहस्रपात्** सहस्राण्यसंख्याताः पादा यस्मिन् सः ३१.१ ॥

**सहस्रपाथाः** सहस्राण्यमितानि पाथांस्यन्नादीनि यस्य सः ७.१.१४ ॥

**सहस्रपोषम्** असंख्यपुष्टिम् २.३२.५ ॥

**सहस्रपोष्यम्** असंख्यैः पोषणीयम् ६.३५.१ ॥

**सहस्रप्रधनेषु** सहस्राण्यसंख्यातानि प्रकृष्टानि धनानि प्राप्नुवन्ति येषु तेषु चक्रवर्तिराज्यसाधकेषु महायुद्धेषु। (सहस्रमिति बहुनामसु पठितम्। निघं० ३।१) १.७.४ ॥

**सहस्रभरम्** यः सहस्रमसङ्ख्यं बिभर्त्ति तम् ६.२०.१ ॥

**सहस्रभृष्टिः** सहस्रमसंख्याता भृष्टयः पीडा दाहा वा यस्मात् सः १.८०.१२। सहस्राणि बहूनि भृष्टयः पाका यस्मात्सः सूर्यस्य प्रकाशः। (सहस्रमिति बहुनामसु पठितम्। निघं० ३।१) य० १.२४॥ [सहस्रभृष्टिम्] सहस्रमसंख्याता भृष्टयः पाका यस्मात्तम् १.८५.४। सहस्रं भृष्टयो भर्ज्जनानि दहनानि यस्मात्तम्। ५.३४.३। सहस्राणां भृज्जकं छेदकम्। ६.१७.१० ॥

**सहस्रम्** असंख्यातगुणसंपन्नम् १.८०.१। असङ्ख्यम् १.१८८.८। असंख्यसैन्यम् ६.६६.८। असंख्यगृहाश्रमव्यवहारम् १५.५५। असंख्यमतुलं बोधम् १८.६२। सब संसार को। अथर्व० ६.५.१७ (२५३ वि.) [सहस्राय] अतुलविज्ञानाय १३.४० ॥ [सहस्रस्य] असंख्यपदार्थयुक्तस्य जगतः, असंख्यपदार्थविशेषस्य, असंख्यातस्थूलवस्तुनः १५.६५ ॥

सहस्र—सहस्वत्। नि० ३। १० ॥ बहुनाम। निघ० ३। १ ॥
संहस्र—सर्वं वै सहस्रम्। श० ४।६।१।१५॥ भूमा वै सहस्रम्। श० ३।३।३।८॥ परमं सहस्रम्। तां० १६।६।२॥ तदाहुः किं तत्सहस्रमितीमे लोका इमे वेदा अथो वागिति ब्रूयात्। ऐ० ६। १५ ॥ आयुर्वै सहस्रम्। तै० ३।८।१५।३ ॥ पशवः सहस्रम्। तां० १६।१०।१२ ॥

**सहस्रमीळ्हे(ढे)** सहस्राणि मीळ्हानि धनानि यस्मात् तस्मिन् १.११२.१० ॥

**सहस्रमुष्क** असङ्ख्यवीर्य्य ६.४६.३ ॥

**सहस्रमूतिः** सहस्रमूतयो रक्षणादीनि यस्मात्सः। (अत्र वा चछन्दसि सर्वे विधयो भवन्तीति विभक्त्यलोपः) १.५२.२ ॥

**सहस्रम्भरः** सहस्रस्य जगतो धर्ता पोषको वा २.६.१। यः सहस्रमसंख्यं शुभगुणसमूहं बिभर्त्ति सः ११.३६ ॥

सहस्रम्भर—एषा ह वाऽअस्य (अग्नेः) सहस्रम्भरता यदेनमेकं सन्तं बहुधा विहरन्ति। ऐ० १।२८ ॥

**सहस्रयोजने** सहस्राण्यसंख्यानि चतुःक्रोशपरिमितानि यस्मिन् देशे तस्मिन् १६.५४ ॥ एतत्संख्यापरिमिते देशे १६.६३ ॥

सहस्रयोजन—(यजु० १६। ५४ ॥) अयमग्निः सहस्रयोजनम्। श० ६।१।१।२६ ॥ एतद्ध परमं दूरं यत्सहस्रयोजनम्। श० ६।१।१।२८॥

**सहस्ररेताः** अतुलवीर्यः ४.५.३ ॥

**सहस्रवत्** सहस्रमसङ्ख्यपरिमाणं विद्यते यस्मिंस्तत् ३.१३.७ ॥

**सहस्रवल्शाः** सहस्रांकुरा वनस्पतय इवाङ्गोपाङ्गैः सह वर्त्तमानाः ३.८.११। यथा बहुमूला वृक्षा रोहन्ति तथा ५.४३ ॥ [सहस्रवल्शम्] सहस्राण्यसंख्या वल्शा

अङ्कुरा इव शास्त्रबोधा यस्मिंस्तं विज्ञानमयं व्यवहारम् ७.३३.६ ॥

**सहस्रवीरम्** सहस्राणि वीरा यस्मिंस्तम् १.१८८.४ ॥

**सहस्रवीर्या** असंख्यातपराक्रमा १३.२६ ॥

**सहस्रशः** असंख्याता बहवः १६.६ ॥

**सहस्रशीर्षा** सहस्राण्यसङ्ख्यातानि शिरांसि यस्मिन् सः ३१.१ ॥

**सहस्रशृंगः** सहस्राणि शृङ्गाणीव तेजांसि यस्य सः ५.१.८। सहस्राणि शृङ्गाणि तेजांसि किरणा यस्य सूर्य्यस्य सः ७.५५.७ ॥

**सहस्रसाः** यः सहस्राणि पदार्थान् सनति विभजति सः १.१८८.३ ॥ [ **सहस्रसाः** ] ये सहस्रं विद्याविषयान् सनन्ति ते ६.१७ ॥ [ **सहस्रसाम्** ] सहस्राण्यसंख्यातानि कर्माणि सनति सम्भजति तम् १.११७.६ ॥

**सहस्रसातमः** अतिशयेन सहस्रस्य विभाजकः १.१७५.१। यः सहस्रमसंख्यं सनोति ददाति सोऽतिशयितः ३.१३.६ ॥ [ **सहस्रसातमम्** ] सहस्रमसंख्यातं सुखं सनुते ददाति येन तदतिशयितम् ( जनसनखनक्रमगमो विट् अ० ३.२.६७। अनेन सहस्रोपपदात् सनोतेर्विट्। विड्वनोरनुनासिकस्यात् अ० ६.४.४१। अनेन नकारस्याकारादेशः। ततस्तमप्) १.६.८। असंख्यानां पदार्थानामतिशयेन विभक्तारम् ६.४५.३३ ॥

**सहस्रसातमाम्** सहस्राणि बहूनि धनानि सुखानि वा सनोति ददाति या सा अतिशयिता ताम् ( अत्र सहस्रोपपदात् षणु दाने इत्यस्माद्धातोः जनसनखन् इत्यनेन विट्। विड्वनोरनु० इति नकारस्याकारादेशः। ततस्तमप्। ततष्टाप्।) १.१०.१० ॥

**सहस्रसाम्** या सहस्राण्यसंख्यातानि कार्याणि सनोति ताम् ३.१६ ॥

**सहस्रसावे** सहस्रस्याऽसंख्यस्य धनस्य सावः प्रसवो यस्मिन् संग्रामे ३.५३.७ ॥

**सहस्रस्थूणम्** सहस्रमसंख्या वा स्थूणा यस्मिँस्तज्जगत् राज्यं यानं वा ५.६२.६। [ **सहस्रस्थूणे** ] सहस्राणि स्थूणाः स्तम्भा यस्मिँस्तस्मिन् २.४१.५ ॥

**सहस्राक्षः** सहस्राण्यसंख्यान्यक्षीणि यस्मिन् सः ३१.१। असंख्यदर्शनः १३.४७ ॥ [**सहस्राक्षा**] सहस्राण्यसंख्यातान्यक्षीणि साधनानि याभ्यां तौ १.२३.३ ॥ [ **सहस्राक्षाय** ] सहस्रेषु भृत्येषु अक्षिणी यस्य तस्मै १६.८। सहस्रेषु असंख्यातेषु शास्त्रविषयादिषु अक्षिणी यस्य तस्मै विदुषे ब्राह्मणाय १६.२६ ॥ [ **सहस्राक्ष** ] सहस्रेष्वसंख्यातेषु युद्धकार्येष्वक्षिणी यस्य तत्सम्बुद्धौ १६.१३। सहस्रेष्वसंख्यातेषु व्यवहारेष्वक्षि विज्ञानं यस्य तत्सम्बुद्धौ १७.७१ ॥

**सहस्राक्षरा** सहस्राणि असंख्यातान्यक्षराणि यस्याः सा १.१६४.४१ ॥

**सहस्रिणी** असंख्याः पदार्था दीयन्ते यस्यां सा ६.४५.३२। सहस्राणि असंख्याता विद्याविषया विद्यन्ते यस्यां सा ७.१५.६॥ [सहस्रिणीः] बह्वीः १.१८८.२। असंख्याताः २.६.५॥ [सहस्रिणीभिः] सहस्राणि प्रशस्तानि पदार्थप्रापणानि विद्यन्ते यासु ताभिः (अत्र प्रशंसार्थ इनिः) १.३०.८। बहूनि सहस्राणि शूरवीरसंघा यासु ताभिः १.१३५.३। सहस्राणि असंख्या वेगा विद्यन्ते यासु गतिषु ताभिः २७.२८॥

**सहस्रियः** सहस्रेणासंख्यातेन योद्धृसमूहेन सम्मितस्तुल्यः १५.५२॥ [सहस्रियासः] सहस्राणि १.१६८.८॥ [सहस्रियम्] सहस्रेषु भवम् ७.५६.१४॥

**सहस्री** सहस्रं सर्वं सुखमस्मिन्निति सः ६.१५.१२। सहस्राणि असंख्याता उत्तममनुष्याः पदार्था वा विद्यन्ते यस्य सः ७.५८.४॥ [सहस्रिणः] सहस्रमसंख्याता बहवः पदार्थाः सन्ति येषु ते १.१६७.१॥ [सहस्रिणम्] सहस्राण्यसंख्यातानि सुखानि यस्मिन् सन्ति तम् (तपःसहस्राभ्यां विनीनी। अ. ५.२.१०२ इति सहस्रशब्दादिनिः प्रत्ययः) १.५.६। सहस्रमसंख्याता गुणा विद्यन्ते यस्मिंस्तम् १.१२४.१३। असंख्यं बलं विद्यते यस्मिँस्तम् ३.२२.१। सहस्रैर्योद्धृभिः संयुक्तम् ६.८.६॥ [सहस्रिणः] असंख्यपुरुषधनयुक्तस्य ४.४८.५॥

**सहस्व** अभिभव, तिरस्कुरु (सह अभिभव इत्यस्य प्रयोगः) ३.२४.१। सहिये ३.३०.१६। क्षमस्व ६.३७। बलीभव १२.६६। सहन कर १३.२६॥

**सहस्वत्** सहोऽतिशयितं सहनं विद्यते यस्मिँस्तद्यथा स्यात्तथा (अत्रातिशये मतुप्) १.६.८॥

**सहस्वान्** सहनकर्ता ६.५.६। अत्यन्तबलयुक्तः ६.२२.१॥ [सहस्वः] बहुबलयुक्त सकलविद्याविद्वा ३.१४.२॥

**सहावा** सोढा (अत्रान्येषामपीति दीर्घः) ३.४६.३। यः सहैव वनति सम्भजति ७.४५.३॥

**सहावान्** सहो बहु सहनं विद्यते यस्मिन्त्सः १.१७५.२। बलवान् (अत्राऽन्येषामपीति दीर्घः) १.१७५.३॥

**सहासः** सहनशीलाः बलवन्तः ७.३४.२४॥

**सहिष्ठ** अतिशयेन सोढा ६.१८.४॥ [सहीयसि] याऽतिशयेन सोढ्री तत्सम्बुद्धौ ५.७६.२॥

**सहीयान्** अतिशयेन सोढा १.६१.७॥ [सहीयसः] अतिशयेन सहनशीलान् बलिष्ठान् ४.५५.१॥

**सहुरिः** सहनस्वभावः २.२१.३॥

**सहूती** समानाहूतिरावाहनं ययोस्तौ १.६३.६। समानस्पर्धया २.३३.४। समानप्रशंसया ७.२७.४॥ [सहूतिभिः] समाना हूतयः आह्वानानि च सहूतयस्ताभिः १.४५.१०॥

**सहोजाः** यः सहसा बलेन प्रसिद्धः १.५८.१।

**सहोदाः** बलप्रदः १.१७१.५ ॥

**सहोभरिः** यः सहो बलं बिभर्ति ५.४४.३ ॥

**सहोवृधम्** सहो बलं वर्धयतीति सहोवृत्तम् १.३६.२ । यः सहसा बलेन वर्धते तम्, बलस्य वर्धकं वा ३.१०.६ ॥

**सहौजसः** ओजसा बलेन सह वर्तमानाः १०.४॥

**सह्यसः** सहीयसोऽतिशयेन बलवतः ( अत्र सह धातोरसुन् ततो मतुप् तत ईयसुनि विन्मतोलुर्गिति मतुप्लोपः । टेरिति टिलोपः । छान्दसो वर्णलोपो वेतीकार लोपः ) १.१२०.४॥

**सह्याः** सहनं कुर्य्याः १.१५२.७ ॥

**सह्याः** सोढुं योग्याः २.११.४ ॥

**सह्योः** सहनशीलस्य ६.१८.१२ ॥

**सा** सा १.४८.१० ॥

**साकञ्जानाम्** सहैव जातानाम् १.१६४.१५ ॥

**साकम्** सार्द्धम् १७.३३ ॥

साकम्—सह । नि० ५ । ११ ॥

**साकमुक्षे** यः साकं सहोक्षति सुखेन सचति संबध्नाति तस्मै ७.५८.१ ॥

**साक्ष्व** सहस्व ३.३७.७ ॥

**साख्यस्य** सख्युः कर्मणो भावस्य निर्माणस्य २.११.१६ ॥

**साच्यम्** सचितुं समवेतुं योग्यम् १.१४०.३ ॥

**सात्** विभजति ५.४५.२ । निश्चिनुयात् ७.२८.४ ॥

**सातानि** विभज्य दातुमर्हाणि २.२४.१० ॥

**सातिः** लोकानां विभक्तिः १.१६८.७॥

[सातिम्] संविभागं कुर्वन्तम् ( अत्र ऊतियूतिजूतिसातिहेति...अ. ३.३.९७ । अनेनायं शब्दो निपातितः ) १.६.१० । विद्यादिदानम्, संविभागम्, अश्वशिक्षाविभागम्, संभक्तिं वा १.१११.३ ॥ [सातये] सुखार्थं सम्यक् सेवनाय १.४.६ । बहुधनप्राप्तये १.१०२.३ । संभोगाय १.१३०.६ । दायविभागाय ५.५.४ । धर्माधर्मविभागाय ५.३६.३ ॥ [सातौ] संभजन्ते धनानि यस्मिन् युद्धे शिल्पकर्मणि वा तस्मिन् १.३६.१७॥

**सातुः** सत्यासत्ययोर्विभाजकस्य ४.६.७ ॥

**सादन्यम्** सादनेषु स्थापनेषु साधुम् ३४.२१ ॥

**सादद्योनिम्** सीदन्तं धर्म्ये कारणे ५.४३.१२ ॥

**सादय** [सादय] हन्ति ( अत्रोभयत्र व्यत्ययोऽन्येषामपि दृश्यत इति दीर्घश्च ) १.१५.४ । स्थापय ( अत्र संहितायामिति दीर्घः ) ३.२६.८ । गमय ( अत्रान्येषामपीति दीर्घः ) ११.३५ । अवस्थापय १.३१.१७ । आसय ( अत्रान्येषामपीति दीर्घः ) १.४५.६ । प्रापय ३.५७.५ ॥

**सादयतु** स्थापयतु १३.१७ ॥

**सादयताम्** अवस्थापयताम् १४.१ । नियुक्त करें १४.७ ॥

**सादयध्वम्** स्थापयत ५.४३.१२ ॥

**सादयन्तः** स्थिर कराते हुए ७.४४.२ ॥

सादयन्तु अवस्थापयन्तु १५.१० ॥

सादयन्ते स्थापयन्ति ३.६.३ ॥

सादयात् सादयेत्, प्रापयेत् २२.१७ ॥

सादयामि स्थापयामि १.११ ॥

सादि सम्पादते २.११.८ । साध्यताम् २.११.१८ ॥

सादे स्थितौ १.१६२.१७ । स्थित्यधिकरणे २५.४० ॥

साध साध्नुहि ( अत्र विकरणव्यत्ययेन शप् ) ३.१.२३ ॥

साधत् साध्नुयात् २.१६.३ ॥

साधंत साध्नुवन्तु ५.४५.३ ॥

साधति साध्नोति ( विकरणव्यत्ययेनात्र श्नोः स्थाने शप् ) १.६४.२ ॥

साधते साधते १.१४१.१ ॥

साधथः साधथः ३.३८.६ । साध्नुतः ( अत्र व्यत्ययः ) ४.५६.७ ॥

साधदिष्टिम् साध्नुवन्तीष्टिं येन तम् ३.२.५ ॥

साधदिष्टिभिः साधाः संसिद्धा दिष्टयश्च ताभिः ३.३.६ ॥

साधन् [साधन्] संसाध्नुवन् ( अत्र व्यत्ययेन शप् ) ३.१.१७ ॥ साध्नुवन्ति, साधयन्ति वा १.६६.१ ॥

साधनः यः साध्नोति सः ३.२७.८ ॥ [साधनम्] साध्नोति येन तत् १.४४.११ । सिद्धिकरम् ३.२७.२ । साधन को ५.२०.३ ॥

साधन्ताम् साध्नुवन्तु ६.५३.४ ॥

साधय सिद्ध करो ( अत्राऽन्येषामपीति दीर्घः ) १.६४.४ ॥

साधयन्ती विद्याशिक्षाभ्यां अन्यान् विदुषः कारयन्ती २.३.८ ॥

साधारणः सामान्येन व्याप्तः ४.३२.१३ ॥

साधारण्येव यथा साधारणया १.१६७.४ ॥

साधिपतिकेभ्यः अधिपतिना जीवेन सह वर्तमानेभ्यः ३६.१ ॥

साधिष्ठः अतिशयेन साधुः ५.३५.१ ॥

साधिष्ठेभिः अधिष्ठोऽधिष्ठानम्, समानमधिष्ठानं येषां तैः १.५८.१ ॥

साधु सम्यक् यथा स्यात्तथा १.१२४.३ । श्रेष्ठम् ३.२७.३ । समीचीनतया ७.४३.२ ॥

साधुः सत्यमानी सत्यकारी सत्यवादी १.६७.१ । यः परोपकारी परकार्याणि साध्नोति सः १.७०.६ । परोपकारी सन्मार्गस्थितो विद्वान् १.७७.३ । साध्नुवन्ति धर्मं यस्मिन्त्सः २.२७.६ । श्रेष्ठः ५.१२.६ । सत्कर्मसेवी ७.३७.४ ॥ [साधवः] साधुगतयः ६.१६.४३ । अभीष्टं साध्नुवन्तः १३.३६ ॥ [साधुना] सुशिक्षितेन १.१५५.१ ॥ [साधुया] साधुना ( अत्र सुपां सुलुगिति याडादेशः ) १.४६.११ । साधुना कर्मणा १.१७०.२ । साधवः ५.११.४ । साधुना धर्मेण सह १४.१ । श्रेष्ठैः कर्मभिः १७.७३ । सत्यम् २३.४३ ॥ [साधुभिः] सज्जनै सह १.१३८.४ ॥

साधु—साधयिता । नि० ६ । ३३ ॥

साधु—( यजु० ३७ । १० ) अयं वै साधुर्यो ऽयं

( वायुः ) पवतऽएष हीमाँल्लोकान्त्सिद्धोऽनुपवते। श० १४। १। २। २३ ॥

**साधुकर्मा** साधूनि श्रेष्ठानि कर्माणि यस्य सः ८.४५। धर्म्यकर्मानुष्ठाता १७.२३ ॥

**साध्याः** साधनसाध्याः २६.११। साधनं योगाभ्यासादिकं कुर्वन्तो ज्ञानिनः ३१.६। कृतसाधनाः ३१.१६। अन्यैर्विद्यार्थं संसेवितुमर्हाः १.१६४.५० ॥ [साध्यान्] साद्धुं योग्यान् ३६.६॥ [साध्येभ्यः] साधितुं योग्येभ्यः २४.२७ ॥

साध्य—रश्मिनाम। निघ० १। ५ ॥ देवाः साधनात्। नि० १२। ४० ॥

साध्या देवाः—( यजु० ३१। १६ ) प्राणा वै साध्या देवास्तऽएतं ( प्रजापतिं ) अग्रऽएवमसाधयन्। श० १०। २। २। ३॥ छन्दांसि वै साध्या देवास्तेऽग्रेऽग्निनाग्निमयजन्त ते स्वर्गं लोकमायन्। ऐ० १। १६॥ साध्या वै नाम देवेभ्यो देवाः पूर्व आसंस्त एतत् ( शतसंवत्सरं ) सत्रायणमुपायंस्तेनार्ध्नुवंस्ते सगवः सपुरुषाः सर्व्वे एव सह स्वर्गं लोकमायन्। तां० २५। ८। २॥ साध्या वै नाम देवा आसंस्ते ऽवाछिद्य तृतीयसवनम्माध्यन्दिनेन सवनेन सह स्वर्गं लोकमायन्। तां० ८। ३। ५॥ ८। ४। ६॥

**साध्वीः** श्रेष्ठाः २.२४.८॥

**सानसि** सनातनम् १.७५.२। पुरातनम् ३.५६.६। संभक्तव्यं पुराणम् ११.६२॥

सानसि—( यजु० १२। १०६ ) ( =सनातन ) पृणक्षि सानसिं क्रतुमिति पृणक्षि सनातनं क्रतुमित्येतत्। श० ७। ३। १। ३२॥

**सानसिः** संविभाजकः १. १७५. २। [सानसिम्] संभजनीयम् ( सानसिवर्णसि० ४.११०। अनेनायं सनधातोः असिप्रत्ययान्तो निपातितः ) १.८.१। सनातनीम् १२.१०६। पुराणम् १२.११०॥

**सानु** सनन्ति सम्भजन्ति येन कर्मणा तत् ( अत्र दृसनिजनि० उ० १.३। इति ञुण् प्रत्ययः ) १.५४.४। मेघस्य शिखरः १.५८.२। शिखरम् १.६२.५। संसेवनीयम् २.३५.१२। संभजनीयम् ३.५.३। शिखरमिव ५.६०.३। विभागे ६.६.४। संभजनीयं धनम् ७.२.१। शिखरमिवविज्ञानम् ७.७.२। अवयवम् २६.५०॥ [सानुम्] अंगानां संविभागम् १.८०.५॥ शिखराकारं घनम् ६.३६.२॥ [सानूनि] प्रान्तदेशान् ६.७.६॥ [सानोः] पर्वतस्य शिखरात् संविभागात् कर्मणः सिद्धेर्वा ( दृसनिजनि० उ० १.३। अनेन सनेर्ञुण् प्रत्ययः। अथवा षोऽन्तकर्मणि इत्यस्माद्बाहुलकान्नुः ) १.१०.२॥ [सानौ] विभक्ते जगति १.१४६.२। ऊर्ध्वे देशे ७.४३.३॥ [सानवि] आकाशप्रदेशे ४.४५.१॥ पर्वतस्य शिखरे ६.४८.५॥

सानु—समुच्छ्रितं भवति। नि० २। २४॥

**सानुकः** सानुगादिः २.२३.७॥

**सानुषक्** सानुकूलता १.१७६.५॥

**सान्तपनः** सम्यक् शत्रून् तापयति यः तस्यायम् १७.८५॥ [सान्तपनाः] सन्तपने भवाः, शत्रूणां सन्तापकराः ७.५६.६॥ [सान्तपनेभ्यः] सम्यक् तपनं ब्रह्मचर्याद्याचरणं येषां तेभ्यः २४.१६॥

**साप्तम्** सप्तविधम् २.१६.७ ॥ [ **साप्तानि** ] सप्तवर्गाज्ज्ञातानि ब्रह्मचारिगृहस्थवानप्रस्थसंन्यासिनां यानि विशिष्टानि कर्माणि, पूर्वोक्तस्य यज्ञस्यानुष्ठानं, विद्वत्सत्कारसंगतिकरणे दानमर्थात्सर्वोपकरणाय विद्यादानमिति सप्त १.२०.७ ॥

**साप्यम्** कर्मान्तकारिणम् ६.२०.६ ॥

**साम** स्यन्ति खण्डयन्ति दुःखानि येन तत् ( अत्र सर्वधातुभ्यो मनिनिति करणकारके मनिन् ) १.६२.२ । सामवेदम् १.१६४.२४ । सिद्धान्तितं कर्म ४.५.३ ॥ [ **सामनी** ] सामवेदस्य पूर्वोत्तरावयवौ द्वौ १०.१४ ॥ [ **सामानि** ] सामवेदमन्त्रगानानि १८.६७ । सामवेदस्थ क्रिया आदि २०.१२ । सामवेदप्रतिपादितविज्ञानानि ५.४४.१५ । सामविभागाः ५.४४.१४ ॥ [ **साम्ना** ] संधिना १६.६४ ॥ [ **साम्नन्** ] सामनि अन्ते कर्मणि २२.२ ॥

सामन्—संम्मितमृचास्यतेर्वा ऋचां समम्मेन इति नैदानाः नि० ७ । १२ ॥

साम—( देवाः सोमं ) साम्ना समानयन् । तत्साम्नः सामत्वम् । तै० २ । २ । ८ । ७ ॥ स ( प्रजापतिः ) हैवं षोडशधा ऽऽत्मानं विकृत्य सार्धं समैत् । तद्यत्सार्धं समैत् तत्साम्नस्सामत्वम् । जै० उ० १ । ४१ । ७ ॥ तद्यत् समेत्य साम प्राजनयतां तत्साम्नस्सामत्वम् । जै० उ० १ । ५१ । २ ॥ ता वा एता देवता अमावस्यां रात्रिं संयन्ति । चन्द्रमा अमावस्यां रात्रिमादित्यम्प्रविशत्यादित्यो ऽग्निम् । तद्यत्संयन्ति तस्मात्साम । जै० उ० १ । ३३ । ६, ७ ॥ समा उ ह वा अस्मिꣳश्छन्दाꣳसि साम्यादिति तत्साम्नः सामत्वम् । सा० १ । १ । ५ ॥ तद्यदेष ( आदित्यः ) सर्वैर्लोकैस्समस्तस्मादेष ( आदित्यः ) एव साम । जै० उ० १ । १२ । ५ ॥ ( तमेतम्पुरुषं ) सामेत छन्दोगाः ( उपासते ), एतस्मिन् हीदꣳ सर्वं समानम् । श० १० । ५ । २ । २० ॥ यो वै भवति यः श्रेष्ठतामश्नुते स सामन्भवत्यसामन्य इति हि निन्दन्ति । ऐ० ३ । २३ ॥ तद्यत्सा चाऽमश्च तत्सामाऽभवत् तत्साम्नस्सामत्वम् । जै० उ० १ । ५३ । ५ ॥ साम वा असौ ( द्यु- )लोकः । ऋगयम् ( भूलोक ) । तां० ४ । ३ । ५ ॥ सूर्यात्सामवेदः ( अजायत ) । श० ११ । ५ । ८ । ३ ॥ ( आदित्यस्य ) अर्चिः सामानि । श० ११ । ५ । ८ । ३ ॥ तस्माद्वायुर्वै साम । जै० उ० ३ । १ । १२ ॥ अग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषीत्येवमादिं कृत्वा सामवेदमधीयते । गो० पू० १ । २९ ॥ साम वै सहस्रवर्त्तनि ( सहस्रवर्त्मा सामवेदः—इति पातञ्जलमहाभाष्यस्य अ० १ पा० १ प्रथमाह्निके ) । प० १ । ४ ॥ साम वाऽ ऋचःपतिः । श० ८ । १ । ३ । ५ ॥ ऋचि साम गीयते । श० ८ । १ । ३ । ३ ॥ एतावद्वाव साम यावान् स्वरः । ऋग्वा एषर्ते स्वराद्भवतीति । जै० उ० १ । २१ । ६ ॥ सर्वेषां वाऽ एष वेदानाꣳ रसो यत्साम् । श० १२ । ८ । ३ । २३ ॥ गो० उ० ५ । ७ ॥ साम हि नाष्ट्राणाꣳ रक्षसामपहन्ता । श० ४ । ४ । ५ । ६ ॥ सोमाहुतयो ह वाऽ एता देवानाम् यत्सामानि । श० ११ । ५ । ६ । ६ ॥ तस्मादाहुः सामैवान्नमिति । सा० १ । १ । ३ ॥ सो ( प्रजापतिः ) ऽब्रवीदेकं वावेदमन्नाद्यमसृक्षि सामैव । जै० उ० १ । ११ । ३ ॥ साम देवानामन्नम् । तां० ६ । ४ । १३ ॥ क्षत्रं वै साम । श० १२ । ८ । ३ । २३ ॥ उ० ५ ॥ साम्राज्यं वै साम । श० १२ । ८ । ३ । २३ ॥ सामवेद एव यशः गो० पू० ५ । १५ ॥ तदाहुस्संवत्सर एव सामेति । जै० उ० १ । ३५ । १ ॥ सर्वं तेजः सामरूप्यꣳ ह । शश्वत् तै० ३ । १२ । ६ । २ ॥ साम हि सत्याशीः । तां० ११ । १० । १० ॥ तयो ( सदसतोः ) यत् सत् तत्साम तन्मनस्स प्राणः । जै० उ० १ । ५३ । २ ॥ मनो वाव साम्नश्श्रीः । जै० उ० १ । ३६ । २ ॥ श्रोत्रं वाव साम्नश्श्रुतिः । जै० उ० १ । ३६ । ६ ॥ चक्षुर्वाव साम्नोऽपचितिः । जै० उ० १ । ३६ । ५ ॥ सामवेदो ब्राह्मणानां प्रसूतिः । तै० ३ । १२ । ६ । २ ॥

**सामगा इव** यः सामानि गायति तद्वत् २.४३.१ ॥

**सामनाम्** प्रशस्तानि सामानि विद्यन्ते यस्यां ताम् ३.३०.६ ॥

**सामभृतम्** यो सामवेदं दधाति ७.३३.१४ ॥

**सामविप्रम्** सामसु मेधाविनम् ५.५४.१४ ॥

**सामिधेनीः** सम्यगिध्यन्ते याभिस्ताः १६.२०॥

सामिधेनी—( ऋक् ) एता हि वाऽइदꣳसर्वꣳ समिन्धतऽएताभिरिदꣳसर्वꣳसमिद्धं तस्मात्सामिधेन्यो नाम। श० ११।२।७।६॥ वज्रो वै सामिधेन्यः। कौ० ३।२, ३॥७।२॥

**साम्राज्यम्** सम्यक् ये राजानो प्रकाशन्ते ते सम्राजो राजानः तेषां भावः कर्म वा ४.२४. ॥ [ **साम्राज्येन** ] यः समग्राया भूमेर्मध्ये सम्यग्राजते स सम्राट् तस्य भावेन सार्वभौमत्वेन १८.३७। सम्यग्राजमानस्य प्रकाशितेन राष्ट्रेण ७.४६.२ ॥ [ **साम्राज्याय** ] यद्राष्ट्रं सर्वत्र भूगोले सम्यक् राजते प्रकाशते तस्य भावाय १.२५.१०। चक्रवर्तिनो भावाय १.१४१.१३। भूगोले चक्रवर्तिराज्यकरणाय २०.२ ॥

साम्राज्य—अवरꣳहि राज्यं परꣳसाम्राज्यम्। श० ५।१।१।१३॥ साम्राज्यं वै स्वर्गो लोकः। तां० ४।६।२४॥

**सायकम्** शस्त्रविशेषम् १.३२.३। स्यन्ति क्षयन्ति येन तम् १.८४.११ ॥

सायक—वज्रनाम। निघ० २।२०॥

**सायम्** सन्ध्यासमयः ५.७७.२ ॥

सायं प्रातः—सन्ध्या और प्रातःकाल अर्थात् सब समय में ३।३।७॥ ( १७४ विधि )

**सारघम्** यदारघ्यते स्वाद्यते तदारघं समानं च तदारघं च तत् १६.६१। सुस्वादयुक्तम् १६.६५ ॥ [ **सारघस्य** ] सरघाभिः मधुमक्षिकाभिर्निर्मितस्य ३८.६ ॥

**सारथिः** रथप्राजकः १.१५८.६। नियन्ता ६.५७.६ ॥

**सारम्** दृढभागमिव ३.५३.१६ ॥

**सारमेय** साराणां निर्मातः ७.५५.२। सार वस्तुओं से मान करने योग्य ७.५५.३ ॥

**सारय** (प्र)सारय २७.४५ ॥

**सारस्वतः** सरस्वत्या वाण्या अयं सम्बन्धी १८.२० ॥ [ **सारस्वतौ** ] सरस्वत्यां वेदवाचि कुशलावुपदेशकावुपदेष्ट्रौ १३.३५ ॥ [ **सारस्वतम्** ] सारस्वत्या वेदवाण्या इदम् १६.८ ॥ [ **सारस्वतेभिः** ] सरस्वत्यां भवैः ३.४.८ ॥

**सारस्वती** सरस्वती देवता यस्याः सा २४.१। वाग्गुणा २६.५६ ॥

**सार्ज्जयः** यो विविधान् न्याययुक्तान् व्यवहारान् सृजति तस्यापत्यम् ६.४७.२५ ॥

**साळ्हा(ढा)** सहनकर्ता ७.५६.२३ ॥

**सावित्रः** सविता सकलजगदुत्पादकः परमेश्वरो देवता यस्य सः ८.७। सवितुः सूर्यस्यायं प्रभावः १८.२०। सवितृदेवताकः २४.३५ ॥ [ **सावित्रौ** ] सवितृगुणौ २६.५६ ॥

सावित्रः—( अग्निः ) स यदेते देवते अन्तरेण तत्सर्वꣳसीव्यति। तस्मात् सावित्रः। तै० ३।

१०। ११। ७॥ एषँ वाव स सावित्रः य एष (सूर्य्यः) तपति। तै० ३। १०। ६। १५॥

**साविषत्** सवेत् ६.५। (अत्र सिब्बहुलमिति सिपि वृद्धिः)। उत्पादयेत् १.१६४.२६। सुवतु १८.३०॥

साविषत्—सुनोतु। नि० ११। ४३॥

**सावीः** सुनु २.२८.६। सव, उत्पादयेत्यर्थः (अत्र लोडर्थे लुङडभावश्च) ८.६॥

**साशनानशने** अशनेन भोजनेन सह वर्तमानं साशनं, न विद्यते अशनं यस्य तदनशनं, साशनञ्चानशनञ्च प्राण्यप्राणिनौ ३१.४॥

**सासहः** अतिशयेन सोढा १५.३६॥

**सासहिम्** अतिशयेन सोढारम् ११.७६॥

**सासह्वान्** भृशं सहमानः ३६.७॥

**साहदेव्यः** ये देवैः सह वर्तन्ते तत्र भवेषु साधुः ४.१५.७॥ [**साहदेव्यम्**] विद्वत्सहचरम् ४.१५.१०॥

**साहस्रः** सहस्रमसंख्याताः पदार्था विद्या वा विद्यन्ते यस्य सः १५.६५॥ [**साहस्रम्**] सहस्रस्यासंख्यातानां सुखानामयं साधकस्तम् १३.४६॥ [**साहस्रस्य**] सहस्राणामसंख्यातानामिदमधिकरणं जगत्तस्य १७.७१॥

साहस्रः—साहस्रो वाऽ एष शतधार उत्सो यदग्निः। श० ७। ५। २। ३४॥ साहस्रः—होता हि साहस्रः। श० ४। ५। ८। १२॥ साहस्राः पशवः। कौ० २१। ५॥

**साहस्रीम्** असंख्यातां बहुफलप्रदाम् १३.४४॥

साहस्री—(गौः) वाग्वाऽएषा निदानेन यत्साहस्री तस्या एतत् सहस्रं वाचः प्रजातम्। श० ४। ५। ८। ४॥

**साहि** कर्मसमाप्तिं कुरु ४.११.२॥

**सिंहः** [**सिंहः**] यो हिनस्ति पश्वादीन् सः १४.६। हिंसको व्याघ्रः २४.४०॥

**सिंही** हिनस्ति दोषान् यया यद्वा सिंचत्युच्चारयति यया वाचा सा (हिंसेः सिंह इति हयवरडिति सूत्र व्याख्याने महाभाष्यकारोक्तिः, सिचेः संज्ञायां हनुमौ कश्च उ० ५। ६२। अनेन कःप्रत्ययो हकारादेशो नुमागमश्च। अत्र सर्वत्र गौराद्याकृतिगणान्तर्गतत्वान्ङीष्,) अविद्याविनाशिका, दुष्टशीलविनाशिनी वा ५.१०। अविद्याहन्त्री, क्रूरत्वादिदोषनाशिका, बलेन जाड्यत्वविनाशिनी, चोरदस्य्वन्यायप्रलयकारिणी, सर्वदुःखप्रणाशिका वा ५.१२॥

**सिंह्यम्** सिंहेषु भवं बलमिव ७.१८.१७॥

**सिकता** बड़ी वालू १८.१३॥

सिकता—आद्यन्तविपर्य्ययो भवति। नि० २।१॥ द्वे हि सिकते शुक्ला च कृष्णा च। श० ७। ३। १। ४३॥ अग्नेरेतद्वैश्वानरस्य रेतो यत्सिकताः। श० ७। १। १। १०॥ रेतः सिकताः। श० ७। १। १ ११॥ सिकता वा अपां पुरीषम्। श० ७। ५। २। ५६॥

**सिकत्याय** सिकतासु साधवे १६.४३॥

**सिक्तम्** संयुक्तम् १.१३०.२॥ [**सिक्ता**] सिक्तानि वीर्याण्युदकानि वा ६.७०.३॥

**सिचम्** सिञ्चनम् ३.५३.२॥

**सिचामहे** सिञ्चेम २.१६.७ ॥

**सिचौ** वृष्टिद्वारा सेचकौ वाय्वग्नी १.६५.७ ॥

**सिच्यते** सिच्यते ४.४६.२। सर्वतःसाध्यते १६.१५ ॥

**सिञ्च** सिञ्चति ५.८३.८। संयोजय १.३०.१ ॥

**सिञ्चत्** सिञ्चति ४.४३.६ ॥

**सिञ्चत** सिञ्चत (अत्रान्येषामपीति दीर्घः) २.१४.१ ॥

**सिञ्चतम्** सींचो ४.५७.५। सिञ्चतः (अत्र व्यत्ययः) ६.७०.२ ॥

**सिञ्चध्वम्** सिञ्चध्वम् ७.१६.११ ॥

**सिञ्चन्** सिंचन् १.१२१.६ ॥

**सिञ्चन्ति** सिञ्चन्ति, सेवयन्ति, पिबन्ति वा २०.२८ ॥

**सिञ्चस्व** सिंचस्व ३.४७.१ ॥

**सिञ्चामि** सुगन्धितरसेन मार्ज्मि ६.३०। अधिकरोमि १०.१७। मार्जनेन स्वीकरोमि, सर्वथा स्वीकरोमि, अभिषिञ्चामि वा २०.३ ॥

**सितम्** शुद्धधर्मम् १.११२.५ ॥

सित—सितोत वर्णनाम। नि० ६। २६ ॥

**सिताम्** शब्दार्थविज्ञानसम्बन्धिनीम् ४.१२.६॥

**सिध्मः** सेधति प्राप्नोति विजयं येन गुणेन सः (अत्र षिधु गत्याम् इत्यस्मादौणादिको मक् प्रत्ययः) १.३३.१३ ॥ [**सिध्माः**] मंगलकारिणः २४.१० ॥

**सिध्मलम्** सिध्माः सुखसाधका विद्यन्ते यस्य तम् ३०.१७ ॥

**सिध्यति** निष्पद्यते १.१८.७ ॥

**सिध्रम्** मंगलकरम् १.१४२.८। शीघ्रताम् १.१७३.११। शास्त्रबोधप्रकाशनिमित्तम् २.४१.२०। साधकम् ५.१३.२ ॥

सिध्र—साधनं नि० ६। ३८ ॥

**सिध्रया** मंगलया ५.४४.६ ॥

**सिनम्** बन्धनम् २.३०.२। अन्नादिकम् ३.६२.१ ॥

**सिनीवाली** प्रेमास्पदप्रवणा २.३२.८। या सिनीः प्रेमबद्धाः कन्या वलयति सा ११.५५ ॥ [**सिनीवालि**] सिनी प्रेमबद्धा वलकारिणी च तत्सम्बुद्धौ ३४.१० ॥

सिनीवाली—सिनमन्नं भवति सिनाति भूतानि वालं पर्व वृणोतेः, तस्मिन्नन्नवती, वालिनी वा, वालेनेवास्यामणुत्वाच्चन्द्रमाः सेवितव्यो भवतीति वा। नि० ११। ३१ ॥

सिनीवाली—या पूर्वाऽमावास्या सा सिनीवाली। ऐ० ७। ११॥ वाग्वै सिनीवाली। श० ६। ५। १।६॥ या गौः सा सिनीवाली सो एव जगती। ऐ० ३। ४८ ॥ या सिनीवाली सा जगती। ऐ० ३। ४७ ॥ योषा वै सिनीवाली। श० ६। ५। १। १० ॥

**सिन्धुः** समुद्रः १.६५.३। विस्तीर्णा नदी १.६२.१२। अन्तरिक्षस्थो जलसमूहः १.६८.३। सप्तविधः समुद्रः ३४.३०॥ [**सिन्धवः**] समुद्रनदीवत् कठिनावगाहाः शत्रवः १.६१.११। प्रवाहरूपाः १.१४३.३ ॥ [**सिन्धुम्**] स्यन्दते प्रस्रवति सुखानि समुद्र इव गम्भीरस्तम् १.११.६ ॥ [**सिन्धुमिव**] यथा समुद्रं तथा १.६७.८ ॥

[ सिन्धून् ] भूमौ महाजलाशयसमुद्रनदीकूपतडागस्थान् चतुरोऽन्तरिक्षे निकटमध्यदूरदेशस्थाँस्त्रींश्चेति सप्तजलाशयान् १.३२.१२। भौमसमुद्रमारभ्य मेघादूर्ध्वावयवपर्यन्तान् सागरान् ३४.२४ ॥ [ सिन्धूनाम् ] समुद्रादीनाम् १।४६।८ नदीनां समुद्राणां वा ७.५.२॥ [ सिन्धौ ] नद्याः समीपे १.१२६.१ ॥

सिन्धु—नदीनाम् । निघ० १।१६॥ सिन्धुः स्रवणाद् । नि० ५।२७॥ स्यन्दमानानाम्। नि० १०।५॥

सिन्धवः ( ऋ० २।१२।१२ ) तद्यदेतैरिदं सर्वं सितं तस्मात्सिन्धवः। जै० उ० १।२६।६॥

**सिन्धुमाता** सिन्धूनां नदीनां परिमाणकर्त्री ७.३६.६ ॥ [ सिन्धुमातरा ] सिन्धूनां समुद्राणां नदीनां वा मातरौ यद्वा सिन्धवो मातरो ययोः १.४६.२ ॥

**सिन्धुवाहसा** यौ सिन्धुं वहतः प्रापयतस्तौ ५.७५.२ ॥

**सिमः** व्यवस्थया शत्रूणां बन्धकः १.१०२.६। सर्वो मनुष्यः १.१४५.२ ॥ [ सिमाः ] प्रेमबद्धाः २३.४२ ॥ [ सिमस्मात् ] सर्वस्माज्जगतः १.६५.७ ॥

सिम—सर्वस्मात्। नि० ४।११॥

सिमाः—( शाक्करं साम, महानाम्न्यः ) ( इन्द्रो वृत्रस्य ) सीमानमभिनत्तत्सिमा। तां० १३।४।१॥ ता ऊर्ध्वाः सीम्नोऽभ्यसृजत यदूर्ध्वाः सीम्नोऽभ्यसृजत तत्सिमा अभवंस्तत्सिमानां सिमात्वम्। ऐ० ५।७॥ मह्यो हि सिमाः। तां० १३।५।३॥

**सिरासु** बन्धनरूपासु नाडीषु १.१२१.११ ॥

**सिलिकमध्यमासः** सिलिकानां मध्ये भवाः १.१६३.१०। सिलिकः संलग्नो मध्यदेशी येषां ते २६.२१ ॥

**सिषक्ति** [ सिषक्ति ] समेति सेवते वा १.३८.८। समवैति १.६६.१। सिञ्चति ४.२१.७॥

**सिषक्तु** [ सिषक्तु ] संबध्नातु ५.४१.१५ परिचरतु ५.४१,२०। अतिशयेन सचतु ( अत्र सचधातोर्बहुलं छन्दसीति शपः श्लुः ) १.१८.२। सुखैः संयोजयतु ७.३७.८। संयोजयतु ३.२६ ॥

सिसक्त—द्विश उत्तरनाम। निघ० ३।२६॥ सेवतां। नि० ३।२१॥

**सिषासति** सनितुं विभक्तुमिच्छति ७.३२.२०॥

**सिषासन्** ताडयितुं दण्डयितुमिच्छन् १.१३०.३। इच्छन् ५.३१.१। कर्मसमाप्तिं कर्तुमिच्छन् ६.७३.३ ॥ [ सिषासन्तः ] संभक्तुमिच्छन्तः १.१४६.४। विभजन्तः ५.६२.६। सेवितुमिच्छन्तः २६.१८॥ [ सिषासतः ] संभक्तुमिवाचरतः २.३२.१॥

**सिषासन्ती** दातुमिच्छन्ती १.१२३.४ ॥ [ सिषासन्तीषु ] सनितुं संभक्तुमिच्छन्तीषु [ जनसन० अ. ६।१।४।४२ अनेनानुनासिकस्याकारादेशः ) १.१७.८ ॥

**सिषासवः** सनितुं सम्भक्तुमिच्छवः १.१०२.६ ॥

**सिषिचतुः** सिञ्चेताम् ७.३३.१३ ॥

**सिषिचुः** सिञ्चन्ति २.२४.४ ॥

सिसिचुः—सिञ्चन्ति। नि० १०।१३॥

**सिषिचे** सिञ्चति ३.३२.१५ ॥

**सिषेध** निवारयति १.३२.१३ ॥

**सिष्वदत्** स्वादूकरोति १.१८८.१० ॥

**सिष्वप्** स्वपन् ६.२०.१३ ॥

**सिष्वप** स्वापय ६.२६.६ ॥

**सिष्वपः** स्वापय (अत्र वा छन्दसीति सम्प्रसारणनिषेधः) १.१२१.११ ॥

**सिष्विदानः** स्नेहयुक्तः ४.२.६ ॥

**सिसक्ति** समवैति १.७३.८ ॥

**सिसर्ति** गच्छति २.३८.२ ॥

सिसर्ति—गतिकर्मा । निघ० २ । १४ ॥

**सिसर्षि** गमयसि [अत्र बहुलं छन्दसीत्यभ्यासस्येत्त्वम्] ३.३२.५ ॥

**सिसृतम्** प्राप्नुतम् २१.६ ॥

**सिस्रतः** गन्तारः ५.५४.१० ॥

**सिस्रते** सरन्ति प्राप्नुवन्ति ४.२२.६ । सरन्ति गच्छन्ति ५.१.१ । प्रापयन्ति (अत्र सृधातोर्लटि शपः श्लुर्व्यत्ययेनात्मनेपदमन्तर्गतो ण्यर्थश्च) १५.२४ ॥

**सीक्षन्त** सम्बध्नन्ति ७.६०.११ ॥

**सीक्षन्तः** सोढुमिच्छन्तः ६.१४.३ ॥

**सीचापूः** पक्षिविशेषान् २४.२५ ॥

**सीता** सायन्ति क्षेत्रस्थलोष्ठान् क्षयन्ति यया सा काष्ठपट्टिका १२.७० ॥ [सीताम्] भूमिकर्षिकाम् ४.५७.७ ॥

सीता—वीजाय वाऽ एषा योनिष्क्रियते यत्सीता श० ७ । २ । २ । ५ ॥ प्राणा वै सीताः । श० ७ । २ । ३ । ३ ॥

**सीद** [सीद] निवस ४.३.२ । सादयति (अत्र लडर्थेलोडन्तर्गतो ण्यर्थो व्यत्ययश्च) प्रापयति, सीदति गमयति, प्राप्नोति वा २.६ । प्रापयसि प्रापयति वा ४.६६ । प्राप्नुहि १०.२६ । अवस्थितो भव ११.३५ । तिष्ठ १२.१५ । स्थिरा भव १३.२४ । आस्व १३.३० । वर्तस्व १४.४॥

**सीदः** सीद ६.५.३ ॥

**सीदत्** [सीदत्] निषीदति ७.३०.३ । सीद ५.११.२ ॥

**सीदत** [सीदत] शिल्पविद्यायां तिष्ठत १.५.१ । वर्तध्वम् १.२२.८ । प्राप्नुत २.३.४ । उपाध्वम् २.४१.१३ । देशान्तरं गच्छत १.८५.६ । आध्वम् ७.३४ । प्राप्त होओ १०.४ । अवस्थिता भवत १५.५४ । स्थित होओ १७.७३ । तिष्ठत १८.६१ ॥

**सीदतम्** भवेताम् (अत्र पुरुषव्यत्ययः) १३.२५ । विजानीताम् १४.६ । तिष्ठेताम् १४.२७ । गच्छतम् १.४७.८ । वसतम् ३.६२.१८ ॥

**सीदताम्** [सीदताम्] स्थिरौ स्याताम् १.१८८.६ । प्राप्नुतः १.१४२.७ ॥

**सीदति** सीदति ४.६.३ ॥

**सीदतु** स्थिर होवे ६.१६.४१ । समासताम् १.२६.४ ॥

**सीदन्** [सीदन्] गच्छन्नागच्छन् निमज्जन्नुन्मज्जन् वा १.६५.५ । प्राप्त होता हुआ ६.१६.३५ । तिष्ठन् ७.३४.१६ । स्थित होते हैं १.६५.१ । तिष्ठन्ति १.७२.५ ॥

सीदन्तु [सीदन्तु] सादयन्तु (अत्रान्तर्गतो ण्यर्थः) १.१३.६। प्राप्नुवन्तु १.१४२.६। आसताम् ५.२६.६॥

सीदसि अवस्थितोऽसि १.१४.११॥

सीदस्व दोषान् हिन्धि १.३६.६। अध्यापने आस्व ११.३७। सम्यगास्व ३८.१७॥

सीम् सुखप्राप्तिः (सीमिति पदनामसु० निघ. ४।२ अनेन प्राप्त्यर्थो गृह्यते) १.३३.६। सर्वतः (प्रसीमादित्योऽसृजत्। प्रासृजत् सर्वत इति वा निरु. १।७) इति, सीमव्ययं सर्वार्थे गृह्यते १.३६.१। सेनाम् १.६१.११। प्राप्तव्यमहोरात्रव्यवहारम् १.६५.२। धर्मन्यायमर्यादापरिग्रहे १.१००.१४। मर्यादाम् १.११६.२०। खलु १.११७.१६। निश्चये १.११७.१६। सीमायाम् १.१२२.६। आदित्यः २.३६.१। परिग्रहे ३.५६.१। आदित्यप्रकाश इव ५.४७.२॥

सीम्—परिग्रहार्थीयो वा पदपूरणो वा। नि० १।७॥

सीमतः सीमातो मर्यादातः १३.३॥

सीमन्—मर्यादा, विसीव्यति देशाविति। नि० १।७॥

सीमहि बन्धयामः (अत्र बहुलं छन्दसीति श्नोर्लुक् वर्णव्यत्ययेन दीर्घश्च) १.२५.३॥

सीरम् कृषिसाधकं हलादिकम् १८.७॥

सीरम्—सेरु॰ हैतद्यत्सीरमिरामेवास्मिन्नेतद्दधाति। श० ७।२।२।२॥

सीराः नाडीः १.१७४.६। याः सरन्ति ता नद्यः ४.१६.८॥

सीरा—नदीनाम। निघ० ४।१६।८॥

सीव्यतु सूत्राणि सन्तानयतु २.३२.४॥

सीव्यन् रचयन् २.१७.४॥

सीषधाति साधयेत् २५.४६। साध्नुयात् ३४.४२। प्रसाधयति ६.४६.८॥

सीषधाति—प्रसाधयतु। नि० ५।१२।१८॥

सीषधाम साधयेम २५.४६॥

सीषपन्त शपथान् कुरुत ७.४३.४॥

सीषधः [सीषधः] साधय ६.५६.५॥

सीसम् 'सीसा' इति भाषायाम् १८.१३॥ [सीसेन] सीसकधातुपात्रेणेव १६.८०। धनुर्विशेषेण २१.३६॥

सीसा प्रेमबन्धिकाः (अत्र षिञ् बन्धन इत्यस्मादौणादिकः क्सः प्रत्ययोऽन्येषामपीति दीर्घः) २३.३७॥

सीसम्—एतदयो न हिरण्य यत्सीसम्। श० ५।१।२।१४॥

सु श्रैष्ठ्ये ४.१४। शोभार्थे क्रियायोगे च १.१२.११। सर्वथा १.३८.६॥

सु—अभिपूजितार्थे। नि० १।३॥

सुकपर्दा सुकेशी ११.५६॥

सुकर्मणा सुष्ठु धर्म्यया क्रियया २०.७५॥

सुकर्मा शोभनानि कर्माणि यस्य सः ४.३३.६॥

सुकीर्तिः अतिप्रशंसनीयः १.६०.३। पुण्यप्रशंसः १.१८६.३॥ [सुकीर्तिम्] शोभनकीर्तिम् २.२८.१॥

सुकीर्त्तिः—देवयोनिर्वै सुकीर्त्तिः। ऐ० ६। २६॥

**सुकुरीरा** शोभनानि कुरीराण्यलंकृतानि आभूषणानि यया सा ११.५६ ॥

**सुकृत्** यः शोभनं धर्म्यं कर्म करोति ३.५४.१२। यः सुष्ठु सत्यं कर्म करोति सः ४.२५.५॥

**सुकृतः** सुष्ठूत्पादितः ६.१६.१ ॥ शोभनं कृतं क्रियते येन सः ७.३६ ॥ [सुकृतम्] सुष्ठु निष्पन्नम् १.८५.६। धर्म्यं कर्म १.१२५.३। धर्माचरणेन प्राप्यम् ११.२२। सुष्ठु कर्माणि क्रियन्ते यस्मिन् १६.६७॥ [सुकृताम्] पुण्यात्माओं के ६.५.१ (२३० विधि)

सुकृत—तस्य सूर्यस्य ये रश्मयस्ते सुकृतः। श० १।६।३।१०॥

**सुकृत्तरः** योऽतिशयेन शोभनानि करोति सः १.३१.४। अतिशयेन सुष्ठु करोति यः सः १.१५६.५॥

**सुकृत्या** शोभनेन धर्म्येण कर्मणा ४.३५.७॥ [सुकृत्यया] श्रेष्ठेन कर्मणा १.२०.८। शोभनानि कृत्यानि कर्माणि यस्यां तया १.८३.४॥

**सुकेतवः** सुष्ठु केतुः प्रज्ञा येषां ते ३.७.१०॥

**सुक्रतुः** शोभनाः क्रतवः कर्माणि प्रज्ञा वा यस्य सः १.२५.१०॥ [सुक्रतुया] शोभनः क्रतुः प्रज्ञा कर्म वा यस्मात्तेन (अत्र सुपां सुलुगिति यादेशः) १.३१.३॥ [सुक्रतुयया] सुष्ठु प्रज्ञया कर्मणा वा १.१६०.४॥

सुक्रतु—सुकर्माणः नि० ८।७॥

**सुक्षत्रः** सुष्ठु सुखी क्षत्रं राष्ट्रं यस्य सः ३.५६.४। शोभनं क्षत्रं धनं यस्य सः २१.२२। [सुक्षत्रासः] शोभनं क्षत्रमन्तरिक्षस्थं राज्यं येषां ते १.१६.५॥ [सुक्षत्रम्] शोभनं राज्यम् १.११६.१६॥ [सुक्षत्र] शोभनं क्षत्रं क्षत्रियकुलं धनं वा यस्य तत्सम्बुद्धौ (क्षत्रमिति धननाम निघ० २.१०) ५.३२.५। शोभनं क्षत्रं द्रव्यं वा यस्य तत्सम्बुद्धौ ५.३८.१॥

**सुक्षितयः** श्रेष्ठमनुष्याः प्रजाः १२.११६॥ [सुक्षितिम्] शोभना क्षितिर्भूमिर्यस्मिन् व्यवहारे तम् १.४०.८। शोभनाः क्षितयो राज्ये यस्य यस्माद्वा तम् १.६१.२१। शोभनां पृथिवीं सुनिवासं वा ६.२.११। शोभना क्षितिः पृथिवी राज्यं यस्य तम् (क्षितिरिति पृथिविनाम। निघं० १.१) ३४.२०। [सुक्षितये] शोभनायाः पृथिव्याः प्राप्त्यै ७.५६.२४॥

सुक्षिति—(यजु० ३७।१०) अयं वै (पृथिवी-) लोकः सुक्षितिरस्मिन्हि लोके सर्वाणि भूतानि क्षियन्ति। श० १४।१।२।२४॥ अथोऽअग्निर्वै सुक्षितिरग्निर्ह्येवास्मिँल्लोके सर्वाणि भूतानि क्षियति। श० १४।१।२।२४॥

**सुक्षिती** शोभनाः क्षितयः पृथिव्यो मनुष्या वा यासु ताः ५.६.८॥

**सुक्षेत्रा** शोभनानि क्षेत्राणि १.१२२.६॥

**सुक्षेत्रिया** शोभनं क्षेत्रं वपनाधिकरणं यया नीत्या तया (अत्रेयाडियाजीकाराणा-

मितीयाडादेशः ) १.६७.२ ॥

**सुक्ष्मा** शोभना चासौ क्ष्मेयं पृथिवी च सा, (क्ष्मेति पृथिवीनामसु० निघं० १.१)१.२७॥

**सुखः** शोभनानि खान्यवकाशा विद्यन्ते यस्मिन्त्सः १.१२०.११ ॥ [ **सुखम्** ] शोभनं खं विस्तृतमन्तरिक्षं स्थित्यर्थं यस्मिँस्तम् १.२०.३ । आनन्दकारकम् १.४६.२ । सहितं खेभ्यः ३.३५.४ ॥

सुख—उदकनाम निघ० १ । १२॥ सुखं कस्मात्? सुहितं खेभ्यः, खं पुनः खवतेः । नि० ३१ । १३ ॥

**सुखरथम्** सुखाय रथः सुखरथस्तम् ५.३०.१ ॥

**सुखादयः** सुष्ठु खादयो भोजनादीनि येषां ते १.८७.६ ॥ [ **सुखादये** ] यः सुष्ठु खादति तस्मै ५.८७.१ ॥

**सुखादितान्** अन्यायेन परपदार्थानां भोक्तॄन् ११.७८ ॥

**सुगः** सुखेन गच्छति यस्मिन्त्सः १.४१.४ । सुष्ठु गच्छन्ति यस्मिन् सः २.२७.६ ॥ [ **सुगम्** ] सुखं गम्यं यस्मिन् तम् ( अत्र बहुलमिति करणे डः ) १.४३.६ । विद्यां गच्छन्ति प्राप्नुवन्ति यस्मिन्कर्मणि तत् १.६४.६ । सुखेन गच्छन्त्यस्मिन् मार्गे तम् १.६४.११ ॥ [ **सुगेषु** ] सुगमेषु व्यवहारेषु६.२१.१२ ॥

सुग—सुगान्-सुगमनान् नि० ६ । २ ॥—स्वागमनानि नि० १२ । ४२ ॥

**सुगन्धिम्** [ **सुगन्धिम्** ] सुविस्तृतपुण्यकीर्तिम् ७.५६.१२ । सुष्ठु गन्धो यस्मिँस्तम्, शोभनः शुद्धो गन्धो यस्मात्तम् ( अत्र गन्धस्येदुत्पूतिसुसुरभिभ्यः ५.४.१३५ इति सूत्रेण समासान्त इकारादेशः)३.६०॥

**सुगभस्तिः** शोभना गभस्तयः किरणा यस्य सूर्यस्य सः ५.४३.४ ॥ [ **सुगभस्तिम्** ] सुष्ठु प्रकाशम् ६.४६.६ ॥

**सुगवः** शोभना गावो यस्य सः १.११६.२५ ॥

**सुगव्यम्** सुष्ठु गोषु भवानि यस्मिँस्तत् १.१६२.२२ । सुष्ठु गोभ्यो हितम् २५.४५ ॥

**सुगाः** सुष्ठु गच्छन्ति ताः १.१६५.८ ॥

**सुगातुया** शोभना गातुः पृथिवी यस्यां तया ( अत्र याजादेशः ) १.६७.२ ॥

**सुगार्हपत्याः** शोभनो गार्हपत्योऽग्न्यादिपदार्थसमुदायो यासां ताः ५.४.२ ॥

**सुगुः** शोभना गावो यस्य सः १.१२५.२ ॥ [ **सुगू** ] उत्तम चालचलन से धर्मयुक्त व्यवहार में अच्छे प्रकार चलने हारे अथर्व० १४.२.४३ । ( १७१ विधि )

**सुगृहपतिः** शोभनश्चासौ गृहस्य पालकश्च सः, शोभनानां गृहाणां पतिः पालयिता वा २.२७ ॥

**सुगोपाः** सुष्ठु रक्षकाः २.२३.५ । यथावत्प्रजापालकाः ५.३८.५ । सुष्ठु गवां धेनूनां पृथिव्यादीनां च रक्षकाः ६.५१.११ ॥

**सुगोपातमः** अतिशयेन सुष्ठु स्वस्यान्येषां च रक्षकः १.८६.१ । शोभनधर्मेण गां पृथिवीं वाचं वा पाति सोऽतिशयितः ८.३१ ॥

**सुग्म्यः** सुगेषु सुखाधिकरणेषु साधुः १.१७३.४॥ [ **सुग्म्यम्** ] सुखेषु भवमानन्दम् (सुग्म्य-

मिति सुखनाम निघ० २।६ ) १. ४८.१३ ॥

सुम्न्य—सुखनाम। निघ० २।६॥

सुग्रथितम् सुष्ठु निबद्धम् १.१२१.१० ॥

सुचक्रे शोभनं करोति ६.३७.३ ॥

सुचरिते यस्मिन् शोभनानि चरितानि धर्म्ये व्यवहारे तस्मिन् ४.२८ ॥

सुचेतसः सुष्ठु विज्ञानाः ४.३६.२॥ [सुचेतसम्] शुद्धान्तःकरणम् ७.६०.६ ॥

सुचेतुना सुष्ठु विज्ञानेन सह १.७६.६। सुष्ठु चेतयित्रा, सुष्ठु विज्ञात्रा वा १.१२७.११॥

सुजन्मनी [सुजन्मनी] शोभनं जन्म ययोस्ते १.१६०.१ ॥

सुजातः सुष्ठु प्रसिद्धः ११.४०॥[सुजाताः] सुष्ठु धर्म्येण व्यवहारेण प्रसिद्धाः ५.५७.५। शोभनेषु व्यवहारेषु प्रसिद्धाः ६.५६.६। सुष्ठु विद्यासु प्रसिद्धाः ७.१.१५। शोभनेषु सद्विद्याग्रहणाख्यकर्मसु प्रादुर्भूताः १.११८.१०। विद्याक्रियासु कौशले सुष्ठु प्रसिद्धाः १.७२.३। सुष्ठु पुरुषार्थेन प्रसिद्धाः २.२.११ ॥ [सुजातम्] सुष्ठु प्रसिद्धं सुखम् ७.५६.२१ ॥ [सुजाते] सुष्ठुरीत्योत्पन्ने ५.७६.१। सत्कीर्त्या प्रकाशिते १.१२३.३ ॥

सुजाता सम्यक् प्रसिद्धा ५.५६.६ ॥

सुजिह्वः शोभना जिह्वा यस्य सः ३.५४.११ ॥ [सुजिह्वा] शोभनाः पूर्वोक्ताः सप्त जिह्वा ययोस्तौ १.१३.८॥ [सुजिह्वाः] सत्यवाचः १.१६६.११॥ [सुजिह्व] सुष्ठु जोहूयन्ते धार्यन्ते यया जिह्वया शक्त्या तत्सहित, सुष्ठु हूयन्ते जिह्वायां ज्वालायां यस्य सोऽग्निर्वा १.१४.७। शोभना जिह्वा मधुरभाषिणी यस्य तत्सम्बुद्धौ १.१४२.४॥

सुजुष्टा सुष्ठु सेविता ६.६१.१० ॥

सुजूर्णिः सुष्ठु शीघ्रकारिणी ४.६.३ ॥

सुज्योतिः विद्याप्रकाशम् ३७.३१। शोभनं विद्यादिसद्गुणप्रकाशम्, धर्मादिसद्गुणप्रकाशम् वा ३८.१६॥ [सुज्योतिषः] शोभनानि ज्योतींषि प्रज्ञाप्रकाशा येषां ते ३.२०.१॥

सुतः निष्पादितः १.४७.१। प्राप्तः ३.४४.१। पुत्रः २.३६.५। प्रेरितः २०.५५ ॥ [सुताः] अभिषेकक्रियाजाताः २१.४२। आभिमुख्यतया पदार्थविद्यासारनिष्पादिताः (अत्र बाहुलकात् कर्तृकारके औणादिकः क्तः प्रत्ययः) १.३.३। उत्पन्ना मूर्तिमन्तः पदार्थाः १.३.४। निस्सारिताः १.१६८.३। सुविचारेणाभिसंस्कृताः ३.४०.४॥ [सुतासः] विद्यासुशिक्षाभ्यां निष्पन्नाः ३३.७०। ऐश्वर्यवन्तः ३३.७८॥ [सुतम्] यत् सोमादिकं ग्रहीतुं विज्ञानं प्रकाशयितुं चाभीष्टं वस्तु १.३.७। अन्तःकरणाभिगतं विज्ञानम् १.३.८। औषध्यादिरसम् १.१६.५। क्रियया निष्पादितं व्यवहारम् १.२१.४। विद्याजन्यमैश्वर्यवन्तं पुत्रं विद्यार्थिनं वा ३.१२.१। उत्पन्नं संसारम ३.१२.२। सुसंस्कृतम् ३.

४०.५ । सिद्धम् ३.५१.६ । निष्पन्नं दुग्ध-मुदकं वा ४.३५.७ ॥ [सुतानाम्] (त्वया) उत्पादितान् पदार्थान् १.२.५ । सुसंस्कारेण निष्पादितानामन्नादीनाम् ७.३८ ॥ [सुते] उत्पादिते होमशिल्पादिव्यवहारे १.१६.४ । निष्पन्ने राज्ये ३.६०.४ । उत्पन्ने जगति ५.३०.३ । उत्पन्न सोमलता के रस में ५.५१.११ ॥ [सुतेषु] उत्पन्नेषु जातेषु विज्ञानबलेषु ७.२६.३ ॥

सुत—सोमेषु । नि० ५ । २२ ॥

**सुतक्रे** सुष्ठुप्रसन्न ६.३१.४ ॥

**सुतपाः** सुतं पाति रक्षति सः १.१५५.२ । सुष्ठुधर्मात्मा रागद्वेषरहितः ४.२५.७ । सुष्ठुतपस्वी ६.२४.१ । यः सुतान् पदार्थान् पाति ६.२३.६ ॥

**सुतपावन्** यः सुतान् निष्पन्नान् पदार्थान् पुनाति ६.२४.६ ॥ [सुतपाव्ने] सुतानामाभिमुख्येनोत्पादितानां पदार्थानां पावा रक्षको जीवस्तस्मै (अत्र आतो मनिन् क्वनिब्वनिपश्च इति वनिप्प्रत्ययः) १.५.५ ॥

**सुतपेयाय** निष्पन्नरसपातव्याय ४.४४.३ ॥

**सुतम्भरः** य उत्पन्नं जगद्बिभर्ति सः ५.४४.१३ ॥

**सुतरणान्** सुखं तरणं येषां तान् ४.१६.६ ॥

**सुतराः** सुष्ठु तरन्ति यासु ताः ६.६०.११ ॥

**सुतवान्** प्रशस्तोत्पन्नपदार्थयुक्तः १.८४.६ ॥ [सुतवतः] प्राप्तपदार्थविद्यान् १.३.५ । ऐश्वर्ययुक्तस्य ३.२५.४ । निष्पन्नैश्वर्यकोशस्य ३.५८.६ ॥

**सुतष्टः** उत्तमेन शिल्पिना निर्मितः ७.३४.१ ॥ [सुतष्टम्] सुष्ठु सुखस्य निर्वर्तकम् २.३५.२ ॥

**सुतसोमः** सुतः सोम ऐश्वर्यं येन १.१६७.६ । सुतो निष्पन्नः सोम ऐश्वर्यं यस्मात्सः ३.३२.१२ ॥ [सुतसोमाः] सुता उत्पादिताः सोमा ओषध्यादिरसाः विद्यार्थं यैस्ते १.२.२ ॥ [सुतसोमम्] निष्पादितपदार्थविद्यम् ५.३१.१२ ॥

**सुतावतः** निष्पादितवतः २०.८८ ॥

**सुतासुतौ** प्रेरिताप्रेरितौ धर्माधर्मौ १६.७८ ॥ [सुतासुताभ्याम्] निष्पादितानिष्पादिताभ्याम् १६.६५ ॥

**सुतीर्था** शोभनानि तीर्थानि दुःखतारकान्याचार्यब्रह्मचर्यसत्यभाषणादीनि येषां तान् ४.२६.३ ॥

**सुतीर्था** शोभनानि तीर्थानि वेदाध्ययनधर्माचरणादीनि आचरितानि यया सा ४.११ ॥

**सुतुकः** सुष्ठुविद्यावृद्धः १.१४६.५ ॥ [सुतुकान्] शोभनानि तुकान्यपत्यानि येषां तान् ७.१८.६ ॥

**सुतुकाः** सुष्ठु आदातारः १.१७८.२ ॥

**सुतुका** सुष्ठुवर्धकानि ६.२२.१० ॥

सुतुक—सुतुकाः, सुप्रजाः । नि० ४ । १८ ॥

**सुतेगृभम्** उत्पन्ने जगति गृहीतम् ५.४४.५ ॥

**सुत्याम्** सुन्वन्ति यया क्रियया तस्याम् ५.७ ॥

सुत्याः—अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशिमांस्ततः । वाजपेयो ऽतिरात्रश्चाप्तोर्यामात्र सप्तम इत्येते सुत्याः । गो० पू० ५ । २३ ॥

**सुत्रात्रः** यः सुष्ठु रक्षकान् रक्षति सः ६.६८.७॥ [ **सुत्रात्रा** ] यः सुष्ठु त्रायते तेन ५. ७०.३॥

**सुत्रामा** यः सुष्ठु त्रायते रोगाच्छरीरं सः १६. ८५। सुष्ठुरक्षकः २०.५१॥ [ **सुत्रामाणम्** ] शोभनानि त्रामाणि रक्षणादीनि यस्यास्तम् २१.६। सुष्ठुरक्षकम् २१.४१॥

**सुदंसाः** शोभनानि दंसानि कर्माणि यस्मिन् सः १.६२.७॥

**सुदक्षः** सुष्ठुविज्ञानः १.६१.२। सुष्ठु दक्षो बलं यस्मात्सः २.६.१॥ [ **सुदक्षम्** ] उत्तम बलचातुर्यम् ६.११.८॥ [ **सुदक्षा** ] सुष्ठु चतुरौ ३.५८.७॥

**सुदक्षिणम्** शोभना दक्षिणा यस्य तम् ७.३२.३॥

**सुदत्रः** सुष्ठु दत्राणि दानानि यस्मात्सः १. १६४.४६। सुष्ठु सुखं ददातीति सः २. २४। सुदानः ८.१४। सुष्ठु ज्ञानकर्ता ८.१६॥ [ **सुदत्र** ] सुष्ठुदातः ७.८.३॥

सुदत्र—कल्याणदानः। नि० ६। १४॥

**सुदर्शतरः** सुष्ठु द्रष्टुं योग्यः सुदर्शोऽतिशयेन सुदर्शः पूर्णकलश्चन्द्र इव १.१२७.५॥

**सुदानुः** सुष्ठु दाता ३.२६.७॥ [ **सुदानवः** ] उत्तमविद्यादिशुभगुणदानाः ५.५३.६। सुष्ठु दानहेतवः ( दात्राभ्यां नुः उ० ३. ३१ इति सूत्रेण नुः प्रत्ययः ) १.१५.२। शोभनं दानं येभ्यो मरुद्भ्यस्ते १.२३.६॥

सुदानवः—कल्याणदानाः। नि० ६। २४॥

**सुदामन्** सुष्ठु दातः ६.२०.७। सुनियमबद्ध ६.२४.४॥

**सुदासः** शोभनदानः ३.५३.११। उत्तमविद्यादानः ७.१८.२५। श्रेष्ठा दासाः सेवका दानानि वा यस्य सः ७.३२.१०॥ [ **सुदासे** ] शोभना दासा दानकर्तारो यस्मिन् देशे तस्मिन् १.६३.७। सुष्ठु दाने १.११२.१६। सुष्ठु दातव्ये व्यवहारे ७.१८.५॥

**सुदास्तराय** अतिशयेन सुष्ठु प्रदात्रे १.१८४.१॥

**सुदिनत्वम्** उत्तमदिनस्य भावम् २.२१.६॥

**सुदिनम्** शोभनञ्च तद्दिनञ्च तत् १८.६॥ [ **सुदिना** ] शोभनानि दिनानि येषु तानि ७.११.२। सुखयुक्तानि दिनानि ७. १८.२१॥

सुदिन—सुखनाम। निघ० ३। ६॥

**सुदिनाः** शोभनानि दिनानि याभ्यस्ताः १. १२४.६॥

**सुदीतयः** शोभना दीतिर्विद्यादीप्तिर्येषां ते १. १५६.४। प्रशंसितप्रकाशाः ५.४६.६॥ [ **सुदीतिम्** ] सुष्ठु दीतिः क्षयो यस्मात्तम् ३.२.१३। सुरक्षकम् ३.१७.४॥ [ **सुदीतिभिः** ] सुष्ठुदानैः ५.८.४॥ [ **सुदीती** ] उत्तमया दीप्त्या ७.१.२१॥

**सुदीदितिम्** विद्याविनयप्रकाशयुक्तम् ( दीदयति इति ज्वलतिकर्मा निघं० १.१६ ) ३.६.१॥

**सुदुघा** सुष्ठु प्रपूरिका २.३५.७। सुष्ठु कामस्य प्रपूरिका ५.६०.५। सुष्ठु सुखेन दुह्यत इति ( दुहः कप् घश्चेति कर्मणि कप् ) १६.८६॥ [ **सुदुघाः** ] सुष्ठु कामानामलंकर्तारः ४.१.१३। सुष्ठु दोग्धुमर्हाः ५.३१.८॥ [ **सुदुघामिव** ] यथा कश्चि-

न्मनुष्यो बहुदुग्धदात्र्या गोः पयो दुग्ध्वा स्वाभीष्टं प्रपूरयति तथा ( दुहः कप् घश्च अ० ३.२.७० इति सुपूर्वाद्दुहधातोः कप् प्रत्ययो घादेशश्च ) १.४.१ ॥

सुदुघाम्—सुदोहनाम् । नि० ११ । ४३ ॥

**सुदृशः** सुष्ठु द्रष्टव्यस्य ४.२३.६ । ये सुष्ठु पश्यन्ति ५.३.४ ॥ [ **सुदृशम्** ] सम्यक् द्रष्टुं योग्यं दर्शकम्वा ३.१७.४ । योगाभ्यासेन द्रष्टुं योग्यं सुष्ठु दर्शकम्वा ६.१५.१० ॥

**सुदृशी** सुष्ठु दर्शनं यस्याः सा १.१२२.२ ॥

**सुदृशीकः** दर्शनीयो दर्शयिता वा ५.४.२ ॥

**सुदृशीकरूपः** सुष्ठु दर्शनीयस्वरूपः ४.५.१५॥

**सुदेवः** शुभैर्गुणकर्मस्वभावैर्देदीप्यमानः १.८४.१८ । शोभनश्चासौ विद्वान् ५.५३.१५ ॥ [ **सुदेवम्** ] शोभनश्चासौ देवो दिव्यगुणो दाता च तम् १.७४.५। शोभन विद्वांसम् २१.४८ ॥

सुदेव—कल्याणदेवः कमनीयदेवो वा । नि० ५ । २७ ॥

**सुदेव्यम्** सुष्ठु देवेषु विद्वत्सु भवं विज्ञानम् १.११२.१६ ॥

**सुदोघे** कामानां सुष्ठु प्रपूरिके ( अत्र वर्णव्यत्ययेन हस्य घः ) ३.१५.६ ॥

**सुद्युतः** अभितः प्रकाशमानस्य १.१४३.३ ॥

**सुद्योत** शोभना द्युतिर्यस्य तत्सम्बुद्धौ १.१४०.१॥

**सुद्युम्नाम्** शोभनप्रकाशयुक्ताम् ३.१६.१ ॥

**सुद्योत्मा** सुष्ठु प्रकाशः १.१४१.१२ ॥ [ **सुद्योत्मानम्** ] सुष्ठु देदीप्यमानम् २.४.२ ॥

**सुद्रवम्** यः सुष्ठु द्रवति गच्छति धावति तम् ७.३२.२० ॥

**सुद्रविणः** शोभनानि द्रविणांसि यस्मात्तत्सम्बुद्धौ १.९४.१५ ॥

**सुधनौ** धर्मेण जातश्रेष्ठधनौ ५.३४.८ ॥

**सुधन्वा** शोभनं धनुर्यस्य सः ५.४२.११ ॥

**सुधर्म** शोभनो धर्मो यस्य तत्सम्बुद्धौ ३८.१४॥

**सुधातु** शोभना धातवो यस्मिन्गृहे तत् ७.६०.११ ॥

**सुधातुदक्षिणम्** शोभना धातवो दक्षिणा यस्य दातुस्तम् ७.४६ ॥

**सुधातुम्** शोभना धातवः शरीरस्था मनआदयः स्वर्णादयो वा यस्य तम् १.१२॥

**सुधाराः** शोभना धारा यासां ताः ७.३६.६ ॥

**सुधितः** सुष्ठु धृतः ३.२३.१ । सुष्ठु हितो हितकारी ४.६.७ । सुहितस्तृप्तः ( अत्र सुधित वसु० इति सूत्रेण हस्य धः ) ४.५०.८ ॥ [ **सुधितम्** ] सुष्ठु प्रसन्नम् ५.३.२ । सुष्ठु स्थितम् ६.१५.२ ॥

**सुधुरः** शोभना धूर्यस्य सः ३.३८.१। शोभना धुरो धारणानि येषां ते १.७३.१० ॥

**सुधृष्टमम्** सुष्ठु सकलं जगद्धारयति सोऽतिशयितस्तम् १.१८.६ ॥

**सुधृष्टमे** सुष्ठु अतिशयेन प्रसोढृयौ १.१६०.२॥

**सुध्यः** शोभना धीर्येषां ते ( अत्र छन्दस्युभयथा अ. ६।४।४०। अनेन पाक्षिको यणादेशः ) १.५१.१४ ॥

**सुनवत्** निष्पादयेत् ४.२४.७ ॥

**सुनवाम** पूजयाम १.६६.१। निष्पादयेम १.१०३.६।

**सुनावम्** शोभनां सुनिर्मितां नावम् २१.७ ॥

**सुनिधा** शोभने निधाने ( अत्रङेकारादेशः ) ३.२६.१२ ॥

**सुनिरजम्** सुखेन नितरां क्षेप्तुं योग्यम् १.१०.७ ॥

**सुनिर्मथा** शोभनेन मन्थनेन ३.२६.१२ ॥

**सुनिष्काः** शोभनानि निष्काणि स्वर्णमयान्याभूषणानि येषां ते ४.३७.४ ॥

**सुनीतिः** शोभना नीतिर्न्यायो यस्य सः ६.४७.७ ॥ [ **सुनीतिभिः** ] सुष्ठु धर्मैर्न्यायमार्गैः २.२३.४ ॥ [ **सुनीती** ] शोभनेन न्यायेन ६.४५.१ ॥

**सुनीथः** सुष्ठु नीथाः पदार्थप्राप्तयो यस्मात्सः ( हनिकुषि. उ. २।२ अनेन णीञ् प्रापणे धातोः क्थन्प्रत्ययः ) १.३५.७। शोभनं नीथो नयनं प्रापणं यस्य सः १.३५.१०। यः सुष्ठु नयति सः २.८.२ ॥ [**सुनीथाः**] सुष्ठु संगताः ३.८.८। शोभनो नीथो न्यायो येषां ते ६.५१.११। [**सुनीथासः**] सुनीतिप्रदाः ५.६७.४ ॥ [ **सुनीथाय** ] सुखानां सुष्ठु प्रापणाय १.६२.१३ ॥ [ **सुनीथे** ] शोभने न्याये ५.७६.२ ॥

सुनीथ—प्रशस्यनाम। निघ० ३। ८ ॥

**सुनु** सिद्ध कर १.२८.६ ॥

**सुनुध्वम्** निष्पादयत ४.३५.४ ॥

**सुनोत** [ **सुनोत** ] निष्पादयत ( अत्र संहितायामिति दीर्घः ) ७.३२.८। अभिषवं कुरुत ३.३०.७ ॥

**सुनोतन** उत्पन्न करो ५.३४.१ ॥

**सुनोति** [ **सुनोति** ] निष्पादयति १.१०६.४। पिबति ५.३४.३ ॥

**सुन्वन्** निष्पादयन् १.१३३.७ ॥ [ **सुन्वन्तम्** ] यज्ञं कुर्वन्तन् २.३०.७ ॥ [ **सुन्वते** ] सर्वविद्यासिद्धान्तं निष्पादयते ७.२१। शिल्पविद्यानिष्पादकाय १.५१.१३। सुखानामभिषवित्रे १.८१.२। ऐश्वर्यमिच्छुकाय प्राप्ताय वा १.८३.३। ऐश्वर्योत्पादकाय १.१४१.१०। अभिषवं कुर्वते २.१२.१५। सोमौषध्यादिसिद्धिसम्पादकाय ६.१६.४। सारनिष्पादकाय ६.३१.४ ॥ [ **सुन्वतः** ] अभि गतधर्मविद्यस्य मनुष्यस्य १.४.१०। सुखाभिषवकर्तुः १.६४.८ ॥

**सुन्वन्** सुनुयुः ११.५६ ॥

**सुन्वन्ति** निष्पादयन्ति ३४.१८ ॥

**सुन्वानः** निष्पादयन्, अभिषवान् कुर्वन् वा १.१३३.७ ॥ [ **सुन्वानाय** ] अभिषवं कुर्वते १.१३३.७।

**सुन्विरे** सुन्वन्त्युत्पादयन्ति ७.३२.४ ॥

**सुन्वे** खींचता हूँ ७.२६.१ ॥

**सुपत्नी** शोभनः पतिर्ययोस्ते ६.३.७॥ [**सुपत्नीः**] शोभना भार्य्या इव ६.४४.२३ ॥

**सुपथा** यथा सुकृताः शोभनेन धर्ममार्गेण गच्छन्ति तथा ५.३६। योगमार्गेण ७.४३। शोभनश्चासौ पन्थाश्च सुपथस्तेन १.२५.१२। विद्याधर्मयुक्तेनाप्तमार्गेण १.४२.७। धर्म्येण सुगमेन सरलेन मार्गेण १.१८६.१। शोभनः पन्थाः येषु तानि ६.६४.१॥

**सुपथ्यम्** शोभनस्य पथो भावम् १८.११॥

**सुपदी** शोभनाः पादा यस्याः सा ३३.५६॥

**सुपप्तनी** शोभनं पतनं गमनं ययोस्तौ १.१८२.५॥

**सुपरिविष्टाः** तत्तत्सेवासम्मुख्य एव ६.१३॥

**सुपर्णः** शोभनानि पर्णानि लक्षणानि यस्य सः, शोभनपतनशीलो वा १२.४१। शोभनानि पर्णानि पालितान्यङ्गानि यस्य सः १३.१६। शोभनानि पर्णानि पालनानि यस्मात् सः १७.६०। शोभनानि पूरणानि शुभलक्षणानि यस्य सः १७.७२। शोभनः पतनः २४.३४। पक्षि-विशेषः २४.३७। शोभनपतनशीला रश्मयो यस्य सः १.३५.७। शोभनं पर्णं पतनं गमनं यस्य सः १.१०५.१॥ [सुपर्णा] शोभनानि पर्णानि गमनागमनादीनि कर्माणि वा ययोस्तौ १.१६४.२०॥ [सुपर्णाः] किरणाः (सुपर्णाः रश्मिनाम निघ० १.५.) १.७६.२। सूर्यस्य किरणाः १.१०५.११। शोभन-कर्माणो जीवाः १.१६४.२१। शोभन-पर्णाः सुष्ठुपालनकर्माणः १.१६४.२२॥ [सुपर्णम्] शोभनानि पर्णानि यस्य तं रथादिकम् २६.४८। सुष्ठु पालन-पूर्तिकरम् १८.५१। सुपर्णा रश्मयो विद्यन्ते यस्मिँस्तम् १.१६४.५२। [सुपर्णान्] शोभनपक्षान् पक्षिणः २४.२५॥

सुपर्ण—रश्मिनाम निघ० १।५॥ अश्वनाम निघ० १।१४॥ सुपतनानीन्द्रियाणि च नि० ३।१२॥ हरणा आदित्यरश्मयः नि० ७।२४॥ सुपर्ण—वयो (=पक्षी) वै सुपर्णः। कौ० १८।४॥ अथ ह वाऽ एष महासुपर्ण एव यत्संवत्सरः। तस्य यान्पुरस्ताद्विषुवतः षण्मासानुपयन्ति सो ऽन्यतरः पक्षो ऽथ यान्षडुपरिष्टात्सो ऽन्यतर आत्मा विषुवान्। श० १२।२।३।७॥ पुरुषः सुपर्णः। श० ७।४।२।५॥ प्रजापतिर्वै सुपर्णो गरुत्मान् (ऋ० १०।१४४।३) श० १०।२।२।४॥ वीर्यं वै सुपर्णो गरुत्मान्। श० ६।७।२।६॥

**सुपर्णचित्** यः शोभनानि पर्णानि पालनानि चिनोति सः २७.४५॥

**सुपाणिः** शोभनहस्तः ३.३३.६॥ [सुपाणिम्] शोभनौ धर्मकर्मकरौ पाणी श्रेष्ठो व्यवहारो वा यस्य तम् ६.४६.६।

सुपाणि—कल्याणपाणि०। निघ० २।२६॥

**सुपारः** सर्वकामानां सुष्ठु पूर्तिकरः १.४.१०। शोभनः पारो यस्मात्सः ६.४७.७। [सुपाराः] शोभनः पारः पालनादि-कर्म येषां ते ३.३६.८॥ [सुपारासः] शोभनो विद्यायाः पारो येषां ते ३.३६.८॥ [सुपारम्] सुखेन पारं गन्तुं योग्यम् ३.५०.३॥

**सुपारा** सुखेन पारः पूर्तिर्यस्याः सा १.१५२.७॥

**सुपिप्पलः** शोभनानि पिप्पलानि फलानि यस्य सः २१.५६ ॥

**सुपिप्पलाः** शोभनानि पिप्पलानि फलानि यासां ताः ११.३८ ॥

**सुपिशः** सुष्ठु पिशन्ति अवयुवन्ति ये ते १.६४.८ ॥

**सुपुत्रा** शोभनाः पुत्राः यस्याः सा ३.४.११ ॥

**सुपूतम्** सुष्ठु पवित्रम् ४.५७.२ ॥

**सुपूर्णस्य** सुष्ठ्वलंजातस्य ६.४८.१८ ॥

**सुपूर्णा** या सुष्ठु पूर्यते सा ३.४६ ॥

**सुपृक्तः** शोभनं पृक्तोऽन्तं यस्य सः ७.३७.७ ॥

**सुपेशसा** शोभनं सुखदं पेशो रूपं ययोस्ते १.१३.७ । शोभनं पेशो रूपं हिरण्यं वा यस्मिन् तेन ( पेश इति रूपनाम निघ० ३.७ । हिरण्यनाम च निघ० १.२ ) १.४७.२ । सुरूपे ( अत्र सर्वत्र विभक्तेराकारादेशः ) १.१४२.७। प्रशंसास्वरूपे कार्यकारणे १.१८८.६ । शोभनं पेशः सुवर्णं रूपं वा ययोस्ते ६.७०.१ । सुरूपौ २०.६१.७४ । सुष्ठु पेशो रूपं ययोस्तावध्यापकोपदेशकौ ( विभक्तेरात्वम् ) २१.१७ । सुखरूपे स्त्रियौ २१.३५ । सुन्दरस्वरूपवन्तौ विद्वांसावध्यापकौ २८.२६ । शोभनं पेशो रूपं ययोस्ते ३४.४५ । [ सुपेशसः ] सुरूपा दीप्तयः २.३२.५ । सुष्ठु पेशो रूपं सुवर्णं वा येषां ते ५.५७.४ ॥ [ सुपेशसम् ] शोभनं पेशो रूपं यस्मात्तत् १.४८.१३ । सुन्दरस्वरूपम् १.४६.२ । शोभनानि पेशांसि रूपाणि यस्मात्तम् १.६३.६ । सुन्दरं रूपम् २.३४.१३ । अतीव सुन्दररूपम् ५.३०.१३ । सुरूपम् ७.३२.१३ ॥

**सुपोषः** श्रेष्ठाः पोषाः पुष्टयो यस्य सः ३.३७ ॥ [ सुपोषाः ] अनुत्तमपुष्टयः ८.५३ ॥

**सुप्तस्य** शयानस्य ३४.१ ॥

**सुप्रकेतम्** सुष्ठु प्रकृतः केतः प्रज्ञा यस्य तमध्यापकम् ४.५०.२ ॥

**सुप्रकेतुभिः** शोभना प्रकृष्टः केतुर्विज्ञानं येषां तैः १.१७१.६ ॥

**सुप्रचेतसः** शोभनं प्रगतं चेतो विज्ञानं येषां ते १.१५६.४ ॥

**सुप्रजाः** शोभना सुशिक्षासद्विद्यासहिता प्रजा यस्य सः ३.३७ । प्रशस्तसंतानः ८.५३ ॥

**सुप्रजावतीम्** सुष्ठु प्रजा विद्यन्ते यस्यां ताम् १.१११.२ ॥

**सुप्रजावनिः** यया शोभना प्रजा वनति सम्भजति सा ५.१२ ॥

**सुप्रजास्त्वाय** शोभनाः सन्तानाद्यश्चक्रवर्ति राज्यं च प्रजा यस्मात्तस्य भावस्तस्मै ३.६३ ॥

**सुप्रणीतिः** शोभना प्रशस्ता नीतिर्यस्य सः १.७३.१ । सुष्ठु प्रगता नीतिर्येन सः ४.२.१३ ॥ [ सुप्रणीती ] सुष्ठु प्रगता नीतिर्याभ्यां तौ ५.४२.१८ ॥ [ सुप्रणीते ] सुष्ठु प्रकृष्टा नीतिर्यस्मात्तत्सम्बुद्धौ ३.१.

१६। शोभना प्रकृष्टा नीतिर्न्यायो यस्य तत्सम्बुद्धौ ३.१५.४ ॥

सुप्रतिचक्षम् सुष्ठु प्रतिचष्टे पश्यत्यनेका विद्या येन तम् ७.१.२ ॥

सुप्रतिष्ठानः सुष्ठु प्रतिष्ठानं प्रतिष्ठा यस्य सः ८.८ ॥

सुप्रतीकः शोभनानि प्रतीकानि लक्षणानि यस्य सः १२.३१ । सुष्ठु प्रतीकं प्रतीतिकरं ज्ञानं यस्य सः १७.५३। प्राप्तशुभगुणः १७.७३। सुष्ठु प्रतीतिकारकः १.६४.७ ॥ [ सुप्रतीकम् ] शोभनानि प्रतीकानि कृतानि येन तम् ६.१५.१३ । शोभनानि प्रतीकानि प्रतीतिकराणि द्वारादीनि यस्मिँस्तत् ६.२८.६ । सुष्ठु प्रत्येति येन तम् ७.१०.३ । सुष्ठु रूपादिप्रतीतिकरम् ७.६१.१ । शोभना प्रीतिर्यस्य तम् ११.२२ । सुष्ठु प्रतियन्ति सुखानि यस्मात्तम् ११.२८ ॥ [ सुप्रतीके ] सुष्ठु प्रतीतिविषये १.१८५.६ । सुष्ठु प्रतीतिकरे ५.५.६ ॥

सुप्रतीका शोभनानि प्रतीकानि यस्याः सा १.६२.६ ॥

सुप्रतीची सुष्ठु प्रत्यक् पश्चिमः कालो यस्यां सा ४.१६ ॥

सुप्रतूर्तिम् सुष्ठु प्रकृष्टा तूर्तिस्त्वरिता प्राप्तिर्यया ताम् १.४०.४ । सुष्ठु प्रकृष्टा तूर्तिस्त्वरिता शीघ्रता यस्मिँस्तम ३.६.१ ॥ [ सुप्रतूर्तौ ] अतितूर्णगती १.१८५.७ ॥

सुप्रपाणम् सुष्ठु प्रकर्षेण पिबन्ति यस्मिन् स जलाशयः ५.८३.८ ॥ [ सुप्रपाणे ] सुन्दरे जलपानस्थाने ६.२८.७ ॥

सुप्रयाः यः सर्वान् सुष्ठु प्रीणाति सः ७.३६.२॥ सुष्ठु प्रयः प्रगमनमस्य सः ३३.४४ ॥ [ सुप्रयसम् ] सुष्ठु कमनीयम् २.२.१ । सुष्ठु प्रयत्नवन्तम् ११.४ ॥ [ सुप्रयसा ] सुष्ठु प्रयत्नेन ४.४१.३ ॥ [ सुप्रयसः ] शोभानि प्रयांसि प्रीतान्यन्नादीनि यस्मात्तस्य २७.१५ ॥

सुप्रयावभिः ये सुष्ठु प्रयान्ति तैः ५.४४.१२ ॥

सुप्रवाचनाः सुष्ठु प्रवाचनमध्यापनमुपदेशनञ्च येषां ते १.१०६.३ ॥

सुप्राङ् यः सुष्ठु पृच्छति सः १.१६२.२ ॥

सुप्राची शोभना प्राक् पूर्वः कालो यस्यां सः ४.१६ ॥

सुप्रायणाः शोभनानि प्रकृष्टान्ययनानि यासु ताः २८.५ । सुष्ठु प्रायणं प्रकर्षेण गमनं यासु ताः २८.२८। सुखेन गमनाधिकरणाः २६.५ । सुष्ठु प्रकृष्टं भवनं गृहं यासु ताः २६.३०। सुष्ठु प्रायणं गमनं यासां ताः २.३.५ । सुष्ठु प्रकृष्टमयनं गमनं याभ्यस्ताः ५.५.५ ॥

सुप्रायणतमम् सुप्रयान्ति यस्मिँस्तदतिशयितम् ६.६३.३ ॥

सुप्रावीः सुष्ठु प्रजारक्षाकर्ता १.८३.१ । सुष्ठु रक्षकः २.२६.१। सुष्ठु शुभगुणप्राप्तः ४.२५.६ ॥

सुप्राव्यः सुष्ठु प्रकाशेन रक्षितुं योग्यः २.१३.

६ ॥ [सुप्राव्यम्] सुष्ठु प्रावितुं चलितुमर्हम् १.६०.१ ॥ [सुप्राव्ये] सुष्ठु प्रकृष्टमवितुं प्रवेशितुं योग्यस्तस्मिन् (अत्र वा च्छन्दसि सर्वे० इति वृद्धिनिरोधः) १.३४.४ ॥

**सुप्रीतः** सुष्ठु प्रसन्नः ५.२१.२ ॥ [सुप्रीताः] सुप्रसन्नाः ७.१५ ॥ [सुप्रीतम्] सुष्ठु प्रीतिनिबद्धम् ८.२६ ॥

**सुप्रीते** सुष्ठु प्रीतिर्याभ्यां ते २८.१४ ॥

**सुप्रैतुः** सुष्ठु विद्योपेतस्य १.१६१.६ ॥

**सुप्वा** यः सुष्ठुतया पुनाति पवित्रहेतुर्वा तेन १.३॥

**सुफला** शोभनानि फलानि यस्यां सा ४.५७.६ ॥

**सुबंधुः** शोभनो भ्राता ३.१.३ । शोभना बन्धवो भ्रातरः सखायो वा यस्य सः ६.५८.४ ॥

**सुबर्हिः** सुशोभनं बर्हिरन्तरिक्षं यस्मात्सः २१.१५ ॥ [सुबर्हिषम्] शोभनानि बर्हींष्यन्तरिक्षोदकविज्ञानानि यस्य तम् १.७४.५ ॥

**सुबाहुः** शोभनभुजः ११.६३ ॥

**सुबाहुः** शोभनौ वाहू यस्याः सा २.३२.७ ॥

**सुब्रह्मा** शोभनानि ब्रह्माणि धनान्नानि यस्य सः यद्वा सुष्ठु चतुर्वेदवित् ७.१६.२ ॥

**सुभगः** शोभनो भगो धनमैश्वर्यं वा यस्य १.८६.७ ॥

**सुभगत्वम्** अत्युत्तमैश्वर्यम् २.२१.६ ॥

**सुभगा** शोभना भगा ऐश्वर्याणि यस्याः सा १.४८.७ । सुष्ठु ऐश्वर्यपुत्रपौत्रादिसौभाग्यसहिता १.८६.३ । सौभाग्यकारिणी १.६२.१२ । उत्तमैश्वर्यप्रापिका २.३२.४ ॥ [सुभगाः] सुष्ठ्वैश्वर्यप्रदाः २६.५ ॥ [सुभगाम्] सौभाग्ययुक्ताम् ३.३३.३ ॥

**सुभगा** सुष्ठ्वैश्वर्य्यप्रदानि ३.१.१३ ॥

**सुभद्राम्** १०.१०.१४ । कल्याणभद्राम् नि० ११.३४ ॥

**सुभद्रिकाम्** सुष्ठु कल्याणकारिकाम् २३.१८ ॥

**सुभरः** यः शोभनं भरति सः २.३.६ ॥ [सुभराः] ये सुष्ठु भरन्ति पुष्णन्ति वा ते १.११२.२ ॥ [सुभरम्] सुखेन भर्तुं योग्यम् २.३.४ ॥

**सुभराम्** सुष्ठु बिभ्रति सुखानि यया ताम् १.११२.२० ॥

**सुभव** भवतीति भवः, शोभनश्चासौ भवश्च सुभवः तत्सम्बुद्धौ ७.३ । सुष्ठ्वैश्वर्य ७.६ ॥

**सुभागाः** शोभनो भागो भजनं यासां ताः १.१६७.७ ॥

**सुभु** यत्सुष्ठु संस्कारैर्भाव्यते तत् २.३५.७ ॥

**सुभूः** यः सुष्ठु भवतीति सः २३.६३ ॥ [सुभ्वः] ये जनाः सुष्ठु सुखं भावयन्ति ते १.५२.१ । सुष्ठु भवन्ति दृष्टयो येभ्यस्ते ४.१७.२ । ये शोभनेषु कर्मसु भवन्ति ते ५.४१.१३ । ये शोभना भवन्ति ते ५.५५.३ ॥

**सुभूताय** सुष्ठु सत्याय व्यवहाराय ७.२१ ॥

**सुभृतः** शोभनं कर्म भृतं येन सः २.१.१२ ॥ [सुभृतम्] सुष्ठु धृतम् ४.५०.७ ॥ सुष्ठु धारितम् ८.२६ ॥

**सुभोजसम्** सुष्ठु भोजांसि भोजनानि यस्मात्तम् २७.२७ ॥

**सुमखाः** शोभनन्यायाचरणयज्ञानुष्ठातारः ५.८७.७ ॥ [ सुमखासः ] शोभनाः शिल्पसम्बन्धिनः संग्रामा यज्ञा येषां ते १.८५.४ ॥ [ सुमखाय ] शोभनाय चेष्टासाध्याय यज्ञाय १.६४.१ । उत्तमयज्ञानुष्ठात्रे १.१६५.११ । सुष्ठु यज्ञसम्पादकाय ४.३.७ ॥ [ सुमखस्य ] सुखके १.१८१.४ ॥

सुमख—सुमहद् बलम् । नि० ११ । ६ ॥

**सुमङ्गलः** शोभनानि कल्याणकराणि कर्माणि यस्य सः १६.६ । सुमंगलशब्दः २.४२.१ । सुमंगलोपदेशकः २.४२.२ । [ सुमङ्गल ] प्रशस्तमंगलानुष्ठातः २०.४ ॥

सुमङ्गल—कल्याणमङ्गलः, मङ्गलं गिरते गृणात्यर्थे गिरत्यनर्थानिति वा । अङ्गलमङ्गवत्, मज्जयति पापकमिति नैरुक्ताः । मां गच्छतु इति वा । नि० ६ । ४ ॥

**सुमङ्गलीः** शोभनानि मंगलानि यासु ताः १.११२.१३ ॥

**सुमज्जानये** सुष्ठु प्राप्तविद्याय प्रसिद्धाय १.१५६.२ ।

**सुमत्** सुष्ठु माद्यन्ति हृष्यन्ति यस्मिँस्तत् १.१४२.७ । यः सुष्ठु मन्यते जानाति सः १.१६२.७ । स्वयमेव ५.२.४ ॥

सुमत्—स्वयं । नि० ६ । २२ ॥

**सुमतिः** शोभना चासौ मतिर्विज्ञानं यस्य सः १.२४.६। [ सुमतीनाम् ] वेदादिशास्त्रे परोपकारे धर्म्माचरणे श्रेष्ठा मतिर्येषां मनुष्याणां तेषाम् ( मतय इति मनुष्यनामसु निघ० २।३ ) १.४.३ ॥

**सुमतिः** शोभना बुद्धिः १.८६.२ ॥ [ सुमती ] शोभनया प्रज्ञया ४.१.२ ॥ [ सुमत्या ] शोभना चासौ मतिर्विचारो यस्यां तया १.३१.१८ ॥

सुमति—कल्याणीं मतिम् । नि० २ । ११ ॥ कल्याण्यां मतौ । नि० १२ । ३४ ॥

**सुमत्त्वराणाम्** सुष्ठु मदां त्वरः संचलनं येषां तेषाम् २१.४३ । श्रेष्ठानन्दवर्धकराणाम् २१.४४ । सुष्ठु प्रमादनाशकानाम् २१.४५ ॥

**सुमतीवृधः** यः सुमतिं वर्धयति तस्य ( अत्र संहितायामिति दीर्घः ) २२.१२ ॥

**सुमदंशुः** शोभनो अंशुर्ज्वलनं यस्याः सा १.१००.१६ ॥

**सुमद्गणः** सुमतो गणा यस्य सः २.३६.३ । सुहर्षगणः २६.२४ ॥

**सुमद्रथः** सुमतां प्रशस्तज्ञानानां रथ इव रथो यस्मात्सः ३.३.६ ॥

**सुमनस्यमानः** सुष्ठु विचारयन् १५.२ ॥ [ सुमनस्यमानौ ] सुमनसौ सखायौ विद्वांसाविवाचरन्तौ १२. ५७ ॥ [ सुमनस्यमानाः ] सज्जनाः ३४.५२ ॥

**सुमनाः** शोभनं मनो विज्ञानं यस्य सः ३.४१ । सुहृद्भावः ६.२८ । प्रसन्नस्वान्तः १५.१ । सुखकारिमनाः १५.४६ ॥

**सुमन्तुनामा** सुष्ठु मन्तु मन्तव्यं ज्ञातव्यं नाम यस्य सः ६.१८.८ ॥ [ सुमंतुभिः ] शोभनविद्यायुक्तैः १.१२६.७ ॥

**सुमन्मभिः** सुष्ठु विचारैः ३.२.१२ । शोभनैर्विज्ञानैः ३३.८५ ॥

**सुमहः** अति महत् ४.११.२ । सुष्ठु महतो महाशयान् ६.५०.२ ॥

**सुमहान्** शुभैर्गुणकर्मभिः पूजनीयः ७.८.२ ॥

**सुमायाः** सुष्ठु माया प्रज्ञा येषां ते १.१६७.२॥

सुमाय—कल्याणकर्माणो वा कल्याणप्रज्ञा वा। नि० ५० । १४ ॥

**सुमिता** सुष्ठु कृतप्रमाणानि ५.४५.२ ॥

**सुमिती** शोभनया प्रज्ञया ( अत्र पूर्वसवर्णादेशः । माङ् मान इत्यस्मात् क्तिनि द्यतिस्यतिमास्थेति इत्वम् । धातूनामनेकार्थत्वात् ज्ञानार्थत्वम् ) ३.८.३ ॥

**सुमित्रः** शोभना सुष्ठुकारिणो मित्रा यतः सः १.६१.१२ ॥

**सुमित्रधः** यः शोभनानि मित्राणि दधाति सः ४.२७ ॥

**सुमित्रियाः** शोभनं मित्रमिव वर्तमानाः ३६.२३ ॥

**सुमीढे(ळ्हे)** सुष्ठु सेचनीये ६.६३.६ ॥

**सुमृ(ड)ळीकः** यः शोभनेन मृळयति सुखयति सः ( मृळः कीकच्किकनौ उ० ४।२५ इति कीकच् प्रत्ययः ) १.३५.१०॥ [ **सुमृडीकाय** ] सुसुखप्रदाय सुखस्वरूपाय ४.३.३॥

**सुमृडीकाम्** सुष्ठु मृडयन्ति सुखयन्ति यया ताम् ४.११ ॥

**सुमेकः** सुष्ठु प्रकाशमानः ४.६.३ ॥ [ **सुमेके** ] नियमे निक्षिप्ते १.११३.३ । सुष्ठुमेकः प्रक्षेपः ययोस्तौ १.१४६.३ । सुष्ठु प्रक्षिप्ते ३.६.१० । सुष्ठु एकीभूते ३.५७.४ । शोभने मया सृष्टे सुष्ठु क्षिप्ते ४.४२.३ । एकीभूते सम्बद्धे ४.५६.३ । सुखरूपे ६.६६.६ । सुस्वरूपे ७.५६.१७ ।

सुमेकः—सुमेकः संवत्सरः स्वेको ह वै नामैतद्यत्सुमेक इति । श० १ । ७ । २ । २६ ॥

**सुमेधाः** शोभना मेधा प्रज्ञा यस्य सः २.३.१ । सुष्ठु मेधा धारणावती संगमिका धीर्यस्य सः ३।४१ ॥

**सुमेधा** शोभना मेधा यस्यां सा ३.५७.५ ॥

**सुम्नम्** मोक्षसुखम् १.४३.४ । सुखम् ( सुम्नमिति सुखनामसु निघ० ३।६ ) ८.४.६ । सुखस्वरूपम् १२.२६ ॥ [ **सुम्नया** ] सुम्नेन सुखेन ( अत्र तृतीयैकवचनस्यायादेशः ) १२.६७ ॥

सुम्न—सुख नाम । निघ० ३ । ६ ॥

सुम्न—( =साधु ) सुम्ने स्थः सुम्ने मा धत्तमिति साध्व्यौ स्थः साधौ मा धत्तमित्येवैतदाह। श० १ । ८ । ३ । २७ ॥ प्रजा वै पशवः सुम्नम् । तै० ३ । ३ । ६ । ६ ॥ यज्ञो वै सुम्नम् । श० ७ । २ । २ । ४ ॥

**सुम्नयन्** सुखयन् १.१२४.३ । सुखमिच्छन् १.१३८.१ ॥ [ **सुम्नयन्ता** ] सुखं प्रापयन्तौ ६.४६.१ ॥ [ **सुम्नयता** ] आत्मनः सुखमिच्छता २.३२.२ ॥

**सुम्नयुः** यः आत्मनः सुम्नं सुखमिच्छति तच्छीलः १.७६.१० ॥

सुम्नयुः (ऋ० ३ । २७ । १) यजमानो वै सुम्नयुः । श० १ । ४ । १ । २१ ॥

**सुम्नवरी** सुम्नानि प्रशस्तानि सुखानि विद्यन्ते यस्यां सा १.११३.१२ ॥

**सुम्नहूः** यः सुम्नानि सुखान्याह्वयति सः १७.६२॥

**सुयजम्** सुष्ठु यजन्ति यस्मात्तम् ५.८.३। सुष्ठु संगन्तारम् २८.१ ॥ [सुयजा] सुष्ठु यजन्ति यस्मिन् यज्ञे तेन ५.४॥

**सुयज्ञः** शोभना यज्ञा विद्वत्सत्कारादयो यस्य सः २.२१.४ ॥ [सुयज्ञाः] शोभना यज्ञाः संगताः क्रिया येषां ते ३.५१.७। शोभना यज्ञा विद्याधर्मप्रचारिकाः क्रिया येषां ते ५.४५.४ । शोभनोऽध्ययनाध्यापनाख्यो यज्ञो येषां ते ७.३५ ॥

**सुयतः** सुन्वतो निष्पादयतः ७.२२.१ ॥

**सुयन्तुभिः** सुष्ठु यन्तवो नियन्तारो येषु तैः ५.४४.४ ॥

**सुयमम्** सुष्ठु यमा यस्मात्तत् २७.४ ॥

**सुयमा** अच्छे प्रकार धर्म नियम में चलने वाली १४.२.१८ (१२१ स.) [सुयमाः] सुन्दर नियमवाली प्रजाओं को ३.७.३ ॥

**सुयमासः** संयमयुक्ताः १.१८०.१ । सुष्ठु नियामकाः ३.६१.२। [सुयमम्] शोभनो यमः सत्याचरणनिग्रहो यस्मिँस्तम् ५.२८.३ ॥ सुष्ठु यमा यस्मात्तम् २७.४ ॥ [सुयमात्] सुष्ठु यमसाधकात् २.६७.७ ॥ [सुयमस्य] सुष्ठु नियमेन प्रापणीयस्य ७.३५.२ ॥ [सुयमे] सुशोभनेऽर्थे यमे यच्छन्ति बलपराक्रमौ याभ्यां ते २.७ ॥

**सुयवसम्** शोभनो यवो यत्राद्यौषधिसमूहो यस्मिन्देशे तम् (अत्रान्येषामपीति दीर्घः) १.४२.८। शोभनं घासादिकम् (अत्रान्येषामपीत्युकारदैर्घ्यम्) ६.२८.७ ॥ [सुयवसः] शोभनानि यवांस्यन्नादीनि यस्य तस्य १.१९०.६ ॥

**सुयवसाः** शोभनानि यवसानि याभ्यस्ताः (अत्र संहितायामिति दीर्घः) २.२७.१३ ॥

**सुयवसात्** या शोभनानि यवसानि सुखानि अत्ति सा १.१६४.४० ॥

**सुयवस्यू** आत्मनः सुयवसानिच्छू ६.२७.७ ॥

**सुयामाः** शोभना यामाः प्रहरा येषु ते ३.७.६ ॥

**सुयुक्** ये सुष्ठु युञ्जन्ति ते ३.५८.२ ॥ [सुयुजः] ये सुष्ठु युञ्जते योजयन्ति वा ते ६.४४.११। सुष्ठु युक्तान् योगिनः १.१२१.१२। ये सुष्ठु धर्मेण युञ्जते तान् ५.४४.४ ॥ [सुयुजम्] सुष्ठु योक्तुमर्हम् ४.२३.५ ॥ [सुयुजा] सुष्ठु युक्तेन १.११३.१४। १.११७.१५। सुष्ठु युञ्जन्त्यश्वान् यस्मिँस्तेन ४.१४.३ ॥

**सुरणः** शोभनो रणः संग्रामो यस्मात्सः ३.३.६॥

**सुरणानि** सुष्ठु रमणीयानि ५.५६.८ ॥

सुरण—सुरमणीयान्युदकानि। नि० ११। ५०॥

**सुरत्नः** शोभनं रत्नं रमणीयं धनं यस्मादस्य वा ७.४५.१ ॥

**सुरथः** प्रशस्तयानः ४.२.४॥ [सुरथा] शोभना रथा याभ्यां तौ १.२२.२ ॥ [सुरथेभिः] शोभनैर्यानैः २.१८.५ । [सुरथस्य]

शोभनानि रथादीन्यङ्गानि यस्मिँस्तस्य विद्याबोधकव्यवहारस्य ३.१४.७ ॥

**सुरभि** सुगन्धादिगुणयुक्तं द्रव्यम् ४.३६.६ ॥

**सुरभिः** सुगन्धः १.१६२.१२ ॥ [**सुरभौ**] ऐश्वर्यप्रकाशके (अत्र षुर ऐश्वर्यदीप्त्योरित्यस्मात् बाहुलकादौणादिकोऽभिच् प्रत्ययः) १२.३५। सुगन्धिते ५.१.६ ॥

**सुरभितमम्** अतिशयेन सुरभिः सुगन्धिस्तम् १.१८६.७ ॥

सुरभयः—प्राणा वै सुरभयः। तै० २।६।७।५॥

**सुरा** सोमवल्ल्यादि लता (अत्र षुञ् अभिषवे इत्यस्माद्धातोरौणादिको रः प्रत्ययः) १६.७। सोमरसः १६.१४ ॥ [**सुरया**] या सूयते सा सुरा तया १६.५। शोभनदानशीलया स्त्रिया १६.३३। जलेन २१.३८ ॥ [**सुरायाः**] अभिषुतस्य रसस्य १.११६.७॥

सुरा—सुनोतेः नि० १। ११॥

सुरा—अनृतं पाप्मा तमः सुरा। श० ५।१।२।१०॥ यत्सुरा भवति क्षत्ररूपं तदथो अन्नस्य रसः। ऐ० ८।८॥ अपां च वाऽएष ओषधीनां च रसो यत्सुरा। श० १२।८।१।४॥ अन्नं सुरा। तै० १।३।३।५॥ यदन्नस्य (शमलमासीत्) सा सुरा (अभवत्)। तै० १।३।२।६॥ प्रजापतेर्वाऽएतेऽअन्धसी यत्सोमश्च सुरा च। श० ५।१।२।१०॥ एतद्वै देवानां परममन्नं यत्सोमः। एतन्मनुष्याणां यत्सुरा। तै० १।३।३।२॥ पुमान् वै सोमः स्त्री सुरा। तै० १।३।३।४॥ विट् सुरा। श० १२।७।३।८॥ यशो हि सुरा श० १२।७।३।१४॥ अशिव इव वाऽएष भक्षो यत्सुरा ब्राह्मणस्य। श० १२।८।१।५॥

**सुराकारम्** सोमनिष्पादकम् ३०.११ ॥

**सुरातयः** शोभना रातिर्दानेच्छा येषां ते ५.७६.१ ॥

**सुराधाः** शोभनै राधोभिर्धनैर्युक्तः १.१००.१७। धर्मेण संचितधनः ४.१७.८। [**सुराधसः**] शोभनानि विद्याचक्रवर्तिराज्यसम्बन्धीनि राधांसि धनानि येषां तानेवंभूतान् १.२३.६ ॥

**सुराधानी** सुरा सोमरसो यस्यां सा गर्गरी १६.१६ ॥

**सुरामम्** सुष्ठु रमन्ते यस्मिँस्तम् १०.३३। शोभन आरामो येन रसेन तम् १०.३४। सुष्ठु रम्यम् २०.७६ ॥

**सुरामाणः** सुष्ठु दातारः २१.४२ ॥

**सुरावन्तम्** सुराः प्रशस्ताः सोमा विद्यन्ते यस्मिँस्तम् १६.३२ ॥ [**सुरावतः**] सवं कुर्वतः १.१११.१० ॥

**सुरासोमान्** सुरया रसेन युक्तान् सोमान् पदार्थान् २१.५६। ये सुरयाऽभिषवेन सूयन्ते तान् २१.६० ॥

**सुरुक्मे** [**सुरुक्मे**] सुष्ठु दीप्यमाने २०.४१। सुशोभमाने २६.३१। रमणीये १.१८८.६॥

सुरुक्म—सुरोचने। नि० ८। ११॥

**सुरुचः** सुप्रकाशमानः सुष्ठु रुचिविषयश्च शोभने धर्म्ये कर्मणि रुक् प्रीतिर्यस्य तस्य १.१६०.१। सुप्रीतिसम्पादकाः ३.७.५। सुष्ठु रुचः प्रीतयो येषां ते ४.२.१७। शोभना रुक् रुचिः प्रीतिर्येषां तान् ६.३५.४ ॥ [**सुरुचम्**] सुष्ठु दीप्तं रुचिकारकम् १.११२.१। सुष्ठु प्रकाशमानम् २.२.४। सुष्ठुदीप्तिम् ३.२.५ ॥

सुरुच—आदित्यरश्मय सुरोचनात्। नि० १।७॥ सुरुचः ( यजु० १३ । ३ ) इमे लोकाः सुरुचः। श० ७।४।१।१४॥

सुरुचा यया सुष्ठु रोचते तया ३.१४.६ ॥

सुरूपकृत्नुम् य इन्द्रः सूर्यः सर्वान् पदार्थान् स्वप्रकाशेन स्वरूपान् करोतीति तम् ( कृहनिभ्यां क्त्नुः उ० ३।२८ अनेन क्त्नुः प्रत्ययः, उपपदसमासः । इन्द्रो दिव इन्द्र ईशे पृथिव्याः, नेन्द्रादृते पवते धाम किञ्चन निरु० ७।२ अहमिन्द्रः परमेश्वरः सूर्यं पृथिवीञ्च ईशे रचितवानस्मीति तेनोपदिश्यते तस्मादिन्द्राद्विना किञ्चिदपि धाम न पवते न पवित्रं भवति ) १.४.१ ॥

सुरूपकृत्नुः—योऽयमनिरुक्तः प्राणः स सुरूपकृत्नुः। कौ० १६।४॥

सुरेक्णः शोभनं रेक्णः धनं यस्य सः ( रेक्ण इति धननाम निघं० २।१० ) ६.१६.२६॥

सुरेतः शोभनं रेतो वीर्यं यस्मात्तत् १.१२१.५॥ [ सुरेतसम् ] सुष्ठु बलम् १.१६०.३ ॥ सुष्ठु वीर्यम् २१.३८ । २८.६ । शोभनं रेतो वीर्यं यस्य तम् २८.३२ । [ सुरेतसा ] शोभनवीर्येण १.१५६.२ । सुष्ठु संश्लिष्टेन वीर्येण ३.१.१६ ॥

सुरेताः शोभनानि रेतांसि वीर्याणि यस्य सः १२.१,२५ ।

सुलोकम् द्रष्टव्यम् ११.२२ ॥

सुव ईर्ष्वे ६.१ । उत्पादय ११.७ । प्रक्षिप १६.५ । प्रेरय १८.६७ । प्रेर्ष्वे १६.३८ । उत्पादय, सम्पादय वा ३०.१ । गमय, जनय वा ३०.३ ॥

सुवज्रः शोभनो वज्रः शस्त्रास्त्रसमूहोऽस्य सः १.१००.१८ ॥ [ सुवज्रम् ] शोभनानि वज्राण्यायुधानि यस्य तम् ४.१७.४ । शोभनशस्त्रास्त्राणां प्रयोक्तारम् ४.१७.८ ।

सुवतात् प्रेरय ४.५४.३ ॥

सुवताम् प्रेर्ताम् ( अत्र व्यत्ययेनात्मनेपदम् ) ६.३६ ॥

सुवति [ सुवति ] प्रेरणा करता है ४.५४.४ ॥ उद्योगे प्रेरयति ६.७१.४ ॥

सुवते [ सुवते ] गर्भान् विमुञ्चन्ति १.१३५.८ ॥ उत्पद्यन्ते ३.५५.५ ॥

सुवध्वम् निष्पादयत ६.४० । प्रेर्ध्वम् १०.१८ ॥

सुवन्तु दूरे प्रेरयन्तु ७.५०.३ ॥

सुवर्चाः सुष्ठुतेजाः ३३.५ । शोभनदीप्तिः १.६५.१ । रूप और सर्वशास्त्रविद्यायुक्त १४.२.१८ । ( १२१ सत्या० )

सुवर्णा शोभनो वर्णो ययोस्तौ २६.७ ॥

सुवसनस्य सुष्ठु वासस्य ६.५१.४ ॥

सुवसि [ सुवसि ] प्रेरयसि ४.५४.२ ॥

सुवह्ना सुष्ठु वोढा ६.२२.७ ॥

सुवाचः सुष्ठु सत्या वाक् येषां ते ३.७.१० ॥ [ सुवाचम् ] सुष्ठु वाग्निमित्तम् ३.१.१६॥

सुवाचसा शोभनं वाचो वचनं ययोस्तौ १.१८८.७ ॥

सुवाति [ सुवाति ] उत्पादयेत् ११.३। प्रेरयेत् १८.३३ । सुवेत् प्रयच्छेत् ५.४२.३ । जनयति ७.४०.१ ॥

**सुवा॑ते** उत्पादयतः ५.१.४ ॥

**सुवानः** प्रेरयन् ७.३८.२ ॥ [ **सुवानम्** ] सोतुमर्हम् १.२३०.२ ॥ [ **सुवानस्य** ] ऐश्वर्यजनकस्य २.११.२० । उत्पद्यमानस्य २.१६.१ ॥

**सुवासाः** शोभनानि वासांसि यस्याः सा १.२४.७ ॥

**सुवासाः** शोभनानि वासांसि धृतानि येन सः ३.८.४ ॥

**सुवितम्** उत्पादितम् १.१४१.१२ ॥ [ **सुविता** ] प्रेरणानि १.३८.३ ॥ [ **सुविताय** ] अभिषवाय ३.२.१३ । ऐश्वर्यप्राप्तये १.६०.४ । प्रेरिताय १.१०४.२ । ऐश्वर्याय १.११८.१२ ॥ [ **सुविते** ] प्रेरिते २६.४ ॥

सुवित—सुइते सूते सुगते प्रजायामिति वा । नि. ४ । १७ ॥ सुप्रसूतानि कर्माणि । नि० १२ । २८ ॥ कर्मणे नि० ११ । १४ ॥

**सुविदत्रः** सुष्ठु विज्ञानदाता २.६.६ ॥ [ **सुविदत्रम्** ] सुष्ठु दातारम् २.१.८ ॥ [ **सुविदत्रान्** ] सुष्ठु विविधानां सुखानां दातॄन् १६.५६ ॥

सुविदत्र—कल्याणविद्यः नि० ६ । १४ ॥ सुविदत्रं धनं भवति विन्दतेर्वैकोपसर्गाद्ददातेर्वा स्याद् द्व्युपसर्गात् । नि० ७ । ६ ॥

**सुविदत्राणि** शोभनानि विदत्राणि विज्ञानानि येभ्यस्तानि २.२४.१० ॥

**सुविद्वांसः** शोभनाश्च ते योगिनः १७.६८ ॥

**सुविप्रः** शोभना विप्रा मेधाविनो यस्मिन् सः २५.२८ । सुष्ठु मेधावी १.१६२.५ ॥

**सुविवृतम्** सुष्ठु विकाशितम् १.१०.७ ॥

**सुवीरः** शोभनैः वीरैः युक्तः १.६१.१६ । सुभटः ६.५०.६ ॥ [ **सुवीराः** ] सुष्ठु सकलविद्याव्यापिनः २.२.१३ ॥ [ **सुवीरासः** ] सुशिक्षाविद्यायुक्ता वीराः पुत्राः पौत्रा भृत्याश्च येषां ते १.११७.२५ ॥ [ **सुवीरम्** ] शोभना वीराः प्राप्यन्ते यस्मात् तम् १८.७४ । शोभना वीरा येन भवन्ति तम् ६.१६.२६ ॥

**सुवीरम्** शोभना वीरा यस्मिन् येन वा तत् १.३१.१० । शोभना वीरा यस्मात्तत् ३.८.२ । उत्तमवीरप्रापकम् ४.३४.८० ॥

सुवीर—वीरवन्तः कल्याणवीरा वा, वीरो वीरयत्यमित्रान्, वेतेर्वा स्याद्गतिकर्मणो, वीरयतेर्वा । नि० १ । ७ ॥

सुवीरा—एष वाव सुवीरो यस्य पशवः । तां० १३ । १ । ४ ॥

**सुवीराम्** शोभना वीरा यस्यां ताम् १.४०.४ ॥

**सुवीर्यम्** शोभनं शरीरात्मपराक्रमलक्षणं बलम् १.३६.१७ । शोभनं वीर्यं पराक्रमं यस्मिँस्तत् १.४०.२ । सुष्ठु वीर्याणि यस्य तत् १.४४.२ । शोभनानि वीर्याणि पराक्रमा यस्मात्तत् १.४८.१२ । शोभनानि वीर्याणि यस्माद्विद्याभ्यासात्तम् १.६३.२ । शोभनानि वीर्याणि यस्मिन् सखीनां कर्मणि तत् १.६४.२ । शोभनं विज्ञानादि धनं पराक्रमं वा ३.१०.३ । शोभनं धनम् ३.१०.८ ॥ [ **सुवीर्यस्य** ] शोभनेषु वीरेषु भवस्य ३.१६.३ । शोभनं वीर्यं पराक्रमो ब्रह्मचर्यं यस्य तस्य ६.४७.१२ ॥

**सुवृक्ति** सुष्ठु व्रजन्ति येन यानेन तत् १.६१.२। सुष्ठु वृजते त्यजन्ति दोषान् यस्मात्तत् १.६१.४। सुष्ठु वृक्तयो वर्जिता दोषा येभ्यस्तानि १.६१.१६। सुष्ठु वृक्तिर्वर्जनं यथा तथा १.१८४.५॥ सुष्ठु व्रजन्ति यस्मिँस्तम् १.१८६.१॥

**सुवृक्तिः** शोभना वृक्तिर्वर्जनं यस्य सः १.१५३.२॥

**सुवृक्तिः** सुष्ठु व्रजन्ति यस्यां सा ६.११.५। शोभना वृक्तिर्वर्जनं यस्याः सा ७.२४.२॥ [**सुवृक्तिम्**] वर्जयन्ति अनया सा शोभना चासौ वृक्तिश्च ताम् १.६४.१। सुष्ठु वर्जयितारम् २.४.१। सुष्ठु वृक्तिर्दुष्टकर्मवर्जनं यस्य तम् २.३५.१५। सुष्ठु वर्तमानम् ३.६१.५। सुष्ठु वर्जनम् ५.४१.२। सुष्ठु व्रजन्ति येन तम् ६.१०.१। सुष्ठु व्रजन्ति यस्मिन्मार्गे तम् ६.१०६। सुष्ठु व्रजन्ति दुःखानि यया ताम् ६.१६.२६। सुष्ठु व्रजन्ति यस्यां नीतौ ताम् ७.८.३। सुष्ठु वर्जयन्ति अन्यायं यया ताम् ७.३१.११। सुष्ठु वर्जयन्ति दुःखानि यया तां वाचम् ७.३६.२॥ [**सुवृक्तिभिः**] सुष्ठु शोभना वृक्तयो दुःखवर्जनानि यासु क्रियासु ताभिः १.५२.१। शोभनाश्च ते वृक्तयो वर्जनानि च ताभिः ३.३.६। सुष्ठु संविभागैः ३.५१.१। सुष्ठु वृक्तिर्दोषाणां छेदनं येषु तैः ३.६२.११। सुष्ठु वृक्तिर्वर्जनीयं यासां ताभिः क्रियाभिः ५.२५.३। सुष्ठु छेदिकाभि क्रियाभिः ६.६१.२॥

**सुवृक्ति**—सुप्रवृत्ताभिः शोभनाभिः स्तुतिभिः। नि० २। २४॥

**सुवृजनासु** शोभना वृजना गतयो यासां तासु १६.६८॥

**सुवृत्** यस्सुवर्तुमर्हः सः १.१८३.२॥ [**सुवृतम्**] शोभनविभागयुक्तम् १.१११.१। यस्सुष्ठु सर्वाङ्गैः शोभनस्तम् १.१८३.३। सुष्ठु रचितं साङ्गोपाङ्गसहितम् ४.३३.८॥ [**सुवृता**] शोभना वृत्तोऽङ्गपूर्तिर्यस्य तेन १.४७.७। शोभनैर्मनुष्यैः शृङ्गारैर्वा सह वर्तमानेन १.११८.२। शोभनैः साधनैः सह वर्तमानेन १.११८.३। शोभनावरणेन ४.४४.५॥

**सुवृधः** ये सुष्ठु वर्धन्ते ते ५.५६.५॥ [**सुवृधा**] यः सुष्ठु वर्धयति तेन २.२३.६॥

**सुवेदा** शोभनं विज्ञानं यस्य सः ६.४८.१५। धर्मोपार्जितैश्वर्यः ७.३२.२५॥

**सुव्रतः** शोभनैर्व्रतैः धर्म्यैः नियमैर्युक्तः १.१८०.६॥

**सुशंसः** शोभनाः शंसा स्तुतयो यस्य विदुषः सः १.४४.६॥

**सुशक्तिः** शोभनश्चासौ शक्तिश्च सुशक्तिः ७.३२.२१॥

**सुशमि** शोभनं कर्म ५.८७.६। सुष्ठु दुःखं शमयितुं शीलं धर्मः पदार्थानां साधुकरणं वा यस्य तत् (शमित्यष्टा० अ. ३।२।१४१ अनेन शमेर्घिनुण्। इदमपि पदं उव्वटमहीधराभ्यामन्यथैव व्याख्यातम्) १.१५॥

**सुशमी** सुष्ठु शमयितुमर्हः १५.३४। शोभनकर्मा ७.१६.२ ॥

**सुशरणः** शोभनं शरणमाश्रयो यस्य सः ७.३४.२२ ॥

**सुशर्मा** शोभनानि गृहाणि यस्य सः (शर्मेति गृहनामसु० निघं० ३।४) ८.८ ॥ [**सुशर्माणा**] सुष्ठु सुखकारिणौ १.६३.७ ॥

सुशर्मा—सुप्रतिष्ठानः प्राणो वै सुशर्मा सुप्रतिष्ठानः। श० ४। ४। १। १४ ॥

**सुशर्माणम्** शोभनानि शर्माणि गृहाणि यस्यास्ताम् २१.५। सुशोभितगृहाम् २१.६ ॥

**सुशस्तयः** शोभनप्रशंसाः ५.४६.६ ॥ [**सुशस्तिभिः**] शोभनाः शस्तयो यासां क्रियाणां ताभिः १.२७.७ ॥

**सुशस्ति** सुष्ठु प्रशंसिताभिः (अत्र सुपां सुलुगिति भिसो लुक्) १.१८६.१। सुष्ठु प्रशंसनाम् ६.६७.३। शोभना शस्तिः प्रशंसा यस्मिँस्तत् ३३.३४ ॥

सुशस्तिः—(यजु० १२। १०८) (=सुष्टुतिः) ऊर्जो नपाज्जातवेदः सुशस्तिभिरिति। ऊर्जो नपाज्जातवेदः सुष्टुतिभिरित्येतत्। श० ७। ३। १। ३१ ॥ (यजु० ११। ४१) ये वोढारस्ते सुशस्तयः। श० ६। ४। ३। ६ ॥

**सुशिप्रः** [**सुशिप्रः**] सुन्दराननः २.३३.५। शोभनहनुनासिकः ३.३०.३। शोभनानि शिप्राणि सेवनानि यस्मिन्त्सः (अत्र शेवृधातोः पृषोदरादिनेष्टसिद्धिः) २.१२.६ ॥ [**सुशिप्र**] शोभनं शिप्रं ज्ञानं प्रापणं वा यस्य तत्सम्बुद्धौ १.९.३। सुष्ठु सुखप्रापक १.१०१.१० ॥

सुशिप्र—शिप्रे हनू नासिके वा। नि० ६। १७ ॥

**सुशिल्पे** सुन्दराणि शिल्पानि ययोस्ते २८.२९। सुष्ठु शिल्पक्रिया ययोस्ते २९.६ ॥

**सुशिश्वम्** सुष्ठु वर्धकम् (छन्दसि सामान्येन विधानादत्र किः प्रत्ययः) १.६५.२ ॥

**सुशिष्टौ** शोभने शासने १.१७३.१० ॥

**सुशुक्वानः** सुष्ठु शुद्धाः ५.८७.३ ॥

**सुशेवः** शोभनं शेवं सुखं यस्मात्सः (शेवमिति सुखनामसु० निघं० ३।६ अत्र इण्शीभ्यां वन् उ० १.१५ अनेन शीङ् धातोः वन् प्रत्ययः) १.२७.२। शोभनं शेवं सुखं यस्य सः (शेवमिति सुखनाम निघं० ३।६) १०.२८ ॥ उत्तम सुख युक्त होकर १४. २.२६ (१६१ विधि)

[**सुशेवम्**] शोभनं निधिमिव वर्तमानम् ३.२९.५ ॥

सुशेव—सुसुखतमः। नि० ३। ३ ॥ शिष्यतेर्वकारो नामकरणोऽन्तस्थान्तरोपलिङ्गी, विभाषितगुणः। नि० १०। १७ ॥

**सुशेवाः** सुष्ठु शेवं सुखं याभ्यस्ताः (शेवमिति सुखनामसु० निघं० ३।६) ४.१२ ॥

**सुशेव्यम्** सुष्ठु सुखेषु भवम् ५.४३.१४ ॥

**सुशोकः** शोभना शोका दीप्तयो यस्य सः १.७०.१ ॥

**सुश्चन्द्रः** शोभनश्चासौ चन्द्र आह्लादकारकश्च तत्सम्बुद्धौ १५.४३ ॥

**सुश्रवसम्** शोभनानि श्रवाँसि श्रवणानि अस्मिन्प्रसादे यस्य तम् १.४९.२। सुष्ठु श्रवांसि श्रवणानि अन्नादीनि यस्य तम् १.५३.१०।

शोभनानि श्रवांसि यशांसि श्रवणानि वा यस्य यस्माद्वा १.६१.२१। शोभनानि श्रवांसि अन्नानि यशांसि वा यस्य तम् ३४.२०॥ [सुश्रवसा] शोभनानि श्रवांसि श्रवणान्यन्नानि वा यस्य तेन मित्रेण सह १.५३.६॥

सुश्रवस्तमः शोभनानि श्रवांसि श्रवणान्यन्नानि वा यस्मात्सः सुश्रुवाः अतिशयेन सुश्रुवा इति सुश्रुवस्तमः १.६१.१७। अतिशयेन सुष्ठु शृणोति सः १.१३१.७। सुष्ठुधन-श्रवणयुक्तः सोऽतिशयितः ३.४५.५॥

सुश्रवस्या शोभनान्नेच्छया १.१७८.४॥

सुश्रियः शोभना लक्ष्म्यो येषां ते ५.७६.४॥ [सुश्रियम्] शोभना श्रीः यस्मात्तम् ३.३.५॥

सुश्रुतः शोभनं श्रुतं यस्य सः ३.३६.१॥

सुश्रोतुः सुष्ठु शृणोति यस्तस्य १.१२२.६॥

सुश्लोक शुभकीर्ति, सत्यवाक् २०.४॥

सुष(स)खायः शोभनाः सखायो येषां ते १.१७३.६॥

सुषण(सन)नानि सुष्ठु विभाजितानि ७.१२.३॥

सुषणा(सना) यानि सुखेन सन्यंते तानि सुषणानि (अत्र अविहितलक्षणो मूर्द्धन्यः) १.४२.६॥

सुष(स)दः यः शोभनेषु व्यवहारेषु सीदति ११.४४॥

सुषदः—(यजु० ११।४४) पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहण इति पृथुर्भव सुशामस्त्वमग्नेः पशव्यवाहन इत्येतत् (सुषदः=सुशीमः)। श० ६।४।४।३॥

सुष(स)दा सुष्ठु सीदन्ति यस्यां सा १.२७। सुखेन सीदन्ति यस्यां तस्याम् (अत्र सुपां सुलुगिति ङेः स्थाने आकारादेशः) २.२०। या शोभने व्यवहारे सीदति सा १०.२६॥ [सुषदाम्] शुभसुखदात्रीम् १०.२६॥

सुष(स)हान् सुखेन सोढुं योग्यान् ६.४६.६॥

सुषा(सा)रथिः शोभनश्चासौ सारथिश्चाश्वाना-मग्न्यादीनां वा नियन्ता २६.४३॥

सुषारथि—कल्याणसारथिः। नि० ६।१६॥

सुषाव निष्पादयेत् १६.२। सुनोति ४.४५.५॥

सुषा(सा)हा सुष्ठु सहः सहनं यस्य सः १.१८६.२॥

सुषिलीका पक्षिविशेषौ २४.३६॥

सुषु(सु)तम् सुष्ठु निष्पादितम् ३.३६.७॥ [सुषुतस्य] सुष्ठु विद्याविनयाभ्यां निष्पन्नस्य ४.२०.४॥

सुषु(सु)पानम् शोभनं पानं यस्य तम् ४.१६.३॥

सुषुपुः स्वपेयुः ७.१८.१४॥

सुषुप्वांसः ये सुप्ताः १.१६१.१३॥

सुषु(सु)म(ा) [सुषु(सु)म(ा)] सुनुयाम १.१०१.६। निष्पादयेम (अत्र संहिताया-मिति दीर्घः) ४.१६.१॥

सुषु(सु)म्णः सुशोभनं सुम्नं सुखं यस्मात्सः १८.४०॥ [सुषुम्नम्] सुष्ठु सुखयुक्तम् ६.४६.१०॥

सुषुम्णः—( यजु० १८ । ४० ) सुषुम्ण इति सुयज्ञिय इत्येतत् । श० ६ । ४ । १ । ६ ॥

सुषुवुः निष्पादयन्तु २०.६.३ ॥

सुषुवे प्रसुव उत्पादय ६.२३ ॥

सुषू(सू)ः सुष्ठु जनयित्री ५.७.८ ॥

सुषू(सू)तम् सुष्ठु प्रसूतम् २.१०.३ ॥

सुषूतमम् सुष्ठु सूते तम् ६.३० ॥

सुषू(सू)दः क्षयशरीरादियुक्तान् १.७३.८ ॥

सुषू(सू)दः नाशय ७.१.२०। देहि ७.१.२५ ॥

सुषू(सू)दति ददाति १.१०५.१४। सुष्ठु क्षरति वर्षति १.१४२.११ ॥

सुषू(सू)दथ रक्षथ ५.५४.७ ॥

सुषू(सू)दिम क्षारयेम १.१८७.११ ॥

सुषू(सू)मा सुष्ठु प्रसवित्री २.३२.७ ॥

सुष्ट(स्त)रीम(ा) सुष्ठु स्तृणीम (अत्र संहितायामिति दीर्घः) २६.४ ॥

सुषे(से)णः शोभना सेना यस्य सः १५.१६ ॥

सुषेण—( यजु० १५ । १६ ) तस्य ( पर्जन्यस्य ) सेनजिच्च सुषेणश्च सेनानीग्रामण्याविति हैमन्तिकौ तावृतू । श० ८ । ६ । १ । २० ॥

सुष्टु(स्तु)तः सुष्ठु प्रशंसितः १.१५७.३ ॥

सुष्टु(स्तु)तयः शोभनाः स्तुतयो येषां ते ३.१६.३ ॥

सुष्टु(स्तु)तिः शोभनप्रशंसा ७.५८.६ ॥
[ सुष्टुतीः ] याः शोभनाः स्तुतयस्ताः १८.७२ ॥

सुष्टुति—स्तुतेः । नि० ६ । १८ ॥

सुष्टु(स्तु)भः शोभनस्तोता ५.७५.४ ॥
[ सुष्टुभा ] सुष्ठु द्रव्यगुणक्रियास्थिरकारकेण १.६२.४ ॥

सुष्वति सुन्वन्ति ( अत्र बहुलं छन्दसीति शपः श्लुः अदभ्यस्तादिति झादादेशः ) २.१६.५ ॥

सुष्व(स्व)यन्त गच्छन्ति ७.३६.६ ॥

सुष्वयन्ती सुष्ठु शयाने इव ( अत्र वर्णव्यत्ययेन पस्य स्थाने यः ) २६.३१ ॥

सुष्वा(स्वा)नेभिः सुष्ठु शब्दायमानैः ४.२६.२ ॥

सुष्वि(स्वि)तराय सुष्ठ्वतिशयितमैश्वर्यं यः सुनोति तस्मै ७.१६.१ ॥

सुष्वि(स्वि)म् शोभनैश्वर्यप्रदम् १.६१.१५ । सुष्ठु सोतारम् ६.२३.२ । सोतारमैश्वर्यकारकम् ६.२३.६ ॥ [ सुष्वये ] सुष्ठ्वभिस्तोत्रे ६.२३.३ । ऐश्वर्यप्राप्त्यनुष्ठात्रे ४.२४.२ । सुष्ठु निष्पादकाय ४.२५.७ ॥
[ सुष्वेः ] सुष्ठु निष्पन्नस्यान्नस्य ४.२५.६ ॥

सुसंकाशा सुष्ठु शिक्षया सम्यक् शासिता १.१२३.११ ॥

सुसंपिष्टम् सुष्ठ्वेकत्र पिष्टं यस्मिँस्तत् ४.३०.११ ॥

सुसंमृष्टासः श्रेष्ठरीत्या सम्यक् शुद्धाः ३.४३.६॥

सुसंशिताः सुष्ठु प्रशंसिताः ५.१६.५ ॥

सुसंसत् शोभना संसत् सभा यस्य सः ७.६.३॥

सुसंस्कृताः शोभनाः संस्कृताः १.३८.१२ ॥

**सुसंदृशः** सम्यक् तुल्यगुणकर्मस्वभावाः ५.५७.४ ॥

**सुसन्दृक्** सुष्ठु पश्यति यया सा ७.३.६ ॥

सुसन्दृक्—प्राणो वै सुसन्दृक्। तै० १।६।६।६॥

**सुसन्दृशः** सत्यासत्ययोः सुष्ठु सम्यक् द्रष्टुः १.१४३.३ ॥ [ **सुसन्दृशम्** ] एकीभावेन सर्वकर्मणां द्रष्टारम् १.८२.३ । सुष्ठु द्रष्टारम् १.८२.३ । सुष्ठु सन्द्रष्टव्यम् ७.१०.३ । यः सुष्ठु पश्यति दर्शयति वा तम् ३.५२ ॥

**सुसंमिद्धः** सम्यक् प्रदीपितः १.१३.१ ॥ सुष्ठु प्रकाशितः सूर्यः २१.१२ ॥

**सुसमिधा** सम्यक् प्रदीप्तेनेन्धनेन ५.८.७ ॥

शोभनया समिधेव धर्म्यक्रियया ७.१७.१ ॥

**सुसंमृब्धम्** सुष्ठु सम्यगृजुम् १.१८५.५ ॥

**सुसस्याः** शोभनानि सस्यानि धान्यानि याभ्यस्ताः ४.१० ॥

**सुहना** सुहनानि हन्तुं सुगमानि ७.२५.५ ॥

**सुहन्तु** शोभनेन प्रकारेण नाशयतु ७.१६.४ ॥

**सुहवः** सुष्ठुदानः २.३३.५ । शोभनाह्वानस्तुतिः ३.४६.३ । सुष्ठुग्रहणदानः ५.४२.१६ । सुष्ठुज्ञानविज्ञानः ६.२१.८ ॥ शोभनो हव आह्वानं यस्य ६.२६.६ ॥ शोभनो हवः सत्कारो यस्य ६.५२.६ । सुस्तुतिः ७.१.२१ ॥ [ **सुहवा** ] सुष्ठुप्रशंसितावध्यापकोपदेशकौ ६.५२.१६ ॥ [ **सुहवम्** ] सुखेन होतुं योग्यम् १.५८.६ । सुष्ठु प्रशंसितम् ४.१६.१६ । शोभनो हव आह्वानं संग्रामो वा यस्य तम् ६.४७.११ । सुष्ठु आह्वयितुं योग्यम् ६.४६.६ ॥ [ **सुहवस्य** ] शोभनो हवो ग्रहणं दानं वा यस्य तस्य ११.४६ ॥

सुहव—स्वाह्वानां। नि० ११।३१॥

**सुहवा** शोभनाह्वाना २६.२४ । सुष्ठु सुखप्रदा १.१२३.१३ । सुष्ठु दानादानाः ७.४०.४ ॥ [ **सुहवाम्** ] सुष्ठु स्पर्धनीयाम् २.३२.४ ॥

**सुहवानि** सुष्ठु आह्वानि प्रशंसनानि वा ७.३५.३ ॥

**सुहविषे** सुसामग्रीकाय ४.२.४ ॥

**सुहव्यम्** शोभनानि हव्यानि यस्य सः १.७४.५ ॥

**सुहव्याम्** सुष्ठु ग्रहीतव्याम् ४.४३.१ ॥

**सुहस्तः** शोभनौ हस्तौ यस्य सः १.१६४.२६॥ [ **सुहस्ताः** ] शोभनाः कर्मसाधका हस्ता येषां ते ४.३३.८ । शोभनेषु कर्मसु हस्ता येषां ते ५.४२.१२ ॥ [ **सुहस्त** ] शोभना हस्तक्रिया यस्य तत्सम्बुद्धौ ४.२७ ॥

सुहस्त—कल्याणहस्तः। नि० ११।४३॥

**सुहस्त्यः** शोभना हस्तक्रियाः सुहस्तास्तासु साधुः १.६४.१ ॥

**सुहिरण्यः** शोभनानि हिरण्यानि यस्य सः १.१२५.२ । उत्तमसुवर्णादिधनः ४.४.१० ॥ [ **सुहिरण्ये** ] सुष्ठुतेजोयुक्ते २६.६ ॥

**सुहुताः** सुष्ठु हुतानि योगदानरूपाणि कर्माणि याभिर्योगिनीभिः स्त्रीभिस्ताः ७.१५ ॥

**सुहूः** सुष्ठु हूयते यो या वा सः सा ( कृतो बहुलमिति कर्मणि ह्वेञ् इत्यस्य क्विबन्तः प्रयोगः ) १.३० ॥

**सू** शोभनार्थे ( निपातस्य चेति दीर्घः ३.४६ ॥

**सूः** यः सुवति प्रेरयति सः सूः १८.७ ॥ सूयत उत्पादयति या सा माता ( अत्र सूङ् धातोः क्विप् ) १.३२.९ । यः सूते सः १. १४६.५ ॥

**सूकरः** यः सम्यक् करोति सः ७.५५.४ । यः सुष्ठु शुद्धिं करोति स बलिष्ठो वराहः २४.४० ॥

**सूक्तम्** सुष्ठु कथितम् १८.५ ॥ [ सूक्ता ] सुष्ठु वक्तव्यानि २१.६१ ॥ [ सूक्तानि ] सुष्ठु अर्था उच्यन्ते येषु गायत्र्यादिछन्दोयुक्तेषु वेदस्थेषु तानि १.६३.१ ॥ [ सूक्तेन ] सुष्ठु कथितेन १.१७१.१ । वेदमन्त्रसमूहेन ६.५२.१७ ॥ [ सूक्तेभिः ] सुष्ठूक्ता विद्या येषु तैः १.३६.१ ॥ [ सूक्तैः ] शोभनान्युक्तानि वचनानि येषु उपदेशनेषु तैः १.७०.३ । सुष्ठु सत्यैर्वचनैर्वेदोक्तैर्वा ५.८२.७। सुष्ठूक्तार्थैर्वेदवचोभिः ७.२९.३॥

सूक्तम्—यजमानो हि सूक्तम् । ऐ० ६ । ६ ॥ आत्मा सूक्तम् । कौ० १४ । ४ ॥ द्यौस्सूक्तम् । जै० उ० ३ । ४ । २ ॥ शिरस्सूक्तम् । जै० उ० ३ । ४ । ३ ॥ गृहाः सूक्तम् । ऐ० ३ । २३ ॥ विट् सूक्तम् । ऐ० २ । ३३ ॥ ३ । १६ ॥ प्रजाः पशवः सूक्तम् । कौ० १४ । ४ ॥

**सूक्तवाकेन** सुष्ठूच्यते तत् सूक्तवाकं तेन १९. २९ ॥ [ सूक्तवाकाय ] सूक्तानि वाकेषु यस्य तस्मै २१.६१ ॥

सूक्तवाकः—संस्था सूक्तवाकः । श० ११ । २ । ७ । २८ ॥ प्रतिष्ठा वै सूक्तवाकः । कौ० ३ । ८ ॥

**सूक्तवाचः** सुस्तुता सुप्रशंसिता वाक् येषां ते ५.४९.५ ॥

**सूक्तोक्तौ** सूक्तानां वेदस्थानां प्रमाणस्योक्तिर्यस्मिन् गृहाश्रमे ८.२५ ॥

**सूचीकाः** सूचीव व्यथका वृश्चिकादयः १. १९१.७ ॥

**सूच्या** सीवनसाधनया २.३२.४ ॥ [ सूचीचिः ] अनुसन्धानसाधिकाभिः क्रियाभिः २३.२४॥

**सूतम्** क्षत्रियात् ब्राह्मण्यां जातम् ३०.६ ॥ [ सूताय ] क्षत्रियात् विप्रकन्यायां जाताय वीराय प्रेरकाय वा १६.१८ ॥

सूताय—सवो वै सूतः । श० ५ । ३ । १ । ५ ॥

**सूते** उत्पादयति १.१६४.१७ ॥

**सूददोहसः** सूदाः सुष्ठु पाचकाः दोहसो गवादिदोग्धारश्च यासां ताः १२.५५ । सूदाः पाककर्तारो दोहसः प्रपूरकाश्च यासु ताः १५.६० ॥

सूददोहाः—आपो वै सूदो ऽन्नं दोहा । श० ८ । ७ । ३ । २१ ॥ प्राणः सूददोहाः । श० ७ । १ । १ । १५ ॥ प्राणो वै सूददोहाः । श० ७ । १ । १ । २६ ॥ त्वक्सूददोहाः । श० ८ । १ । ४ । ५ ॥

**सूदनम्** क्षरणम् ४.३६.५ ॥

**सूदय** क्षरय ४.४.१४ । विनाशय ७.१६.१ ॥

**सूदयत्** सूदयेत् १.७१.८ । क्षरति वर्षयति ३३.११ ॥

**सूदयन्तु** क्षरयन्तु दूरीकुर्वन्तु ४.३६.१ । वर्षयन्तु वर्धयन्तु ४.४०.१ । दूरीकारयन्तु २३.४१ ॥

**सूदयाति** क्षरयति प्रापयति २.३.१० । क्षरयेत

वर्षयेत् ३.४.१० । सूक्ष्मीकृत्य वायौ प्रसारयति २७.२१ ॥

**सूदयामि** प्रापयामि २५.४० । क्षरयामि १.१६२.१७ ॥

**सूदाः** पाककर्तारः ७.३६.३ ॥

**सूद्याभ्यः** सुष्ठु क्लेदिकाभ्यः २२.२५॥

**सूनरम्** शोभना नरा यस्मात्तत् १.४०.४ । शोभना नरा यस्मिँस्तत् ५.३४.७ ।

**सूनरी** या सुष्ठु नयति सा १.४८.५॥ [सूनरि] सुष्ठुतया व्यवहारनेत्री १.४८.१० ॥

सूनरी—उषोनाम । निघ० १ । ८॥

**सूनाः** प्रसूताः २५.३६ । प्रेरिताः १.१६२.१३ । [सूनया] हिंसया १.१६१.१० ॥

**सूनुः** अपत्यम् ६.२.७ । सूर्यः ३.२५.१ ॥ उत्पन्नः १२.५१ ॥ [सूनवः] ये प्राणिगर्भान् विमोचयन्ति ते १.३७.१० । पुत्रा विद्यार्थिनः १.४५.५ । [सूनुम्] अपत्यमि वर्तमानम् ६.६२.६ । अपत्यवत् सेवकम् ३.११.४ ॥ [सूनून्] प्रसवगुणान् ५.४२.१५ ॥ [सूनवे] औरसाय विद्यापुत्राय वा १.३४.६ ॥ [सूनो] यः सूयते सुनोति वा तत्सम्बुद्धौ १.५८.८ । दुष्टानां हिंसक ३.२४.३ । अविद्याहिंसक ३.२५.५ । यत्सूते सकलं जगत्तत्सम्बुद्धौ ६.४.४ । बलवत् ६.१३.५ ॥

सूनु—अपत्यनाम । निघ० २ । २ ॥ पुत्राः । नि० ११ । १७ ॥

सूनुः—(यजु० १२ । ५१) प्रजा वै सूनुः । श० ७ । १ । १ । २७ ॥

**सूनुमतः** पुत्रयुक्तान् ३.२४.५ ॥

**सूनृता** प्रियसत्यप्रकाशिका वाक् अन्नादिपदार्थवती वा (सूनृतेत्यन्ननाम० निघ० २.७) सुष्ठु ऋतं यथार्थं ज्ञानं वा यस्यां साऽन्नवती वा १.८.८ । प्रियसत्याचरणलक्षणवाणीयुक्ता १.४०.३ । अन्नादिसमूहकरी राजनीतिः (सुनृता इत्यन्ननाम निघं० २.७) १.५१.२ । सुशिक्षिता सत्यप्रिया वाक् १.१३५.७ । सत्यभाषणादियुक्ता ६.४८.२० । सत्यप्रियवाणी ७.३७.३ । [सूनृतानाम्] सुतरामूनयत्यनृतं यत्कर्म तत् सून् तदृतं यथार्थं सत्यं येषां ते सूनृतास्तेषाम् (अत्र ऊन परिहाणे अस्मात् क्विप् चेति क्विप्) १.३.११ । शोभनकर्मान्नानाम् १.६२.७ । वाग्जागरितादिव्यवहाराणाम् १.११३.४ । वाचामन्त्रादिपदार्थानाम् १.११३.१८ । सुष्ठु ऋतानि सत्यानि यासु तासाम् ३.३१.१८॥

सूनृता—उषोनाम । निघ० १ । ८ ॥ अन्ननाम । निघ० २ । ७ ॥ वाङ्नाम निघ० १ । ११ ॥

**सूनृतावती** सूनृता प्रशस्ता बुद्धिर्विद्यते यस्यां सा (सूनृतेति वाङ्नामसु० निघं० १.११ । अत्र प्रशंसार्थे मतुप्) १.२२.३ । उषा इव ७.११ ॥ [सूनृतावति] सूनृतान्यानृशंस्यानि प्रशस्तानि कर्माणि अस्याः सा १.६२.१४ ॥

**सूनृतावरि** सत्यवाक्प्रकाशिके ४.५२.४ ॥

**सूनृतावान्** सूनृताअन्नादीनि प्रशस्तानि विद्यन्ते यस्मिन्त्सः १.५६.७ । [सूनृतावतः] सत्यवाणीयुक्तान् १.८२.१ ॥

सूनृतावती—उषोनाम निघ० १। ८॥

**सूपस्थाः** ये सुष्ठु उपतिष्ठन्ति ते २१.६० ॥

**सूपायनः** सुष्ठूपगतमयनं ज्ञानं पदार्थसुखसाधनं प्रापणं यस्मात्सः १.१.६ ॥

**सूयते** निष्पद्यते ४.५८.६ ॥

**सूयमानः** उत्पद्यमानः ८.५७ ॥

**सूयवसिनी** बहूनि शोभनानि मिश्रितान्यमिश्रितानि वस्तूनि विद्यन्ते यस्यां सा ५.१६ ॥

**सूरः** यः सरति प्राप्नोति सः सूर्यः १.५०.६। प्राणिगर्भविमोचिका प्राणस्थविद्युदिव १.७१.६। वीरः ६.५६.३॥ [ **सूरम्** ] प्रेरयितारमध्यापकम् १.८६.५॥ [ **सूरे** ] सूर्य इव वर्तमाने सैन्ये ४.३.८ ॥

सूरः—अन्तो वै सूरः। तां० १५।४।२॥

**सूरचक्षसः** सूरे सूर्ये चक्षांसि दर्शनानि येषां ते १.१६.१। सूरे सूर्ये प्राणे वा चक्षो व्यक्तं वचो दर्शनं वा येषां ते १.८६.७। सूरप्रज्ञानाः १.२१०.४। सूर ऐश्वर्ये प्रेरणे वा चक्षो दर्शनं येषां ते २५.२० ॥

सूरचक्षस—सूरख्याना वा सूरप्रजा वा। नि० ११। १६॥

**सूरिः** विद्वान् १.१२२.८॥ मेधावी १२.४३ ॥ [ **सूरयः** ] धार्मिका मेधाविनः पुरुषार्थयुक्ता विद्वांसः ( अत्र सूङः क्रिः उ० ४।६५ अनेन सूङ्धातो क्रिः प्रत्ययः) १.२२.२०। जिज्ञासवो मनुष्याः २.१.१६॥ [ **सूरिम्** ] युद्धविद्याकुशलं धार्मिकं विद्वांसम् १.११६.३ ॥

सूरि—स्तोतृनाम। निघ० ३।१६॥

**सूर्त्ते** प्राप्ते प्रत्यक्षे १७.२८ ॥

**सूर्म्यां** [ **सूर्म्यां** ] सच्छिद्रया मूर्त्या कलया वा ७.१.३। ऐश्वर्येण १७.७६ ॥

**सूर्यः** सवितृलोकस्तत्प्रकाशो वा १.२३.१७। ब्रह्माण्डस्थो मार्तण्डः, शरीरस्थः प्राणो वा १.६०.८। सवितेव ज्ञानप्रकाशः १.११५.१। सूर्य इव सर्वप्रकाशकः ४.२५.१। सकलविद्यादिव्यवहारप्रापकत्वेन वर्तमानः प्राणादिसमूहो वायुगुणः ३.६ ॥ [ **सूर्यासः** ] सवितार इव तेजस्विनो जनाः १.१२५.६॥ [ **सूर्यम्** ] सरणशीलं स्वकीयरश्मिगणम् १.३५.६। सवितृप्रकाशमिव युद्धन्यायम् १.१००.६। प्रकाशमयम् १.११२.१३। सवितारमिव न्यायम् ३.४४.२। यः स्त्रियते विज्ञाप्यते वा विदैर्विद्वद्भिश्च तम् ७.४१॥ सूरिषु विद्वत्सु भवम् ६.२६॥ [ **सूर्येण** ] प्रेरकेण ३७.१५ ॥ [ **सूर्याय** ] परमेश्वरविज्ञानाय १.१२३.२। सूर्यगुणाय ६.२५। सूर्यस्येव योगप्रकाशाय ७.६॥ [ **सूर्यस्य** ] चराचरस्यात्मनो जगदीश्वरस्य विदुषो जीवस्य वा ( सूर्य आत्मा जगतस्तस्थुषश्च यजु० ७।४२ अनेनेश्वरस्य ग्रहणम्। सूर्य इति पदनामसु। निघ० ५।६ इति गत्यर्थेन ज्ञानरूपत्वादीश्वरो, व्यवहारप्रापकत्वाद्विद्वानेवात्र गृह्यते ) २.२६। सवितृमण्डलस्य विद्युतो वा ४.३२ ॥ [ **सूर्ये** ] सूरिषु स्तोतृषु भवे १२.२७ ॥ [ **सूर्य्य** ] सूर्यविद्यैश्वर्योत्पादक ३३.३५। सूर्यवद्वर्तमान राजन् ३३.३६। सूर्य इव

न्यायविद्यासु प्रकाशमान ८.४० । सर्वौषधिरोगनिवारणविद्यावित् १.५०.१ १॥

सूर्यः—सर्तेर्वा, सुवतेर्वा, स्वीर्यतेर्वा । नि० १२ । १४ ॥

सूर्यः—तं (इन्द्रं) देवा अब्रुवन् सुवीर्य्यो मर्य्या यथा गोपायत इति । तत्सूर्य्यस्य सूर्य्यत्वम् । तै० २ । २ । १० । ४ ॥ असौ वै सूर्यो योऽसौ तपति । कौ० ५ । ८ ॥ (यजु० १८ । ४०) असौ वाऽ आदित्यः सूर्यः । श० ६ । ४ । २ । ३३ ॥ एष वै शुक्रो य एष (सूर्यः) तपत्येष उऽएव बृहन् । श० ४ । ५ । ६ । ६ ॥ यः सूर्यः स धाता स उ एव वषट्कारः । ऐ० ३ । ४८ ॥ एष एव वषट्कारो यः एष (सूर्यः) तपति । श० १ । ७ । २ । ११ ॥ एष वै स्वाहाकारो य एष (सूर्यः) तपति । श० १४ । १ । ३ । २६ ॥ अर्कश्चक्षुस्तदसौ सूर्य्यः । तै० १ । १ । ७ । २ ॥ स हैष (सूर्यः) भर्ता । श० ४ । ६ । ७ । २१ ॥ (द्युस्थानः) सूर्यो ज्योतिर्ज्योतिः सूर्य इति तद्दमुं लोकं (=द्युलोकं) लोकानामाप्नोति तृतीयसवनं यज्ञस्य । कौ० १४ । १ ॥ (यजु० २० । ३१) स्वर्गो वै लोकः सूर्य्यो ज्योतिरुत्तमम् । श० १२ । ६ । २ । ८ ॥ सूर्यो वै सर्वेषां देवानामात्मा । श० १४ । ३ । २ । ६ ॥ अथ सूर्यमुदीक्षते । सैषा गतिरेषा मतिरेषा प्रतिष्ठा । श० १ । ६ । ३ । १५ ॥ ते (देवाः) सूर्य्यं काष्ठाङ्कृत्वाजिमधावन् । तां० ६ । १ । ३५ ॥ एतद्वाऽ अनपराद्धं नक्षत्रं यत्सूर्यः । श० २ । १ । २ । १६ ॥ सूर्य्यो ऽग्नेर्योनिरायतनम् । तै० ३ । ६ । २१ । २,३ ॥ सूर्य्यो हि नाष्ट्राणां रक्षसामपहन्ता । श० १ । ३ । ४ । ८ ॥ सूर्यो वै प्रजानां चक्षुः । श० १३ । ३ । ८ । ४ ॥ सूर्य्यो मे चक्षुषि श्रितः । तै० ३ । १० । ८ । ५ ॥ सूर्य उद्गाता । गो० पू० १ । १३ ॥ सूर्यात्सामवेदः (अजायत) । श० ११ । ५ । ८ । ३ ॥

**सूर्यत्वचः** सूर्य इव प्रकाशमाना त्वग् येषां ते ७.५६.११ ॥

**सूर्यरश्मिः** सूर्यस्य किरणः १५.१५ । सूर्यस्य रश्मयः किरणा दीप्तयो यस्मिन्त्सः १८.४२ ॥

**सूर्यवर्चसः** सूर्यस्य प्रकाश इव वर्चो विद्याध्ययनं येषां ते १०.४ ॥

**सूर्यसमम्** सूर्येण तुल्यम् २३.४७ ॥

**सूर्या** सूर्यसम्बन्धिन्युषा इव ५.७३.५ ॥

[**सूर्याम्**] सूर्यसम्बन्धिनीं कान्तिम् ४.४४.१ ॥ [**सूर्यायै**] सूर्यवच्छुभगुणप्रकाशिकायै कन्यायै ६.५८.४॥ [**सूर्यायाः**] उषसः इव सम्बन्धिन्याः प्रजायाः ६.३६.६॥

[**सूर्येव**] यथा सूर्यस्य दीप्तिः १.१६७.५॥

[**सूर्यामिव**] सूर्य की किरणों के समान [तुझको वस्त्र और भूषणादि से सुशोभित रखूंगा] (रखूंगी) १४.१.५३। (१४८ विध)

सूर्या—वाङ्नाम । निघ० १ । ११ ॥ सूर्यस्य पत्नी । नि० १२ । ७ ॥ एषैवाभिसृष्टकालतमा । नि० १२ । ७ ॥

**सूर्याचन्द्रमसा** सूर्याचन्द्रादिलोकसमूहौ १.१०२.२ ॥

**सूर्व्याय** सुष्ठु ऊर्वां भवाय १६.४५ ॥

**सूषाः** शोभना उषा यस्मिन्त्सः कालः १८.६ ॥

**सूष्यन्त्याइव** प्रसवत्याः स्त्रिया इव ५.७८.५॥

**सृकम्** वज्रतुल्यं शस्त्रम् १८.७१ ॥ [**सृके**] वज्र इव किरणसमूहे १.३२.१२ ॥

सृक—वज्रनाम निघ० २ । २० ॥

**सृकायिभ्यः** सृकेण वज्रेण सज्जनानेतुं प्राप्तुं शीलमेषां तेभ्यः १६.२१ ॥

**सृकाहस्ताः** सृका वज्राणि हस्तेषु येषां ते १६.६१ ॥

**सृकाणम्** सृजन्तं जनम् १.१६४.२८ ॥

सृक्वन्—सरणं नि० ११ । ४२ ॥

**सृज्ञाथाम्** संसर्गं कुरुतम् १६.७ ॥

**सृज** [**सृज**] संयोजय २०.२२ । निष्पादय सृजति ( अत्र व्यत्ययः । द्व्यचोऽतस्तिङ इति दीर्घः ) १.१३.११ ॥

**सृजः** [**सृजः**] उत्पादय २.११.२ । सृजति ५.३२.१ । संयोजयेः १.१८६.५ ॥

**सृजत्** [**सृजत्**] सृजति १.५५.६ । सृजेत् १.१७४.४ ॥

**सृजत** विविधतया प्रकाशयत सम्पादयत वा १.६.२ । प्रक्षिपत १.३६.१० ॥

**सृजतम्** [**सृजतम्**] निष्पादयतम् १.१५१.६॥

**सृजति** १.४८.६ ॥

**सृजते** उत्पन्न करता है ५.३४.८ ॥

**सृजथः** उत्पन्न करते हो १.१८०.६ ॥

**सृजध्वम्** विविधविद्यायुक्तं कुरुत ६.४८.११ ॥

**सृजयः** पक्षिविशेषः २४.३३ ॥

**सृजन्ति** उत्पन्न करते हैं ५.३०.१३ ॥

**सृजन्तु** उत्पन्न करें ५.२.५ ॥

**सृजस्व** (वि-)छोड़ दे १.१०१.१० ॥

**सृजानः** उत्पादयन् ७.३८.२ ॥

**सृजाना** निष्पादिता ६.६.५ ॥ [**सृजानाः**] सुशिक्षिताः ६.३२.५ ॥

**सृजामि** [**सृजामि**] सम्पद्ये प्रक्षिपामि वा ५.११ । निष्पादयामि ११.५३ । सम्बध्नामि १८.३५ ॥

**सृजेथाम्** निष्पादयेतम् ( अत्र व्यत्ययेनात्मनेपदम् ) १५.५० । निष्पादयेताम् १८.६१॥

**सृंजयाय** उत्पादनाय ६.२७.७ ॥ [**सृंजये**] यः प्राप्ताञ्छत्रून् जयति तस्मिन् ४.१५.४ ॥

**सृण्यः** [**सृण्यः**] प्राप्तबलाः सुशिक्षिताः सेनाः ४.२०.५ । याः क्षेत्रयोगान् गता यवादिजातयः १२.६८ ॥ [**सृण्या**] धारणेन हननेन वा १.५८.४ ॥

सृणि—अङ्कुशा भवति नि० ५ । ५० ॥

**सृती** सरन्ति गच्छन्ति आगच्छन्ति जीवा ययोस्ते १६.४७ ॥

**सृप्रदानुम्** सृप्रं सर्पणं दानुर्दानं यस्मात्तम् १.९६.३ ॥

**सृप्रभोजसम्** प्राप्तानां पालकम् ६.४८.१४ ॥

सृप्र—सर्पणात् । इदमपीतरत् सृप्रमेतस्मादेव सर्पिर्वा तैलं वा नि० ६ । १७ ॥

**सृप्रम्** प्राप्तशुभगुणम् ४.५०.२ ॥ [**सृप्रा**] सर्पन्ति प्राप्नुवन्ति याभ्यां तौ ३.१८.५॥

**सृप्रबंधुरः** सृप्रैः संगतैर्बन्धुरैर्बन्धनैर्युक्तः १.१८१.३ ॥

**सृमरः** गवयः २४.३६ ॥

**सृष्टा** युद्धाय प्रेरिता १.६६.४ । रचना से रची हुई १.१४३. ५ । सम्प्रयुक्ता ७.३०.४ ॥ [**सृष्टाः**] शत्रूणामुपरिनियताः कृताः ७.१८.१५ ॥

**सेकम्** सेचनम् ३.३१.१ ॥

**सेक्तेव** पूरकवत् ३.३२.१५ ॥

**सेत्** सिनुयात् ( अत्र षिञ् बन्धन इत्यस्माल्लिङि विकरणलुगभावश्च ) ६.५ । सम्बध्नीयात् ६.६ ॥

**सेद्** निषादयत ७.५६.७ ॥

**सेदथुः** निषीदतः ४.५६.७ ॥

**सेदिः** नाश उत्पत्तिर्वा २०.२६ ॥ [ **सेदिम्** ] हिंसाम् १२.१०५ ॥

**सेदिम** प्राप्नुयाम १.८६.२ । उपतिष्ठेम ५.८.४॥

**सेदिरे** सीदन्ति ( अत्र लडर्थे लिट् ) १.२५.१३॥

**सेदुः** प्राप्नुयुः ३.३१.६ । प्रसीदन्ति ४.१.१३ । निषीदन्ति ४.६.११ । निषीदेयुः ४.५०.३॥

**सेदुषः** ज्ञानवतः ५.१५.२ ॥

**सेध** [ **सेध** ] साध्नुहि ६.४४.६ ॥ शास्त्राणि शिक्षय १.१७ । दूरीकुरु २६.५५ । अपनय ६.४७.२६ ॥

**सेधतम्** मंगलं सुखं प्राप्नुतम् १.३४.११ । दूरीकृतम् १.१५७.४ । गमयतम् ३४.४७॥

**सेधति** दूरीकरोति १.७६.१२ । साधयति ७. १५.१० ॥

**सेधन्ति** निवर्तयन्तु १.१०५.११ ॥

**सेनजित्** यः सेनया जयति सः ( अत्र ङ्यापोः संज्ञाछन्दसोर्बहुलमिति ह्रस्वत्वं च ) १५.१६ । यः सेनां जयति सः १७.८३ ॥

सेनजित्—( यजु०१५। १६ ) तस्य (पर्जन्यस्य) सेनजिच्च सुषेणश्च सेनानीग्रामण्याविति हैमन्तिकौ तावृतू। श० ८।६।१२० ॥

**सेना** सेना १७.४७ ॥ [ **सेनाः** ] सिन्वन्ति बध्नन्ति शत्रून् याभिस्ताः १७.३३ ॥ [ **सेनाइव** ] यथा सुशिक्षिता वीरपुरुषाणां विजयकर्त्री सेनास्ति तथाभूतः १.६६.४॥

सेना—सेनेन्द्रस्य पत्नी। गो० उ० २।६॥

सेना—सेश्वरा समानगतिर्वा नि० २। ११॥

**सेनाजुवा** वेगेन सेनां गमयितारौ १.११६.१ ॥

**सेनानीः** यः सेनां नयति सः ७.२०.५ ॥ [ **सेनान्ये** ] यः सेनां शिक्षां प्रापयति तस्मै १६.१७ ॥

**सेनानीग्रामण्यौ** सेनानीश्च ग्रामणीश्च ताविव वर्तमानौ १५.१५—१८ । एतावद्वर्तमानौ मार्गशीर्षपौषौ मासौ १५.१६ ॥

**सेन्यः** सेनासु साधुः सेनाभ्यो हितो वा १. ८१.२ ॥

**सेपुः** शपथं कुर्युः ६.२६.१ ॥

**सैर्याः** तडागादितटेषु भवा तृणविशेषस्थाः १. १६१.३ ॥

**सैलगम्** सीलांगस्य दुष्टस्यापत्यम् ३०.१८ ॥

**सो** सा ( अत्राज् व्यत्ययेन आकारस्थाने ओकारादेशः ) १.१६१.११ ॥

**सोतवे** यवाद्यौषधीनां सारं निष्पादयितुम् (अत्र तुमर्थेसेसेनसे० सुञ् धातोः तवेन् प्रत्ययः) १.२८.१ ॥

**सोता** अभिषवस्य कर्ता ४.३.३ ॥

**सोमाहुतः** सोमैरेश्वर्यकारकैः गुणैः पदार्थैर्वा आहुतो वर्द्धितः सन् १.६४.१४ ॥

**सोमः** सोमलतादिसमूहरसः १.१८.४ । सोमलताद्यौषधिसमूहः १.१८.५ । ऐश्वर्यप्रदः पदार्थसमूहः १.८०.२ । सुखैश्वर्यकारको न्यायः १.१३६.४ । चन्द्रः ३.६२.१४ । ऐश्वर्यम् ४.२४.५ । यः सुनोति सः ४. ३४.४ । प्रेरको विद्वान् ६.३८.४ । योगैश्वर्यवृन्दः ७.६ । सौम्यगुणसम्पन्नो राजा

७.२१। मृदुगुणवर्धकः ८.१। ऐश्वर्यमिच्छुः ६.३१। शुभगुणप्रसिद्धः १०.१८। सेनाप्रेरकः १७.४०। ऐश्वर्यवान्, सत्याचारे प्रेरकः, शरीरात्मबलं वा ३४.२१। चन्द्रमा तथा सोमलता औषधिगण १४.१.५४ (विधि १४८)। पैदा करने वाला ३.२७.४। (पञ्च) [सोमाः] ये सुन्वन्ति सूयन्ते वा ते पदार्थाः ३.३६.२। सौम्यगुणसम्पन्नाः सभ्या जनाः ४.१७.६। ऐश्वर्यप्रापकाः ३३.१। [सोमासः] अभिसूयन्त उत्पाद्यन्ते उत्तमा व्यवहारा येषु ते १.५.५। सूयन्ते उत्पद्यन्ते ये ते पदार्थाः (अत्र अर्तिस्तुसूहुसृ० उ.१।१३६ अनेन षुधातोर्मन् प्रत्ययः आज्जसेरसुक् इत्यसुक् च) १.२३.१। अभिषुताः सुसम्पादिताः पदार्था यैस्ते १.५३.६। [सोमम्] सकलजगतः प्रसवितारम् ७.२५। सकलगुणैश्वर्यकल्याणकर्त्रध्ययनाध्यापनाख्यं यज्ञम् ७.३५। सोमवल्ल्यादिनिष्पन्नमाह्लादकमासवविशेषम् ८.१०। सोममिव सर्वदुःखप्रकणाशकम् ६.२३। सोमवल्ल्याद्यौषधिरसान्वितं पाकम् १५.६०। ओषधिरसं प्रेरणाख्यं व्यवहारं वा २०.६३। सर्वरोगनाशकं बलपुष्टिबुद्धिवर्धकमुत्तमौषध्यभिषवम् १.२८.६। वीररसादिकम् १.४७.३। सृष्टिक्रमेण सर्वपदार्थाभिषवकर्तारं शान्तम् १.८६.३। ऐश्वर्यकारकं शास्त्रबोधम् १.१०१.६। सोमलताद्योषधिसारपातारम् २.११.११। महौषधिविशिष्टमन्नम् ३.४०.५। सूयन्ते यस्मिँस्तं संसारम् ३.४७.३। ओषधिजन्यं घृतदुग्धादिकं रसम् ३.४७.४। जलम् ५.३४.३॥ [सोमेन] शिल्पविद्यया सम्पादितेन रसेनानन्देन वा १.४॥ [सोमाय] सुवन्त्यैश्वर्याणि प्राप्नुवन्ति यस्मिम् संसारे तस्मै २.१६। उत्तमरससम्पादकाय, पदार्थविद्यास्तोकारकाय, ऐश्वर्ययुक्ताय राज्याय वा ४.२४। ओषधिगणशोधनाय २२.६। शुभकर्मसु प्रवृत्ताय ८.४६। ओषधिविज्ञानाय १०.५॥ [सोमस्य] ऐश्वर्यगुणयुक्तस्य गृहाश्रमस्य ८.४६। अभिषोतुमर्हस्य १६.२१। अंशुमदादिसंज्ञस्य चतुर्विंशतिधा भिद्यमानस्य १६.३३। सोतव्यस्य सुखस्य १.२२.१। वैद्यविद्यासम्पादितस्य १.५५.२। धर्मप्रेरकस्य १.१११.६॥ [सोमे] सोतव्ये सर्वस्मिन् पदार्थे विमानादियाने वा १.५.२॥ [सोम] विज्ञातव्यगुणकर्मस्वभाव १.६१.११। रक्षक १.६१.१५। सोमविद्यासम्पादक विद्वन् ४.३७। प्रशस्तगुण शिष्य ७.१४। ऐश्वर्याढ्य गृहस्थजन ८.२६। सोमवल्लीव सर्वरोगविनाशक ३४.२२। सर्वसुखप्रापक सभाध्यक्ष १.३४.७। सर्वसुहृत् सौहार्दप्रदो वा १.६१.८। वीर्यवत्तम १.६१.१६। बहुत सुख को उत्पन्न करने हारा पवन १.६४.५॥ [सोमाइव] सोमलतेव ६.८.१॥

सोम—ओषधिः सोमः सुनोतेर्यदेनमभिषुण्वन्ति। नि० ११।२॥

सोमः—स्वा वै मऽएषेति तस्मात्सोमो नाम। श० ३।६।४।२२॥ सत्यं (वै) श्रीर्ज्योतिः सोमः। श० ५।१।२।१० श्रीर्वै सोमः। श० ४।१।३।६॥ सोमो राजा राजपतिः। तै० २।५।७।३॥ असौ वै सोमो राजा विचक्षणश्चन्द्रमाः। कौ० ४।

४॥ सोमो राजा चन्द्रमाः। श० १०।४।२।१॥ चन्द्रमा वै सोमः। कौ० १६।५॥ वृत्रो वै सोम आसीत्। श० ३।४।३।१३॥ पितृलोकः सोमः। कौ० १६।५॥ पितृदेवत्यो वै सोमः। श० २।३।२।१२॥ संवत्सरो वै सोमः पितृमान्। तै० १।६।८।२॥ (ऋ० ४।५३।७) संवत्सरो वै सोमो राजा। कौ० ७।१०॥ प्रच्यवस्व भुवस्पतऽइति भुवनानां ह्येष (सोमः) पतिः। श० ३।३।४।१४॥ सोमो हि प्रजापतिः। श० ५।१।५।२६॥ सोमो वैष्णवो राजेत्याह तस्याप्सरसो विशः। श० १३।४।३।८॥ जुष्टा विष्णव इति। जुष्टा सोमायेत्येवैतदाह (विष्णुः=सोमः)। श० ३।२।४।१२॥ तद्यदेवेदं क्रीतो विशतीव तदु हास्य (सोमस्य) वैष्णवं रूपम्। कौ० ८।२॥ सोमो वै पवमानः। श० २।२।३।२२॥ एष (वायुः) वै सोमस्योद्गीथो यत्पवते। तां० ६।६।१८॥ तस्मात्सोमं सर्व्वेभ्यो देवेभ्यो जुह्वति तस्मादाहुः सोमः सर्वा देवता इति। श० १।६।३।२१॥ सोमो वाऽइन्दुः। श० २।२।३।२३॥ सोमो रात्रिः। श० ३।४।४।१५॥ सोम एव सत्रृतः (? समृतः—तैत्तिरीयसंहितायाम् १।६।७।१) इति। गो० उ० २।२४॥ सोमो वै चतुर्होता। तै० २।३।१।१॥ सोमो वै पर्णः। श० ६।५।१।१॥ सोमो वै पलाशः। कौ० २।२॥ पशुर्वै प्रत्यक्षं सोमः। श० ५।१।३।७॥ सोम एवैष प्रत्यक्षं यत्पशुः कौ० १२।६॥ पशवः सोमो राजा। तै० १।४।७।६॥ सोमो वै दधि। तै० १।४।७।६॥ एष (सोमः) उ एव किल्विषस्पृत्। ऐ० १।३॥ एष वै यजमानो यत्सोमः। तै० १।३।३।५॥ द्यावापृथिव्योर्वा एष गर्भो यत्सोमो राजा। ऐ० १।२६॥ क्षत्रं सोमः। ऐ० २।३८॥ यशो वै सोमः। श० ४।२।४।६॥ यशो (ऋ० १०।७२।१०) वै सोमो राजा। ऐ० १।१३॥ यश उ वै सोमा राजान्नाद्यम्। कौ० ६।६॥ प्रजापतेर्वाऽएतेऽअन्धसी यत्सोमश्च सुरा च। श० ५।१।२।१०॥ अन्नं सोमः। कौ० ६।६॥ एतद्वै देवानां परममन्नं यत्सोमः। तै० १।३।३।२॥ एतद्वै परममन्नाद्यं यत्सोमः। कौ० १३।७॥ हविर्वै देवानां सोमः। श० ३।५।३।२॥

एषो ह परमाहुतिर्यत्सोमाहुतिः। श० ६।६।३।७॥ सोमः खलु वै सान्नाय्यम् (हविः)। तै० ३।२।३।११॥ प्राणः सोमः। श० ७।३।१।२॥ सोमो वै वाजपेयः। तै० १।३।२।३॥ एष वाऽउत्तमः हविर्यत्सोमः। श० ३।६।४।५॥ रेतः सोमः। कौ० १३।७॥ सोमो रेतोऽदधात्। तै० १।६।२।२॥ सोमो वै वृष्णो अश्वस्य रेतः। तै० ३।६।५।५॥ सोमो वै बभ्रुः (यजु० १२।७५)। श० ७।२।४।२६॥ रसः सोमः। श० ७।३।१।३॥ वाज्यैवैनं (सोमं) पीत्वा भवति। तै० १।३।२।४॥ भद्रा (प्रजापतेस्तनूर्विशेषः) तत्सोमः। ऐ० ५।२५॥ (उपसद्देवतारूपाया इषः) सोमः शल्यः। ऐ० १।२५॥ तिरो अह्न्या हि सोमा भवन्ति। कौ० १८।५॥ तद्यदेत्तदमृतं सोमः सः। श० ६।५।१।८॥ सर्वं हि सोमः। श० ५।५।४।११॥ तस्मात्सोमो राजा सर्वाणि नक्षत्राण्युपैति। ष० ३।१२॥ तृतीयस्यामितो दिवि सोम आसीत्। तं गायत्र्याहरत्। तै० १।१।३।१०॥ अन्तरिक्षदेवत्यो हि सोमः। गो० उ० २।४॥ गिरिषु हि सोमः। श० ३।३।४।७॥ घ्नन्ति खलु वा एतत्सोमं यदभिषुण्वन्ति। तै० २।२।८।१॥ सोमो राजा मृगशीर्षेण आगन्। तै० ३।१।२।२॥ सोम वीरुधां पते। तै० ३।११।४।१॥ सोमो वा अकृष्टपच्यस्य राजा। तै० १।६।१।११॥ सोम ओषधीनामधिराजः। गो० उ० १।१७॥ एष वै ब्राह्मणानां सभासाहः सखा (ऋ० १०।७१।१०॥) यत्सोमो राजा। ऐ० १।१३॥ एष वो ऽमी राजा सोमो ऽस्माकं ब्राह्मणानां राजेति।...तस्माद् ब्राह्मणो नाद्यः सोमराजा हि भवति। श० ५।४।२।३॥ ब्राह्मणानां स (सोमः) भक्षः। ऐ० ७।२६॥ सोमो वै ब्राह्मणः। तां० २३।१६।५॥ शोभनं ह्येतस्य (सोमस्य) वासः। श० ३।३।२।३॥ सोमः पयः। श० १२।७।३।१३॥ आपः सोमः सुतः। श० ७।१।१।२२॥ आपो ह्येतस्य (सोमस्य) लोकः। श० ४।४।५।२१॥ तद्यदेवात्र पयस्तन्मित्रस्य सोम एव वरुणस्य। श० ४।१।४।६॥ दीक्षा सोमस्य राज्ञः पत्नी। गो० उ० २।६॥ पुमान् वै सोमः स्त्री

सुरा। तै० १।३।३।४॥ रयिᳲ सोमो रयिपतिर्दधातु। तै० २।८।१।६॥ वैराजः सोमः। कौ० ६।६॥

**सोमकः** सोम इव शीतलस्वभावः ४.१५.६ ॥

**सोमकामम्** अभिषुतानां पदार्थानां रसं कामयते यस्तम् १.१०४.९ ॥

**सोमक्रयणाः** ये सोमानुत्तमान् पदार्थान् क्रीणन्ति ते ४.२७ ॥

**सोमक्रयण्याम्** सोमाद्योषधीनां ग्रहणे ८.५४॥

सोमक्रयणी—(गौः) सा या बभ्रुः पिङ्गाक्षी (गौः) सा सोमक्रयणी। श० ३।३।१।१४॥ वाग्वै सोमक्रयणी। श० ३।२।४।१०, १५॥

**सोमगोपा** सोमानामोषधीनामैश्वर्याणां वा रक्षकः १२.२२। ऐश्वर्यपालकः १२.२९ ॥

**सोमधानः** सोमाद्यौषधिगणा धीयन्ते यस्मिन्सः ६.६९.६ ॥ [**सोमधानाः**] सोमानां धानाः येषु ते ३.३६.८ ॥

**सोमनेत्राः** सोमलतादिष्वोषधिषु नेत्रं नयनं येषां ते ९.३६ ॥ [**सोमनेत्रेभ्यः**] सोमस्य चन्द्रस्यैश्वर्यवती नेत्रं नयनमिव नीतिर्येषां तेभ्यः ९.३५ ॥

**सोमपतिम्** ऐश्वर्याणां स्वामिनम् १.७६.३ ॥

**सोमपरिबाधः** ये सोमानुत्तमान् पदार्थान् परितः सर्वतो बाधन्ते ते १.४३.८ ॥

**सोमपर्वभिः** सोमानां पदार्थानां पर्वाण्यवयवास्तैः सह १.९.१। सोमाद्यौषधीनामवयवैः ३३.२५ ॥

**सोमपाः** सर्वपदार्थरक्षकः १.४.२। यः सोमं रसं पिबति सः २.१२.१३। यः सोममैश्वर्यं पाति सः ४.३२.१४। सोमानुत्तमान् पदार्थान् पाति रक्षति तत्सम्बुद्धौ, पदार्थानां रक्षणहेतुः सूर्यो वा १.१०.३। यः सोमैर्जगत्युत्पन्नैः पदार्थैः सर्वान् पाति रक्षति तत्सम्बुद्धौ १.३०.१२ ॥

**सोमपातमः** यः सोमान् पदार्थान् किरणैः पाति सोऽतिशयितः १.८.७॥ [**सोमपातमम्**] अतिशयेन सोमपातारम् ६.४२.२ ॥

**सोमपावा** श्रेष्ठौषधिरसस्य पाता ५.४०.४ ॥ [**सोमपाव्ने**] यः सोमं पिबति तस्मै ७.३१.१ ॥ [**सोमपाव्नाम्**] सोमानां पावानो रक्षकास्तेषाम् १.३०.११ ॥

**सोमपित्सरु** ये सोमं यवाद्योषधीः पालयन्ति तान्त्सरयति कुटिलं गमयति यः सः१२.७१॥

**सोमपीतये** सूयन्ते ये पदार्थास्तेषां पीतिः पानं यस्य तस्मै मनुष्याय (अत्र सह सुपेति समासः) १.२.३। सोमानां सर्वेषां पदार्थानां पीतिः पानं यस्य तस्मै १.८.१०। सोमानां सुखकारकणां पीतिः पानं यस्मात् यज्ञात् तस्मै १. १४.१। सोमानां सुतानां पदार्थानां पीतिः पानं यस्मिन्व्यवहारे तस्मै (अत्र सह सुपेति समासः १.१६.१। सोमानां सुतानां पीतिः पानं यस्मिन् आनन्दे तस्मै (अत्र सह सुपेति समासः) १.१६.८। सोमानां पदार्थानां पीतिः रक्षणं यस्मिन् व्यवहारे तस्मै १.२१.३। सोमानां पदार्थानां पीतिर्ग्रहणं यस्मिन् व्यवहारे तस्मै १.२२.९। सोमानां ऐश्वर्याणां पीतिर्भोगो यस्मिन् तस्मै १.२२.१२। सोमानामनुकूलानां सुखादिरसयुक्तानां पीतिः पानं यस्मिन्व्यवहारे तस्मै १.२३.४। प्रशस्त-

पदार्थभोगनिमित्ताय १.२३.७ । पदार्थानां यथावद्भोगाय १.२३.१० । पुष्टिशान्त्यादिगुणयुक्तानां पदार्थानां पानं यस्मिन् व्यवहारे तस्मै १.६२.१८ । सोमा ओषधिरसाः पीयन्ते यस्मिँस्तस्मै १.१३७.३ । यया सोमा विद्यैश्वर्याणि जायन्ते तस्यै २.४१.२१ । सोमस्य पानाय ४.४६.३,७ । उत्तमरसपानाय ४.४७.१ । ऐश्वर्यपालनाय ४.४७.३ ॥

सोमपुरोगवः सोम ओषधिगणबोध ऐश्वर्ययोगो वा पुरोगामी यस्य सः २३.१४॥

सोमपृष्ठाय सोमः पृष्ठो येन तस्मै २०.७८॥

सोमपीथः सोमः पीयते यस्मिन्त्सः ८.५ ॥ [ सोमपीथाय ] सुखकारकपदार्थभोगाय १.५१.७॥

सोमपीथः—इन्द्रियं सोमपीथः । तै० १।३।१०।२॥

सोमपेयम् सोमैरैश्वर्ययुक्तैः पातुं योग्यम् १.१२०.११। सोमानां पदार्थानां पातुं योग्यम् २.१८.४ । सोमेष्वौषधिषु यः पेयो रसस्तम् २.१८.५ । सोमश्चासौ पेयश्च तम् ३.४३.१ । सोमस्य पातव्यं रसम् ५.२६.५ ॥ [ सोमपेयाय ] ऐश्वर्यप्राप्तये ३.२५.४ । पेयः सोमो येन तस्मै ३.५२.८ । उत्तमौषधिरसपानाय ७.२४.३ ॥

सोमभृते यः सोमान् बिभर्ति तस्मै यजमानाय ५.१ । यः सोममैश्वर्यसमूहं बिभर्ति तस्मै ६.३२ ॥

सोममादः ये सोमेन मदन्ति हर्षन्ति ते ७.२१.२॥

सोमराज्ञीः सोमो राजा यासां ताः १२.६२ । सोमप्रमुखाः १२.६३॥

सोमराज्ञी—या ओषधीः सोमराज्ञीः । मं० २।८।३, ४॥

सोमवताम् सोमगुणयुक्तानाम् २४.१८ ॥

सोमवृद्धः सोमेनैश्वर्येणौषध्या वा प्रवृद्धः ६.१६.५॥ [ सोमवृद्ध ] सोमेन विद्यैश्वर्येण वृद्धस्तत्सम्बुद्धौ ३.३६.७॥

सोमसखा सोमः परमेश्वरः सोमविद्याविन्मनुष्यो वा सखा सुहृद्यस्य सः ४.२० ॥

सोमसुतः औषध्यैश्वर्योत्पादितः २५.१७। सोमाः सुता येभ्यस्ते १.८६.४ ॥ [सोमसुद्भिः] ये सोममैश्वर्यमोषधिगणं वा सुन्वन्ति तैः ४.२४.८ ॥

सोमसुत्वा यः सोममैश्वर्यं सवति सः १.११३.१८॥

सोमांशवः सोमस्यांशाः १६.१३ ॥

सोमानम् यः सवत्यैश्वर्यं करोति तं यज्ञानुष्ठातारम् १.१८.१ । सुनोति निष्पादयत्योषधिसारान् विद्यासिद्धीश्च येन तम् ३.२८ ॥

सोमापूषणा प्राणापानौ २.४०.१। अग्निवायू २.४०.३॥ [ सोमापूषणौ ] शान्ति और पुष्टि गुण वाले वायु का २.४०.५॥ [ सोमापूभ्याम् ] चन्द्रौषधिगणाभ्याम २.४०.२॥

सोमारुद्रा चन्द्रप्राणाविव राजवैद्यौ ६.४७.१। ओषधिप्राणवत्सुखसम्पादकौ ६.७४.२ । यज्ञशोधितौ सोमलतावायू इव राजवैद्यौ ६.७४.३ ॥ [ सोमारुद्रौ ] शुद्धावोषधिप्राणविव ६.७४.४॥

**सोमावतीम्** बहुरससहिताम् १२.८१ ॥

**सोमी** बहुविधमैश्वर्यं विद्यते यस्य सः ४.२५.५ ॥ [सोमिनः] सोमाः प्रशस्ताः पदार्था सन्ति यस्य तस्य ( अत्र प्रशंसार्थ इनिः ) १.२२.४ । प्रशस्ता सोमाः पदार्थाः सन्ति यस्य तस्य १.४६.१ । वह्वैश्वर्ययुक्तस्य १.१५१.२ ॥

**सोम्यासः** परस्पर स्नेहरस के वर्धक ३.३०.१ । सोमवच्छान्ताः १६.३७॥ [सोम्यम्] सोमसम्पादनार्हम् ( सोममर्हति यः अ० ४।४।१३७ इति यः प्रत्ययः ) १.१४.१० । सोमं प्रसवं सुखानां समूहं रसादानमर्हति तत् ( अत्र सोममर्हति यः अ. ४।४।१३७ इति यः प्रत्ययः ) १.१६.६ । सोमगुणसम्पन्नम् २.३६.४ । सोमार्हम् २.३७.२ । सोमे भवम् ३.५१.११ । सोमे ऐश्वर्ये साधु ३.५३.१० । सोमलताद्योषधिगणे भवम् २०.६० । ऐश्वर्य आरोग्य सर्वदा सुखदायक ६.३.१६ ( २२४ वि० ) ॥ [सोम्यस्य] सोमेऐश्वर्ये भवस्य ३.४८.१ ॥

सोम्य—सोममयं । नि० १० । ३७ ॥ सोमसम्पादिनः । नि० ११ । १८ ॥

**सोसवीति** भृशं सुवति ३.५६.७ ॥

**सौत्रामणी** सूत्राणि यज्ञोपवीतादीनि मणिना ग्रन्थिना युक्तानि धीयन्ते यस्मिँस्तस्मिन् १६.३१ ॥

सौत्रामणी—तावश्विनौ च सरस्वती च । इन्द्रियं वीर्यं नमुचेराहृत्य तदस्मिन्पुनरदधुस्तं पाप्मनोऽत्रायन्त सुत्रातं वतैनं पाप्मनोऽत्रास्महीति तद्वाव सौत्रामण्यभवत्तत्सौत्रामण्यै सौत्रामणीत्वम् । श० १२ । ७ । १ । १४ ॥ ते देवा अब्रुवन् । सुत्रातं वतैनमत्रासतामिति तस्मात्सौत्रामणी नाम । कौ० १६ । १० ॥ ऐन्द्रो वाऽ एष यज्ञो यत्सौत्रामणी । कौ० १६ । १० ॥ उभयं सौत्रामणीष्टिश्च पशुबन्धश्च । श० १२ । ७ । २ । २१ ॥ देवसृष्टो वाऽ एषेष्टिर्यत्सौत्रामणी । श० ५ । ५ । ४ । १४ ॥ तस्मादेष ब्राह्मणयज्ञ एव यत्सौत्रामणी । श० १२ । ६ । १ । १ ॥ सुरावान्वाऽ एष बर्हिषद्यज्ञो यत्सौत्रामणी । श० १२ । ८ । १ । २ ॥ सोमो वै सौत्रामणी । श० १२ । ७ । २ । १२ ॥ पवित्रं वै सौत्रामणी । श० १२ । ८ । १ । ८ ॥ स यो भ्रातृव्यवान्स्यात्स सौत्रामण्या यजेत । श० १२ । ७ । ३ । ४ ॥

**सौधन्वनाः** शोभनेषु धनुष्षु कुशलाः १.१६१.२ । शोभनं धन्वान्तरिक्षं यस्य तदपत्यानि ३.६०.४ । शोभनं धन्वान्तरिक्षं येषां तेषां पुत्राः ४.३५.८ । शोभनविज्ञानाः १.११०.४ ॥ [सौधन्वनासः] शोभनज्ञानस्य पुत्राः ३.६०.३ ॥

**सौभगत्वम्** शोभना भगा ऐश्वर्याणि यस्मात्पुरुषात् तस्येदं सौभगम् तस्य भावः सौभगत्वम् १.३४.५ ॥ [सौभगत्वस्य] सुष्ठु भगानामैश्वर्याणामयं समूहस्तस्य भावस्य १.३४.५ ॥

**सौभगम्** शोभना भगा ऐश्वर्ययोगा यस्य तस्य भावस्तम् १.३६.१७ । शोभनानां भगानामैश्वर्याणामिदम् १.४८.६ । सुभगस्य श्रेष्ठैश्वर्यस्य भावम् ४.५४.६ । सौभाग्यवर्द्धकम् ५.५३.१३ । शोभनैश्वर्यस्य भागम् ५.८२.४ ॥ [सौभगा] सुभगानां कर्माणि ( अत्रोद्गातृत्वादञ् ) १.३८.३ ॥ [सौभगस्य] आरोग्यस्यानन्दस्य च १६.५५.३, ४ ( ४१ पञ्च )

**सौभाग्यम्** उत्तमैश्वर्यस्य भावः २०.६ ॥

**सौमनसः** शोभनं मनः सुमनः तस्यायमानन्दः सुहृद्भावः (अत्र तस्येदमित्यण्) ३.४२ ॥ [**सौमनसाय**] मनसो निर्वैरत्वाय १.७६.२ ॥ [**सौमनसे**] शोभने मनसि भवे व्यवहारे २०.५२ ॥

**सौमापौष्णः** सोमपूषदेवताकः २४.१ ॥

**सौम्यः** सोमदेवताकः २६.५८ ॥ [**सौम्यस्य**] सोमानामोषधिसाराणां भावस्य १६.२३ ॥

**सौरभेयम्** सुरभ्या अपत्यम् ३५.१३ ॥

**सौरी** सूर्यो देवता यस्याः सा २४.३३ ॥

**सौर्ययामौ** सूर्ययमसम्बन्धिनौ २४.१ ॥

**सौर्याः** सूर्यवत्प्रकाशमानाः २४.१६ ॥

**सौवम्** स्वः सुखस्येदं साधनम् १३.५७ ॥

**सौवश्व्यम्** शोभनेषु अश्वेषु महत्सु पदार्थेषु वा भवम् ६.३३.१ ॥ [**सौवश्व्ये**] शोभना अश्वास्तुरंगा विद्यन्ते यासु सेनासु ते स्वश्वाः तेषां भावे १.६१.१५ ॥

**सौव्रत्येन** श्रेष्ठेन कर्मणा ३६.६ ॥

**सौश्रवसा** सुश्रवसा विदुषा निर्वृत्तानि ६.१३.५ ॥ [**सौश्रवसानि**] सुश्रवसि संस्कृतेऽन्ने भवानि ६.१.१२। सुश्रवस्सु भवान्यन्नादीनि ६.७४.२ ॥ [**सौश्रवसाय**] शोभनं श्रवः कीर्तिर्यस्य स सुश्रवास्तस्य भावाय २५.२६ ॥ [**सौश्रवसेषु**] सुन्दर धन वालों में वर्तमान १२.२७ ॥

**स्कन्** निस्सारयतु (अत्र लोडर्थे लङ् बहुलं छन्दसीति लुक्) १.२६ ॥

**स्कन्दति** अन्यान् प्रति गच्छति ७.२६ ॥

**स्कन्दन्ति** प्राप्त होते हैं ५.५२.३ ॥

**स्कन्धाः** भुजदण्डमूलानि २५.६ ॥

स्कन्ध—वृक्षस्य समास्कन्नो भवति। नि० ६।६ ॥

**स्कन्धांसीव** शरीरावयवबाहुमूलादीनीव १.३२.५ ॥

**स्कन्नम्** प्राप्तम् ७.३३.११ ॥

**स्कभायत्** विशेषेण स्कभ्नाति ५.२६.४। दधाति ६.४४.२४ ॥

**स्कभिता** स्तम्भितानि धृतानि ८.५६ ॥

**स्कभितासः** स्थापिता धारिताः (अत्रोभयत्राज्जसेरसुगित्यसुगागमः) १.३४.२ ॥

**स्कभ्नुवन्तः** प्रतिष्टम्भनं कुर्वन्तः ६.१३ ॥

**स्कम्भः** स्तम्भ इव धारकः ४.१३.५ ॥ [**स्कम्भासः**] धारणार्थाः स्तम्भविशेषाः १.३४.२ ॥

**स्कम्भथुः** स्कम्भितम् ६.७२.२ ॥

**स्कम्भदेष्णाः** स्तम्भनदातारः १.१६६.७ ॥

**स्कम्भनी:** स्कम्भं प्रतिबद्धं नयतीति सा १.१६ ॥

**स्कम्भनेन** धारणेन ३.३१.१२ ॥ [**स्कम्भनेभिः**] स्तम्भनैः १.१६०.४ ॥

**स्कम्भसर्जनीः** या क्रिया स्कम्भानामाधारकाणां सर्जन्युत्पादिका सा ४.३६ ॥

**स्त** सन्ति (अत्र व्यत्ययो लडर्थे लोट् च) ३.२१ ॥

**स्तः** भवामः १.६१.८ ॥

**स्तनः** स्तन इव वर्तमानः शुद्धो व्यवहारः १.१६४.४६ । दुग्धाधारमङ्गम् ३८.५ ॥

**स्तनथाः** शब्दयेः ५.८३.३ ॥

**स्तनभुजः** दुग्धयुक्तैः स्तनैः सवत्सान् मनुष्यादीन् पालयन्त्यः १.१२०.८॥

**स्तनय** गर्जति ५.८३.७ ॥

**स्तनयदमाः** स्तनयन्ति शब्दयन्त्यमा गृहाणि येषां ते ५.५४.३ ॥

**स्तनयन्** शब्दयन् १.५८.२ । गर्जनं कुर्वन् ५.८३.६ ॥ [ **स्तनयन्निव** ] यथा दिव्यं शब्दं कुर्वन् १२.६ । विद्युद्वद्गर्जयन् १२.३३ ॥

**स्तनयन्ति** [ **स्तनयन्ति** ] ध्वनयन्ति ४.१०.४॥

**स्तनयित्नुम्** शब्दनिमित्तां विद्युतम् २५.२॥ [ **स्तनयित्नवे** ] स्तनयित्नुरिव दुष्टानां भयंकराय ३६.२१॥

स्तनयित्नु— कतमस्तनयित्नुरित्यशनिरिति । श० ११।६।३।६॥ (प्रजापतिः) स्तनयित्नुमुद्गीथम् (अकरोत्)। जै० उ० १।१३।१॥ स्तनयित्नुः सावित्री। गो० पू० १।३३॥ स्तनयित्नुरेव सविता। जै० उ० ४।२७।६॥

**स्तनिहि** विस्तृणीहि २६.५६ । शब्दय ६.४७.३० ॥

**स्तभान** उत्तभान, अज्ञान से उघाड़ देओ ५.२७ । उन्नति पहुँचा १७.७२ ॥

**स्तभायः** स्तभ्नाति ६.१७.७ ॥

**स्तभायत्** स्तभ्नीयात् ४.५.१ । स्तभ्नाति ४.६.२ ॥

**स्तभायन्** स्तम्भयन् ४.२१.५ ॥

**स्तभितम्** धृतम् ३२.६ ॥

**स्तुभू(भु)यमानम्** लोकानां धारकम् ३.७.४॥

**स्तभ्नातु** धरतु १५.१० । स्थिरीकरोतु १५.११ । गृह्णातु १५.१२ ॥

**स्तभ्नीताम्** संगत करो १५.१४ ॥

**स्तम्भीत्** धरेत् ( अडभावः ) १.१२१.२ ॥

**स्तरते** स्तृणोति अच्छादयति १.१२६.४ ॥

**स्तरीः** कलायन्त्रादिसंयोगेनास्तारिषत यास्ता नौकाः १.१२२.२ । यः सुखैः स्तृणात्याच्छादयति सः ( अत्र अवेतृ० उण० ३.१२० इति ईः प्रत्ययः ) ३.३४ । स्वभावाच्छादकः संकुचितः ८.२ ॥ [ **स्तर्यः** ] आच्छादकः ४.१६.७ । स्तृणन्ति याभिस्ताः ३३.१८ ॥ [ **स्तर्यम्** ] स्तरीषु नौकादियानेषु साधुम् १.११६.२२ । सुखैराच्छादिकाम् १.११७.२० ॥

**स्तव** स्तवाम ( अत्र विकरणव्यत्ययेन शप् पुरुषवचनव्यत्ययश्च सर्वत्र द्व्यचो० इति दीर्घः ) २.११.६ ॥

**स्तवान्** स्तुतीः २.१६.५ ॥

प्राणा वै स्तवः । कौ० ८ । ३ ॥

**स्तवत्** [ **स्तवत्** ] स्तूयात् ६.४७.१५ ॥

स्तवत्—स्तौति नि० ५ । २२ ॥

**स्तवते** [ **स्तवते** ] स्तौति १.१५४.२ । प्रशंसते १.१७८.४ ॥

**स्तवथ** प्रशंसथ ४.२१.२ ॥

**स्तवथैः** स्तवनैः ७.१.८ ॥

**स्तवध्यै** स्तोतुम् ७.३७.१ ॥

**स्तवन्त** [ **स्तवन्त** ] स्तुवन्ति ४.२२.७ ॥

**स्तवन्ते** [ **स्तवन्ते** ] प्रशंसन्ति ६.२०.१०॥

**स्तवमानः** गुणकीर्तनं कुर्वन् १.१३६.६। सर्वान्योद्धॄन् वीररसयुक्तव्याख्यानेन उत्साहयन् ७.१६.११ ॥ [ **स्तवमानेभिः** ] स्तुवन्ति यैस्तैः १.६२.७ ॥

**स्तवसे** [ **स्तवसे** ] स्तावकाय ५.१०.७। स्तुतये १.१६६.८ ॥

**स्तवान्** स्तुयात् ६.२४.८ ॥

**स्तवानः** स्तूयमानः गृहीतगुणो वा ( अत्र सम्यानच् स्तुवः उ० २.८६। इति बाहुलकात् समुपपदाभावेऽपि कर्मण्यौणादिकं आनच् प्रत्ययः । अत्र सायणाचार्येण लटः स्थाने शानचमाश्रित्य स्तूयमानमिति व्याख्यानं कृतमत इदमशुद्धम् ) १.१२.११। स्तोतुं शीलः ( अत्र स्वरव्यत्ययेनाद्युदात्तत्वम् ) १.११३.१७। स्तूयमानः ( अत्र कर्मणि आनच् ) १.१३०.१०। स्तुवन् २.३३.११ ॥ [ **स्तवाना** ] सत्यप्रशंसकौ ४.५५.४॥ [ **स्तवानेभिः** ] सर्वविद्यास्तावकैः १.१६६.८ ॥

**स्तवाम** [ **स्तवाम** ] प्रशंसेम २.११.६ ॥

**स्तविष्यामि** स्तोष्यामि १.४४.५ ॥

**स्तवे** स्तवने ७.१२.८। प्रशंसनीये ६.१२.४ ॥

**स्तवे** प्रशंसामि ( अत्र शपो लुक् न ) १.६२.७॥

स्तवे—स्तूयते नि० ६। २३ ॥

**स्तवेत** प्रशंसेत् ५.१८.१ ॥

**स्तवै** प्रशंसानि ३.३२.१४ ॥

**स्तामुः** स्तावकः ७.२०.६ ॥

**स्तायूनाम्** चौर्येण जीवताम् १६.२१ ॥

**स्तावाः** याः स्तूयन्ते प्रशस्यन्ते ताः १८.४२ ॥

स्तावाः—(अप्सरसः, यजु० १८। ४२) दक्षिणा वै स्तावा दक्षिणाभिर्हि यज्ञ स्तूयतेऽथो यो वै कश्च दक्षिणां ददाति स्तूयत ऽ एव सः। श० ६। ४।१।११॥

**स्तियानाम्** संहतानां स्थावरजंगमानां प्राण्यप्राणिनाम् ६.४४.२१। अपां जलानाम् ७.५.२ ॥

स्तिया—आपो भवन्ति स्त्यायनात्। नि० ६।१७॥

**स्तीन्** संहतान् मिलितान् ७.१६.११ ॥

**स्तीर्णबर्हिः** स्तीर्णमाच्छादितं बर्हिरन्तरिक्षं येन सः ५.३७.२ ॥

**स्तीर्णाः** शुभगुणैराच्छादिताः ३. १. ७ ॥ [ **स्तीर्णम्** ] आच्छादकम् २१.५७। कार्ष्ठैर्हविषा चाच्छादनीयम् २८.१२। सर्वतोङ्गोपाङ्गैराच्छादितं ज्ञानम् २६.४। आच्छादितम् २.३.४ ॥

**स्तुतः** [ **स्तुतः** ] स्तुतिं कुर्वत्यः ( क्विबन्तः शब्दोयम् ) १.१६६.४। प्रशंसितः ६.६३.८ ॥ [**स्तुताः**] स्तुतिप्रकाशकाः ३४.५३ ॥

**स्तुतस्तोमस्य** स्तुतः स्तोमः सामवेदगानविशेषो येन सः ८.१२ ॥

**स्तुतीः** प्रशंसाः १.८४.२। स्तवनानि ८.३५ ॥

**स्तुपः** शिखा ( यज्ञो वै विष्णुः तस्येयमेव शिखा स्तुपः। शत० १.२.६.५ ) २.२ ॥ [ **स्तुपेन** ] हिंसनेन २५.२ ॥

**स्तुभः** यः स्तोभते सः ३.५१.३ ॥ [स्तुभा] स्तोभते स्थिरीकरोति येन तेन १.६२.४ ॥
स्तुभ्—स्तोतृनाम। निघ० ३। १६ ॥

**स्तुभः** स्तम्भिकाः १.१६०.७ ॥

**स्तुभ्वा** अर्चकः ( स्तोभतीत्यर्चतिकर्मसु पठितम् निघं० ३.१४ ) १.६६.२ ॥

**स्तुमसि** स्तुमः ६.२३.५ ॥

**स्तुवते** सत्यस्य स्तावकाय १.६२.१। स्तुतिं कुर्वते १.११६.७। धर्म श्लाघमानाय १.१३६.२३। सत्यवक्त्रे १.११७.७। प्रशंसकाय ४.१७.१८। प्रशंसां कुर्वते ५.४२.७। प्रशंसिताय ( अत्र क्तो बहुलमिति कर्मणि क्विप् ) ६.६२.५।

**स्तुवते** स्तौति ( अत्र श विकरणः ) ३३.५०। यः शास्त्रार्थान् स्तौति ३४.१६। प्रशंसति २.२२.३ ॥

**स्तुवन्** स्तुतिं कुर्वन् ४.५१.७ ॥

**स्तुवन्ति** प्रशंसन्ति ३३.६७ ॥

**स्तुवीत** प्रशंसेत् ४.५५.६ ॥

**स्तुषे** तद्गुणान् प्रकाशयसि १.४६.१। स्तौति ( अत्र व्यत्ययेन मध्यमः ) १.१२२.७। स्तौमि ६.४६.१ ॥

**स्तुषे** स्तोतुम् ५.५८.१ ॥

**स्तुहि** [ स्तुहि ] प्रकाशय १.१२.७। प्रशंसय १.२२.६ ॥

**स्तूपम्** किरणसमूहम् १.२४.७ ॥ [ स्तूपैः ] संतप्तैः ७.२.१ ॥
स्तूप—स्त्यायतेः सङ्घातः। १०। ३३ ॥

**स्तूयमानाः** स्तुतिं प्राप्नुवन्तः १.१०७.२ ॥

**स्तूयसे** स्तुति करने योग्य हो ३.२२.१। प्रशस्यसे १२.४७ ॥

**स्तृणन्ति** यन्त्रैश्छादयन्ति ७.३२ ॥
स्तृणाति—वधकर्मा। निघ० २। १६ ॥

**स्तृणानासः** आच्छादयन्तः २.११.१६ ॥

**स्तृणामि** आच्छादयामि २.२ ॥

**स्तृणीत** आच्छादयत १.१३.५ ॥

**स्तृणीताम्** तनोतु ७.१७.१ ॥

**स्तृणीते** आच्छादयति प्राप्नोति वा ६.६७.२ ॥

**स्तृणीमहि** आच्छादयेम ३.४.४ ॥

**स्तृणोषि** आच्छादयसि १.१२६.४ ॥

**स्तृभिः** प्राप्तव्यैः गुणैः १.६८.५। शत्रुबलाच्छादकैर्गुणैः (स्तृञ् आच्छादन इत्यस्मात् क्विप्। वा छन्दसि सर्वे० तुगभावः) १.८७.१। आच्छादितैर्नक्षत्रैः १.१६६.११ ॥
स्तृभिः—द्विश उत्तरनाम। निघ० ३। २६ ॥

**स्तेनः** चोरः १.१ ॥
स्तेन—संस्त्यानमस्मिन् पापकमिति। नि० ३। १६ ॥

**स्तेनहृदयम्** चोरस्य हृदयमिव हृदयमस्य तम् ३०.१३ ॥

**स्तोकाः** अल्पाः ३.२१.२। स्तावकाः ३.२१.३ ॥ [ स्तोकानाम् ] अल्पानां पदार्थानाम् ३.२१.१। अपत्यानाम् २८.११ ॥
स्तोक—आद्यन्तविपर्ययः। नि० २। १ ॥
स्तोकः—स्तोको वै द्रप्सः। गो० उ० २। १२ ॥

**स्तोता** स्तुतिकर्ता सभाध्यक्षो राजा १.३८.४। प्रशंसकः ३.५२.५। सत्यविद्याप्रशंसकः ५.१८.२ ॥ [ **स्तोतारम्** ] धर्मस्य स्तावकम् १.१०५.८। विद्यागुणस्तावकम् १.११२.११। विद्वांसम् ३.४१.६। ऋत्विजम् ४.१७.१३ ॥ [ **स्तोतृभ्यः** ] ये ईश्वरं स्तुवन्ति तेभ्यः १.३३.५। सर्वविद्याप्रशंसकेभ्यः ७.७.७। विद्यामिच्छुभ्यः २.११.६। स्तावकेभ्यः विद्वद्भ्यः १५.४१। स्तावकेभ्यो विद्यार्थिभ्यः १५.४२ ॥

स्तोतृ—स्तोता स्तवनात्। नि० ३। १६॥
स्तोता—वायुर्वै स्तोता। श० १३। २। ६। २॥

**स्तोत्रम्** स्तुवन्ति येन तत् १.३०.५। स्तोमतुर्हम् ३.३१.१४ ॥ [ **स्तोत्रस्य** ] प्रशंसितस्य ५.५५.६ ॥ [ **स्तोत्रे** ] स्तवने ३३.२६। स्तोतव्ये व्यवहारे १.१०२.१। प्रशंसासाधने ६.३५.१ ॥

स्तोत्रम्—क्षत्रं वै स्तोत्रम्। ष० १। ४॥ आत्मा वै स्तोत्रम्। श० ५। २। २। २०॥

**स्तोत्रियाः** ये स्तोत्राण्यर्हन्ति ते १६.२४ ॥

स्तोत्रियः—इयं ( पृथिवी ) एव स्तोत्रियः। जै० उ० ३। ४। २॥ आत्मैव स्तोत्रियः। जै० उ० ३। ४। ३॥

**स्तोभत** स्तम्भयत १.८०.६ ॥

**स्तोभति** बध्नाति १.८८.६।

स्तोभति—अर्चतिकर्मा। निघ० ३। १४॥

**स्तोभन्ति** स्तभ्नन्ति ( अत्र व्यत्ययेव परस्मैपदम् ) १.१६८.८। स्तुवन्ति ५.८३.२ ॥

**स्तोमः** सामगानविशेषः स्तुतिसमूहः १.८.१०। गुणप्रकाशसमूहक्रियः १.१६.७। स्तुतिः १.१२७.१०। स्तोतुमर्हो व्यवहारः १.१५६.१। स्तुतिविषयः १.१७१.२। श्लाघनीयो मेघो वह्निर्वा ५.४२.१६। श्लाघ्यः गुणकर्मस्वभावः ६.३८.३। स्तोतुमर्हः ऋग्वेदः १२.४। यः स्तूयते, स्तोता, स्तावकः, स्तुवन्ति येन सः १४.२४। स्तुवन्ति यस्मिन्त्सो ऽथर्ववेदः १८.२६ ॥ [**स्तोमाः**] पदार्थगुणप्रशंसाः १६.२८। वेदस्तुतिसमूहाः १.५.८। प्रशंसनीया विद्वांसो ऽध्येतारश्च ७.१६.१० ॥ [ **स्तोमम्** ] प्रशंसनीयकलाकौशलम् १.१२.१२। स्तूयते गुणसमूहो यस्तं यज्ञम् १.१६.५। गुणप्रकाशम् १.३१.१। स्तुतिविषयं न्यायप्रज्ञापनम् १.४४.१४। सकलशास्त्राध्ययनाध्यापनम् ५.३५.८ ॥ [ **स्तोमान्** ] मार्गाय समूढान् पृथिवीपर्वतादीन् १.११६.१। स्तोतुमर्हान् विद्याविशेषान् १.१२६.१ ॥ [ **स्तोमेन** ] इन्धनसमूहेन २३.१५ ॥ [ **स्तोमैः** ] प्रशंसितैर्व्यवहारैर्वाग्भिः ५.२२.४। पदार्थविद्याप्रशंसनैः ३३.८१ ॥ [ **स्तोमे** ] प्रशंसिते विजये ३.५४.२ ॥ [ **स्तोमेषु** ] स्तुवन्ति सर्वा विद्या येषु तेषु २.११.३ ॥

स्तोमः—सप्त स्तोमाः। श० ६। ५। २। ८॥ त्रिवृत्पञ्चदशः सप्तदश एकविंश एते वै स्तोमानां वीर्य्यवत्तमाः। तां० ६। ३। १५॥ यदु ह किं च देवाः कुर्वते स्तोमेनैव तत् कुर्वते। श० ८। ४। ३। २॥ स्तोमो वै देवेषु तरो नामासीत्। तां० ८। ३। ३॥ स्तोमा वै परमाः स्वर्गा लोकाः। ऐ० ४। १८॥ स्तोमा वै त्रयः स्वर्गा लोकाः। ऐ० ४। १८॥ स्तोमो हि पशुः। तां० ५। १०। ८॥ अन्नं वै स्तोमाः। श० ६। ३। ३। ६॥ प्राणा वै स्तोमाः। श० ८। ४। १। ३॥ वीर्य्यं वै

स्तोमाः। तां० २। ५। ४॥ वीरजननं वै स्तोमः। तां० २१। ६। ३॥ गायत्रीमात्रो वै स्तोमः। कौ० १६। ८॥ नाक्षराच्छन्दसो व्येत्येकस्मान्न द्वाभ्यां न स्तोत्रियया स्तोमः। श० १२। २। ३। ३॥ देवा वा आदित्यस्य स्वर्गाल्लोकादवपादादबिभयुस्तमेतैः स्तोमैः सप्तदशैरदृंहन्यदेते स्तोमा भवन्त्यादित्यस्य धृत्यै। तां० ४। ५। ६॥

**स्तोमतष्टा** स्तोमैः स्तुतिभिस्तष्टा विस्तृता ३. ३६.१॥ [ **स्तोमतष्टाः** ] विस्तृतस्तुतयः ३.४३.२॥

**स्तोमपृष्ठा** स्तोमानां पृष्ठं ज्ञीप्सा यस्याः सा १४.४। स्तोमाः पृष्ठा ज्ञापयितुमिष्टा यस्याः सा १५.३॥

**स्तोमवाहाः** ये स्तोमान् वहन्ति ते ६.२३.४॥ [ **स्तोमवाहसः** ] स्तोमः स्तुतिसमूहो वाहः प्राप्तव्यः प्रापयितव्यो येषां ते १. ५.१। प्रशंसाप्रापकः ४.३२.१२॥

**स्तोम्यः** प्रशंसनीयः १.२२.८॥

**स्तोम्या** स्तोतुमर्हा ६.६१.१०॥

**स्तोषत्** स्तुयात् ५.३६.३॥

**स्तोषम्** प्रशंसेयम् १.१८७.१॥

स्तोषम्—स्तौमि। नि० ६। २५॥

**स्तोषाम** प्रशंसेम २६.२७॥

**स्तौत्** स्तौति ७.४२.६॥

**स्तौनाः** चौराः (अत्र वर्णव्यत्ययेनैकारस्थान औकारः) ६.६६.५॥

**स्तौलाभिः** स्थूले भवाभिः (अत्र वर्णव्यत्ययेन थस्य स्थाने तः) ६.४४.७॥

**स्त्यायताम्** सर्वतो वर्धताम् (अत्र व्यत्ययेनात्मनेपदम्) संहता भवन्तु वा ३८.१८॥

**स्त्री** स्त्री ५.६१.६॥

स्त्री—स्त्यायतेरपत्रपणकर्मणः। नि० ३। २१॥
स्त्री सावित्री। जै० उ० ४। २७। १७॥

**स्त्रीषखम्** स्त्रिया मित्रं पतिम् ३०.६॥

**स्थ** [ **स्थ** ] सन्ति (अत्र पुरुषव्यत्ययो लडर्थे लोडन्येषामपि दृश्यन्ते इति दीर्घश्च) १.१५.२। भवथ १.१७१.२। सन्तु ४. ३४.६। भवत (अत्र संहितायामिति दीर्घः ४.३६.७। तिष्ठत (अत्र संहितायामिति दीर्घः) ६.५१.१५॥

**स्थः** [ **स्थः** ] स्तः (अत्र व्यत्ययः) १.१७. २। भवथः भवतो वा १.१०८.६। वर्तेते १.१०८.११। तिष्ठथः ५.७३.१। भवतम् स्यातम् वा ६.४॥

**स्थन** [ **स्थन** ] सन्ति १.१०५.१५। तिष्ठत ५.८७.६। भवत ५.५६.३॥

**स्थपतये** तिष्ठन्ति यस्मिन् स्थाने तस्य पतये पालकाय १६.१६॥

**स्थविरः** वृद्धो विज्ञातराजधर्मव्यवहारः १७. ३७॥

**स्थशः** तिष्ठन्तीति स्थास्तानि बहूनि इति स्थशः (अत्र बह्वल्पार्थादिति शस्) २.३८.८॥

**स्थाः** स्थावरम् १.८०.१४॥

स्था—स्थावर। नि० ५। ३॥

**स्थाः** तिष्ठति ४.३०.१२। तिष्ठे ६.२४.६॥

**स्थात्** उपतिष्ठते २.३.१०। तिष्ठति २.१५.७। तिष्ठेत् ३.१५.६॥

**स्थात** तिष्ठत ५.५३.८। जाओ ७.३४.५॥

**स्थाता** वर्तमान होने वाला ३.४५.२ ॥ [ **स्थातारः** ] ये तिष्ठन्ति ते ५.८७.६ ॥ [**स्थात्रे**] स्थितस्य कारणस्य मध्ये ( अत्र षष्ठ्यर्थे चतुर्थी ) १.१६४.१५ ॥ [ **स्थातुः** ] तिष्ठतो जगतः १.७०.४ । स्थिरस्य स्थावरस्य ४.५३.६ ॥

**स्थाताम्** स्थावराणाम् (अत्र वा च्छन्दसि सर्वे विधयो भवन्तीति तुक्) १.७०.२ ॥

**स्थाति** तिष्ठति २.३१.३ ॥

**स्थातुः** स्थावरसमूहम् ( अत्र ष्ठाधातोस्तुः प्रत्ययः । सुपां सुलुगित्यमः स्थाने सुश्च ) १.६८.१ ।

**स्थाथः** भवथः ४.४६.४ ॥

**स्थानम्** स्थित्यर्थम् २.८ । तिष्ठन्ति यस्मिन् तत् ५.७६.४ ॥

**स्थाम्** तिष्ठेयम् २.२७.१७ । अवतिष्ठस्व २.२८.११ ॥

**स्थाम** तिष्ठेम १.१३६.४ ॥

**स्थारश्मानः** स्थिरा रश्मानः किरणा इव व्यवहारा येषां ते ५.८७.५ ॥

**स्थालीः** यासु पच्यन्ते ऽन्नानि ताः १६.८६ ॥ [ **स्थालीभिः**] यासु पदार्थान् स्थापयन्ति पाचयन्ति वा ताभिः १६.२७ ॥

स्थाली—पत्नी स्थाली । तै० २ । १ । ६ । १ ॥

**स्थास्यति** अधिष्ठाता होकर रहेगा ६.२ ॥

**स्थिरः** निश्चलः ११.४४ । निश्चलप्रवृत्तिः १.१२१.४ । स परिधिस्थः २.४१.१० ॥ [ **स्थिरैः** ] दृढैः २५.२१ ॥

**स्थिरधन्वने** स्थिरं दृढं धनुर्यस्य तस्मै ७.४६.१ ॥

**स्थिरम्** गमनरहितम् १.३६.३ । दृढं बलम् १.३६.३ । निश्चलम् १.६४.१५ ॥ [**स्थिरा**] स्थिराणि चिरं स्थातुमर्हाणि ( अत्र सर्वत्र शेश्छन्दसीति लोपः ) १.३६.२ ॥

**स्थिरा** निश्चला १३.५० ॥ [ **स्थिराः** ] दृढाः १.३८.१२ ॥

**स्थुः** तिष्ठन्ति ( अत्र लडर्थे लुङडभावश्च ) १.२४.७ । तिष्ठेयुः १.१६७.१ । उपतिष्ठन्तु ७.१८.३ ॥

**स्थूणा** स्तम्भ इव दृढा नीतिः ५.६२.७ ॥ [**स्थूणेव**] यथा धारकः स्तम्भः १.५६.१ ॥

**स्थूरम्** स्थिरम् ६.१६.१० ॥ [ **स्थूरयोः** ] स्थूलयोः ( अत्र वर्णव्यत्ययेन लस्य स्थाने रः ) ६.२६.२ ॥

स्थूर—समाश्रितमात्रो महान् भवति । नि० ६ । २२ ॥

**स्थूलगुदया** स्थूलया गुदया सह २५.७ ॥

**स्थूलपृषती** स्थूलानि पृषन्ति यस्याः सा २४.२ ॥

**स्थूलम्** महत् कर्म २३.२८ ॥

**स्थेयाम** तिष्ठेम ६.४७.८ ॥

**स्नातः** कृतस्नानः २०.२० ॥

**स्नातः** स्नानं कुरुतः १.१०४.३ ॥

स्नातेः शुद्धयर्थस्य । नि० १२ । २६ ॥

**स्नाती** शुद्धा ५.८०.५ ॥

**स्नावभ्यः** स्थूलनाडीभ्यः, सूक्ष्माभ्यः सिराभ्यो वा ३६.१० ॥

**स्नीहितीषु** स्नेहकारिणीषु ( अत्रान्येषामपीति दीर्घः ) १.७४.२ ॥

**स्नुना** व्याप्तेन ४.२८.२ ॥ [ **स्नुभिः** ] इच्छावद्भिः ५.६०.७ । पवित्रैः गुणैः ५.८७.४ ॥ [ **स्नोः** ] प्रकाशमानात् पुरुषार्थात् ४.२७.४ ॥ [ **स्नुषु** ] प्रान्तेषु १७.२४ ॥

**स्पट्** स्पष्टा ५.५६.१ ॥

**स्पन्दने** किञ्चिच्चलने ३.५३.१६ ॥

**स्पन्द्रः** प्रस्नावकः ६.१२.५ ॥ [ **स्पन्द्रा** ] प्रचलितौ १.१८.६ ॥ [ **स्पन्द्राः** ] धैर्यगतयः ५.५२.८ ॥ [ **स्पन्द्रासः** ] किञ्चिच्चेष्टमानाः ५.५२.३ । प्रस्नवन्तः प्रस्नावयन्तो वा ५.८७.३ ॥

**स्परत्** प्रीणयेत् ( अत्र लङ्यडभावः ) १.१६१.५ ॥

**स्पर्धन्ते** परोत्कर्षं न सहन्ते ६.१४.३ ॥

**स्पर्द्धमाना** ईर्ष्यन्ती १७.४७ ॥

**स्पर्धमानाः** ईर्ष्यकाः १.३३.५ ॥

**स्पर्शः** स्पर्शवन्तः पदार्थाः १.२५.१३ । अविद्यान्धकारं बाधमाना विद्याप्रकाशं स्पशन्तः ६.६७.५ । बाधनानि १३.११ ॥ [ **स्पशम्** ] दूतम् ३३.६० । बन्धकम् ४.१३.३ ॥

**स्पार्हः** स्पृहणीयः ४.१.१२ । यः स्पृहयति तस्ययाम् २७.३० ॥

स्पार्ह—स्पृहणीयानि नि० ३ । ११ ॥

**स्पार्हम्** स्पृहा वाञ्छा तस्या इदं स्पार्हम् १.३१.१४ ॥ [ **स्पार्हा** ] स्पृहणीयानि १.१२३.६ । ईप्सितव्यानि वस्त्राणि १.१३५.२ ॥

**स्पार्हराधाः** स्पार्हं स्पृहणीयं राधो धनं यस्य सः ४.१६.१६ ॥

**स्पार्हवीरम्** स्पार्हा अभिकाङ्क्षिताः वीरा यस्मिन् ५.५४.१४ ॥

**स्पाशयस्व** पीड़ा देओ १.१७६.३ ॥

**स्पूर्धन्** स्पर्द्धमानः ६.६७.६ ॥

**स्पूर्धसे** स्पर्धायै ५.६४.४ ॥

**स्पृणवाम** अभीच्छेम ५.४४.१० ॥

**स्पृतः** सेवितः १४.२४ ॥ [ **स्पृताः** ] प्रीताः १४.२६ ॥

**स्पृत्वा** अभिव्याप्य ३१.१ ॥

**स्पृधः** स्पर्धमानान् शत्रून् ( स्पर्ध संघर्षे इत्यस्य क्विबन्तस्य रूपम् । बहुलं छन्दसि ३०.६.१.३४ ॥ अनेन सम्प्रसारणमल्लोपश्च ) १.८.३ । स्पर्धन्ते येषु तान् संग्रामान् ५.४४.७ ॥

स्पृध—संग्रामनाम निघ० २ । १७ ॥

**स्पृधानम्** स्पर्द्धमानम् ३.३१.४ ॥

**स्पृधि** अभिकाङ्क्ष ५.३.६ ॥

**स्पृश** गृहाण ४.३.१५ । स्पर्श करो ४.४.२ । अनुगतो भव १३.१० ॥

**स्पृशान्ति** [ **स्पृशन्ति** ] आलिंगयन्ति १.६२.११ ॥ सम्बध्नन्ति १.३६.३ ॥

**स्पृहयद्वर्णः** स्पृहयन् वर्णो यस्य सः २.१०.५। यः

स्पृहयद्भिर्वर्ण्यते स्वीक्रियते स इव ११.२४॥

**स्पृहयाय्यः** स्पृहा करने योग्य ६.१५.१२॥

**स्पृहयेत्** ईप्सेत्, आप्तुमिच्छेत् १.४१.६॥

**स्फरीः** अवृद्धं मा कुर्याः ६.६१.१४॥

**स्फातिम्** वृद्धिम् १.१८८.६॥

**स्फिग्या** मध्यस्थावयवरूपया ३.३२.११॥

**स्फुर** पुरुषार्थय ४.३.१४॥

**स्फुरत्** सञ्चालयेत् १.८४.८॥

स्फुरत्—अवस्फुरिष्यति नि० ५। १७॥

**स्फुरान्** स्फूर्तिमतः ६.६७.११॥

**स्म(ा)(ष्म)** सुखार्थे (निपातस्य चेति दीर्घः) १.१५.१०। अतीतार्थे क्रियायोगे १.२८.६। खलु (अत्र निपातस्य चेति दीर्घः। अविहितलक्षणो मूर्धन्यः सुषामादिषु द्रष्टव्यः। अ० ८.३.५८। इति वार्तिकेन मूर्धन्यादेशः) १.३७.१५। एव १.४२.२। आश्चर्यगुणप्रकाशे (निपातस्य चेति दीर्घः) १.१०२.३। हर्षे १.१०२.५। प्रसिद्धौ (अत्र निपातस्य चेति दीर्घः। षत्वं च छान्दसम्) ३३.६४॥

**स्मत्** श्रेष्ठार्थे १.५१.१५। तत्कर्मानुष्ठानोक्तम् १.१००.१३। प्रशंसायाम् १.१८६.६। एव १.१८६.८॥

**स्मदूध्नीः** बहुदुग्धप्रापिका (अत्र स्मदुपपदात् ऊधसोऽनङ्) १.७३.६॥

**स्मदिष्टिः** कल्याणोपदेष्टः ३.४५.५॥ [**स्मदिष्टयः**] निश्चिता दिष्टयो दर्शनानि येषां ते ७.१८.२३॥ [**स्मदिष्टीन्**] प्रशंसितदर्शनान् ६.६३.६॥

**स्मयते** आनन्दयति (अत्रान्तर्गतोण्यर्थः)। १.६२.३॥

**स्मयन्त** ईषद्धसन्ति १.१६८.८॥

**स्मयमानः** किञ्चिद्धसन्निव २.४.६॥

**स्मयमानासः** किञ्चिद् हासेन प्रसन्नताकारिण्यः १७.६६॥

**स्मयेते** ईषद्धसतः ३.४.६॥

**स्मर** पर्यालोचय ४०.१५॥

**स्मरकारीम्** या स्मरं कामं करोति तां दूतिकाम् ३०.६॥

**स्मसि** [**स्मसिं, स्मसि**] भवामः (इदन्तो मसीति इदागमः) १.२६.१। भवेम (अत्र लिङर्थे लट्। इदन्तो मसीतिइकारागमः) १.३७.१५। स्मः १.५७.५॥

**स्य** अन्तं प्रापय ४.१६.२॥

**स्यः** असौ (अत्र स्यच्छन्दसि बहुलमिति सोर्लोपः) ६.१४॥

**स्यतम्** तनूकुरुतम् ६.७४.३॥

**स्यताम्** अन्ते भवताम् २.४०.४॥

**स्यतु** विमुञ्चत २७.२०। प्राप्नोतु १.१४२.१०। देवे २.३.६॥

**स्यन्ति** कार्याणि समापयति १.८५.५॥

**स्यन्दन्ताम्** प्रस्रवन्तु ५.८३.८॥

**स्यन्दमानाः** प्रस्रवन्त्यः १.३२.२॥

**स्यन्दयध्यै** स्यन्दयितुं प्रस्रावयितुम् ४.२२.७ ॥

**स्यन्नाः** आशुगमनाः ५.५३.७ ॥

**स्रस्व** [ स्रस्व ] प्राप्नुहि १.१०१.१० । अन्तं कुरु ३.४.६ ॥

**स्या** सा ४.५२.१ ॥

**स्याः** भवेः १.१७४.१० । भवेत् ४.१६.१८ । भूयाः ६.३३.५ ॥

**स्यात्** [ स्यात् ] भवेत १.३८.४ ॥

**स्यात** [ स्यात ] हूजिये ५.८७.६ । भवेयुः १.१ ॥

**स्यातन** भवेत १.३८.४ ॥

**स्यातम्** होओ १.१२०.७ ॥

**स्याताम्** हों १.१०४.३ ॥

**स्याम्** [ स्याम् ] भवेयम् ३.३७ ॥

**स्याम** [ स्याम ] भवेम १.२४.१५ ॥

**स्यामि** प्रविशामि १२.६५ ॥

**स्यालात्** स्वस्त्रीभ्रातुः १.१०६.२ ॥

स्याल—आसन्नः संयोगेनेति नैदानाः । स्याल्ला जानावपतीति वा । नि० ६ । ६ ॥

**स्यूः** यः सीव्यति सः ५.२१ ॥

**स्युतम्** विविधसाधनैः कारुभिर्निष्पादितम् १.३१.१५ ॥

**स्यूमगभस्तिः** समूहकिरणः १.१२२.१५ ॥

**स्यूमगृभे** स्यूमाननुस्यूतान् गृह्णाति यः तस्मै ६.३६.२ ॥

**स्यूमना** स्यूमानः सकलविद्यायुक्ताः ( अत्राकारादेशः ) १.११३.१७ ॥

**स्यूमन्यू** आत्मनः स्यूमानं शीघ्रं गमनमिच्छू १.१७४.५ ॥

**स्यूमरश्मये** स्यूमाः संयुक्ता रश्मयो न्यायदीप्तयो यस्य तस्मै १.११२.१६ ॥

**स्यूमेव** ( स्यूमा इव ) तन्तुवद्व्याप्ता ३.६१.४ ॥

**स्योनः** सुखकारी ५.४ ॥

स्योन—सुखानाम । नि० २ । ६ ॥ स्यतेरवस्यन्त्येतत् सेवितव्यं भवतीति वा । नि० ८ । ६ ॥ स्योनः—स्योनः स्योनमिति शिवः शिवमित्येवैतदाह । श० ३ । ३ । ३ । १० ॥ स्योनामासीद सुषदामासीदेति शिवाऽ शग्मामासीदेत्येवैतदाह । श० ५ । ४ । ४ । ४ ॥

**स्योनकृत्** यः स्योनं सुखं करोति सः १.३१.१५ ॥

**स्योनम्** सुखम् (स्योनमिति सुखनामसु० निघं. ३।६) ४.१७ । सुखकारकं स्थानम् २०.३६ ॥

**स्योनशीः** यः स्योनेषु सुखेषु विद्याधर्मपुरुषार्थेषु शेते आस्ते सः १.७३.१ । यः सुखेन शेते सः ७.४२.४ ॥

**स्योना** सुखहेतुः ( इदं सिवुधातोः रूपम् सिवेष्टेर्यू च उ० ३।६ अनेन नः प्रत्ययष्टेर्यूरादेशश्च, स्योनेमिति सुखनामसु० निघ० ३।६ ) १.२२.१५ ॥ स्वयं प्रसन्नहुई, सुखदायक, सुखप्रद १४.२.१८,२६,२७ । ( १६६ विधि )

**स्रक्तीः** सृज्यमानाः सेनाः ७.१८.१७ ॥

**स्रक्वेषु** प्राप्तेषूत्तमेषु गृहेषु ७.५५.२ ॥

**स्रजम्** मालामिव सेनाम् ४.३८.६ ॥ [ स्रज्जु ] माल्येषु मणिषु ५.५३.४ ॥

**स्रव** प्राप्नुहि २६.१७ ॥

स्रवतः प्राणान् १.७१.७। प्रापयतः ७.१८.२४॥

स्रवतः गच्छन्त्यः १.१६०.७। चलन्त्यः सरितः (अत्र वाच्छन्दसीति वर्णलोपो वेतीकाराभावे नुमोऽप्यभावः) ३.४६.४॥

स्रवथै स्रवणे गमने ३.१.७॥

स्रवन्ति चलन्ति ४.५८.६॥

स्रवन्तीः गमनं कुर्वन्तीः नदीर्नाडीर्वा (स्रुधातोर्गत्यर्थत्वाद्रुधिरप्राणगमनमार्गा जीवनहेतवो नाड्योऽपि गृह्यन्ते) १.३२.१४॥ [स्रवन्तीभ्यः] सद्यो गामिनीभ्यः २२.२५॥

स्रवन्तु प्राप्नुवन्तु ३५.२०। वर्षन्तु ३६.१२॥

स्रवितवे स्रोतुं गन्तुम् ४.३.१२। स्रोतुं चलितुम् ४.१६.८॥

स्रवितवै स्रोतुम् ७.२१.३॥

स्रवेत् दण्डयेत्, गमयेद्वा १.१२६.६॥

स्रसेम गच्छेम ६.११.६॥

स्रामम् दुःखप्रदमन्यायम् १.११७.१६। सततं प्रस्रवितजलनेत्रम् ३०.१०॥

स्रिधः अतिसहनशीलाः ३.६.४। विद्यादिसद्व्यवहारविरोधिनः ३.१०.७। दुष्टाचारान् २७.६। हिंसकान् क्षयकर्तॄन् शत्रून् १.३६.७। दुःखनिमित्तात् पापात् १.१२६.११॥

स्रिधत् हिंसितः स्यात् ७.३४.१७॥

स्रुक् या स्रवति सा ६.११.६॥ [स्रुचः] जुह्वादयः १८.२१। विज्ञानयुक्ताः १.१४४.१। यज्ञसाधनपात्राणि ५.२१.२। गमनशीलाः ५.४१.१२॥ [स्रुचा] कर्मणा १.८४.१८। यज्ञसाधनेनेव योगाभ्यासेन ५.१४.३॥ [स्रुचेव] यथा स्रुचा प्रेरयन्ति तथा २५.४०॥ [स्रुग्भ्यः] स्रावयन्ति गमयन्ति हविर्येभ्यस्तेभ्यः (अत्र स्रुगतवित्यस्मात् चिक् च. उ. २।६१ अनेन चिक् प्रत्ययः) २.१॥ [स्रुचीव] स्रुङ्मुखे २०.७६॥

स्रुक्—योषा वै स्रुग्वृषा स्रुवः। श० १।३।१।६॥ युजौ ह वाऽएते यज्ञस्य यत्स्रुचौ। श० १।८।३।२७॥ बाहू वै स्रुचौ। श० ७।४।१।३३॥ वाग्वै स्रुचः। श० ६।३।१।८॥ गौर्वै स्रुचः। तै० ३।३५।४॥ यजमानः स्रुचः। तै० ३।३।६।३॥ इमे वै लोकाः स्रुचः। तै० ३।३।१।२॥३।३।६॥

स्रुतिः स्रवणं गमनं यस्मिन्मार्गे सः १.४६.११॥ [स्रुतयः] स्रुवन्त्यः ६.२४.४॥ [स्रुतिम्] विविधां गतिम् २.१३.१२॥ [स्रुतेः] स्रवन्ति गच्छन्ति यस्मिन् स स्रुतिः मार्गस्तस्मात् (अत्र क्तिचूक्तौ च संज्ञायाम् अ. ३।३।१७४ अनेन स्रुधातोः संज्ञायां क्तिच्। १.४२.३॥

स्रुत्याय स्रुतौ प्रस्रवणे भवाय १६.३७॥

स्रुवेण उत्थापकेन यज्ञपात्रेण १.११६.२४। स्रुवा आदि के योग से १.१२१.६॥

स्रुवः—प्राणः स्रुवः। श० ६।३।१।८॥ योषा वै स्रुग्वृषा स्रुवः। श० १।३।१।६॥

स्रेधत हिंसत ७.३२.६॥

**स्रेधति** क्षीयते ५.५४.७ ॥

**स्रेधन्तम्** हिंसन्तम् ७.३२.२१ ॥

**स्रेवयन्तः** सेवते हुए ७.१८.८ ॥

**स्रोतः** स्रवन्ति वस्तूनि जलानि वा येन तत् १.६५.१० ॥ [ **स्रोतसा** ] प्रस्रवितेन १.५१.११ ॥

**स्रोत्याभिः** स्रोतस्सु भवाभिर्गतिभिः ३.३३.६ ।

स्रोत्या—नदीनाम । नि० १ । १३ ॥

**स्वः** स्वयम् २.५.७ । स्वकीयः ६.७५.१६ ॥

**स्वः** सुखमुदकं वा १.११ । आदित्यः २.२.१० । सर्वचेष्टानिमित्तो व्यानः ३.३७ । सुखसम्पादकदिग्रूपम् १३.५७ । मोक्षसुखम् १८.२६ । सांसारिकं सुखम् १८.६३ । ऐन्द्रियं सुखम १८.६४ । अन्तरिक्षम् ३३.७५ । ज्ञानविद्याम् ३६.६ । दिवम् (स्वरिति दिवम्, एतावद्वा इदꣳ सर्वं यावदिमे लोकाः सर्वेणैवाधीयते । शत. २।१।४।११) ३.५ । अन्तरिक्षस्थान् लोकान् २३.८ ॥

स्वः—साधारण नाम । निघ० १ । ४ ॥ स्वरादित्यो भवति सु अरणः सु ईरणः । नि० २ । १४ ॥ उदक नाम । निघ० १ । १२ ॥

स्व—असौ ( द्यु- ) लोकः स्वः । ऐ० ६ । ७ ॥ ( यजु० १ । ११ ) यज्ञो स्वरहर्देवाः सूर्यः । श० १ । १ । २ । २१ ॥ देवा वै स्वः । श० १ । ६ । ३ । १४ ॥ अन्तो वै स्वः । ऐ० ५ । २० ॥

**स्वक्षत्रम्** स्वस्य राज्यम् १.५४.३ । स्वं राज्यं स्वस्य क्षत्रियकुलं वा ५.३५.४ ॥

**स्वगा** यत्स्वान् गच्छति प्राप्नोति तत्स्वगा ( अत्र विभक्तेः सुपां सुलुगित्याकारादेशः ) १८.५७ । स्वयं गच्छतीति स्वगा, तं स्वयं गामिनम् ( अत्र विभक्तेर्डादेशः ) २२.४ ॥

**स्वगाकारः** येन स्वान्पदार्थान् गाते तं करोतीति १८.२१ ॥

स्वगाकारः—संवत्सरः स्वगाकारः । तै० २ । १ । ५ । २ ॥

**स्वगूर्ता** स्वेन प्राप्तानि ४.१६.१२ ।

**स्वगूर्ताः** स्वैरुद्यताः १.१४०.१३ । स्वेन पराक्रमेणोद्यमिनः ६.६८.४ ॥

**स्वग्नयः** शोभनः सुखकारकोऽग्निः सम्पादितो यैस्ते १.२६.७ । ये शोभनानुष्ठानतेजोयुक्ताः ने, शोभनोऽग्निर्येषां ते मनुष्याः पृथिव्यादयो वा १.२६.८ ॥

**स्वङ्गः** शोभनान्यङ्गानि यस्य सः १२.१३ ॥ [ **स्वङ्गा** ] शोभनान्यङ्गानि ययोस्तौ ३.४३.४ ॥

**स्वङ्गुरिः** शोभनाऽङ्गलयो यस्य सः ११.६३ ॥ शोभनांगुलयो यस्य सः ४.५४.४ । शोभनाङ्गुरयोऽङ्गुलयो यस्याः सा २.३२.७ ॥

**स्वजन्मना** स्वस्य जन्मना ७.१.१२ ॥

**स्वजाः** स्वस्मात्कारणाज्जाताः १.१६८.२ ॥

[ **स्वजाम्** ] स्वात्मजनिताम् १.१२१.२ ॥

**स्वजेन्यम्** स्वेन जेतुं योग्यम् ५.७.५ ॥

**स्वश्वः** याभिः सुष्ठु अश्वन्ति गच्छन्ति प्राप्नुवन्ति वा ताः ४.६.६ । ये सुष्ठ्वश्वन्ति गच्छन्ति ते ७.५६.१६ ॥ [ **स्वश्वम्** ] यः सुष्ठु अश्वति जानाति प्रापयति वा तम् ६.१५.१० ॥ सुष्ठु अश्वन्तम् प्राप्तशरीरात्मबलेन युक्तम् ६.५८.४ ।

**स्वश्वाः** यः सुष्ठु अश्वति सः ५.३७.१ ॥

**स्वतंवः** स्वं स्वकीयं तवो बलं यस्मिँस्तत् १.१५६.२ ।

**स्वतंवान्** स्वेन प्रवृद्धः ४.२.६ । स्वैर्गुणैर्वृद्धः ४.२०.६ । यः स्वान् तौति वर्धयति सः (अत्र तुधातोरौणादिक आनिः प्रत्ययः) १७.८५ ॥ [ स्वतवद्भ्यः ] स्वतो वासो येषां तेभ्यः २४.१६ ॥

**स्वद** आस्वादय ३.१४.७ ॥

**स्वदतु** आभुनक्तु ६.१ । स्वदतां स्वादिष्ठां करोतु (अत्र व्यत्ययेन परस्मै०) ११.७ । आस्वादयतु ३०.१ ॥

**स्वदन्ताम्** भुञ्जताम् ६.७ ॥

**स्वदंन्ति** सुस्वादमदन्ति ७.२.२ ॥

**स्वदंन्तु** सुष्ठु सेवन्ताम् ४.१२ । प्राप्नुवन्तु २६.३५ ।

**स्वदन्ते** सुष्ठु भुञ्जानाः २.१.१४ ॥

**स्वदय(ा)** आस्वादय (अत्र संहितायामिति दीर्घः) २६.२६ ॥

**स्वदंस्व** भुङ्क्ष्व ३.५४.२२ ॥

**स्वदाति** आस्वदेत् ( अत्र लेटि व्यत्ययेन परस्मैपदम् २०.४५ ॥

**स्वदामि** स्वाद लेऊं १.११६.२ ॥

**स्वदितानि** आस्वादितानि २६.१० ॥

**स्वधर्मन्** स्वस्य वैदिके धर्मणि ३.२१.२ ॥

**स्वधा** स्वान् दधाति यया सा क्रिया, स्वेन धारिता सेवा वा १६.३६ । अन्नमुदकं वा १.१६५.६ । या स्वं दधाति सा ५.३४.१ ॥ [ स्वधाम् ] स्वकीयां धारणशक्तिम् १.८८.६॥ [ स्वधया ] स्वस्वरूपधारणया क्रियया १.१५४.४ । अन्नादिपदार्थयुक्तया पृथिव्या सह ४.१३.५ । स्वकीयया धृतया प्रज्ञया ४.५८.४ । अपने ही अन्नादि पदार्थ के धारण से १२.५.३ । ( वि० १७६ ) [ स्वधाभिः ] द्यावापृथिव्यादिभिः सह १.६५.४ । स्वयं धारितैः पदार्थैः सह १.११३.१३ ॥ [ स्वधायै ] अन्नाय, पृथिवीराज्याय, न्यायप्रकाशाय वा २.३२ । स्ववस्तुधारणलक्षणायै राजनीत्यै १०.२१ ॥

स्वधा—उदकनाम निघ० १ । १२ । अन्ननाम निघ० २ । ६ ॥ द्यावापृथिव्योर्नाम निघ० ३।३०॥ स्वधा—स्वधो वै पितॄणामन्नम् । श० १३ । ८ । १ । ४ ॥ स्वधा वै शरद् । श० १३ । ८ । १ । ४ ॥

**स्वधापते** अन्नस्वामिन् ६.४४.१ ॥

**स्वधायिभ्यः** ये स्वधामुदकमन्नं वैतुं प्राप्तुं शीलास्तेभ्यः ( स्वधा इति उदक नाम० निघं० १.१२ । स्वधा इत्यन्नाम निघ० २.७ ) १६.३६ ॥

**स्वधावरी** बह्वन्नादिप्रदे ७.३१.७ ॥

**स्वधावान्** स्वेन स्वकीयेन गुणेन धार्यत इति स्वधाऽमृतरूपत्रोषध्यादिरसस्तद्वान् १.६५.१ । स्वधाः स्वकीया अवयवाः प्रशस्ता विद्यन्तेऽस्मिन् सः १.६५.४ । प्रशस्ताः स्वधा अमृतरूपा गुणा विद्यन्ते यस्मिन्त्सः ३३.५५ । बह्वन्नाद्यैश्वर्यः ४.५.२ ॥ [ स्वधान्ने ] यः स्वं दधाति तस्मै ५.३२.१० । यः स्वं वस्त्वेव दधाति, यः स्वां

धार्मिकीं क्रियां दधाति तस्मै ७.४६.१ ॥
स्वधावत्—अन्नवते नि० १०।६॥ अन्नवन् नि० १२।१७॥

**स्वधितिः** विद्युत् १.१६२.१८। वज्रः ३.८.६। अविनाशित्वाद् वज्रमयः (स्वधितिरिति वज्रनामसु निघं० २.२०) ३.६३। वज्र इव वर्तमानः २५.४१। [स्वधिते] रोगनाशने स्वधितिर्वज्रवत्प्रवर्तमान ४.१। दुःखविच्छेदक ५.४२। स्वेष्वात्मीयेषु धितिः पोषणं यस्यास्तत्सम्बुद्धौ ६.१५॥ [स्वधितौ] स्वेन धृतौ १.१६२.६॥ [स्वधितीव] वज्रधर इव ५.७.८॥
स्वधिति—वज्रनाम निघ० २।२०॥

**स्वधितीवान्** स्वधितिः प्रशस्तो वज्रो विद्यते यस्य सः १.८८.२॥

**स्वधृतिः** स्वेषां पदार्थानां धारणम् ८.५१। स्वेषां धारणम् २२.१६॥

**स्वध्वरः** सुष्ठु यज्ञस्याऽनुष्ठाता १.१२७.१। हिंसितुमनर्हः २.२.८॥ [स्वध्वरा] सुष्ठु अध्वरो यज्ञो याभ्यां तौ ३.६.६॥ [स्वध्वरासः] सुष्ठु अध्वराः क्रियाः योगसिद्धयो येभ्यस्ते ४.४५.५॥ [स्वध्वरम्] शोभनाः पालनीया अध्वरा यस्य तम् १.४५.१। शोभनोऽध्वरो यस्मात्तम् ३.२.८। सुष्ठ्वहिंसनीयम् ३.६.८। सुष्ठ्वध्वरा अहिंसिता क्रिया यस्मात्तम् ४.४६.४। सुष्ठ्वहिंसाधर्मं प्राप्तम् ५.६.३। शोभना अध्वरा अहिंसादयो व्यवहारा यस्य तम् ७.१६.१॥ [स्वध्वरा] शोभनान्यहिंसादीनि कर्माणि येषु व्यवहारेषु तान् ३.२९.१२। सुष्ठु अहिंसादिधर्मयुक्तान् ६.१०.१॥ [स्वध्वरे] सुशोभमाने १.१४२.५॥

**स्वनः** शब्दः १.१४३.५॥
स्वन—वाङ्नाम निघ० १।११॥

**स्वनयेन** स्वस्य नयनं यस्य दातुस्तेन १.१२६.३॥

**स्वनीक** शोभनमनीकं सेना यस्य तत्सम्बुद्धौ २.१.८॥

**स्वप** शेष्व ७.५५.२॥

**स्वपत्यम्** शोभनं सन्तानम् १.११६.१६। सुष्ठ्वपत्ययुक्तम् २.४.८। शोभनान्यपत्यानि सन्ताना यस्मात्तम् ७.१.५॥ [स्वपत्यानि] सुष्ठु शिक्षयोत्तमानि चापत्यानि च तानि ४.३४.६॥ [स्वपत्यस्य] शोभनान्यपत्यानि विद्यार्थिनो वा यस्य तस्य ३.१६.३॥ [स्वपत्ये] स्वकीये सन्ताने ३.३.७॥

**स्वपत्यै** शोभनापत्यानि यस्यां तस्यै १.५४.११॥

**स्वपन्** शयानः सन् ५.४४.१३॥

**स्वपनम्** निद्राम् ३०.१७॥

**स्वपस्तमः** शोभनान्यपांसि कर्माणि यस्य सोऽतिशयितः ४.१७.४॥

**स्वपस्यमानः** शोभनानि चापांसि कर्माणि च स्वपांसि तान्याचरतीव सः १.६२.६॥

**स्वपस्या** सुष्ठुधर्मकर्मेच्छया ४.३५.६॥ [स्वपस्यया] शोभनानि अपांसि कर्माणि यस्यां तया १.११०.८॥

**स्वपस्याय** शोभनान्यपांसि कर्माणि यस्य तस्मै २४.१ ॥

**स्वपाः** शोभनानि अपांसि कर्माणि यस्य सः ८.३८ ॥ [ **स्वपसा** ] सुष्ठु कर्मणा २५.३॥

**स्वपाक** सुष्ठ्वपरिपक्वज्ञान ४.३.२ ॥

**स्वपिवात** वायुरिव वर्तमान ७.४६.३ ॥

**स्वपूभिः** शयानैः, स्वकीयैः पवित्राचरणैः सह ७.५६.३ ॥

**स्वप्नाय** निद्रायै ३०.१० ॥

**स्वभानवः** स्वकीया भानुर्दीप्तिः प्रकाशो येषां ते ३.५१ । वायुवत् स्वभानवो ज्ञानदीप्तयो येषां ते १.३७.२ ॥

**स्वभिष्टिः** सुष्ठ्वभिगता सङ्गतिर्यस्य सः ६.३३.१ ॥ [ **स्वभिष्टयः** ] शोभना अभिष्टयोऽभिप्राया येषान्ते १.१७३.६ ॥ [ **स्वभिष्टिम्** ] शोभना अभिष्टय इष्टयो यस्मात्तम् (अत्र व्यत्ययेन ह्रस्वः)१.५१.२॥

**स्वभिष्टिसुम्नः** सुष्ठु अभिष्टिः सुम्नं सुखं यस्य यस्माद्वा सः ६.२०.८ ॥

**स्वभूते** स्वकीयैश्वर्य २७.३३ ॥

**स्वभूत्योजाः** स्वकीया भूतिरैश्वर्यमोजः पराक्रमो वा यस्य सः १.५२.१२ ॥

**स्वयंतासः** स्वेन बलेन नियमं प्राप्ता नत्वन्येनाश्वादिनेति १.१६६.४ ॥

**स्वयम्** अपने आप १७.१३ ॥

**स्वयंजाः** स्वयं जाताः ७.४६.२ ॥

**स्वयम्भूः** यः स्वयं भवति सः, उत्पत्तिनाशरहितः २३.६३ ।

**स्वयशस्तरः** स्वकीयं यशो धनं प्रशंसनं वा यस्य सोऽतिशयितः ३.४५.५ । अतिशयेन स्वकीयं यशो यस्य सः ५.१७.२ ॥

**स्वयशाः** स्वकीयकीर्तिः १.६५.५। स्वकीयं यशः कीर्तिर्यस्य सः ७.३७.४ ॥

**स्वयशोभिः** स्वकीयाभिः प्रशंसाभिः १.१२६.८॥

स्वयशस्—आत्मयशः । नि० ८ । १५ ॥

**स्वयुः** यः स्वयं याति सः २.४.७। यः स्वं धनं याति सः ३.४५.५॥

**स्वयुक्ताः** स्वेनेव गच्छन्तः १.१६८.४॥

**स्वयुक्तिभिः** स्वा युक्तयो योजनानि यासु ताभिः १.५०.६। आत्मीयप्रकारैः १.११६.४ ॥

**स्वर** जानीहि प्राप्नुहि (स्वरतीति गतिकर्मसु निघं० २।१४) १.१०.४ ॥

**स्वरः** स्वयं राजमानं स्वातन्त्र्यम् १८.१ ॥ [ **स्वरौ** ] शब्दोपतापौ १.१६२.६ ॥

स्वर—वाङ्नाम । निघ० १ । ११ ॥

स्वरः—स यदाह स्वरो ऽसीति सोमं वा एतदाहैष ह वै सूर्यो भूत्वा ऽमुष्मिंल्लोके स्वरति तद्यत्स्वरति तस्मात्स्वरस्तत्स्वरस्य स्वरस्वम्। गो० पू० ५ । १४ ॥ य आदित्यस्स्वर एव सः। जै० उ० ३ । ३३ । १ ॥ प्राणः स्वरः । तां० ७ । १ । १० ॥ १७ । १२ । २ ॥ पशवः स्वरः । गो० उ० ३ । २२ । ४ । २ ॥ श्रीर्वै स्वरः । श० ११ । ४ । २ । १० ॥ प्रजापतिः स्वरः। ष० ३।७॥ यथा स्वरेण सर्वाणि व्यञ्जनानि व्याप्तान्येवं सर्वान्कामानाप्नोति यश्चैवं वेद। संहितो० खं० २ ॥ तस्माद्यज्ञे स्वरवन्तं

दिदृक्षन्तऽ एव । श० १४ । ४ । १ । २७ ॥ अनन्तो वै स्वरः । तां० १७ । १२ । ३ ॥

**स्वरङ्कृतेन** सुष्ठु पूर्णेन कृतेन १.१६२.५ । सुष्ठु अलङ्कृतेन ( अत्र कपिलकादित्वाद्रेफः ) २५.२८ ॥

**स्वरणम्** सर्वविद्याप्रवक्तारम् ३.२८ । यः स्वरति शब्दार्थसम्बन्धान् उपदिशति तम १.१८.१ ॥

स्वरण—प्रकाशनवन्तम् । नि० ६ । १० ॥

**स्वरन्ति** शब्दयन्ति ५.५४.२ । उच्चरन्ति ५.५४.१२ ॥

**स्वराज्यम्** स्वकीयं राज्यम् १.८०.२ । स्वप्रकाशवन्तम् २.८.५ ॥

**स्वराट्** यः सर्वेषु धर्माचरणेषु स्वयं राजते सः ३१.२५ । यः सम्यक् राजते सः १३.३५ । यः स्वयं राजतेऽसौ परमात्मा १६.६० । बुद्धिः २०.६ ॥ [ **स्वराजम्** ] स्वेषां राजा स्वराजस्तम् १.३६.७ । यः स्वेन सूर्य इव राजते तम् ३.४६.२ ॥

स्वराट्—( यजु० १३ । २४ ) असौ वै ( द्यु- ) लोकः स्वराट् । श० ७ । ४ । २ । २२ ॥ स्वराट् वै तच्छन्दो यत्किञ्च चतुस्त्रिंशदक्षरम् । कौ० १७ । १ ॥ सो ऽश्वमेधेनेष्ट्वा स्वराडिति नामाधत्त । गो० पू० ५ । ८ ॥

**स्वरिः** शोभनश्चासावरिश्च १.६१.६ ॥

**स्वरितारः** अध्यापका उपदेष्टारो वा १.१६६.११ ॥

**स्वरित्राम्** शोभनान्यरित्राणि यस्यां ताम् २१.६ ॥

**स्वरुः** प्रतापकः ३३.२४ । उपदेष्टा ४.६.३ ॥

[ **स्वरवः** ] स्वकीयो रवो विद्याप्रज्ञापकः शब्दो येषां ते ३.८.६ । सुस्वरान् सेवमानाः ३.८.६ । प्रशंसकाः ३.८.१० । प्रतापयुक्ताः ४.५१.२ ॥ [ **स्वरुम्** ] तापकमादित्यम् १.६२.५ ॥ [ **स्वरूणाम्** ] यज्ञशालास्तम्भशब्दानाम् ७.३५.७ ॥

स्वरुः—एतस्माद् ( यूपात् ) वाऽ एषो ( शकलः ) ऽपच्छिद्यते तस्मै तत्स्वमेवारुर्भवति तस्मात्स्वरुर्नाम । श० ३ । ७ । १ । २४ ॥

**स्वरोचिः** स्वकीयं रोचिर्दीपनं यस्य सः ३.३८.४ ॥

**स्वर्काः** शोभनोऽर्को अन्नं सत्कारो वा येषां ते ( अर्क इत्यन्ननाम निघ० २।७ ) ६.१६ । शोभना अर्का अन्नादयः पदार्था येषां ते १६.३२ । सुष्ठु अन्नानि वज्रो वा येषां ते २१.१० । शोभना अर्का मन्त्रा विचारा येषान्ते ७.३५.६ ॥ [ **स्वर्कैः** ] शोभना अर्का मन्त्रा विचारा वा देवा विद्वांसो येषु तैः १.८८.१ ॥

स्वर्क—स्वञ्चैनैरिति वा, स्वर्चनैरिति वा स्वार्चिभिरिति वा । नि० ११ । १४ ॥

**स्वर्गान्** स्वः सुखं गच्छन्ति प्राप्नुवन्ति येभ्यस्तान् १४.३१ ॥ [ **स्वर्गाय** ] सुखगमकाय पुरुषार्थाय २२.३४ । सुखविशेषाय ३२.१३ । विशेषसुखभोगाय ३५.२२ ॥ [ **स्वर्गे** ] सुखमये २३.२० ॥

स्वर्गो लोकः—परो वा अस्माल्लोकात्स्वर्गो लोकः । ऐ० ६ । ३० ॥ प्रतिकूलमिव हीतः स्वर्गो लोकः । तां० ६ । ७ । १० ॥ एकविंशो वा इतः स्वर्गो लोकः । तै० ३ । १२ । ५ । ७ ॥ सहस्रसंमितो वै स्वर्गो लोकः । श० १३ । १ । ३ । १ ॥ यावद्वै सहस्रङ्गाव उत्तराधरा इत्याहुस्तावदस्मात् लोकात्

सहस्रयाजी वा इमान् लोकान् प्राप्नोति। तां० १६। ८। ६॥ सहस्राश्वीने वा इतः स्वर्गो लोकः ऐ० २।१७॥ चतुश्चत्वारिंशदाश्वीनानि सरस्वत्या विनशनात् प्लक्षः प्रास्रवणस्तावदितः स्वर्गो लोकः सरस्वतीसम्मितेनाध्वना स्वर्गं लोकं यन्ति तां० २५। १०। १६॥ अपरिमितो वै स्वर्गो लोकः। ऐ० ६ ।२३॥ अनन्तोऽसौ (स्वर्गः) लोकः। तां० १७। १२। ३॥ साम्राज्यं वै स्वर्गो लोकः। तां० ४। ६। २४॥ स्वर्गो लोकः सरस्वान् तां० १६। ५। १५॥ स्तोमा वै त्रयः स्वर्गा लोकाः। ऐ० ४। १८॥ स्वर्गो वै लोकः सूर्य्यो ज्योतिरुत्तमम् ( यजु० २०। २१ )। श० १२। ६। २। ८॥ अहर्वै स्वर्गो लोकः। ऐ० ५। २४॥ स्वर्गो वै लोको ब्रध्नस्य विष्टपम्। ऐ० ४। ४॥ स्वर्गो वै लोको नाकः ( यजु० १२। २॥ )। श० ६। ३। ३। १४॥ दिशो वै स नाकः स्वर्गो लोकः। श० ८। ६। १। ४॥ स्वर्गो वै लोकः सधस्थः ( यजु० १८। ५६ )। श० ६। ५। १। ४६॥ अथ यत्परं भाः ( सूर्य्यस्य ) प्रजापतिर्वा स स्वर्गो लोकः। श० १। ६। ३। १०॥ स्वर्गो लोकः—असौ वै (स्वर्गो) लोको महांऽसि तस्यादित्या अधिपतयः। तै० ३। ८। १८। २॥ अग्निर्वै स्वर्गस्य लोकस्याधिपतिः। ऐ० ३। ४२॥ एष वै स्वर्गो लोको यत्र पशुं संज्ञपयन्ति। श० १३। ५। २। २॥ ओमिति वै स्वर्गो लोकः। ऐ० ५। ३२॥ स्वरिति सामभ्योऽक्षरत् स्वः स्वर्गलोकोऽभवत्। ष० १। ५॥ इदं वा वामदेव्यं यजमानलोको ऽमृतलोकः स्वर्गो लोकः। ऐ० ३। ४६॥ स्वर्गो वै लोको यज्ञायज्ञियम् (साम) श० ६। ४। ४। १०॥ बृहद्वै स्वर्गो लोकः। तै० १। २। २। ४॥ बृहता ( साम्ना ) वै देवा स्वर्गं लोकमायन्। तां० १८। २। ८॥ स्वर्गा वै लोकाः स्वरसाम। कौ० १२। ५॥ स्वर्गा वै लोकाः षष्ठमहः। ऐ० ६। २६, ३६॥ स्वर्ग एव लोकः षष्ठी चितिः श० ८। ७। ४। १७॥ एकत्रृद्वै स्वर्गो लोकः। श० १३। २। १। ५॥ वाजो वै स्वर्गो लोकः। तां० १८। ७। १२॥ तस्मात् ( भूर्लोकात् ) असावेव ( स्वर्गो ) लोकः श्रेयान् ( अथर्व० ७। ६। १ )। ऐ० १। १३॥ स्वर्गो वै लोकोऽभयम्। श० १२। ८। १। २२॥ स्वर्गो लोको देवो देवता भवति। गो० पू० ४। ८॥ स्वर्गो वै लोको दूरोहणम्। ऐ० ४। २०, २१॥ स्वर्गस्य हैष लोकस्य रोहो यन्निविद्। ऐ० ३। १६॥ स्वर्गो वै लोको रोहः ( यजु० १३। ५१ )। श० ७। ५। २। ३६॥ मध्ये ह संवत्सरस्य स्वर्गो लोकः। श० ६। ७। ४। ११॥ तस्य (संवत्सरस्य) वसन्त एव द्वारं हेमन्तो द्वारं तं वाऽ एतं संवत्सरं स्वर्गं लोकं प्रपद्यते। श० १। ६। १६॥ ता वा एताः पञ्च ( इष्टयः ) स्वर्गस्य लोकस्य द्वारः। अपाञ्चा अनुवित्तयो नाम। तपः प्रथमां रक्षति। श्रद्धा द्वितीयाम्। सत्यं तृतीयाम्। मनश्चतुर्थीम्। चरणं पञ्चमीम्। तै० ३। १२। ४। ७॥ ता वा एताः सप्त ( इष्टयः ) स्वर्गस्य लोकस्य द्वारः। दिवः श्येनयोऽनुवित्तयो नाम। आशा प्रथमां रक्षति। कामो द्वितीयां। ब्रह्म तृतीयाम्। यज्ञश्चतुर्थीम्। आपः पञ्चमीम्। अग्निर्बलिमान् षष्ठीम्। अनुवित्तिः सप्तमीम्। तै० ३। १२। २। ६॥ एतस्यां ह ( उदीच्यां प्राच्यां ) दिशि स्वर्गस्य दिशि स्वर्गस्य लोकस्य द्वारम्। श० ६। ६। २। ४॥ स्वर्गो वै लोको यज्ञः। कौ० १४। १॥ तथा ह यजमानः सर्वमायुरस्मिंल्लोके एत्याप्नोत्यमृतत्वमक्षितिं स्वर्गे लोके। कौ० १३। ५, ६॥ १४। ४॥ ऋतेनैवैनं स्वर्गं लोकं गमयन्ति। तां० १८। २। ६॥ छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति। श० ६। ५। ४। ७॥ सैर्वैवं छन्दोभिरिष्ट्वा देवाः स्वर्गं लोकमजयन्। ऐ० १। ६॥ छन्दोभिर्वै देवा आदित्यं स्वर्गं लोकमहरन्। तां० १२। १०। ६॥ स्वर्गो वै लोको माध्यन्दिनं सवनम्। गो० उ० ३। १७॥ अवस्तात्प्रपदनो ह स्वर्गो लोकः। श० ८। ६। १। २३॥ नव स्वर्गा लोकाः। ऐ० ४। १६॥ दश स्वर्गा लोकाः गो० उ० ६। २॥ दश पुरुषे स्वर्गनरकाणि तान्येनं स्वर्गं गतानि स्वर्गं गमयन्ति नरकं गतानि नरकं गमयन्ति। जै० उ० ४। २५। ६॥ न वै मनुष्यः स्वर्गं लोकमञ्जसा वेदाश्वो वै स्वर्गं लोकमञ्जसा वेद। श० १३। २। ३। १॥ असमायी वै स्वर्गो लोकः कश्चिद्वै स्वर्गे लोके समेतीति। ऐ० ६। २६, ३६॥

**स्वर्ग्याय** स्वः सुखं गच्छति येन तद्भावाय ११.२॥

**स्वर्चिः** प्रशंसितदीप्तिः २.३.२॥

**स्वर्जितम्** स्वः सुखं जयत्युत्कर्षति येन तम् ११.८॥ [**स्वर्जिते**] यः सुखेन जयति तस्मै २.२१.१॥

**स्वर्जेषे** सुखेन जयशीलाय १.१३२.२॥

**स्वर्ज्योतिः** यथा स्वरन्तरिक्षलोकसमूहं द्योतते तथा ५.३२॥

**स्वर्णरः** ये स्वः सुखं नयन्ति ते ५.५४.१०॥ [**स्वर्णरात्**] स्वरादित्य इव नरात् नायकात् ४.२१.३॥ [**स्वर्णनरे**] स्वः सुखेन युक्ते नरे ५.१८.४॥

**स्वर्थम्** सुष्ठ्वर्थः प्रयोजनं यस्माद्यद्वाऽनर्थसाधनरहितम् १.१४१.११॥ [**स्वर्थे**] सुष्ठु अर्थः प्रयोजनं ययोस्ते ३३.५। शोभनार्थे १.६५.१॥

**स्वर्दृक्** यः स्वः सुखं पश्यति सः ७.५८.२। [**स्वर्दृशौ**] यौ स्वः सुखं दर्शयतस्तौ ५.६३.२॥ [**स्वर्दृशः**] स्वः सुखं पश्यन्ति येभ्यस्ते २.२४.४। ये स्वः सुखं यन्ति ते ७.३७.२॥ [**स्वर्दृशम्**] स्वः सुखं दृश्यते यस्मात्तम् ३.२.१४। यः स्वरादित्येन दृश्यते तम् ५.२६.२। सुखं द्रष्टुम् ७.३२.२२। सुखेन द्रष्टुं योग्यम् २७.३५॥ [**स्वर्दृशः**] ये सुखेन विद्यानन्दं पश्यन्ति तान् १.४४.६॥

स्वर्दृशः—सूर्यदृशः नि० १।२३॥
असौ (सूर्यः) वाव स्वर्दृक्। ऐ० ४।१०॥

**स्वर्भानुः** यः स्वरादित्यं भाति स विद्युद्रूपः ५.४०.५॥ [**स्वर्भानोः**] आदित्यप्रकाशस्य ५.४०.६। स्वरादित्यस्य भानुर्दीप्तिः यस्य तस्य ५.४०.८॥

**स्वर्मीढ(ळह)स्य** सुखैः सेचकस्य १.१६६.२॥ [**स्वर्मीढे**] स्वः किरणान् जलानि वा मेहयति यस्मादन्तरिक्षात्तस्मिन् १.५६.५ स्वः सुखस्य मीढः सेचनं यस्मिँस्तस्मिन् १.६३.६। स्वः सुखेन युक्ते संग्रामे (मीढ इति संग्रामनाम० निघं० २.१७) ४.१६.१५॥

**स्वर्यः** स्वरेषु साधुः १.६२.४॥ [**स्वर्यम्**] स्वरे गर्जने वाचि वा साधुस्तम् (स्वरिति वाङ्नामसु२ निघं० १।११। इदं पदं सायणाचार्येण मिथ्यैव व्याख्यातम्) १.३२.२। स्वः सुखे साधुस्तम् १.६१.६। स्वरेषु विद्यासुशिक्षितासु वाक्षु साधु १.१२१.४। स्वर्हितम् ४.१७.४। स्वरेषु शब्देषु साधुम् ५.३०.८॥

**स्वर्यवः** य आत्मनः स्वः सुखं कामयन्ते ते ३.३०.२०॥

**स्वर्वत्** स्वः सुखं सम्बद्धं यस्मिँस्तत् (अत्र सम्बन्धे मतुप्) १.१७३.१। सुखवत् १.१८५.३॥

**स्वर्वती** विद्यमानसुखा १.१६८.७॥ [**स्वर्वतीम्**] बहुसुखकारिकाम् १.१६३.३॥

**स्वर्वान्** बहुसुखं विद्यते यस्मिँन्त्सः ६.२२.३। स्वर्बहुसुखं विद्यते यस्य सः ६.३७.१॥

**स्वर्वित्** सुखप्रापकः १.९६.४ । प्राप्तसुखः ३.३.१० ॥ [ **स्वर्विदा** ] यौ सुखं विन्दतस्तौ ११.३१ ॥ [ **स्वर्विदः** ] सुख को प्राप्त होने वाले ६१.४१.१ (२३० विधि) [ **स्वर्विदम्** ] स्वरुदकं विन्दन्ति येन तम् २.२३.३ । स्वः सुखं विन्दति यस्मात्तम्३.३.५। स्वोऽन्तरिक्षं विन्दति येन तम् १.५२.१ । स्वः सुखं वेदयति तम् ७.१२॥ [ **स्वर्विदे** ] यः सुखं वेत्ति तस्मै१७.२२॥ स्वर्विद्—सूर्यविदि नि० ७ । २५ ॥

**स्वर्षाः** स्वः सुखेन सुनोति सः ( अत्र स्वः-पूर्वात्सन्धातोः कृतो बहुलमिति करणे विच् ) १.१००.१३ । स्वः सुखं सनोति येन सः २.१८.१ । यः स्वः सुखं सनति विभजति सः ३.३४.४ ॥ [ **स्वर्षाम्** ] स्वः सुखानि सनन्ति भजन्ति यया ताम् १३.१५ ॥

**स्वर्षाता** सुखस्यान्तं प्राप्तः ४.१६.६ । सुखानां विभाजकः ६.१७.८ । सुखस्य दाता ६.३३.४ । सुखानां विभागे ( अत्र सुपां सुलुगिति ङेर्डा ) १.१३१.६ ॥

**स्ववसः** शोभनमवो रक्षणादिकं कर्म येषां ते ४.३३.८ ॥

**स्ववान्** स्वे प्रशस्ताः स्पर्शादयो गुणा विद्यन्ते यस्य सः ( अत्र प्रशंसार्थे मतुप् ) १.३५.१० । प्रशस्ताः स्वे भृत्याः पदार्था वा विद्यन्ते यस्मिन् सः १.११८.१ । स्वकीय-सामर्थ्ययुक्तः ६.४७.१३ । स्वे आत्मीया बहवो विद्यन्ते यस्य सः ६.६८.५ । स्वे स्वकीयाः प्रकाशादयो गुणा विद्यन्ते यस्मिन् सः ( अत्र दीर्घादटि समानपादे अ० ८.३.९ । इति रुत्वे भो भगो० इत्यनेन रोर्यादेशे च हलि सर्वेषामिति लोपः ) ३४.२६ ॥

**स्वविद्युतः** स्वेन रूपेण व्याप्तः ५.८७.३ ॥

**स्ववृष्टिम्** स्वस्य शस्त्राणां वा वृष्टिर्यस्य तम् १.५२.५ । स्वकीयानां घनानामिव प्रेरितानां पदार्थानां शस्त्राणां जलानां वा वर्षणम् ५२.१४ ॥

**स्वशोचिः** स्वं शोचिस्तेजो यस्य ६.६६.६ ॥

**स्वश्चन्द्रम्** स्वेन प्रकाशेनाह्लादकारकेण युक्तं सुवर्णम् ( चन्द्रमिति हिरण्यनाम०निघं० १.२ । अत्र ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे अ० ६.१.१५१ । अनेन सुडागमः ) १.५२.६॥

**स्वश्वः** शोभना अश्वा यस्य सः १.८४.६ । शोभना अश्वा वेगवन्तो विद्युदादयस्तुरङ्गा वा यस्मिन् सः १.११७.२ ॥ [ **स्वश्वाः** ] शोभना अश्वास्तुरङ्गा अग्न्यादयः पदार्था वा येषां ते ४.४२.५ । शोभना अश्वाः तुरङ्गाः महान्तो जना वा येषां ते ७.५६.१॥

**स्वश्व्यम्** शोभनेष्वश्वेषु विद्याव्याप्तिविषयेषु साधुम् १.४०.२० । शोभनेष्वश्वेषु साधुम् १.६३.२ । शोभनेष्वश्वेषु भवम् १.१६२.२२ । शोभना अश्वा यस्मिँस्तम् १.१८०.६ । शोभनेष्वश्वेषु अग्न्यादिषु भवम् २.१.५ । शोभनेष्वश्वेषु साधु वचः ३.५५.१८ ॥

**स्वसरम्** दिनम् ६.६८.१० ॥ [ **स्वसरेषु** ] गोष्ठेषु २.२.२ ॥

स्वसर—अहर्नाम निघ० १।६॥ गृहनाम निघ० ३।४॥

**स्वसा** भगिनी ३४.१० ॥ [स्वसारः] भगिन्य इव वर्तमानाः कलाः १.१६४.३। भगिन्य इव सर्पादिनाशेन सुखप्रदाः १.१६१.१४। अङ्गुल्यः ४.६.८। अंगुल्य इव मैत्रीं भगिनीत्वमाचरन्त्यः ४.२२.७॥ [स्वसारम्] भगिनीस्वरूपां रात्रिम् १.९२.११॥ [स्वस्रा] सुष्ठु अस्यति प्रक्षिपति यया विद्यया क्रियया वा तया (सावसेर्ऋन्। उ० २.९२। अनेन स्वसृ शब्दः सिध्यति) ३.५७॥ [स्वसुः] भगिन्या इव वर्तमानाया उषसः ६.५५.४॥

स्वसृ—अंगुलिनाम निघ० २।५॥ सु असा स्वेषु सीदतीति वा नि० ११।३२॥

**स्वसिचः** याः स्वैर्जनैर्जलेन सिच्यन्ते ताः १०.१६॥

**स्वसृत्** यः स्वान् सरति प्राप्नोति सः १.८७.४॥ [स्वसृतः] ये स्वान् गुणान् सरन्ति प्राप्नुवन्ति ते १.६४.१॥

**स्वस्ति** शरीरसुखं, धातुसाम्यसुखं, इन्द्रियसुखं, विद्यायात्मसुखं वा १.८९.६। सुखमयम् ५.४.११। सुखकरं वर्तमानम् ५.५१.१३॥ [स्वस्तिम्] सुखं शान्तिं वा ६.२.११॥ [स्वस्तिभिः] स्वास्थ्यप्रदैः सुखैः ३४.४०॥ [स्वस्तये] अविनष्टायाभिपूजिताय सुखाय १.२२.१२। सुखाय निरुपद्रवाय५.५१.१२॥

स्वस्ति अविनाशिनाम। अस्तिरभिपूजितः सु अस्तीति नि० ३।११॥ स्वस्त्ययनाय नि० ५।२७॥

**स्वस्तिः** स्वास्थ्यम् ३.३८.६॥

**स्वस्तिगव्यूतिः** स्वस्ति सुखेन सह गव्यूतिर्मार्गो यस्य सः ११.१५॥

**स्वस्तिगाम्** स्वस्ति सुखं गच्छति येन तम् (अत्र जनसनखन० अ० ३.२.६७। अनेन विट् प्रत्ययः) ४.२६। सुखं गच्छन्ति यस्मिँस्तम् ६.५१.१६॥

**स्वस्तिमत्** बहुसुखयुक्तम् ६.४६.६॥

**स्वा** स्वकीया २.२३.६॥ [स्वाः] सम्बन्धिनः २७.२४॥

**स्वाग्रयणः** शोभनश्चासावाग्रयणश्च तद्वत् ७.२०॥

**स्वाङ्कृतः** स्वयं कृत इव ७.३। स्वयंसिद्धोऽनादिस्वरूपः ७.२॥

**स्वात्तम्** स्वेन समन्तात् गृहीतम् ६.१०॥

**स्वादनम्** स्वाद को ५.७.६॥

**स्वादिष्ठम्** अतिशयेन स्वादु १.१३६.१॥ [स्वादिष्ठ] अतिशयेन स्वादित १.१८७.५॥

**स्वादिष्ठा** अतिशयेन स्वाद्वी १.११०.१। अतिशयेन स्वादिता ४.१०.५॥

**स्वादीयः** अतिशयेन स्वादु प्रियकरम् १.११४.६॥

**स्वादु** स्वादुपन से १.१६४.२०॥

**स्वादुः** स्वादुयुक्तः ६.४४.२१॥

**स्वादुक्षद्मा** स्वादूनि क्षद्मानि जलानि अन्नानि यस्य सः १.३१.१५॥

**स्वादुषंसदः** [ **स्वादुषꣳसदः** ] ये स्वादून्यन्नानि भोक्तुं संसीदन्ति न्यायं कर्तुम् सभायां वा ते ६.७५.६ । ये स्वादुषु भोज्याद्यन्नेषु सम्यक् सीदन्ति ते २६.३६ ॥

**स्वाद्म** अति स्वादुमत् ३.३०.१४॥

**स्वाद्वीम्** सुस्वादुयुक्ताम् १६.१ ॥

**स्वाधीः** सुष्ठु समन्ताद्धीयते येन सः १.६७.१ । यः सुष्ठु समन्तात् ध्यायति सर्वान् पदार्थान् सः १.७०.२ । यः सुष्ठु समन्तात् चिन्तयति सः ४.३.४ । शोभनध्यानयुक्ताः प्रजाः १२.१८ ॥ [ **स्वाध्यः** ] ये स्वाध्यायन्ति ते [ अत्र स्वाङ्पूर्वात् ध्यै चिन्तायामित्यस्मात् ध्यायतेः सम्प्रसारणञ्च अ० ३।२।१७८ अनेन क्विप् सम्प्रसारणञ्च ) १.१५.६ । ये सुष्ठु सम्यक् सर्वेषु कल्याणं ध्यायन्ति ते १.७२.८ । सुष्ठु धीर्येषां ते २.२८.२ । सुष्ठु विद्याधानकर्तारः ३.८.४ ॥ [ **स्वाध्यम्** ] यः सुष्ठु ध्यायते तम् ३३.११ । सुष्ठु समन्तात् विद्याधीयते यस्मिन् यस्यां वा तं १.७१.८ ॥ [ **स्वाधीभिः** ] शोभना आधयः सन्ति यासां ताभिर्नीतिभिः ६.३२.२ ॥

**स्वानः** शब्दं कुर्वन् १.१०४.१ । शब्दः ५.२५.८ ॥ [ **स्वानासः** ] उपदेशकाः ५.२.१० ॥

**स्वानिनः** बहवः स्वानाः शब्दा विद्यन्ते येभ्यस्ते ३.२६.५ ॥

**स्वानीत्** शब्दायते २.४.६ ॥

**स्वापय** निवारय ( अत्रान्तर्गतो णिजन्येषामपीति दीर्घश्च ) १.१६.३ ॥

**स्वापयामसि** सुलावें ७.५५.७ ॥

**स्वापी** शयानौ ४.४१.७ ॥

**स्वापये** सुखानां सुष्ठु प्राप्तये ६.२० ॥

**स्वाभुवः** ये सुष्ठु समन्तात् परोपकारे भवन्ति ते १.१५१.२ । ये स्वयं भवन्ति ते ४.५०.१० । ये सुष्ठु समन्तादुत्तमा भवन्ति ते ७.३०.४ ॥

**स्वायुः** शोभनञ्च तदायुश्च २७.५ ॥ [ **स्वायुषा** ] शोभनमायुर्जीवनं प्राणधारणं यस्मिँस्तेन ४.२८ ॥

**स्वायुजः** यः सुष्ठु समन्ताद्युञ्जन्ति ताः १.६२.२ ॥

**स्वायुधाः** शोभनान्यायुधानि ५.५७.२ ॥ [ **स्वायुधासः** ] स्वकीयान्यायुधानि येषां ते ५.८७.५ । शोभनान्यायुधानि येषां ते ७.५६.११ ॥ [ **स्वायुधम्** ] उत्तमायुधप्रक्षेपकुशलम् ६.१७.१३ ॥

**स्वारम्** उपतापं शब्दं वा २.११.७ । तापाज्जातं तेजः १३.६५ ॥

**स्वावसुः** स्वेषु यो वसति स्वान् वा वासयति सः ५.४४.७ ॥

**स्वावेशः** स्वः आवेशो यस्य सः ७.५४.१ । यथाप्तः शोभनं धर्ममाविशति तथा ६.२ ॥

**स्वावेशा** सुष्ठु समन्तात् वेशो यस्याः सा १४.३ ॥

**स्वासम्** शोभनं सुखम ४.६.८ ॥

**स्वासस्थम्** शोभने आसे उपवेशने तिष्ठतीति तम् २.५ । सुष्ठु आस्ते यस्मिँस्तम् २८.२१ ॥

**स्वासस्थाम्** सुष्ठु आसाः प्रक्षिप्तास्तिष्ठन्ति यस्यां सा वेदिस्ताम् (अत्र घञर्थे कविधानम् अ. ३।३।५२ इति वार्तिकेन कः प्रत्ययः) २.२ ॥

**स्वाहा** या सत्क्रियासमूहास्ति तया १.१३.१२ ॥ सत्यभाषणयुक्ता वाक् (यत् शोभनं वचनं सत्यकथनं स्वपदार्थान् प्रति ममत्ववचो मन्त्रोच्चारणेन हवनं चेति स्वाहाशब्दार्था विज्ञेयाः) २.२ । वेदवाणी इदं कर्म आह २.६ । सुहुतं सुखकारि आहेश्वरः २.११ । सु आहेत्यस्मिन्नर्थे २.१८ । स्वकीयं पदार्थं प्रत्याह यस्यां क्रियायां सा वा २.२० । स्वं दधात्यनया सा स्वाहा क्रिया २.२६ । वेदवाणी यज्ञक्रियामाहेत्यस्मिन्नर्थे सुष्ठु सत्यमाह यस्यां वाचि सा स्वकीया हृदयस्था वाक् यदाह तदेव सत्यं वाच्यं नानृतमित्यस्मिन्नर्थे ३.६ । शोभनं देयमादेयमाह यया सा ३.५७ । सुष्ठु जुहोति गृह्णाति ददाति यया क्रियया तया, सुशिक्षितया वाचा, विद्याप्रकाशिकया वाण्या, सत्यप्रियत्वादिगुणविशिष्टया वाचा ४.६ । वेदवाणीप्रचाराय, परोपकारिकायै, अध्ययनाध्यापनविद्यायै, सत्यवाक्प्रवृत्तये, संगतां प्रियां शोभनां स्तुतिप्रयुक्तां वाचम् ४.७ । येभ्यो विद्यावाक् प्राप्ता भवति ४.११ । वाचं वा ४.१८ । सुहितं हविरन्नम् ५.४ । वाक्, अध्ययनाध्यापनराजव्यवहारकुशला वाक्, ज्योतिश्शास्त्रसंस्कारयुक्ता वाणी, व्यवहारेण धनप्रापिका दिव्यविद्यासम्पन्ना वा ५.१२ । वेदवाणी चक्षुरिन्द्रियं वा ५.१६ । सत्कृत्यनुरूपा, सत्कृत्यनुकूलां वा ६.११ । युद्धानुकूलां शोभनां वाचम्, तत्स्थानानुकूलं शोभनां वाचं वा ६.१६ । बृहन्नौकारचनादिविद्यासिद्धेन यानेन, खगोलप्रकाशिकया विद्यया सम्पादितेन विमानेन, वेदवाचा सत्संगसंस्कृतया वा, योगयुक्तया वाचा, ज्योतिर्बोधयुक्तया वाचा, वेदाङ्गादिविज्ञानसहितया वाचा, भूमियानाकाशयानरचनभूगोलभूगर्भखगोलविद्यया, वैद्यकशास्त्रबोधार्हया वाचा तद्बोधयुक्तया वाण्या, तद्गुणविज्ञापयित्र्या वाचा, यज्ञानुष्ठानयन्त्ररचनविद्यया वा ६.२१ । स्तुतियुक्ता वाक् यथा तथा ६.२६ । आदर के साथ ग्रहण करो ६.२७ । उत्साहिकया वाचा ६.२६ । सत्यां क्रियाम्, सत्यां वाचं वा ७.२ । सत्यया स्वीकयया वाचा वेदवाचा वा ७.४३ । वैद्यकयुद्धविद्यया शिक्षितया वाचा ७.४४ । श्रेष्ठक्रियया ८.१८ । शास्त्रोक्तक्रियया ८.२० । धर्म्यया क्रियया ८.२१ । सत्यन्यायप्रकाशितया वाचा वा ८.२२ । प्रेमोत्पादयित्र्या वाचा ८.२५ । सत्यां सकलविद्यायुक्तां वाचम् ८.३० । सत्यवाक्युक्तया क्रियया ८.६२ । सत्या क्रिया, धर्म्या क्रिया, पुरुषार्थयुक्ता, अध्ययनाध्यापनप्रवर्तिका क्रिया, कालविज्ञापिका वाणी, विज्ञानयुक्ता वाक्, चेतयित्रीं वाणीम्, नष्टकर्मनिवारिका वाणी, पदार्थविज्ञापिका वाक्, योगविद्याजनिता प्रज्ञा, सर्वव्यवहारविज्ञापिका वाक् वा ६.२० ।

सत्यया नीत्या ६.२५ । सत्यविद्यायुक्तां वाणीम् ६.२६ । दानक्रियाम्, उत्साहकारिकां वाचम्, दौत्यकुशलताम्, आप्तवाणीम् वा ६.३५ । आन्वीक्षिकीं विद्याम्, सर्वोपकारिणीं नीतिम्, धर्मौषधिविद्याम् वा ६.३६ । सुष्ठुवाचा, सत्यया नीत्या वा २०.२ । न्याययुक्तया नीत्या, प्रियया वाचा, युक्तिमत्या वाचा वा १०.३ । सत्यवचनों से, सत्य क्रिया से, सत्य पुरुषार्थ से १०.४ । सत्यवाक्-प्रियाचरणयुक्ता विद्या, वैद्यकपुरुषार्थ-विद्या, व्याकरणाद्यङ्गविद्या, योगव्यवहार-विद्या, ब्रह्मविद्या, विवेकविद्या, तथ्योपदेशे वक्तृत्वविद्या, तत्त्वकाव्यशास्त्रादि-विद्या, सूक्ष्मपदार्थविद्या, राजनीतिविद्या वा १०.५ । वैद्यकशास्त्रबोधजनितां क्रियाम्, योगशान्तिदां वाचम्, सुशिक्षा-युक्तां वाचमुपदिष्टिम् १०.२३ । क्रिया-योगरीत्या ११.६६ । उत्तम वाणी से १७.७६ । सत्या क्रिया, साध्वी क्रिया, योगा-भ्यासादिक्रिया, धनप्रापिका क्रिया, कालविज्ञापिका क्रिया, वैराग्ययुक्ता क्रिया, सत्योपदेशिका वाक्, सत्या वाणी, सुष्टूपदेशः, उत्तमा वाक्, राजव्यवहार-सूचिका क्रिया, राजधर्मद्योतिका नीतिः १८.२८ । सुष्ठु रक्षणक्रियया, उत्तमरीत्या, निदानादिविद्यया, सुष्ठुविद्यया वा २१.४० । सुखप्रापिका क्रिया २२.६ । विचार-युक्ता वाणी, सत्यभाषणादियुक्ता भारती, आप्तोपदेशयुक्ता गीः २२.२३ । शुद्धिकारिका क्रिया २२.२५ । उत्तमयज्ञ-क्रिया, उक्ता क्रिया, तदनुरूपा क्रिया २२.२६ । सद्विद्यायुक्ता प्रज्ञा २३.२ । ब्रह्म-चर्यक्रियया, सुशीलतायुक्तया क्रियया वा २५.१ । स्वकीयया क्रियया ३६.७ ॥

स्वाहा—वाङ् नाम । निघ० १ । ११ ॥ स्वाहेत्येतत् सु आहेति वा, स्वा वागाहेति वा, स्वं वा प्राहेति वा स्वाहुतं हविर्जुहोतीति वा । नि० ८ । २० ॥

स्वाहाकारः—स प्रजापतिर्विदांचकार स्वो वै मा महिमाहेति स स्वाहेत्येवाजुहोत्तस्मादु स्वाहेत्येव हूयते । श० २ । २ । ४ । ६ ॥ हेमन्तो वाऽऋतूनाᳬ स्वाहाकारो हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते । श० १ । ५ । ४ । ५ ॥ स्वाहा वै सत्यसम्भूता ब्रह्मणो दुहिता ब्रह्मप्रकृता लातव्यसगोत्रा त्रीण्यक्षराण्येकं पदं त्रयो वर्णाः शुक्लः पद्मः सुवर्ण इति । ष० ४ । ७ ॥ स्वाहा वै सत्यसम्भूता ब्रह्मणा प्रकृता लामगायनसगोत्रा द्वे अक्षरे एकं पदं त्रयश्च वर्णाः शुक्लः पद्मः सुवर्ण इति । गो० पू० ३ । १६ ॥ एष वै स्वाहाकारो य एष (सूर्यः) तपति । श० १४ । १ । ३ । २६ ॥ अन्नᳬ हि स्वाहाकारः । श० ६ । ६ । ३ । १७ ॥ तस्यै (वाचे) द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च । श० १४ । ८ । ६ । १ ॥ अनिरुक्तो वै स्वाहाकारः । श० २ । २ । १ । २ ॥ अहुतमिवैतद्यदस्वाहाकृतम् । श० ४ । ५ । २ । १७ ॥ यज्ञो वै स्वाहाकारः । श० ३ । ३ । २७ ॥ अन्तो वै यज्ञस्य स्वाहाकारः । श० १ । ५ । ३ । १३ ॥

**स्वाहाकृतः** सत्यक्रियया निष्पन्नः २२.३ ॥ [**स्वाहाकृतम्**] वेदवाणीनिष्पादितम् १७.८८ । सत्येन निष्पादितं कृतहोमं वा २६.३६ ॥ [**स्वाहाकृतस्य**] सत्यवाङ्-निष्पन्नस्य धर्मस्य १.११०.१ ॥

स्वाहाकृतयः—प्राणा वै स्वाहाकृतयः । कौ० १० । ५ ॥ प्रतिष्ठा वै स्वाहाकृतयः । ऐ० २ । ४ ॥

**स्वाहाकृता** याः क्रियया सुसंस्कृताः क्रियन्ते ताः ४.१३ । याः स्वाहा सत्यां क्रियां कुर्वन्ति

ताः १०.२६ ॥

**स्वाहाकृतीः** वाण्यादिभिः (कृताः) क्रियाः २८.३४ ॥ [**स्वाहाकृतीनाम्**] सत्यवाक्क्रियानुष्ठानानाम् २८.११ ॥ [ **स्वाहाकृतीषु** ] स्वाहया कृतयः क्रिया येषु व्यवहारेषु तेषु १.१८८.११ ।

**स्वाहुतः** सुष्ठु समन्ताद् हुत आदत्तः सन् १५.३३ । सुष्ठु कृताह्वानः सखा सुष्ठु निमन्त्रितो विद्वान् वा १५.३३ । यः सुखेनाहूयते सः १.४४.६॥ [ **स्वाहुत** ] सुष्ठ्वादत्तविद्य ३३.१४ । सुष्ठु सत्कृत ७.१६.७॥

**स्वित्** वितर्के १७.१८। कंस्वित्–किसी को १७.२६ । प्रश्ने २३.६ । का-स्वित् कौन २३.११ । अपि२३.४५ । किं-स्वित्–कौन २३.४७ । किंस्वित्–क्या १७.२० । एव १ ॥

**स्विते** सुष्ठु ईयते प्राप्यते येन व्यवहारेण तस्मिन् ( इदं पदमवैयाकरणेन महीधरेण लेट्लकारस्य रूपमित्यशुद्धं व्याख्यातम् ) ५.५ ॥

**स्विध्मा** सुष्ठु इध्मा सुखप्रदीप्तिर्यया सा ५.१२२.७॥

**स्विन्नः** स्वेदयुक्तः २०.२० ॥

**स्विषुः** शोभना इषवो यस्य सः ५.४२.११ ॥

**स्विष्टः** शोभनमिष्टं येभ्यस्ते, शोभनमिष्टं यस्मात् सः वा २१.५८ ॥

**स्विष्टम्** शोभनं तदिष्टम्, अतिशयेनाभीप्सितम् वा २८.२२॥ [ **स्विष्टेन** ] उत्तम चाहे हुए से १. ॥

स्विष्टम्—यद्वै यज्ञस्यान्यूनातिरिक्तं तत्स्विष्टम्। श० ११।२।३।६॥

**स्विष्टकृत्** सुष्ठु सुखकारी, शोभनेष्टकारी वा २१.५८ ॥ [ **स्विष्टकृतम्** ] स्विष्टेन कृतम् २१.४७ ॥

स्विष्टकृत्—( अग्निः ) तदेभ्यः ( देवेभ्यो ऽग्निं ) स्विष्टमकरोत्तस्मात् ( अग्नये ) स्विष्टकृतऽ इति ( क्रियते )। श० १।७।३।६॥ अग्निर्हि स्विष्टकृत्। श० १।५।३।२३॥ रुद्रः स्विष्टकृत्। श० १३।३।४।३॥ रुद्रियः (=रुद्रदेवत्यः) स्विष्टकृत् ( यागः ) । श० १।७।३।२१॥ क्षत्त्रं वै स्विष्टकृत्। श० १२।८।३।१६॥ तपः स्विष्टकृत्। श० ११।२।७।१८॥ अयमेवावाङ्प्राणः स्विष्टकृत्। श० ११।१।६।३०॥ तृतीयसवनं वै स्विष्टकृत्। श० १।७।३।१६॥ वास्तु स्विष्टकृत्। श० १।७।३।१८॥ प्रतिष्ठा वै स्विष्टकृत् । ऐ० २।१०॥ कौ० ३।८॥ एषा ( उत्तरा=उदीची ) हि दिक् स्विष्टकृतः । श० २।३।१।२३॥

**स्विष्टाः** शोभनानीष्टानि याभ्यस्ताः ७.१५ ॥

**स्विष्टिम्** शोभना इष्टिर्यस्यां ताम् २७.१८॥

**स्वेदम्** जल को ५.७.५ । प्रस्वेदमिव ५.५८.७॥ [ **स्वेदस्य** ] पुरुषार्थेन जायमानस्य १.८६.८॥

स्वेदः—तद्यदब्रवीन्महद्वै यक्षं सुवेदमविदामह इति तस्मात्सुवेदो ऽभवत्तं वा एतं सुवेदं सन्तं स्वेद इत्याचक्षते। गो० पू० १।१॥

**स्वेदुहव्यैः** स्वानि इदूनि ऐश्वर्याणि हव्यानि दातुमादातुं योग्यानि येभ्यो दुग्धादिभ्यस्तैः १.१२१.६। स्वेन प्रकाशितदानादानैः १.१७३.२ ॥

**स्वैतवः** सुष्ठुगमनाः ५.४१.६ ॥

**स्वोजाः** शोभनमोजः पराक्रमोऽन्नं वा यस्य सः ७.२०.३ ॥

**स्वौपशा** उप समीपे श्यति तनूकरोति यया पाकक्रियया सोपशा तस्या इदं कर्म औपशं तच्छोभनं विद्यते यस्याः सा ११.५६ ॥

# ह

**ह** प्रसिद्धम् १.३७.१२ । स्फुटम् १.३७.१३ । किल १.३६.३ । निश्चयेन १.५७.२ । एव ३१.१६ ॥
ह—विनिग्रहार्थीयः पूर्वेण संप्रयुज्यते नि० १।५॥

**हंसः** पक्षिविशेषः १.६५.५ । यो हन्ति पापानि सः ४.४०.५ । यः संहन्ति सर्वान् पदार्थान् सः जगदीश्वरः १०.२४ । दुष्टकर्महन्ता १२.२४ । यो हन्ति दुखानि सः १६.७४ ॥ [ **हंसासः** ] हंस इव गमनकर्तारः ७.५६.७ ॥
हंस—अश्वनाम निघ० १।१४॥ हन्तेर्घ्नन्त्यध्वानं नि० ४।१३॥

**हंसाइव** हंसपक्षिवत् १.१६३.१० ॥

**हंसि** [ **हंसि** ] हन्ति ( अत्र पुरुषव्यत्ययः ) ५.८३.६। नाशयसि प्राप्नोषि वा७.१६.४॥

**हत** घ्नन्ति ( अत्र व्यत्ययो लडर्थे लोट् च ) १.२३.६ ॥

**हतः** हिंसतः ६.६०.६ ॥

**हतः** विनष्टः ६.३८ ॥

**हतम्** नाशयतम् १.१८२.४ । हन्यातम्, विनश्यतम् वा ८.५३ ॥

**हतम्** उत्-हतम्—उद्धार करो १.१८४.२ ॥

**हतवृष्णीः** हतो वृषा मेघो यासां ताः ४.१७.३॥

**हताघशंसौ** हता अघशंसाः स्तेना याभ्यां तौ २८.१७ ॥

**हतवे** हननकरणाय ( अत्र कृहनिभ्यां क्तुः उ० ३.२६ । अनेन हन्धातोः क्तुः प्रत्ययः ) १.२५.२ ॥

**हत्वा** अच्छे प्रकार मार कर १.१००.१८॥

**हत्वी** हत्वा (अत्र स्नात्व्यादय इतीदं सिध्यति) २.२०.८ ॥

**हथ** भग्नाङ्गाञ्छत्रून् कुरुथ १.३६.३ ॥

**हथः** छिन्न भिन्न करते हो ६.७२.३ ॥

**हथैः** हननैः ४.३०.२१ ॥
हथ—हननात् नि० ६।२७॥

**हन्** [ **हन्** ] हन्ति, नाश करते हो ६.२६.५ । हन्यात् ५.२६.४ ॥

**हनः** हन्याः १.८०.३ ॥

**हनति** हन्ति ( अत्र बहुलं छन्दसीति शपो लुक् न ) ३३.६६ ॥
हनति—गतिकर्मा निघ० २।१४॥

**हनन्त** घ्नन्ति ७.५६.२२ ॥

**हनाम** हिंसेम १.१६१.५ ॥

**हनिष्ठः** अतिशयेन हन्ता ६.३७.५ ॥

**हनिष्यन्** हननं करिष्यन् ४.१८.११ ॥

**हनीयसे** दुष्टानां अतिशयेन हन्त्रे विनाशकाय १६.४० ॥

**हनू** मुखपार्श्वौ ४.१८.६। मुखनासिके ५.३६.२॥

[ **हनुभ्याम्** ] ओष्ठमूलाभ्याम् ११.७८॥

हनु—हन्तेः नि० ६। १७॥

**हन्तन(ा)** घ्नत (अत्रान्येषामपीति दीर्घः) २.३४.६ ॥

**हन्तवे** हन्तुम् (अत्र तवेन् प्रत्ययः) १.१३१.६॥

**हन्तवै** हन्तुम् ५.२.१० ॥

**हन्ता** नाशकः १२.५ ॥

**हन्ति** नाशयति दूरीकरोति वा १.१६१.२ ॥

**हन्तु** [ **हन्तु** ] दूरी कुर्वन्तु ३.३३.१३। मारे २६.१० ॥

**हन्तोः** हन्तुम् ३.३०.१० ॥

**हन्त्वासः** हन्तुं योग्याः ३.३०.१५ ॥

**हन्मः** संहितानि निमीलितान्यदर्शकानि कुर्मः ७.५५.६ ॥

**हन्मना** हन्ति येन तेन ( अत्र कृतो बहुलमिति अन्येभ्योऽपि दृश्यन्ते इति करणे मनिन् प्रत्ययः । न संयोगाद्वमन्तात् अ० ६.४.१३७ । इत्यल्लोपो न ) १.३३.११। हननेन ७.५६.८ ॥

**हन्यते** मारा जाता है ३.५६.२ ॥

**हयः** सुशिक्षितोऽश्वः ५.४६.१ । ज्ञानवर्धनम् ( हि गतिवृद्ध्योरित्यस्मादौणादिकोऽसुन् प्रत्ययः ) ७.४७ ॥

हय—अश्वनाम निघ० १। १४॥

हयः—( हेऽश्व त्वं ) हयोऽसि । तां० १।७।१॥ हयो भूत्वा देवानवहत्। श० १०।६।४।१॥

**हयन्ता** गच्छन्तौ १.११६.१८ ॥

**हर** निस्सारय २५.३५ ॥

**हरन्निव** पहुंचाते हुए के समान २३.२६ ॥

**हरयन्त** कामयन्ताम् ४.३७.२ ॥

**हरसा** ज्वलनेन ( हरइति ज्वलतो नाम० १.१७ ) १२.१६ । ज्वलितेन तेजसा १३.४१ । हरति येन तेन बलेन १६.८८ ॥

[ **हरसे** ] यो दुःखं हरति तस्मै १७.११। हरति पापानि यः तस्मै ३६.२०॥

हरः—(यजु० १३।४१) (=अर्चिः) परिवृङ्ग्धि हरसा माभिमᳫस्था इति पर्येनं वृङ्ग्ध्यर्चिषा मैनᳫ हिᳫसीरित्येतत् श० ७। ५।२।१७॥ वीर्यं वै हर इन्द्रोऽसुराणाᳫसपत्नानाᳫ समवृङ्क्त। श० ४।५।३।४॥

**हरस्वती** बहुहरणशीला सेना २.२३.६ ॥

**हराणि** प्रयच्छानि ३.५० ॥

**हरासि** हर, प्रयच्छ (अयं लेट्प्रयोगः) ३.५० ॥

**हरिः** यः हरते वहति यथायोग्यं गृहाश्रमव्यवहारान् सः ८.११। मनोहारी चन्द्रो बालो वा ३३.५। आशुगन्ता सर्वेभ्यो ज्येष्ठः। हरणशीलो वायुः ३.४४.३ । हरणशीलः ७.१०.१ ॥ [ **हरी** ] बलपराक्रमौ धारणाकर्षणे वा ३.५२। हरणशीलावध्यापकाध्येतारौ ३३.७८। हरति याभ्यां तौ कृष्णशुक्लपक्षौ १.१६.२। सद्व्यवहारहरणशीलसेनान्यायप्रकाशौ १.६३.२ । दुःखहरणशीलौ १.८४.२. । हरणशीलौ जलाग्न्याख्यौ १.१११.१ । धारणाकर्षणवेगादिगुणौ वाय्वग्नी २.१८.३। अविद्याया हर्तारौ ४.१५.८। वायुविद्युतौ ४.३५.५। संयुक्तावश्वाविव राजप्रजाजनौ ६.४०.१ ॥ [ **हरयः** ] हरन्ति

ये ते किरणाः (हृपिषिरुहि ३.४.१२४। इति हृधातोरिन् प्रत्ययः) १.१६.१। सुशिक्षितास्तुरङ्गा इवाग्न्यादयः ३.४३.६। पुरुषार्थिनो मनुष्याः ३.५.२। अश्वाः ३.५३.४। अश्वा इव शिल्पिनो मनुष्याः ६.३७.१। अश्वा इवेन्द्रियाण्यन्तःकरणप्राणाः ६.४७.१८॥ [हरिभ्याम्] अश्वाभ्यामिव पठनाभ्यासाभ्याम् ४.१५.७। हरणशीलाभ्यां हस्ताभ्याम् ५.३६.५। अध्यापकोपदेशकाभ्यां मनुष्याभ्याम् ६.२३.४॥ [हर्योः] हरणाहरणगुणयोः १.७.२॥

हरि—निघ० १।१५॥ मनुष्यनाम निघ० २।३॥ हरिः—(ऋ० ६।४७।१८) युक्ता ह्यस्य (इन्द्रस्य) हरयश्शतादशेति सहस्रं हैत आदित्यस्य रश्मयः। तेऽस्य युक्तास्तैरिदं सर्वं हरति। तद्यदैतैरिदं सर्वं हरति तस्माद्धरयः(=रश्मयः)। जै० उ० १।४४।५॥ प्राणो वै हरिः स हि हरति। कौ० १७।१॥ एष वै वृषा हरिर्य एष (आदित्यः) तपति। श० १४।३।१।२६॥ हरी—(इन्द्रस्य) ऋक्सामे वा इन्द्रस्य हरी ताभ्याᳬ हीदᳬ सर्वं हरति। ष० १।१॥

**हरिकेशः** हरणशीलाः हरितवर्णाः केशा इव केशाः प्रकाशा यस्य सः १५.१५। हरितवर्णः १७.५८॥ [हरिकेशम्] हरयो हरणशीलाः केशा रश्मयो यस्य तम् ३.२.१३॥ [हरिकेशाय] हरिताः केशा यस्य तस्मै १६.१७॥ [हरिकेशेभ्यः] हरयो हरणशीलाः सूर्यरश्मयो येषु तेभ्यः १६.१७॥

हरिकेशः—(यजु० १५।१५) यद्धरिकेश इत्याह हरिरिव ह्यग्निः। श० ८।६।१।१६॥

**हरिणः** पशुः २३.३०॥ [हरिणस्य] हर्तुंशीलस्य वीरस्य २६.१२॥

हरिणः (यजु० २३।३०) राष्ट्रᳬ हरिणः। श० १३।२।६।८॥

**हरिणीः** प्रशस्तो हरो हरणं विद्यते यासां ताः २३.३७॥

हरिणी—(सची) ऊर्ध्वां हरिण्यः (सूच्यः)। तै० ३।६।६।५॥ हरिणी (=सुवर्णमयी) द्यौः। गो० उ० २।७॥ दिवो (रूपं) हरिण्यः (सूच्यः)। तै० ३।६।६।५॥ हरिणीव हि द्यौः। श० १४।१।३।२६॥ विड् वै हरिणी। तै० ३।६।७।२॥

**हरितः** [हरितः] हरितादिवर्णः ३.४४.४। हरन्ति यास्ता ज्वालाः १.१४.१२। यैः किरणैः रसान् हरति त आदित्यरश्मयः (हरित इत्यादिष्टोपयोजनम् निघं. १।५) १.५०.८। दिशः १.५७.३। दिशा विदिशा १.१३०.२। अंगुल्यः ४.६.६॥ [हरिता] हरणशीलावश्वौ ६.४७.१६॥ [हरितम्] अग्न्यादिभिर्वाहितम् ३.४४.१। कमनीयम् ३.४४.४॥ [हरितोः] हरणशीलयोर्गुणयोः ३.४४.३॥

हरित—दिशो वै हरितः। श० २।५।१।५॥

**हरित्याय** हरितेषु सरसेषु आर्द्रेषु भवाय १६.४५॥

**हरिधायसम्** या हरीन् किरणान् दधाति ताम् ३.४४.३॥

**हरिप्रिय** यो हरीन् हरणशीलाम् प्रीणाति तत्सम्बुद्धौ ३.४१.८॥

**हरिमाणम्** सुखहरणशीलम् १.५०.११। चित्ताकर्षकं व्याधिम् १.५०.१२॥

**हरियूपीयायाम्** हरीन् मुनीनिच्छतां पीयायां पानक्रियायाम् ६.२७.५॥

**हरियोगम्** हरीणामश्वादीनां योगो यस्मिँस्तम्

१.५६.१ ॥

**हरियोजनाय** हरीणां मनुष्याणां योजनाय समाधानाय (हरय इति मनुष्यनाम निघ० २।३) १.६२.१३ ॥

**हरिवर्पसम्** हरयः किरणा वर्पसो रूपस्य प्रकाशका यस्यास्ताम् ३.४४.३ ॥

**हरिवान्** बहुप्रशस्तमनुष्ययुक्तः ७.३२.१२। प्रशस्ता हरयो ऽश्वा विद्यन्ते यस्य सः २०.३८ ॥ [ हरिवः ] वेगाद्यश्ववान्, हरयो हरणनिमित्ताः प्रशस्ताः किरणा विद्यन्ते यस्य सः (अत्र प्रशंसायां मतुप्। मतुवसो रु सम्बुद्धौ छन्दसीत्यनेन रुत्वविसर्जनीयौ। छन्दसीर इत्यनेन वत्वम्। हरी इन्द्रस्य। निघ० १।१५ आभिमुख्यतयोत्पन्नौ वाग्व्यवहारौ) १.३.६। प्रशस्ता हरयो हरणगुणा विद्यन्ते यस्मिँस्तत्सम्बुद्धौ १.१६५.३। हरयो ऽश्वहस्त्यादयः प्रशस्ताः सेनासाधका विद्यन्ते यस्य स हरिवान् तत सम्बुद्धौ १.३३.५। धारणाकर्षणादियुक्त १.१६७.१। उत्तमामात्ययुक्त ५.३६.४ ॥

**हरिव्रतम्** हरयोश्वा व्रतं शीलं यस्य तम् ३.३.५ ॥

**हरिष्ठाः** यो हरौ विषहरणे तिष्ठति सः १.१६१.१०। अतिशयेन हर्ता ६.१७.२ ॥ [ हरिष्ठाम् ] हरयो मनुष्यास्तिष्ठन्ति यस्मिन् सः तम् ३.४६.२ ॥

**हार्मि** हरामि (अत्र शपो लुक्) १.६१.१ ॥

**हर्म्यम्** कमनीयं गृहम् ७.५५.६ ॥ [ हर्म्यस्य ] न्यायगृहस्य मध्ये १.१२१.१ ॥ [ हर्म्ये ] प्रासादे ५.३२.५ ॥

हर्म्यं—गृहनाम। निघ० ३।४ ॥

**हर्म्येष्ठाः** ये हर्म्ये तिष्ठन्ति ते ७.५६.१६ ॥

**हर्य** कामयस्व १.१४४.७ ॥

**हर्यक्षम्** हरीणां वानराणामक्षिणी इव अक्षिणी यस्य तम् ३०.२१ ॥

**हर्यत** कामयध्वम् ५.५४.१५ ॥ प्रेमपूर्वक कामना से वर्ता करो ३.३०.१। (१७२ विधि)।

**हर्यतः** सर्वेषां सुबोधं कामयमानः १.५५.४। गमयिता कमनीयो वा १.५७.२। [ हर्यत ] प्रापक ३.४ ॥

**हर्यतम्** [ हर्यतम् ] कामयेथाम् १.६३.१। प्राप्नुतः १.६३.७ ॥

**हर्यति** कामयते १७.६६ ॥

हर्यति—हर्य्यते र्वा स्यात्प्रेप्साकर्मणः। नि० २।१०॥ कान्तिकर्मा निघ० २।६॥ गतिकर्मा निघ० २।१४॥

**हर्यते** कामयते ५.५७.१ ॥

**हर्यथ** कामयध्वम् १.१६१.८ ॥

**हर्यन्** [ हर्यन् ] कामयमानः ४.२४.७। प्राप्नुवन् प्रापयन्वा ३.४४.२ ॥

**हर्यन्ति** कामयन्ते १.१६५.४ ॥

**हर्यमाणः** कमनीयः ३.६.४ ॥

**हर्यश्वः** हर्याः कामयमाना आशुगामिनो गुणा यस्य विद्युद्रूपस्य सः ३.४४.४ ॥ [ हर्यश्वम् ] हरयो हरणशीला अश्वा

यस्य तम् ३.३६.४ ॥ [ हर्यश्वेन ] हरणशीला अश्वा यस्मिन् तेन २.१७.३॥ [ हर्यश्वाय ] हरणशीलाऽऽशुगामिनोश्वास्तुरङ्गा अग्न्यादयो वा विद्यन्ते यस्य तस्मै ३.५२.७ । हरयो मनुष्या हरणशीला वा अश्वा यस्य सः ७.३१.१ ॥ [ हर्यश्व ] हरणशीला हरिता वा अश्वा व्यापनस्वभावा यस्य तत्सम्बुद्धौ, अश्वा इवाग्न्यादयो विदिता येन तत्सम्बुद्धौ वा ३.३२.५ ॥

**हर्यश्वप्रसूताः** हरयो हरणशीलाः अश्वाः किरणा यस्य तेन प्रसूता जनिताः ३.३०.१२ ॥

**हर्याः** कमनीयाः ५.२.११ ॥ [ हर्य ] कमनीय, सर्वसुखप्रापक १.५७.४ ॥

**हर्षतः** प्राप्तहर्षस्य १.१२७.६ ॥

**हर्षते** हर्षति ( अत्र व्यत्ययेनात्मनेपदम् ) १.५१.७ ॥

**हर्षमाणः** आनन्दितः सन् ४.३८.३ ॥

**हर्षय** उत्कर्षय १७.४२ ॥

**हर्षयन्त** प्रसन्न होवें ४.३७.२ ॥

**हर्षसे** आनन्दसि ४.२१.६ ॥

**हर्ष्या** हर्षं जनितुं योग्यानि कर्माणि १.५६.५॥

**हलिक्ष्णः** मृगेन्द्रविशेषः २४.३१ ॥

**हवते** [ हवते ] गृह्णाति ( अत्र बहुलं छन्दसीति शपः स्थाने श्लोरभावः ) १.०१५.१७ । आदत्ते ३.२०.१ । स्पर्द्धते २.३३.५ । श्रावयेत् ६.२६.२ । स्तौति ७.२२.६ । आह्वयति ७.५६.१८ ॥

**हवनश्रुत्** या हवनं दानमादानं शृणोति सा २.३३.१५ ॥

**हवनश्रुतः** ये हवनमध्ययनं शृण्वन्ति ते ६.५२.१० । ये हवनानि ग्राह्याणि शास्त्राणि शृण्वन्ति ते ६.१७॥ [ हवनश्रुतम् ] हवनमाह्वानं शृणोतीति तम् १.१०.१०॥
हवनश्रुत—ह्वानश्रुत नि० ६ । २७ ॥

**हवनस्यदम्** येन हवनं पन्थानं स्यन्दते तम् १.५२.१ ॥

**हवना** दातुमादातुमर्हाणि६.६६.४॥ [हवनानि] प्रार्थनावाग्दत्तानि ८.४५ । ग्राह्याणि १७.२३ । दातुं गृहीतुं योग्यानि वस्तूनि ५.५६.२ । दानादीनि कर्माणि ६.३४.४ ॥ [ हवनाय ] आदानाय ६.६३.२ ॥ [ हवनेषु ] आदानयोग्येषु कर्मसु १.१०२.१० ॥

**हवन्त** गृहीत १.१२.२ ॥

**हवन्ते** [ हवन्ते, हवन्ते ] स्तुवन्ति ६.३३.२॥ आह्वयन्ति ७.२७.१ । स्वीकुर्वन्ति ४.४२.५ । गृह्णन्ति ( अत्र व्यत्ययेनात्मनेपदम् बहुलं छन्दसीति शपः श्लुर्न ) १.२३.३ । १.४७.४ । स्पर्धन्ते प्रेप्सन्ते १.६३.६ ॥

**हवमानाः** स्पर्धमानाः१.१०२.५॥[हवमानासः] आदातुमिच्छन्तः ५. ३२. ११ ॥ [ हवमानाय ] आनन्दाय ३.१.२३ । विद्यां स्पर्द्धमानाय १२.५१ ॥

**हवामहे** [ हवामहे ] आह्वयामहे स्पर्द्धामहे वा ( ह्वेञ्-धातोरिदं लेटो रूपम् । बहुलं

छन्दसि । अ० ६.१.३४ । अनेन संप्रसारणम् ) १.७.५ । स्वीकुर्महे १.२१.३ । विद्यासिद्ध्यर्थमुपदिशामः शृणुमश्च १.२१.४ । आदद्मः ( अत्र बहुलं छन्दसीति शपो लुकि श्लोरभावः ) १.२२.२ । स्तुवीमः १.७.१० । प्राप्तुमिच्छेम ५.८६.४ । दधाम ३.४२.६ ॥

**हवासः** दानादानाऽदनाख्याः ६.२३.८ ॥

**[हवम्]** स्तवनम् १.२.१ । आदातव्यं सत्यं वचनम् १.१०.६ । जुहोति ददात्याददाति यस्मिँस्तं होमशिल्पव्यवहारम् १.१७.२ । कर्तव्यं शब्दव्यवहारम् १.२३.८ । प्रार्थनादिकं कर्म १.३०.८ । ग्राह्यं देयमध्ययनाध्यापनाख्यं व्यवहारम् १.४५.३ । ग्राह्यं विद्याशब्दसमूहम् १.४७.२ । श्रोतव्यं श्रावितव्यं वा शब्दसमूहम् १.४८.१० । परीक्षितुमर्हं अध्ययनाध्यापनं वा १.८६.२ । देयं ग्राह्यं विद्याशब्दार्थसम्बन्धमयं वाक्यम् १.६३.१ । आह्वानरूपं प्रशंसावाक्यम् १.११४.११ । दातुमादातुमर्हं न्यायम् १.१२१.३ । उपदेशाख्यं शब्दम् १.१२२.११ । आदातुमर्हं विद्याबोधम् १.१७८.३ । श्रोतुमर्हं शब्दम् १.१८१.७ । दानम् १.१८३.५ । विद्योपदेशम् २.१०.२ । शास्त्रबोधजन्यं शब्दम् २.११.१ । आह्वानम् २.२४.१५ । आह्वान को २.४१.४ । आदातव्यं शब्दार्थसम्बन्धाऽध्ययनम् २.४१.१३ । शब्दार्थसम्बन्धविषयम् ४.६.७ । देने लेने योग्य व्यवहार को ५.१४.५ । पठितम् ५.२४.३ । वक्तव्यं श्रोतव्यं वा ५.४३.११ । बुलाने को ५.७५.१ । प्रशंसनीयं व्यवहारम् ५.८७.८ । पठनपरीक्षाख्यम् ५.८७.६ । वार्ताम् ६.४५.११ । सत्यप्रशंसाम् ६.५०.६ । आदातव्यम् ६.५०.१० । श्रुताधीतज्ञातविषयम् ६.५२.१३ । विद्याविषयं शब्दम् ६.६२.७ । स्वाध्यायम् ६.६६.७ । श्रोतुं श्रावयितुमर्हं स्तुतिममूहं यज्ञम् ३.२६ । अर्जनम् ६.२६ । अध्ययनाध्यापनजन्यं बोधशब्दसमूहमर्थिप्रत्यर्थिनां विवादञ्च ६.१७ ॥ **[हवेभिः]** हवनैः ७.१६.६ ॥ **[हवे]** प्रशंसनीये धर्म्ये व्यवहारे ६.५२.१६ ॥ **[हवेषु]** ह्वयन्ति येषु पदार्थेषु ७.२.७ । हवनादि सत्कर्मसु ७.३५.१२ । ह्वयन्ति स्पर्धन्ते परस्परं येषु संग्रामेषु तेषु १७.४३ । संग्रामादिषु व्यवहारेषु १६.४६ । दानादानेषु २१.१० ॥

**हविः** संस्कृतं सुगन्ध्यादियुक्तं द्रव्यम् १.१५ । हुतं द्रव्यम् १७.६ । होमम् १७.५२ । होतव्यं शुद्धं सुखकरद्रव्यम् १७.७८ । दुग्धादिकम् १६.६५ । आदातुमर्हम् २०.६७ । दातव्यं वस्तु २१.२३ । रोगनाशकं वस्तु २१.४५ । अत्तव्यमन्नम् २६.११ । आदेयं विज्ञानम् १.१०१.८ । क्रियाकौशलयुक्तं कर्म १.१०१.६ । ग्रहीतुं योग्यं करम् १.११४.३ । होम करने योग्य ६.६.२ । ( २५४ वि० ) **[हवींषि]** यज्ञार्थानि द्रव्याणि १.६४.४ । **[हविषा]** सामग्र्या सत्यप्रेमभावेन वा ४.७ । दानग्रहणयोग्येन न्यायेन ११.३५ । उपादेयेन भक्तियोगेन १२.१०२ । आत्मादि-

सामग्र्या १३.४। उपादानेन पुरुषार्थेन २०.७३ । सदाज्ञायोगाभ्यासधारणेन २७.२६ । यथायोग्येन ग्रहीतव्यव्यवहारेण २८.७ । होतव्येन विज्ञानेन धनादिना वा १.८४.१८। विद्यादानादानाभ्याम् १.६१.१६ ॥ [ हविर्भिः ] आदेयैः गुणकर्मस्वभावैः सह १.७६.५। सुष्ठ्वौषधदानैः २.३३.५ । आदातुं योग्यैरुपदेशैर्द्रव्यैर्वा ४.५०.६ । होतव्यैः पदार्थैरिवादत्तैः शान्तैश्चित्तादिभिः ७.४०.५ ॥ [ हविषि ] दातुमादातुमर्हे व्यवहारे १७.२१ ॥

हविस्—उदकनाम निघ० १।१२॥

हविः—अन्नꣳ हि हविः। श० २।६।२।६॥ हवीꣳषि ह वाऽआत्मा यज्ञस्य। श० १।६।३।३६॥ जीवं वै देवानाꣳ हविरमृतममृतानाम्। श० १।२।१।२०॥ मासा हवीꣳषि। श० ११।२।७।३॥

**हविरद्यम्** दातुमर्हमत्तुं योग्यं च २६.२० ॥ [ हविरद्याय ] हविश्चाद्यमत्तव्यं च तस्मै ५.४.४ ॥

**हविर्दे** यो हवींषि दातव्यानि ददाति तस्मै १.

**हविर्धानम्** हविषां धानं स्थित्यधिकरणम् १.६। हवींषि ग्राह्याणि देयानि वा संस्कृतानि वस्तूनि धीयन्ते यस्मिन् १६.१८ ॥ [ हविर्धानानि ] हवि के स्थापन करने के दो पात्र ६.६७ ( २५५ विं० ) [ हविर्धाने ] हविषां गृहीतुं योग्यानां पदार्थानां धारणे ८.५६ ॥

हविर्धान—हविषां निधाने। नि० ६।३६॥

हविर्धान—अथ यदस्मिन्त्सोमो भवति हविर्वै देवानाꣳ सोमस्तस्माद्धविर्धानं नाम। श० ३।५।३।२॥ वैष्णवꣳ हि हविर्धानम्। श० ३।५।३।१५॥ एतद्वै देवानां निष्केवल्यं यद्धविर्धानम्। श० ३।६।१।२३॥ शिरो वा एतद्यज्ञस्य यद्धविर्धाने। कौ० ११।८॥ तस्य (पुरुषस्य) शिर एव हविर्धाने। कौ० १७।७॥ द्यौर्हविर्धानम्। तै० २।१।५।१॥ द्यावापृथिवी वै देवानां हविर्धाने आस्ताम्। ऐ० १।२६॥ वाक् च वै मनश्च हविर्धाने। कौ० ६।३॥ अयं वै लोको दक्षिणं हविर्धानम्। कौ० ६।४॥

**हविर्वाट्** विज्ञानादिप्रापकः १.७२.७॥

**हविष्कृत्** *यः हविः करोति अनया वेदवाण्या सः* ( अत्र यज्ञसम्पादनाय ब्राह्मणक्षत्रियवैश्यशूद्राणां चतुर्धा वेदाध्ययनसंस्कृता सुशिक्षिता वाग् गृह्यते ) १.१५ ॥ [ हविष्कृतम् ] हविर्भिः क्रियते तम् ( अत्र वर्तमानकाले कर्मण्यौणादिकः क्तः प्रत्ययः ) १.१३.३। हविर्भिर्दानैः निष्पादितम् १.१६६.२॥

हविष्कृत्—वाग्वै हविष्कृत्। श० १।४।११॥

**हविष्कृतिम्** हविषां कृतिः करणं यस्य तम् ( अत्र सह सुपेति समासः ) १.१८.८। हविषो होतव्यस्य पदार्थस्य कृतिं कारणरूपाम् १.६३.३॥

**हविष्पतिः** हविषां दातुं गृहीतुं योग्यानां द्रव्याणां गुणानां पतिः पालकः कर्मानुष्ठाता १.१२.८॥

**हविष्मती** बहूनि हवींषि ग्राह्यवस्तूनि विद्यन्ते यस्यां सा ७.१.६। प्रशस्तानि हवींष्यादातुमर्हाणि विद्यन्ते यस्याः सा २२.७४॥ [ हविष्मतीः ] त्रिविधविज्ञानसहिताः २८.८॥

**हविष्मा॑न्** हवींष्युत्तमानि द्रव्याणि कर्माणि वा विद्यन्ते यस्य सः ( अत्र प्रशंसार्थे मतुप् ) १.१२.१ । प्रशस्तानि हवींषि गृहीतानि विद्यन्ते यस्य सः १.१२७.१० । बहुपदार्थ-हेतुः ४.४१.१ । सम्बद्धानि हवींषि यस्मिन्त्सः १.१६२.२२ । आदत्तबहुविद्यः १.१६७.६ । शुद्धसामग्रीयुक्तः १.१८०.३ । बहूनि हवींषि दातव्यानि भोक्तव्यानि विद्यन्ते येषु ६.१०.६ । बहूनि हवींषि दानानि विद्यन्ते यस्य सः ६.१६.४६ । हवींषि कृतानि द्रव्याणि विद्यन्ते यस्मिन् सः ६.७३.१ । प्रशस्तानि हवींषि विद्यन्ते यस्य वायोः सः ६.२३ । प्रशस्तानि हवींषि सुखदानानि यस्मिन्त्सः २५.४५ । प्रशंसितादेययुक्तः १.१८६.४ ॥ [ **हविष्मन्तः** ] हवींषि दातुमादातुमत्तुं योग्यानि अतिशयितानि वस्तूनि विद्यन्ते येषां ते ( अत्रापि अतिशायने मतुप् ) १.१४.५ । प्रशस्तानि जगदुपकरणानि कर्माणि विद्यन्ते येषां ते १.११४.८ । बहूनि हवींषि देयानि वस्तूनि विद्यन्ते येषु ते ३.२७ ॥ [ **हविष्मता** ] प्रशस्तविद्यादानग्रहणयुक्तेन व्यवहारेण १.१५६.१ ॥ [ **हविष्मद्भिः** ] बहूनि हवींष्यादत्तानि साधनानि यैस्तैः ३.२६.२ ॥ [ **हविष्मते** ] बहूनि हवींषि विद्यन्ते यस्य तस्मै विदुषे ( अत्र भूमार्थे मतुप् ) १.१३.१ ॥

**हविष्यः** हविर्भ्यो हितः ६.२७ ॥ [ **हविष्यम्** ] हविष्षु ग्रहणेषु साधुम् १.१६२.४ ॥

हविष्यः—यो व ऊर्मिर्हविष्य इति यो ऊर्मिर्यज्ञिय इत्येवैतदाह । श० ३ । ६ । ३ । २५ ॥

**हवी॑मभिः** ग्रहण करने योग्य उपासनादिकों और शिल्प विद्या के साधनों से १.१२.२ । स्तोतुमर्हैः आह्वातुमर्हैः कर्मभिर्वा १.१३१.६ । स्तोतुमर्हैः गुणैः १.१५६.२ । सुष्ठ्वौषधदानैः २.३३.५ ॥ [ **हवी॑मन्** ] होमे ६.६३.४ । हवींषि दातव्यानि वस्तूनि विद्यन्ते यस्मिँस्तस्मिन् ७.५६.१५ ॥

**हवे॑** स्तौमि १.११८.११ ॥

**हवे॑ते** आदत्तः २.१२.८ ।

**हव्यः॑** होतुमादातुमर्हः १.३३.२ । आहवनीयः १.१०१.६ । आह्वयितुं योग्यः ६.४५.११ । स्तोतुमर्हः ७.३२.२४ ॥ [ **हव्याः** ] दातुं योग्याः ६.२१.१ ॥ [ **हव्येन** ] आदातुं दातुमर्हेण प्रशंसितेनाध्ययनेन श्रवणेन वा ६.५२.८ ॥ [ **हव्यैः** ] पूजितुमर्हैः ५.३.८ । अत्तुमर्हैः ६.१.१० ॥ [ **हव्याय** ] होतुमर्हाय यज्ञाय १.४५.६ । प्रशंसनीयाय ३.२६.४ ॥

हव्य—हवींषि । नि० ८ । ७ ॥ हवनार्हे । नि० १० । ४२ ॥

**हव्यजु॑ष्टिम्** आदातव्यसेवाम् १.१५२.७ ॥

**हव्यदा॑तिम्** हव्यानां दातिर्दानं येन तम् ३.२.८ । दातव्यदानम् ५.५५.१० । यो हव्यानि ददाति तम् ६.१.६ । होतुं दातुं योग्यानां खण्डनम् ७.१६.६ ॥ [ **हव्यदा॑तये** ] हव्यानामादातुमर्हाणामादनाय ३३.८७ ॥

हव्यदातिः—( ऋ० ६ । १६ । १० ) यजमानो वै हव्यदातिः । श० १ । ४ । १ । २४ ॥

**हव्य॑म्** [ **हव्यम्** ] गृहीतुं योग्यम् १.१३६.१ ॥

अत्तुमर्हम् २.३.२। दातुमर्हंसुखम् ५.४.८। दातुमर्हं विज्ञानम् ६.१५.१०। होतुं दातुमर्हं घृतादिद्रव्यं चित्तं वा ७.१.२३। दातुं योग्यम् विज्ञानम् ११.६६। दातुं गृहीतुं योग्यं, क्रियाकौशलं सुखं वा १.११॥ [ हव्या ] होतुं धर्मार्थकाममोक्षान् साधयितुमर्हाणि साधनानि ३.२१.१। दातुमादातुमर्हाण्यन्नादीनि ६.५२.११। दातुमत्तुमादातुमर्हाणि वस्तूनि ( अत्र शेश्छन्दसि बहुलमिति लोपः ) ३.१॥ [ हव्यानि ] आदातुं योग्यानि युद्धकार्याणि १.१०१.१०॥

**हव्यवाट्** यो हुतं द्रव्यं वहति देशान्तरं प्रापयति सः १.१२.६। यो ग्राह्यदातव्यान् पदार्थान् वहति प्रापयति सः १.६७.१। २७.५। पृथिव्यादिवोढा ५.२८.५॥ [ हव्यवाहम् ] यो होतुं दातुमत्तुमादातुं च योग्यानि ददाति वा यानादीनि वस्तूनि इतस्ततो वहति प्रापयति तम् १.१२.२। दातव्यविज्ञानप्रापकम् ३.१०.१। धर्तव्यवाहकम् ६.१५.४। यो हव्यानि हुतानि द्रव्याणि वहति तद्वद्वर्तमानम् ७.१७.६। यो हव्यान् दातुमादातुं च योग्यान् रसान् वहति तम् २.२.१७॥

हव्यवाट्—वायुर्वै तूर्णिर्हव्यवाड्वायुर्देवेभ्यो हव्यं वहति। ऐ० २।३४॥ एष हि हव्यवाड्यदग्निः। श० १।४।१।३६॥

**हव्यवाहनः** यो हव्यानि ग्राह्यदातव्यानि हुतानि द्रव्याणि यानानि वा वहति प्राप्नोति सः १.४४.२। आदातव्यान् पदार्थान् देशान्तरे प्रापकः ५.११.४। यथाग्निर्हव्यानि वहति तथा ५.३१। यो हव्यानि ग्रहीतुं योग्यानि वस्तूनि वहति प्रापयति सः ३४.६॥ [ हव्यवाहनम् ] उत्तमपदार्थप्रापकम् ५.२८.६॥ [ हव्यवाहन ] या हव्यानि होतुं दातुमर्हाणि द्रव्याणि सुखसाधकानि वहति प्रापयति तत्सम्बुद्धौ १.४४.५। यो हव्यानि प्रापयति तत्सम्बुद्धौ ३.६.६॥

हव्यवाहनः—एष हि हव्यवाहनो यदग्निः। श० १।४।१।३६॥

**हव्यवाहम्** हव्यानि होतुं दातुमर्हाणि प्रज्ञानानि यया ताम् १३.१५॥

**हव्यसूक्तीनाम्** बहूनि हव्यानां सूक्तानि यासु तासाम् २८.११॥

**हव्यसूदः** यो हव्यानि सूदयति क्षरयति सः ४.५०.५। याः हव्यानि दुग्धादीनि क्षरन्ति ताः १.६३.१२॥

**हव्यसूदनः** यथा हव्यानि सूदते तथा ५.३२॥

**हव्या** उच्चारणीया ६.६१.१२॥

**हव्यात्** यो हव्यान्यत्ति सः ७.३४.१४॥

**हसाय** हसनाय ३०.६॥

**हस्कर्तारम्** प्रकाशकर्तारम्४.७.३॥

**हस्कारात्** हसनं हस्तत् करोति येन तस्मात् १.२३.१२॥

**हस्तः** यो हसति सः २.३३.७॥ [ हस्तौ ] करौ २०.७। [ हस्ता ] बलवीर्यौ बाहू वा ( अत्रोभयत्र सुपामित्याकारादेशः ) २.१६॥ [ हस्ताभ्याम् ] ग्रहणविसर्जनाभ्याम् १.१०। प्राणापानाभ्याम १.२१। ग्रहणत्यागहेतुभ्यां उदानापानाभ्याम् १.

२४ । शोधनसर्वाङ्गप्रापणाभ्याम् २.११ । यथानन्दप्रदाभ्यां धारणाकर्षणाभ्याम् ५.२२ । यथा प्रबलभुजदण्डाभ्यां तथा ५.२६ । हस्त इव वर्तमानाभ्यां धारणाकर्षणाभ्याम् ६.६ । रोगनाशकधातुसाम्यकारकाभ्यां गुणाभ्याम् ६.३० । उत्साहपुरुषार्थाभ्याम् २०.३ ॥ [ हस्तेषु ] हस्ताद्यङ्गेषु ( बहुवचनादङ्गानीति ग्राह्यम् ) १.३७.३ ॥ [ हस्त ] हसन्ति प्रसन्ना भवन्ति यस्मात्तत्सम्बुद्धौ ४.२७ ॥

हस्त—हन्तेः प्राशुर्हनने नि० १ । ७ ॥
हस्तः—हस्तो वितस्तिः । श० १० । २ । २ । ८ ॥
( नक्षत्रम् ) देवस्य सवितुर्हस्तः । तै० १।५।१।३॥
हस्त एवास्य ( नक्षत्रियस्य प्रजापतेः ) हस्तः । तै० १ । ५ । २ । २ ॥

**हस्तघ्नः** यो हस्ताभ्यां हन्ति सः २६.५१ ॥

हस्तघ्न—हस्ते हन्यते नि० ६ । १४ ॥

**हस्तच्युती** हस्तयोः प्रच्युत्या भ्रामणक्रियया ७.१.१ ॥

**हस्तयतः** हस्ता यता निगृहीता वशीभूता यस्य सः ५.४५.७ ॥

**हस्तिपम्** हस्तिनां पालकम् ३.११ ॥

**हस्ती** 'हाथी' २४.३० ॥ [ हस्तिनः ] प्रशस्ता हस्ता विद्यन्ते येषां ते ३.३६.७ ॥

**हस्त्यम्** हस्तेषु साधुम् २.१४.६ ॥

**हस्रैव** हसन्तीव १.१२४.७ ॥

**हाः** त्यजेः ३.५३.२० ॥

**हारिद्रवेषु** ये हरन्ति द्रवन्ति द्रावयन्ति च तेषामेतेषु १.५०.१२ ॥

**हारियोजनः** हरीन् योजयति यः सारथिः स हरियोजनः हरियोजन एव हारियोजनस्तद्वत् ८.११ । हरीणामश्वानां योजयिता तस्यायं अनुक्रमः १८.२० ॥ [ हारियोजन ] यो हरीन् तुरङ्गान् अग्न्यादीन्वा युनक्ति स एव तत्सम्बुद्धौ १.६१.१६ ॥

हारियोजनः—( ग्रहः ) छन्दांसि वै हारियोजनः श० ४ । ४ । ३ । २ ॥

**हारियोजनम्** हरयोऽश्वा युज्यन्ते यस्मिँस्तत् १.८२.४ ॥

**हार्दि** हृदयस्यातिशयेन प्रियम् ६.२१ । हृदिभवं मनः ३३.५१ । हार्दमस्मिन्नस्ति तत् २.२६.६ । हृदयस्येदम् ५.४४.६ ॥

**हार्द्वानम्** हृदं वनति सम्भजति येन तदेव ३८.१२ ॥

**हासमाना** आनन्दमयी १.१६६.२ ॥ [ हासमाने ] परस्पर प्रेम करती हुई ३.३३.१ ॥

हासमाने—हासतिः स्पर्द्धायां हर्षमाणे वा । नि० ६ । ३६ ॥

**हासयन्ति** हँसाते हैं ३.५३.२३ ॥

**हि** निश्चये ३.३३ । खलु ३.४६ । यतः ५.४३ । सादृश्ये ७.८ । प्रसिद्धौ १२.२१ । हेत्वपदेशे १.१०.३ । एव ५.६६.२ । चार्थे १.२४.८ । कदाचिदर्थे १.२५.१ । विस्मये १.१८०.७ ॥

**हिंसन्ति** नष्ट करती हैं ६.३४.३ ॥

**हिंसिषम्** उच्छिन्द्याम् ( अत्र लिङर्थे लुङ् )

**हिंसिष्ट** नष्ट कीजिये ५.३४ ॥

**हिंसिष्टम्** हिंस्यातम् ५.३ ॥

**हिंसीः** हिन्धि ( अत्र लोडर्थे लुङ् ) ३.६३ ।

हिंस्यात् (अत्र लिङर्थे लुङ्) ४.१। ताडयेः १८.५३। विनाशयेः ५.४२॥

**हिंसीत्** हिनस्तु (अत्र लोडर्थे लुङ्) १.२२। रोगैर्हिंस्यात् १२.१०२। हन्यात्, ताडयेत्, विमुखं कुर्यात् ३२.३॥

**हिङ्** हिङ्कारम् १.१६४.२८॥

**हिङ्काराय** यो हिङ्करोति तस्मै २२.७॥

हिङ्कारः—तस्य (एकविंशसाम्नः) त्रय्येव विद्या हिङ्कारः। जै० उ० १।१६।२॥ एष वै साम्नाꣳ रसो यद्धिङ्कारः। तां० ६।८।७॥ हिङ्कृत्य तदैतद्यज्ञस्याग्रे गेयं यद्धिङ्कारः। गो० उ० ३।६॥ न वाऽ अहिंकृत्य साम गीयते श० १।४।१।१॥ हिङ्कारो वै गायत्रस्य प्रतिहारः। तां० ७।१।४॥ श्रीर्वा एषा प्रजापतिस्साम्नो यद्धिङ्कारः। जै० उ० ३।१२।३॥ एष वै स्तोमस्य योगो यद्धिङ्कारः। तां० ६।८।६॥ वज्रो वै हिङ्कारः। कौ० ३।२॥ शुक्रमेव हिङ्कारः। जै० उ० १।३४।१॥ वायुरेव हिङ्कारः। जै० उ० १।३६।६॥ स (प्रजापतिः) पुरोवातमेव हिङ्कारमकरोत्। जै० उ० १।१२।६॥ प्राणो हि वै हिङ्कारस्तस्मादपिगृह्य नासिके न हिङ्कर्त्तुꣳ शक्नोति। श० १।४।१।२॥ प्रजापतिर्वै हिङ्कारः। तां० ६।८।५॥ लोमैव हिङ्कारः। जै० उ० १।३६।६॥ स (प्रजापतिः) मन एव हिङ्कारमकरोत्। जै० उ० १।११।५॥ चन्द्रमा एव हिङ्कारः। जै० उ० १।३३।५॥ तस्य साम्न इयमेव प्राची दिग्घिङ्कारः। जै० उ० १।३१।२॥ यदनुदितः (आदित्यः) स हिङ्कारः। जै० उ० १।१२।४॥ रश्मय एव हिङ्कारः। जै० उ० १।३३।६॥ अहोरात्राणि हिङ्कारः। ष० ३।१॥ स (प्रजापतिः) वसन्तमेव हिङ्कारमकरोत्। जै० उ० १।१२।७॥ वसन्तो हिङ्कारः। ष० ३।१॥ वृषा हिङ्कारः। गो० पू० ३।२३॥ स (प्रजापतिः) यजूꣳष्येव हिङ्कारमकरोत्। जै० उ० १।१३।३॥

**हिङ्कृण्वती** हिङिति शब्दयन्ती १.१६४.२७॥

**हिङ्कृताय** हिङ्कृतं येन तस्मै २२.७॥

**हितः** धृतः १.५१.७। हितसम्पादकः १.१२८.७॥

[हितम्] प्रवृद्धम ६.४५.१५। प्रसन्नम् १.१८७.६। स्थितं परमात्मानम् ५.११.६। स्थापितं स्थितं वा १.२३.१४॥

हितम्—प्राणो वै हितं प्राणो हि सर्वेभ्यो भूतेभ्यो हितः। श० ६।१।२।१४॥

**हितमित्रः** हिता धृता मित्राः सुहृदो येन सः १.७३.३॥

**हितवान्** हितं विद्यते यस्य सः १.१८०.७॥

**हिता** हितकारिणी १.५१.७॥ [**हिताः**] हिन्वन्ति गच्छन्ति यास्ताः १.५४.१०॥

**हित्वा** त्यक्त्वा ५.५३.१४॥

**हित्वी** हित्वा (अत्र स्नात्व्यादयश्चेति निपातनादीत्वम्) २.३८.६॥

**हिन** हिनु वर्धय (अत्र हि गतौ वृद्धौ चेत्यस्माल्लोण्मध्यमैकवचने वर्णव्यत्ययेन उकारस्याकारः २७.४४॥

**हिन** खलु ६.४८.२॥

**हिनु** [हिनु] वर्धय ३४.८। वर्धयतु ६.४५.३॥

हिनु—धेहि नि० ११।३०॥

**हिनुहि(ही)** जानीहि १.१४३.४। वर्धय (अत्र संहितायामिति दीर्घः) ६.४५.१४॥

**हिनोमि** गमयामि ३५.१६॥

**हिनोत** [हिनोत] प्रेरयत २.१४.४। वर्धयत ५.७७.२॥

हिनोत—प्रहिणुत। नि० ६।२२॥

**हिनोतम्** प्राप्नुतम् १.१८४.४॥

**हिनोति** वर्धयति १.१८.४ ॥

**हिनोमि** वर्धयामि १.६१.४ । प्राप्नोमि २.३२.३ । गमयामि ३५.१६ ॥

**हिनोषि** वर्धयसि ६.१३.३ ॥

**हिन्वति** वर्धयन्ति वर्धन्ते वा (अत्र पक्षे अन्तर्भावितो ण्यर्थः) ३.३१.१६ ॥

हिन्वन्ति—आप्नुवन्ति नि० १ । २० ॥

**हिन्वतु** प्रीणयतु (अत्र लडर्थे लोडन्तर्गतो ण्यर्थः) १.२७.११ ॥

**हिन्वन्** गमयन् ५.३६.२ ॥

**हिन्वन्ति** [ **हिन्वन्ति** ] प्राप्नुवन्ति वर्धयन्ति वा ७.६.२ । प्रेरयन्ति १.८४.११ । हितं कुर्वन्ति प्रीणयन्ति १.१४४.५ ॥

**हिन्वन्तु** प्रीणन्तु प्रीणयन्ति सेधयन्ति (अत्र लडर्थे लोडन्तर्गतोण्यर्थश्च) १.२३.१७ । विज्ञापयन्तु वर्धयन्तु वा १.१११.४ ॥

**हिन्वानः** वर्धयन् २.३६.१ ॥ [ **हिन्वानासः** ] सुखं सम्पादयन्तः १.३३.८ ॥

**हिन्वानाः** प्रीतिकारिका नद्यः १.१०४.४ । वर्धयमानाः २.२१.५ ॥

**हिन्विरे** वर्धयन्ति ५.६.६ ॥

**हिन्वे** गमयेय ४.७.११ ॥

**हिमवन्तः** हिमालयादयः पर्वताः २५.१२ ॥ [ **हिमवते** ] बहूनि हिमानि विद्यन्ते यस्य तस्मै २४.३० ॥

**हिमाः** सम्वत्सरान् २.३३.२ । वर्षाणि ५.५४.१५ । वृद्धीर्हेमन्तानृतून् वा ६.४८.८ ॥ [ **हिमस्य** ] शीतस्य १७.५ ॥

हिमा—रात्रि नाम । निघ० १ । ७ ॥

हिमाः—(यजु० २ । २७) शतं हिमा इति शतं वर्षाणि जीव्यासमित्येवैतदाह । श० १ । ६ । ३ । १६ ॥ हिमस्य—जरायु (यजु० १७ । ५) यद्वै शीतस्य प्रशीतं तद्धिमस्य जरायु । श० ६ । १ । २ । २६ ॥

**हिम्येव** हेमन्तर्तौ भवा महाशीतयुक्ता रात्रय इव (भवे च छन्दसीति यत्, हिम्येति रात्रिनामसु० निघ० १।७ हन्तेर्हि च उ० ३।११६ इति हनधातोर्मक् ह्यादेशश्च) १.३४.१ ॥

**हियानस्य** वर्धमानस्य (अत्र व्यत्ययेनात्मनेपदम्) २.४.४ ॥

**हिरणिनः** हिरण्यादिधनयुक्तस्य ५.३३.८ । हिरणाः सन्ति येषां तान् ६.३३.६ ॥

**हिरण्मयेन** ज्योतिर्मयेन ४०.१७ ॥

**हिरण्यकर्णम्** हिरण्यं कर्णे यस्य तम् १.१२२.१४ ॥

**हिरण्यकारम्** सुवर्णकारं सूर्य्यं वा ३०.१७ ॥

**हिरण्यकेशः** हिरण्यवत् तेजोवत्केशा न्यायप्रकाशा यस्य सः १.७६.१ ॥

**हिरण्यगर्भः** हिरण्यादि सूर्यादि तेजांसि गर्भे यस्य सः परमात्मा २५.१० ॥

**हिरण्यचक्रान्** हिरण्यानि सुवर्णादीनि तेजांसि चक्रेषु येषां विमानादीनां तान् १.८८.५ ॥

**हिरण्यजिह्वः** हिरण्यमिव सत्येन सुप्रकाशिता वाणी यस्य सः ६.७१.३ । हिरण्यं हितरमणीया जिह्वा वाग्यस्य सः, (हितरमणं

भवतीति वा हृदयरमणं भवतीतिवा निरु० २।१० जिह्वेति वाङ्नाम० निघ० १।११ ) ३३.६६ ॥

**हिरण्यत्वक्** हिरण्यं तेजः सुवर्णं चैव त्वगुपरिवरणं यस्य सः ५.७७.३॥

**हिरण्यदन्तम्** हिरण्येन सुवर्णेन तेजसा वा तुल्या दन्ता यस्य तम् ५.२.३ ॥

**हिरण्यदाः** ये वायवो हिरण्यं तेजो ददति ते २.३५.१० ॥

**हिरण्यनिर्णिक्** या हिरण्येन निर्णेनेक्ति पुष्णाति सा १.१६७.३। यः पृथिव्या हिरण्यमग्नेस्तेजश्च नितरां नेनेक्ति ५.६२.७॥

**हिरण्यनेमयः** हिरण्यस्वरूपा नेमिः सीमा यासां ताः १.१०५.१ ॥

**हिरण्यपक्षः** हिरण्यस्य सुवर्णस्य पक्षः परिग्रहो यस्य सः १८.५३ ॥

**हिरण्यपर्णः** हिरण्यवर्णः=तेजःस्वरूपः २१.५६॥ [**हिरण्यपर्णाः**] हिरण्यानि पर्णानि पक्षा येषां ते ४.४५.४॥ [**हिरण्यपर्णम्**] हिरण्यानि तेजांसि पर्णानि पालकानि यस्य तम् २८.३३॥

हिरण्यपर्ण—ऋतपर्ण। नि० ८। १६॥

**हिरण्यपाणिः** हिरण्यानि ज्योतींषि पाण्यो हस्तवद् ग्रहणसाधनानि यस्य सः १.३५.६। पाणिरिव हिरण्यं तेजो यस्य सः ३.५४.११। हिरण्यं सुवर्णादिकं पाणौ हस्ते यस्य सः ६.५०.८। हिरण्यं ज्योतिः पाणिर्हस्तः किरणव्यवहारो वा यस्य सः ( ज्योतिर्हि हिरण्यम् शत० ४।३।१।२१ ) १.१६। हिरण्यस्यामृतस्य मोक्षस्य दानाय व्यवहारो यस्य सः ( अमृतं हिरण्यम् शत० ७।३।१।१५ ) यद्वा हिरण्यं प्रकाशार्थं ज्योतिः पाणिर्व्यवहारो यस्य सः १.२०। हिरण्यानि ज्योतींषि सूर्यादीनि स्वर्णादीनि वा पाणौ व्यवहारे यस्य सः (ज्योतिर्हि हिरण्यम् शत० ४।३।१।२१ इति प्रमाणेन हिरण्यशब्देन ज्योतिषो ग्रहणम् ) ४.२५॥ [**हिरण्यपाणिम्**] हिरण्यानि सूर्यादीनि तेजांसि पाणौ स्तवने यस्य तम् २२.१०॥ [**हिरण्यपाणे**] हिरण्यं हितरमणं पाणिर्व्यवहारो यस्य तत्सम्बुद्धौ ७.३८.२॥

हिरण्यपाणिः—तस्मात् ( सविता ) हिरण्यपाणिरिति स्तुतः। कौ० ६। १३॥ गो० उ० १।२॥

**हिरण्यपिंडान्** सुवर्णादिसमूहान् ६.४६.२३॥

**हिरण्यप्रउगम्** हिरण्यस्य ज्योतिषोऽग्नेः प्रउगं सुखवत्स्थानं यस्मिँस्तं प्रयोगार्हम् ( पृषोदरादिनाभीष्टरूपसिद्धिः ) १.३५.५॥

**हिरण्यबाहुः** हिरण्यं बाह्वोर्दानाय यस्य सः ७.३४.४॥ [**हिरण्यबाहवे**] हिरण्यं ज्योतिरिव तीव्रतेजस्कौ बाहू यस्य तस्मै १६.१७॥

**हिरण्यम्** सुवर्णम् १४.१६। सब प्रकार का धन १८.१३। ज्योतिर्मयम् ३४.५१। सत्यासत्यप्रकाशकं विज्ञानम् ३४.५२॥ [**हिरण्यानि**] हिरण्यैर्निर्मितान्याभूषणादीनि २५.३६॥ [**हिरण्येन**] न्यायप्रकाशेन सुवर्णादिधातुमयेन वा १.३३.८॥ [**हिरण्यैः**] किरणैरिव तेजोभिः २.३३.६॥ [**हिरण्यमिव**] यथा सुवर्णं प्रीतिकरम् १.४३.५॥

हिरण्य—ह्रियते आयम्यमानमिति वा ह्रियते जनाज्जनमिति वा, हितरमणं भवतीति वा हृदयरमणं भवतीति वा, हर्यतेर्वा स्यात्प्रेप्साकर्मणः। नि० २। १०॥

हिरण्यगर्भः—प्रजापतिर्वै हिरण्यगर्भः। श० ६। २। २। ५॥ हिरण्यम्—तद्यदस्य (प्रजापतेः) एतस्याᳶरम्यायां तन्वां देवा अरमन्त तस्माद्धिरम्यᳶ ह वै तद्धिरण्यमित्याचक्षते परोऽक्षम्। श० ७। ४। १। १६॥ (अथर्व० ५।२८।६—त्रेधा जातं जन्मनेदं हिरण्यमग्निरेकं प्रियतमं बभूव सोमस्यैकं हिंसितस्य परापतत्। अपामेकं वेधसां रेत आहुस्तत् ते हिरण्यं त्रिवृदस्त्वायुषे॥) अग्निर्ह वाऽ अपोऽभिदध्यौ मिथुनमाभिः स्यामिति ताः सम्बभूव तासु रेतः प्रासिञ्चत्तद्धिरण्यमभवत्तस्मादेतदग्निसंकाशमग्नेर्हि रेतस्तस्मादप्सु विन्दन्त्यप्सु हि प्रासिञ्चत्। श० २। १। १। ५॥ तस्य (अग्नेः) रेतः परापतत्। तद्धिरण्यमभवत्। तै० १। १। ३। ८॥ अग्नेर्वाऽ एतद्रेतो यद्धिरण्यं नाष्ट्राणाᳶ रक्षसामपहत्यै। श० १४। १। ३। २६॥ समानजन्म वै अयश्च हिरण्यश्चोभयᳶ ह्यग्निरेतसम्। श० ३। २। ४। ८॥ अश्वस्य वा आलब्धस्य रेत उदक्रामत्। तत्सुवर्णᳶ हिरण्यमभवत्। तै० ३। ८। २। ४॥ श० १३। १। १। ३॥ रेतो हिरण्यम्। तै० ३। ८। २। ४॥ (प्रजापतिः) अयसो हिरण्यं (असृजत) तस्मादयो बहुध्मातᳶ हिरण्यसंकाशमिवैव भवति। श० ६। १। ३। ४॥ क्षत्रस्यैतद्रूपं यद्धिरण्यम्। श० १३। २। २। १७॥ आयु र्हि हिरण्यम्। श० ४। ३। ४। २४॥ (आयुष्यं वर्चस्यᳶ रायस्पोषमौद्भिदम्। इदᳶ हिरण्यं वर्चस्वज्जैत्रायाविशतादु माम्। यजु० ३४। ५०॥ नैनं रक्षांसि न पिशाचाः सहन्ते देवानामोजः प्रथमजं ह्येतत्। यो बिभर्ति दाक्षायणं हिरण्यं स जीवेषु कृणुते दीर्घमायुः॥२॥ अपां तेजो ज्योतिरोजो बलं च वनस्पतीनामुत वीर्याणि। इन्द्र इवेन्द्रियाण्यधि धारयामो अस्मिन् तद् दाक्षायणो बिभ्रद्धिरण्यम्॥३॥ अथर्व० १। ३५। २, ३॥) यद्धिरण्यं ददाति आयुस्तेन वर्षीयः कुरुते। गो० उ० ३। १६॥ अमृतमायुर्हिरण्यम्। श० ३। ८। २। २७॥ (यजु० १८। ५२॥)

अमृतं वै हिरण्यम्। श० ९। ४। ४। ५॥ प्राणो वै हिरण्यम्। श० ७। ५। २। ८॥ सोमस्य वा अभिषूयमाणस्य प्रिया तनूरुदक्रामत् तत्सुवर्णᳶ हिरण्यमभवत्। तै० १। ४। ७। ४-५॥ वरुणस्य वा अभिषिच्यमानस्याप इन्द्रियं वीर्यं निरघ्नन्। तत्सुवर्णᳶ हिरण्यमभवत्। तै० ८। १। ६। १॥ वर्चो वै हिरण्यम्। तै० १। ८। ६। १॥ तेजो वै हिरण्यम्। तै० १। ८। ६। १॥ चन्द्रᳶ हिरण्यम्। तै० १। ७। ६। ३॥ चन्द्रᳶ ह्येतच्चन्द्रेण क्रीणाति यत्सोमᳶ हिरण्येन (चन्द्रः=सोमः, चन्द्रं=हिरण्यम्)। श० ३। ३। ३। ६॥ शुक्रं हिरण्यम्। तै० १। ७। ६। ४॥ शुक्रᳶ ह्येतच्छुक्रेण क्रीणाति यत्सोमᳶ हिरण्येन। श० ३। ३। ३। ६॥ ज्योतिर्वै शुक्रं हिरण्यम्। ऐ० ७। १२॥ ज्योतिर्वै हिरण्यम्। तां० ६। ६। १०॥ यशो वै हिरण्यम्। ऐ० ७। १८॥ सत्यं वै हिरण्यम्। गो० उ० ३। १७॥ देवानां वाऽ एतद्रूपं यद्धिरण्यम्। श० १२। ८। १। १५॥ पवित्रं वै हिरण्यम्। तै० १। ७। २। ६॥ तस्माद्धिरण्यं कनिष्ठं धनानाम्। तै० ३। ११। ८। ७॥

**हिरण्ययः** ज्योतिर्मयः (ऋत्व्यवास्त्व्य० अ० ६।४।१७५ अनेन हिरण्यमयशब्दस्य मलोपो निपात्यते। ज्योतिर्हि हिरण्यम् शत० ५।३।१।२१।२) १.७.२। तेजोमयः सुवर्णमयो वा ४.५८.५। यशस्वी १३.३८॥ [**हिरण्यया**] हिरण्याद्याभूषणयुक्तौ ६.७१.१। हिरण्यवत्सुदृढौ सुशोभितौ ६.७१.५॥ [**हिरण्ययाः**] सुवर्णप्रचुराः १.१८०.१॥ [**हिरण्ययासः**] हिरण्येन विद्युत्तेजसा प्रचुराः ६.६६.२॥

**हिरण्ययी** रोगरहिता शुद्धा ८.२६॥ [**हिरण्ययी**] प्रभूत हिरण्यमय्यौ १.१४४.६॥ [**हिरययीः**] तेजोमय्यः सुवर्णादिसुभूषिताः ६.५८.३। सुवर्णादिभिरनु-

लिप्राः २८.२८। हिरण्यप्रकाराः २८.३१॥ [ **हिरण्ययीम्** ] हिरण्यादिबहुधनयुक्ताम् ३.३८.८॥

**हिरण्ययुः** हिरण्यं सुवर्णं कामयमानः ७.३१.३॥

**हिरण्यरथः** तेजोमयः रमणीयस्वरूपस्सूर्य इव रथो व्यवहारो यस्य सः ४.१.८॥ [ **हिरण्यरथम्** ] हिरण्यानां ज्योतिर्मयानां सूर्यादीनां लोकानां सुवर्णादीनां वा रथो देशान्तरप्रापणो यानसमूहः ( अत्र रथ इति रमुक्रीडायामित्यस्य रूपं रमधातोः रूपं वा ) १.३०.१६॥ [ **हिरण्यरथाः** ] हिरण्यं सुवर्णं रथेषु येषां ते, यद्वा हिरण्यं तेज इव रथा येषां ते ५.५७.१॥

**हिरण्यरूपः** तेजःस्वरूपः २.३५.१०॥ [**हिरण्यरूपौ**] ज्योतिःस्वरूपौ १०.१६॥ [ **हिरण्यरूपम्** ] हिरण्यस्य तेजसो रूपमिव रूपं यस्य तम् ४.३.१॥

**हिरण्यवत्** हिरण्यादिना तुल्यम् ८.३६॥

**हिरण्यवत्** हिरण्यं सुवर्णादिकं बहुविधं साधनं यस्य तत् ( अत्र भूम्न्यर्थे मतुप् ) १.३०.१७। प्रशस्तानि हिरण्यादीनि विद्यादीनि तेजांसि वा विद्यन्ते यस्मिँस्तत् १.६२.१६॥

**हिरण्यवन्धुरम्** हिरण्यानि सुवर्णानि बन्धुराणि बन्धनानि यस्मिँस्तम् ४.४६.४॥

**हिरण्यवर्णः** हिरण्यं सुवर्णमिव वर्णो यस्य सः २.३५.१०॥ [ **हिरण्यवर्णम्** ] तेजोमयं शोभनस्वरूपम् २.३५.११। तेजस्विनम् ५.४३.१२॥ [ **हिरण्यवर्ण** ] यो हिरण्यं वृणोति तत्सम्बुद्धौ ५.३८.२॥ हिरण्यवर्णा—नदीनाम। निघं० १।१३॥

**हिरण्यवर्णाः** हिरण्यवद्वर्णो यासां ता नद्यः २.३५.६॥ [ **हिरण्यवर्णाम्** ] तेजोमयीम् ३.६१.२॥

**हिरण्यवर्तनिः** हिरण्यस्य विद्याव्यवहारस्य वर्त्तनिर्मार्गो यस्यां सा ६.६१.७॥

**हिरण्यवर्तनी** हिरण्यं प्रकाशं वर्तयन्तौ १.६२.१८। गौ हिरण्यं ज्योतिः सुवर्णं वा वर्तयतस्तौ ५.७५.२॥

**हिरण्यवाशीमत्तम** हिरण्येन सत्यप्रकाशेन परमयशसा सह प्रशस्ता वाशी वाक् विद्यते यस्य सोऽतिशयितस्तत्सम्बुद्धौ ( वाशीति वाङ्नाम निघं० १।११ ) १.४२.६॥

**हिरण्यशम्यम्** हिरण्यानि सुवर्णान्यन्यानि वा ज्योतींषि शम्यानि शमितुं योग्यानि यस्मिँस्तम् १.३५.४॥

**हिरण्यशिप्राः** हिरण्यमिव शिप्राणि मुखानि येषां ते २.३४.३॥

**हिरण्यशृंगः** हिरण्यानि तेजांसि शृंगाणीव यस्य सः १.१६३.६॥

**हिरण्यसंदृक्** यो हिरण्यं तेजः सम्यक् दर्शयति सः २.३५.१०॥ [ **हिरण्यसंदृशः** ] हिरण्यं तेज इव सन्दृक् समानं दर्शनं येषां ते ६.१६.३८॥

**हिरण्यहस्तः** हिरण्यानि सर्वतो गमनानि हस्ता इव यस्य सः ( अत्र गत्यर्थात् हर्यधातोरौणादिकः कन्यन् प्रत्ययः ) १.३५.१०। हिरण्यानि ज्योतींषि हस्तवद्यस्य सः

३४.२४ ॥

**हिरण्याक्षः** हिरण्यानि ज्योतींष्यक्षीणि व्याप्तिशीलानि यस्य सः १.३५.८ ॥

**हिराभिः** वृद्धिभिः २५.८ ॥

**हिरिशिप्रः** हरणशीलहनुः २.२.५। हिरी हरिते शिप्रे हनुनासिके यस्य सः ६.२६.६ ॥

**हिरिश्मश्रुः** हिरण्यमिव श्मश्रूणि यस्य सः ५.७.७ ॥

**हिरुक्** पृथक् १.१६४.३२ ॥

हिरुक—निर्णीतान्तर्हितनाम । निघ० ३ । २५ ॥

**हिषे** प्रहिणोमि ७.७.१ ॥

**हीयताम्** त्यज्यताम् ६.५२.१ ॥

**हीलि(ळ)तः** अनादृतः १.८०.५ ॥

**हुतः** शब्दितः ३६.५ ॥ [ **हुतासः** ] सत्कारेण हुताः ६.५०.१५ ॥ [ **हुतम्** ] स्वीकार किये १०.२० । वह्नौ प्रक्षिप्तम् ३८.१६ ॥

**हुरः** कुटिलस्य ४.३.१३ ॥

**हुरश्चितम्** उत्कोचकं हस्तात्परपदार्थापहर्तारम् (हुरश्चिदिति स्तेननाम निघ० ३।२४) १.४२.३ ॥

**हुवतः** स्तुवतः ६.२१.१० ॥

**हुवध्यै** आह्वातुम् ५.४३.८ ॥ ग्रहीतुम् ५.४५.४ ॥

**हुवन्यति** आत्मनो हुवनं दानमादानं चेच्छति (अत्र हुवनशब्दात् क्यचि वा छन्दसीत्यात्वाभावेऽल्लोपः) १.११६.६ ॥

**हुवानः** आहूतः ३.४१.१ । ददन् ५.४३.१० । आददानः ५.४३.१३ । स्तुवन् ६.२१.१० । स्पर्धमानः ७.३०.३ ॥ [ **हुवानाः** ] आह्वातारः ६.५०.१४ ॥

**हुवामहे** स्पर्द्धामहे ५.५६.८ ॥

**हुवे** [ **हुवे** ] गृह्णामि (अत्र हुदानादानयोः इत्यस्माद् बहुलं छन्दसीति शपो लुक् व्यत्ययेनात्मनेपदञ्च) ३.१३ । आह्वये १५.३२ । स्तुयाम् ३३.४६ । स्वीकरोमि ३३.५७ । स्पर्द्धे १.१३८.२ ॥

हुवे—आह्वये । नि० ११ । ३१ ॥

**हुवेम** स्वीकुर्वीमहि ६.३६ । आह्वयेम ८.४५ । स्वीकुर्याम १२.२६ । १७.२३ । आदद्याम २१.५ । प्रशंसेम १.१२७.२ । हवन करें ४.१६.१६ । शब्दयेम ७.४१.२ ॥

हुवेम—ह्वयेम । नि० १० । २८ ॥

**हूतः** प्रशंसितः ४.१५.७ ॥ [ **हूतासः** ] कृताह्वानाः सन्तः ६.५०.४ ॥

**हूमहे** स्पर्धामहे (अत्र ह्वेञ् इत्यस्माल्लटि बहुलं छन्दसीति शपो लुक्। बहुलं छन्दसि अ० ६।१।३४ इति सम्प्रसारणम् । सम्प्रसारणाच्चेति पूर्वरूपं च । हलः अ. ६।४।२ इति दीर्घत्वम्) १.१०.१० । स्वीकुर्महे ५.३५.३ । प्रशंसामः ६.४६.३ । आह्वयामः ६.४६.६ ॥

**हूयते** [ **हूयते** ] क्षिप्यते दीप्यते १.३४.१० । स्पर्द्ध्यते १.१०१.६ । प्रक्षिप्यते १.२६.६ । दीयते १.३६.६ । स्तूयते १.१३५.२ ॥

**हूयमानः** कृताह्वानः १.१०४.६ । स्तूयमानः ४.

२६.२। स्पर्धमानः ५.४३.५। स्वीकृतः ८.५८। शब्द्यमानः ३६.५॥ [हूयमाना] प्रशंसितौ ४.३४.४॥ [हूयमानाः] जुह्वानाः २.३.५॥

हूयसे [हूयसे] अध्वरसिद्धयर्थं शब्द्यते (अत्र व्यत्ययः) १.१६.१। स्तूयसे ३.४०.६॥

हृणानस्य लज्जितस्य १.२५.२॥

हृणायन्तम् हरतीति हृणो हरिणस्तद्वदाचरन्तम्। १.१३२.४॥

हृणीयमानः क्रोधं कुर्वन् ५.२.८॥

हृणीषे हरसि (अत्र विकरणव्यत्ययेन श्ना) २.३३.१५॥

हृत्प्रतिष्ठम् हृदि प्रतिष्ठा स्थितिर्यस्य तत् ३४.६॥

हृद्रोगम् यो हृदयस्याज्ञानादिज्वरादिरोगस्तम् १.५०.११॥

हृत्स्वसः ये हृत्स्वस्यन्ति वाणान् तान् १.८४.१६॥

हृदः आत्मनः १८.५८। सुहृदः १.६०.२॥ हृद इव प्रियान् ५.३१.६। हृदयस्थेन विज्ञानेन १.६७.२। हृदयात् ३.३६.१। हृदयस्य समीपे स्थितम् २.३५.२॥ [हृदा] विषयहारकेण १७.६४॥ [हृद्भिः] चित्तैः १.११६.१७॥

हृद्—हृदयानि। नि० ६। ३३॥ हृदयाय। नि० १०। ३५॥

हृदयम् अन्तःकरणम् ११.३६। आत्मबलं जीवनहेतुस्थानम् २०.१६। हृदय के समान ६.६.२। (२५४ विधि)। [हृदयेन] स्वात्मना १६.८५॥ [हृदयेभ्यः] हृदयवद्वर्तमानेभ्यः १६.४६॥ [हृदये] मध्ये १५.६३॥

हृदयम्—तदेतत् त्र्यक्षरꣳ हृदयमिति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद। श० १४। ८। ४। १॥ तस्मादिदं गुहेव हृदयम्। श० ११। २। ६। ५॥ मूर्द्धा हृदये (श्रितः) तै० ३। १०। ८। ६॥ आत्मा वै मनो हृदयम्। श० ३। ८। ३। ८॥ एष प्रजापतिर्यद्धृदयम्। श० १४। ८। ४। १॥ हृदयं वै सम्राट्! परमं ब्रह्म। श० १४। ६। १०। १८॥ पुत्रो हि हृदयम्। तै० २। २। ७। ४॥ असौ वाऽआदित्यो हृदयम्। श० ६। १। २। ४०॥ प्राणो वै हृदयमतो ह्ययमूर्ध्वः प्राणः संचरति। श० ३। ८। ३। १५॥ परिमण्डलꣳ हृदयम्। श० ६। १। २। ४०॥ श्लक्ष्णꣳ हृदयम्। श० ६। १। २। ४०॥ हृदयं वै स्तोमभागाः। श० ८। ६। २। १५॥

हृदयाग्रेण हृदयस्य पुरोभागेन ३६.८॥

हृदयाविधः हृदयं विध्यति तस्याधर्मस्याधार्मिकस्य शत्रोर्वा (अत्र नहिवृषिव्यधिरुचिसहितनिषु क्वौ अ० ६.३.११६) १.२४.८। यो हृदयमाविध्यति सः ८.२३॥

हृदयौपशेन यो हृदये आ समन्तादुपशेते सः हृदयौपशो जीवस्तेन २५.८॥

हृदय्याय हृदये साधवे १६.४४॥

हृदिस्पृक् यो हृद्यन्तःकरणे सुखं स्पर्शयति सः १.१६.७॥ [हृदिस्पृशम्] हृदयस्य प्रियम् ४.१०.१। यो हृद्यात्मनि स्पृशति तम् १५.४४॥

**हृद्यम्** हृदयस्य प्रियम् ५.४२.२ ॥ [ **हृद्यात्** ] हृदये भवात् १७.६३ ॥

**हृषितम्** जातहर्षम् १.१०३.७ ॥

**हृषीवन्तः** बहुहर्षयुक्ताः २.३१.१ ॥

**हेळः** हिड्यते विज्ञायते प्राप्यते यः सः १.२४.१४। अनादरः १.६४.१२। धार्मिकानामनादरकर्तॄन् धार्मिकान् जनान्। १.११४.४। हेळन्तेऽनादृता भवन्ति यस्मिन् सः ४.१.४ ॥

**हेतिः** वज्रादिव पीड़ा २.३३.१४। वज्रः ६.१८.१०। वज्र इव घातुकः १५.१५। वृद्धिः १५.१८। वज्रघोषः १५.१६ ॥ [ **हेतयः** ] गतयः १.१६०.४। प्रबला वज्रगतयः १६.५३। वज्रादिशस्त्रास्त्रयुक्ताः सेनाः१७.११। वज्र इव व्यवस्थाः३६.२०॥ [ **हेतिम्** ] बाणम् २६.५१। वज्रवद्बाणी ६.७५.१४ ॥ [ **हेतीनाम्** ] विद्युताम् १५.१२। वज्रवद्वर्तमानानां किरणानाम् १५.१३। वृद्धानाम् १५.१४ ॥

हेति—वज्रनाम। निघ० २। २० ॥ वधात्। नि० ६। १५ ॥ हन्तेः। नि० ६। ३ ॥

**हेत्वः** प्रवृद्धो वेगवान् ७.४३.२ ॥

**हेमन्तः** हन्त्युष्णतां येन सः ( अत्र हन्तेर्हि मुट् च उ. ३।१२७) १३.५८॥ [ **हेमन्तेन** ] वर्धन्ते देहा यस्मिँस्तेन २१.२७॥ [ **हेमन्ताय** ] हेमन्तर्तौ कर्मसाधनाय २४.११॥

हेमन्त—हिमवान्। नि० ४। २७ ॥

हेमन्तः—( ऋतुः ) एतौ ( सहश्च सहस्यश्च ) एव हैमन्तिकौ (मासौ ) स यद्धेमन्त इमाः प्रजाः सहसेव स्वं वशमुपनयते तेनो हैतौ सहश्च सहस्यश्च। श० ४। ३। १। १८॥ तस्य (पर्जन्यस्य ) सेनजिच्च सुषेणश्च सेनानीग्रामण्याविति हैमन्तिकौ तावृतू। श० ८। ६। १। २०॥ हेमन्तो होता तस्माद्धेमनवषट्कृताः पशवः सीदन्ति। श० ११। २। ७। ३२॥ हेमन्तो मध्यम् (संवत्सरस्य)। तै० ३। ११। १०। ४॥ तस्य (संवत्सरस्य ) वसन्त एव द्वारम् हेमन्तो द्वारं तं वा एतम् संवत्सरम् स्वर्गं लोकं प्रपद्यते। श० १। ६। १। १९॥ यद् वृष्ट्योद्गृह्णाति तद्धेमन्तस्य ( रूपम् )। श० २। २। ३। ८॥ हेमन्तो निधनम्। ष० ३। १॥ अन्त ऋतूनाम् हेमन्तः। श० १। ५। ३। १३॥ हेमन्तो वाऽऋतूनाम् स्वाहाकारो हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते। श० १। ५। ४। ५॥ स्वाहाकृतिमन्तं यजति हेमन्तमेव हेमन्ते वा इदं सर्वं स्वाहाकृतम्। कौ० ३। ४॥

**हेमन्तशिशिरौ** हेमन्त और शिशिर ऋतु १०.१४ ॥

**हेम्यावान्** हेमन्युदके भवा रात्रिर्विद्यते यस्य सः (हेमेत्युदक नाम. निघ० १।१२) ४.२.८॥

**हेषक्रतवः** हेषाः शब्दाः क्रतवः प्रज्ञाः क्रिया वा येषां ते ३.२६.५॥

**हेषन्तम्** शब्दं कुर्वन्तम् ५.८४.२ ॥

**हेषस्वतः** हेषाः प्रसिद्धाः शब्दा विद्यन्ते यस्य तस्य ६.३.३ ॥

**होता** दाता ग्रहीता द्योतको वा १.१.५। हुतस्य पदार्थस्य दाता १.१२.३। यज्ञसम्पादकः १.२६.७। सर्वस्य जगतो विज्ञानस्य वा दाता १.७७.२। सद्गुणग्रहीता १.१४४.१। आकर्षणेनादाता १.१४६.४। न्यायस्य दाता ४.२१.५। संगतिक्रियाकर्ता ५.१.५। सुखप्रदाता २.१८.२। धर्ता ६.१५.१३। सत्यस्य ग्रहीता ग्राहयिता वा

१२.१४ । विद्यादाता २१.३७ ॥ [होतारा] दातारावध्यापकोपदेशकौ २८.४० । धर्त्तारौ वायुपावकौ २८.१७ । रोगं निवर्त्य सुखस्य प्रदातारौ २८.७ ॥

होतृ—ह्वातव्यस्य । नि० ४ । २६ ॥
होता—यद्वा स तत्र यथाभाजनं देवता अमुमावहामुमावहेत्यावाहति तदेव होतुर्होतृत्वम् । ऐ० १ । २ ॥ मध्यं वा एतद्यज्ञस्य यद्धोता । तै० ३ । ३ । ८ । १० ॥ आत्मा वै यज्ञस्य होता । कौ० ६ । ६ ॥ ( ऋ० ६ । १६ । १० ॥ यजु० ११ । ३५ ॥ ) अग्निर्वै होता । श० १ । ४ । १ । २४ ॥ अग्निर्वै देवानां होता । ऐ० १ । २८ ॥ अग्निर्वै होता ऽधिदैवं वागध्यात्मम् । श० १२ । १ । १ । ४ ॥ वाग्वै होता ( यजु० १३ । ७ ) । कौ० १३ । ६ । १७ । ७ ॥ वाग्वै यज्ञस्य होता । श० १२ । ८ । २ । २३ ॥ वाग्घोता षड्ढोतृणाम् । तै० ३ । १२ । ५ । २ ॥ मनो होता । तै० २ । १ । ५ । ६ ॥ प्राणो वै होता । ऐ० ६ । ८, १४ ॥ असौ वै होता यो ऽसौ ( सूर्यः ) तपति । गो० उ० ६ । ६ ॥ पुरुषो वाव होता । गो० उ० ६ । ६ ॥ क्षत्रं वै होता । ऐ० ६ । २१ ॥ संवत्सरो वै होता । कौ० २६ । ८ ॥ हेमन्तो होता तस्माद्धेमनवषट्कृताः पशवः सीदन्ति । श० ११ । २ । ७ । ३२ ॥ होतैव भर्गः । गो० पू० ५ । १५ ॥ होता हि साहस्रः । श० ४ । ५ । ८ । १२ ॥ प्राची दिग्घोतुः । श० १३ । ५ । ४ । २४ ॥ उत्तरत आयातनो वै होता । तै० ३ । ६ । ५ । २ ॥

**होतृवूर्ये** होतृणां स्वीकर्त्तव्ये ( अत्र वृवरणे इत्यस्मात् बाहुलकात् औणादिकः क्यथ्-प्रत्ययः । उदोष्ठ्यपूर्वस्य अ० ७.१.१०२ । इत्यृकारस्योकारः । हलि चेति दीर्घश्च ) १.३१.३ । होतारो व्रियन्ते ययोस्ते ६.७०.४ ॥

**होतृषदने** दातृणां विदुषां स्थाने ११.३६ । होतृणां दातृणां सदने याने वेद्यां वा २.९.१ ॥

होतृषदन—( यजु० ११ । ३६ ) कृष्णाजिनं होतृषदनम् । श० ६ । ४ । २ । ७ ॥

**होत्रम्** हवनीयं वस्तु १.७६.४ । हूयते दीयते यस्मिँस्तत् २.१.२ । हवनाभ्यासम् ३.१७.२ । जुह्वति यस्मिन् तद्यज्ञकर्म २.६ । अदनम् २८.१६ ॥ [होत्रा] जुह्वति येषु यानि तानि ( अत्र शेश्छन्दसि बहुलमिति लोपः हुयामाश्रु उ० ४.१७२ । अनेन हुधातोस्त्रन् प्रत्ययः १.१८.८ । [होत्राणि] हवनसम्बन्धीनि कर्माणि ३.४.५ ॥

**होत्रवाहम्** यो होत्राणि हुतानि द्रव्याणि वहति तम् ५.२६.७ ॥

**होत्रा** शत्रुबलमादातुं विजयञ्च दातुं योग्या १.१२०.१ । दातुमादातुमर्हा १.१४२.६ । [होत्राः] स्वीकर्तुमर्हाः ७.१५ । हवनकर्मानुष्ठात्र्यः ६.२५ ॥ [होत्राम्] हुतद्रव्यगतिम् १.२२.१०॥ [होत्राभिः] हवनक्रियाभिर्वाग्भिर्वा ७.६०.६ । आदातुमर्हाभिः क्रियाभिः १.१२२.६ ॥

होत्राः—वाङ्नाम निघ० १ । ११ ॥

**होत्राः** ये जुह्वत्याददाति वा ते ५.१४ । दातुं ग्रहीतुं शीलाः ११.४ । ऋत्विजः १७.७६॥ [होत्रात्] दानात् २.३६.१ । हवनात् २.३७.४ ॥

होत्राः—ऋतवो वाव होत्राः । गो० उ० ६ । ६ ॥ रश्मयो वाव होत्राः । गो० उ० ६ । ६ ॥ अङ्गानि वाव होत्राः । गो० उ० ६ । ६ ॥

**होत्राविदम्** होत्राणि हवनानि वेत्ति तम् ५.८.३॥

**होत्रियम्** दातव्यादातव्यानामिदम् १.८३.२ ॥

**होम** आह्वयामः ( ह्वेञ् इत्यस्माल्लडुत्तमबहुवचने बहुलं छन्दसीति शपो लुक्। छन्दस्युभयथेति उभयसंज्ञात्वे गुणसम्प्रसारणे भवतः छान्दसो वर्णलोपो वेति सकारलोपश्च ) १.६.६ ॥

**होम** ग्रहणं वा १.८४.१८॥

[ **होमनि** ] आदातव्ये व्यवहारे ३.६०.७ ॥

**होमाः** देने लेने योग्य वस्तु २३.२८ ॥

**होषि** जुहोसि ६.४४.१४ ॥

**ह्रदम्** जलाशयम् १.५२.७ ॥

**ह्रस्वाय** बालकाय १६.३० ॥

**ह्रादुनीः** शब्दानामव्यक्तोच्चारणक्रियाः २५.६॥

[ **ह्रादुनिम्** ] ह्रादते अव्यक्तान् शब्दान् करोति यया वृष्ट्या ताम् ( अत्र ह्रादधातोर्बाहुलकादौणादिक उनिः प्रत्ययः ) १.३२.१३ ॥ [ **ह्रादुनीभ्यः** ] अव्यक्तं शब्दं कुर्वतीभ्यः २२.२६ ॥

**ह्रादुनीवृतः** ये ह्रादुन्या शब्दकर्त्र्या विद्युता युक्ताः ५.५४.३ ॥

**ह्रियमाणः** यो ह्रियते सः ३६.५[illegible] ॥

**ह्रियै** लज्जायै २४.३५ ॥

**ह्रुणाति** कुटिलं गच्छति १.१६६.१[illegible] ॥

**ह्रुतः** कुटिलत्वं गतः ६.४.५ ॥

**ह्वय** निमन्त्रय ५.५३.१६ ॥

**ह्वयताम्** स्पर्द्धतामुपदिशताम् १.१० । ह्वयति ( अत्र व्यत्ययेन लडर्थे लोट् ) २.११ ॥

**ह्वयन्ते** स्पर्द्धन्ते १.१०२.६। प्रशंसेयुः ४.३६.५॥

**ह्वयामसि** प्रज्ञापयेम ६.२६.१ । आह्वयामः ६.४१.५ ॥

**ह्वयामहे** स्पर्द्धामहे १.४७.१० । स्वसुखदुःखनिवेदनं कुर्महे १.११४.४ । शब्दयामहे ३.४२ ॥

**ह्वयामि** स्पर्द्धे, स्वीकरोमि, प्राप्नोमि, गृह्णामि वा १.३५.१ । आह्वयामि ६.४७.११ ॥

**ह्वये** उपतापये १.१३.३ । स्पर्द्धे १.१३.७ । आह्वये १.१३.१२ । स्वीकरोमि १.१६४.२६ । शब्दयेयम् ५.५६.१ । ध्यानयोगेनाह्वये २२.१०। उपस्तुयाम् २२.१३ । स्तौमि ३४.२६ ॥

**ह्वरः** क्रोधः २.२३.६। कुटिलाचरणाः ५.२०.२॥

[ **ह्वरांसि** ] अनादररूपाणि ६.४८.१०॥

**ह्वाः** ह्वरतु ( अत्र लोडर्थे लुङ् ) १०२ । त्यजेः ( अत्र लिङर्थे लुङ् ) १.६ ॥

**ह्वामहे** स्पर्धामहे ३.५३ ॥

**ह्वारः** कुटिलतां कारयन् १.१४१.७ । ह्वरस्य क्रोधस्यायं निवारकः १.१८०.३ ॥

[ **ह्वारे** ] ह्वरन्ति कुटिलां गतिं गच्छन्ति पदार्था यस्मिँस्तस्मिन् २०२.४ ॥

**ह्वार्यः** कुटिलं मार्गं गन्तुं योग्यः ६.२.८ ॥

[ **ह्वार्याणाम्** ] कुटिलानाम् ५.६.४ ॥

ह्वार्य—अश्वनाम निघ० १।४॥

**ह्वार्षीत्** ह्वरतु ह्वर वा ( अत्रापि लोडर्थे लुङ् ) १.२ । त्यजतु ( अत्र लोडर्थे लुङ् ) १.६॥